ॐ

# ब्रह्मसूत्रशाङ्करभाष्यम्

( चतुस्सूत्रीपर्यन्तम् )

काशी हिन्दू विश्वविद्यालयीय संस्कृतमहाविद्यालय दर्शन
विभागाध्यक्ष पं० श्रीलक्ष्मीनाथ झा शर्म निर्मित
प्रकाश-विकास टीका द्वयोपेत
भामती सहितम् ।



# BRAHMASUTRASHANKARBHASHYAM

WITH

"PRAKSH" & "VIKAS" COMMENTARIES

OF

*PANDIT LAKSHMINATH JHA*
**Head of Department of Philasophy**
**Hindu Viswavidyalaya.**
BANARAS.

वैक्रमाब्दे २००६

प्रकाशकः—

पं० श्रीलक्ष्मीनाथ झा

दर्शनविभागाध्यक्ष—

हिन्दू विश्वविद्यालय

काशी ।

एतद् पुस्तक मुद्रणे कानपुरनिवासिना समुज्ज्वलकीर्तिना संस्कृतानुरागिणा विदुषा श्रीमता सर् श्रीहरगोविन्द मिश्रेण परिपूर्णं साहाय्यं वितीर्णम् ।

मुद्रकः—

रामलाल शास्त्री

सुप्रभातम् प्रेस, मीरघाट,

काशी ।

( मूल्यम् ७ सप्त रूप्यकम् )



सम्वत् २००९

# ब्रह्मसूत्रशाङ्करभाष्यम्

( चतुस्सूत्रीपर्यन्तम् )

काशी हिन्दू विश्वविद्यालयीय संस्कृतमहाविद्यालय दर्शन-विभागाध्यक्ष
मिथिलादेशैकदेश दरभंगामण्डलान्तर्गत मधुवनी-समीप सीमा-ग्राम
निवासि पं० श्रीलक्ष्मीनाथ झा शर्म निर्मित
प्रकाश-विकास टीका द्वयोपेत
भामती सहितम् ।



# BRAHMASUTRASHANKARBHASHYAM

WITH

"PRAKASH" & "VIKAS" COMMENTARIES

OF

*PANDIT LAKSHMINATH JHA*

**Head of Department of Philasophy**

**Hindu Viswavidyalaya.**

BANARAS.

वैक्रमाब्दे २००६

# प्राक्कथनम्

विदाङ्कुर्वन्तु तत्रभवन्तो भवन्तोऽसारसंसारसारभूतसरस्वतीसेवनसमुपजातशेमुषीसम्प्राप्तानवद्यकीर्त्तयः !

सर्वास्वेव विद्यासु विगलितनिखिलदुःखानुषङ्गपरमानन्दघनाद्वितीयब्रह्मरूपतावाप्तिसम्पादिका ब्रह्मविद्यैवोपनिषच्छब्देनाभिधीयमाना गरीयसीति विदन्त्येव विद्वांसः तदर्थग्रहणदार्ढ्याय भगवता व्यासेनोपदिष्टं वेदान्तदर्शनमेव भारतीयानां गौरवावहमितराणि दर्शनान्यतिशेते । तदेतदद्वैततत्त्वप्रतिपादकं दर्शनं वैदिककालमारभ्याद्यपर्यन्तं कदाचित्तिरोभूतमिव कदाचिच्च प्रकटमिवोपलभ्यते । दृश्यते च 'एकं सद्विप्रा बहुधा वदन्ति' इति ऋग्वेदे, तदीये ऐतरेयकेच 'आत्मा वा इदमेक एव' इत्युपक्रम्य 'स एतमेव पुरुषं ब्रह्म ततमपश्यत्' इति तमेव ब्रह्मात्मानमभिधाय 'प्रज्ञानं ब्रह्म' इत्युपसंहारः; सामवेदीये छान्दोग्ये च 'एकमेवाद्वितीयम्, इत्यादिनोपक्रम्य सप्रपञ्चं प्रपञ्चस्य मिथ्यात्वमुपवर्ण्य 'तत्त्वमसि' इति भूयोभूयो जीवब्रह्मणोरभेदोपदेशः; वाजसनेयके यजुर्वेदीये बृहदारण्यके 'अहंब्रह्मास्मि' इत्युपक्रम्य 'अयमात्मा ब्रह्म' इत्युपसंहारः; आथर्वणे च 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति सर्वात्मकं ब्रह्म उपक्रम्य 'ब्रह्मैवेदममृतं पुरस्तात्' इति प्रतिपादनम् । एवम्—

"एक एवतु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।।"
'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।'

तद्यथा वटबीजसामान्यमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुत्पाद्य तत्र तत्र पूर्णं तिष्ठति एवमेवैषा स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इत्याद्यनन्तास्वेव श्रुतिषु प्रपञ्चस्याविद्यकत्वोपवर्णनपुरःसरमयमैकात्म्यवादो दर्शितः ।

अयमेव च वादः पुराण-नारदपञ्चरात्र-महाभारतस्मृतिषु बहुत्राऽभिव्यक्तीकृत इति किञ्चित्प्रदर्शितोऽस्माभिरिहैव विकासेऽनुवादखण्डने । एष एव च वादः—

'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ।'
इत्याद्यभिदधता भगवता गीतायां गीतः । तन्त्रेऽपि च—
'त्वमेका परब्रह्मरूपेण सिद्धा'
इत्यादिना भगवता महाकालादिना बोधितः ।
"रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ।
तद्वद्द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ।।"

इत्यभिधायिना पतञ्जलिनाऽप्ययमेव वादः समर्थितः । भर्त्तृहरिणाऽपि वाक्यपदीये बहुश उद्घोषित एव । अनन्तरं च गौडपादाचार्यैरपि माण्डूक्यकारिकायामुत्तरगीताव्याख्याने च विशदीकृतः, तदेवंविधसोपानपरम्परापरिप्राप्तोऽयमद्वैतवादः पङ्कमग्न

गवादिकमिव सनातनधर्ममुद्दिधीर्षता भगवता शङ्कराचार्येण ब्रह्मसूत्रभाष्यादिकं रचयता केवलं प्रचारितो विवेचितश्च । अन्यानि च दर्शनानि विरोधपरिहारपूर्वकमद्वैत एव समनुयन्तीत्यपि विवेचितमस्माभिः चतुर्थसूत्र विकासे ।

एतस्य च ब्रह्मसूत्रशाङ्करभाष्यस्याभिप्रायमाविष्कुर्वती भामती यदि नोदपत्स्यततदा परपक्षप्रतिक्षेपणैकमतीनां , दुराग्रहग्रहग्रहीतमानसानां द्वैतवादिनां शङ्का पिशाची समूलमिदमुदमूलयिष्यत् अत इयमाविर्बभूवेति न तिरोहितं केषांचिद् विदुषाम् । एतस्याश्च भगवत्याः भामत्याः अधरीकृतधरातलविद्यमानसकलसंस्कृतसाहित्यग्रन्थरत्नायाः साम्प्रतिकैरज्ञातनिगूढभावायाः काचिदेतादृशी टीका नास्ति या एतदीयं भावमाविःकुर्वती परपक्षं च सरलया लेखशैल्या युक्तिपरिपूरितया निराकुर्वती अध्येतॄणामध्यापकानां च मनांसि समुल्लासयन्ती गौरवमासादयेत् अतस्तादृशीटीका मया रचितव्येत्येवंविधसंकल्पसोपानपरम्परा ममाजस्रमजायत ।

परंत्वनेन भगवताऽऽचार्येण वाचस्पतिमिश्रेण विनिर्मितायाः न्यायवार्तिकतात्पर्यटीकायास्तात्पर्यपरिशुद्धिनाम्नीं टीकामारचयताऽऽचार्येण दार्शनिकशिरोऽलंकारेण मैथिलकुलकमलभास्करेण उदयनेनाचरितम् ।

मातः सरस्वति पुनः पुनरेव नत्वा बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।
वाक् चेतसोर्मम तथा भव सावधाना वाचस्पतेर्वचसि न स्खलतो यथैते ।।

इतिमङ्गलमुपलभमानस्य तस्या एव च न्यायवार्तिकतात्पर्यटीकायाष्टीकामस्मदाद्यध्ययनसमये यथाऽवकाशं विरचयताम् सर्वशास्त्रेषु समानाप्रतिहतप्रतिभाभासितान्तःकरणानाम् दरभंगामण्डलान्तर्गत नवानी ग्राममधिवसताम् परमकारुणिकानाम् नानादेशागतानन्तेवासिनः स्वगृहे एव स्वपूर्वजोपार्जितविभवैर्भोजनादिव्यवस्थापूर्वकं सश्रममध्यापयताम् दिगन्तप्रख्यातकीर्तीनाम् अनुकरणीयचरितानाम् पञ्चलक्षणीसिद्धान्तलक्षणावच्छेदकत्वनिरुक्तिगमजागदीशीनाम् सामान्यनिरुक्ति व्युत्पत्तिवादयो गदाधर भट्टाचार्य रचितयोश्च गूढार्थतत्त्वालोकनामक प्रौढपरिश्कारपूरितातिविस्तृतग्रन्थान् न्यायकुसुमाञ्जलितदीधवर्धमानखण्डनखण्डखाद्यानां टिप्पणीश्च कृतवतां गीतागूढार्थदीपिकाया मधुसूदनसरस्वती कृतायाश्च गूढार्थतत्त्वालोकनामकं न्यायादिमतनिरसनपूर्वकं वेदान्तसिद्धान्तव्युत्पादकं कृतवताम् अस्मद्गुरूणाम् धर्मदत्तापरनामक बच्चाझा महानुभावानामपि कदाचित् कस्यश्चिन् पंक्तःसंलापने कतिपयान्येव दिनानि व्यतीयन्तेस्म इत्यनुभूतपूर्वस्य ममैतस्या अतिकठिनायाः भामत्या ष्टीकाविरचनोत्साहः समुदयमानोऽपि संकल्पविकल्पपरम्परापराभूत एवासीत् ।

अथैकदा दृढीकृतसंकल्पेन मया सुरासुरार्चितचरणपङ्कजस्य मङ्गलमयमूर्तेर्भगवतः प्रत्यूहव्यूहनिराकरणपटीयसः देवदेवस्यविश्वनाथस्योपरि भारमारोप्यैतट्टीकाविरचनमारब्धम् । यथाऽवकाशं महता परिश्रमेण चतुःसूत्रीव्याख्यानकरणे एव पञ्चदश वर्षाणि व्यतीतानि 'एतावत्पर्यन्तस्यैव व्याख्यानसंकल्पोऽध्यासीत्, परंतु एकस्यामेव टीकायां

महान्तं लेखं पश्यन्तो बहवश्छात्राः विपश्चितश्चोद्विग्नमानसाः कोमलया चित्तवृत्त्या कठिनतमं विचारभारं न वोढुमुत्सहिष्यतेऽतो नेयं बहूनुपकरिष्यतीत्यालोच्य अधिकारिभेदेन भिन्नां टीकाद्वयीं व्यरचयम्। तत्र प्रथमायां प्रकाशाभिधानायां विशेषतः पंक्त्याशयवर्णनमपरस्यां च विकासाभिधानायां प्रसंगागतमतान्तरनिरसनं स्वमतोपपादनं चाकार्षम् ।

इयंच भामती लोकोत्तरप्रज्ञामाश्रयता भगवता महर्षिकल्पेन वाचस्पति मिश्रेण स्वपत्न्याः भामत्याः जगतीतले चिरं नाम विश्रुतामित्यभिप्रायवता तन्नाम्नैव प्रणिनिन्ये ।

सचायं सांख्यतत्त्वकौमुद्यां न्यायवार्तिक तात्पर्य टीकायाः तस्यां च ब्रह्मतत्त्वसमीक्षायाः न्यायकणिकायाश्चोल्लेखदर्शनात् तत्त्वबिन्दौ भामत्यां च न्यायकणिकायाः ब्रह्म सिद्धेश्च, तत्त्ववैशारद्यां न्यायकणिकायाः ब्रह्मतत्त्वसमीक्षायाश्चोल्लेखदर्शनात् सर्वेष्वेतेषु ग्रन्थेषु 'अस्माभिः परिहृतम्' 'अस्माभिरुपपादितमित्युल्लेख दर्शनाच्च सर्वेषाममीषामेक एव रचयितेत्यत्र न संदेहलेशोऽपि तस्मात् अयं पूज्यपादः सर्वेषामेव शास्त्राणां स्वरूप पर्यवसायितां प्रापयन् सर्वाण्येव शास्त्राण्युद्दधार ।

अपिचायं मिथिलादेशैकदेशं ठाढ़ी नामकं ग्रामं जन्मनाऽलञ्चकारेति जानन्त्येव मैथिला ऐतिहासिकाः कोविदाः, सम्प्रत्यपि तस्मिन् ग्रामे भामत्याः मिश्राइन इति नाम्नी अतिप्राचीना भग्नावशेषा पंकजाद्युपशोभिता पुष्करणी अवतिष्ठते । तस्मिंश्च ग्रामे उच्चतमं स्थानं महान्तो बहवस्तडागाः भग्नमन्दिरादिकं शिलालेखादिकं राजधानीचिह्नं चेदानीमपि वरीवर्त्ति इति न तिरोहितं तत्प्रेक्षकाणाम् अत एव च तस्यामेव राजधान्यां मेतदाचार्यस्याश्रयीभूतो नृग नामा राजा आसीदिति केषाञ्चिदुक्तिं न शक्नोमि निषेद्धुम् ।

युभ्वाद्यायतनं स्वशब्दात्(१।३।१)सूत्रभामत्यां 'हड़ि निगडादिष्वपि प्रयोग प्रसंगात्' इति लेखोप्येनमर्थमुपोद्बलयति निगड़े हडिशब्दोऽद्यापि मिथिलायामेव प्रयुज्यते । निरणैषीच्च मण्डनमिश्र-मुरारिमिश्र-वाचस्पतिमिश्र-पार्थसारथिमिश्र सुचरितमिश्रादीनां मैथिलत्वं न्यायवार्तिकभूमिकायामत्यन्वेषणसम्पादितायां विद्वद्वरः विन्ध्येश्वरीप्रसादः ।

तस्मात् मिथिलातोऽन्यत्रैवामवस्थानोक्तिः बालिशानामेव शोभते। प्रसिद्धिरपि वस्तु निर्णये महत्साहाय्यमाचरति। प्रसिद्धं च विद्वत्समाजे एषा प्रदर्शितानां मैथिलत्वमिति। यदपि माधवाचार्येण शंकरदिग्विजये आचार्यमण्डनमिश्राणां नर्मदातीरस्थमाहिष्मती पुरं निवासस्थानं प्रतिपादितम् तन्मया निराकृतम् अध्यासलक्षणभाष्य भामत्याः 'माहिष्मत्यामवभासः समीचीन इति पंक्तेर्व्याख्यायां प्रकाशे। अन्येऽपि केऽप्यैतिहासज्ञाः एतन्नानुमन्यन्ते।

सम्प्रत्यपि मिथिलायां माहिष्मती पुरी महिसीति नाम्नाऽऽम्नायमाना ब्राह्मणवसतीराजते यस्यामिदं मण्डनमिश्राणां गृहस्थानमित्यङ्गुल्या निर्दिशन्तो बहवः संगिरन्ते।

मण्डनमिश्रा एव च सुरेश्वराचार्याः यदपि बृहदारण्यकभाष्यवार्तिके ब्रह्मसिद्धितो मतभेददर्शनादुभौ भिन्नावेवेति केचिदाचक्षते तन्न ब्रह्मसिद्धेः गृहस्थावस्थायां वार्तिकस्य च संन्यासावस्थायां कृतत्वेन मतभेदस्योपपादयितुं शक्यत्वादिति।

एतेषां भामतीकृतां आचार्यमण्डन मिश्रैः सह मतैक्यम् बहुषु स्थलेषु विद्यते-यथाऽविद्यायाः जीवाश्रयत्व नानात्वादाविति प्रदर्शितमस्माभिः विकासे अत्यादरश्चैषां मण्डनमिश्रेषु अतएव विधिविवेक टीकायाम् न्यायकणिकायाम् 'आचार्यकृति विवेशनमि'ति पद्यं पूर्वमेव सन्निवेशितमनन्तरं भामत्यामपि समावेशितम् मण्डनमिश्राणां ग्रन्थाश्चैभिराचार्यैः श्रमेणाधीता इति न्यायकणिकातोऽवगम्यते उक्तञ्च न्यायकणिकायाम् 'ब्रह्मसिद्धौ कृतश्रमाणामनायाससमधिग मनीयम् इत्यादि। एतेषां वाचस्पतिमिश्राणां गुरुत्वेन प्रसिद्धाः त्रिलोचनमिश्राः उक्तञ्चैतैः न्यायवार्तिकतात्पर्यटीकायाम्—

'त्रिलोचनगुरून्नीत मार्गानुगमनोन्मुखैः।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्' ॥ इति

त्रिलोचनमिश्रैश्च कृता न्यायकलिका सम्प्रत्यपि उपलभ्यते एतैश्च विरचिता काचिन्न्यायमञ्जरीत्यवगम्यते अत एव न्यायकणिकायाम्—

अज्ञान तिमिर शमनीं परदमनी न्यायमञ्जरी रुचिराम्।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमोगुरवे ॥

इत्युक्तिः संगच्छते। सम्प्रति समुलभ्यमाना न्यायमञ्जरी तु जयन्तभट्टेन विरचिता स तु नैषां गुरुः सम्भवति समयभेदात् अतएव जयन्तभट्टो न्यायमञ्जर्याम् आचार्यास्तावदाचक्षते इत्यादिना आचार्य वाचस्पतिमिश्राणां न्यायवार्तिकतात्पर्यटीकास्थां पङ्क्तिं बहुषु स्थलेषु प्रमाणतयोपान्यसदित्यलम्।

सचायमद्वैतवाद एव निष्कण्टकः पन्थाः यतोऽत्र न केषामपि दोषाणां प्रसक्तिः-

इदमत्र संक्षेपतस्तावदवगन्तव्यम् यदत्र द्वैतवादिभिः दूषणान्युत्प्रेक्ष्यन्ते तानि किम् प्रपञ्चे सोपाधिके निरुपाधिके वा ब्रह्मणि तत्र निरुपाधिकं निरस्तसमस्तधर्माणं परमात्मानं न कश्चिद्दोषः स्प्रष्टुमर्हति सोपाधिके च उपाधावेव दोषः पर्यवस्येत् नतूपहिते सच्चिदानन्दे, तस्मात् मायायाम् मायिके च प्रपञ्चे एव दूषणं तत्र दूषणं तु भूषणमेव तदुक्तं मण्डन मिश्रैः ब्रह्मसिद्धौ—'नहि मायायां काचिदनुपपत्तिः अनुपपद्यमानार्थैव हि माया, इति तस्माद‌द्वैतवाद एव शिष्टैरादृतः श्रेयोऽर्थिभिराश्रयणीयः अन्यान्यपि दर्शनानि अद्वैत दर्शनस्यास्यैव सोपानतामाश्रयन्तीति चतुर्थसूत्रान्ते विकासेऽस्माभिः प्रदर्शितम् इति।

अथैतन्मुद्रणद्रविणव्ययचिन्ताभाराक्रान्तमतेः यं कमपि सहायकमपेक्षमाणस्य मम काशीहिन्दूविश्वविद्यालयेऽस्मिन्नेकस्मिन् दीक्षान्तभाषणोत्सवावसरे अध्यक्षत्वेन समागतेन परमोदारचरितेन भारततदितरदेशनिष्ठविराजमानकीर्तिपताकापटेन समुल्लसित-मानसेन कुलपरम्परायातसंस्कृतशेमुषी समाराधनलब्धानवद्यविद्यावैभवेन गद्यपद्यरचना-चातुर्यचकितभव्यसभ्यवृन्देन मैथिलकुलकमलभास्करेण कोस्यधिपतिना महामतिना पुरातनवर्त्मानुगामिना वाग्मिना कानपुरनिवासिना वैयाकरणप्रकाण्ड शास्त्रार्थनैपुण्यवि-जितवादिव्रात काशीस्थ विशुद्धानन्दसरस्वती विद्यालयाध्यापक **जयगोपाल मिश्र** तनू जन्मना सर् श्री **हरगोविन्द शर्म्मणा** सह भगवतोऽन्नपूर्णापतेः विश्वनाथस्य कृपया संलापोऽजनि ततः प्रभृति अल्पीयस्येवानेहसि शास्त्रीयया वार्तया अतिप्रसन्नतामाप्तेनै-तन्मुद्रणव्ययचिन्ता सुदूरमपसारिता अतोऽहमतितमां मुदमनुभवन् वदान्यस्य एतस्य मिश्र महाभागस्य बहुभाषाविदः संस्कृतवाङ्मय सारभूताद्वैतविद्यानुरागिणः सपरिवारस्यानन्दो दीर्घायुष्यं च भूयादित्येतदर्थं भूयो भूयो भगवतो विश्वनाथानभ्यर्थये।

अपि च दिगन्तविख्यातवैदुष्यैः रामराज्यसंस्थापनातिप्रयतमानमानसैः साम्प्रति-कदुर्व्यवहारोत्सादनोत्सादवद्भिः रात्रिंदिवं लोककल्याणमीहमानैः प्रतिदेशं प्रतिनगरं च स्वबुद्धिवैभवोपादितव्याख्यानकौशल्यैः धर्मविमुखेष्वपि जनेषु धार्मिकतां संपिपाद-यिषद्भिः यतिवरैः स्वामि श्री **करपात्रीजी** महानुभावैः सोल्लासं भूमिकास्य ग्रन्थस्य लिखितेति महानयमस्माकं प्रमोद इति।

अयमपि च महान्प्रमोदावसरो यथा व्युत्पत्तिवाद प्रकाशटीकायाः मुद्रणम पूज्य-पादानां महामनसां भारत भास्कराणां कुलपतिपदालंकृतानां समये सम्यक् सम्पन्नमेवमेवै

तस्मात् मिथिलातोऽन्यत्रैवामवस्थानोक्तिः बालिशानामेव शोभते। प्रसिद्धिरपि वस्तु निर्णये महत्साहाय्यमाचरति। प्रसिद्धं च विद्वत्समाजे एषा प्रदर्शितानां मैथिलत्वमिति। यदपि माधवाचार्येण शंकरदिग्विजये आचार्यमण्डनमिश्राणां नर्मदातीरस्थमाहिष्मती पुरं निवासस्थानं प्रतिपादितम् तन्मया निराकृतम् अध्यासलक्षणभाष्य भामत्याः 'माहिष्मत्यामवभासः समीचीन इति पंक्तेर्व्याख्यायां प्रकाशे। अन्येऽपि केऽपीतिहासज्ञाः एतन्नानुमन्यन्ते।

सम्प्रत्यपि मिथिलायां माहिष्मती पुरी महिसीति नाम्नाऽऽम्नायमाना ब्राह्मणवसतीराजते यस्यामिदं मण्डनमिश्राणां गृहस्थानमित्यङ्गुल्या निर्दिशन्तो बहवः संगिरन्ते।

मण्डनमिश्रा एव च सुरेश्वराचार्याः यदपि बृहदारण्यकभाष्यवार्तिके ब्रह्मसिद्धितो मतभेददर्शनादुभौ भिन्नावेवेति केचिदाचक्षते तन्न ब्रह्मसिद्धेः गृहस्थावस्थायां वार्तिकस्य च संन्यासावस्थायां कृतत्वेन मतभेदस्योपपादयितुं शक्यत्वादिति।

एतेषां भामतीकृतां आचार्यमण्डन मिश्रैः सह मतैक्यम् बहुषु स्थलेषु विद्यते- यथाऽविद्यायाः जीवाश्रयत्व नानात्वादाविति प्रदर्शितमस्माभिः विकासे अत्यादरश्चैषां मण्डनमिश्रेषु अतएव विधिविवेक टीकायाम् न्यायकणिकायाम् 'आचार्यकृति विवेशनमि'ति पद्यं पूर्वमेव सन्निवेशितमनन्तरं भामत्यामपि समावेशितम् मण्डनमिश्राणां ग्रन्थाश्चैभिराचार्यैः श्रमेणाधीता इति न्यायकणिकातोऽवगम्यते उक्तञ्च न्यायकणिकायाम् 'ब्रह्मसिद्धौ कृतश्रमाणामनायाससमधिग मनीयम् इत्यादि। एतेषां वाचस्पतिमिश्राणां गुरुत्वेन प्रसिद्धाः त्रिलोचनमिश्राः उक्तञ्चैतैः न्यायवार्तिकतात्पर्यटीकायाम्—

'त्रिलोचनगुरून्नीत मार्गानुगमनोन्मुखैः।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्' ॥ इति

त्रिलोचनमिश्रैश्च कृता न्यायकलिका सम्प्रत्यपि उपलभ्यते एतैश्च विरचिता काचिन्न्यायमञ्जरीत्यवगम्यते अत एव न्यायकणिकायाम्—

अज्ञान तिमिर शमनीं परदमनी न्यायमञ्जरी रुचिराम्।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमोगुरवे ॥

इत्युक्तिः संगच्छते। सम्प्रति समुलभ्यमाना न्यायमञ्जरी तु जयन्तभट्टेन विरचिता स तु नैषां गुरुः सम्भवति समयभेदात् अतएव जयन्तभट्टो न्यायमञ्जर्याम् आचार्यास्तावदाचक्षते इत्यादिना आचार्य वाचस्पतिमिश्राणां न्यायवार्तिकतात्पर्यटीकास्थां पंक्तिं बहुषु स्थलेषु प्रमाणतयोपान्यसदित्यलम्।

सचायमद्वैतवाद एव निष्कण्टकः पन्थाः यतोऽत्र न केषामपि दोषाणां प्रसक्तिः-

इदमत्र संक्षेपतस्तावदवगन्तव्यम् यदत्र द्वैतवादिभिः दूषणान्युत्प्रेक्ष्यन्ते तानि किम् प्रपञ्चे सोपाधिके निरुपाधिके वा ब्रह्मणि तत्र निरुपाधिकं निरस्तसमस्तधर्माणं परमात्मानं न कश्चिद्दोषः स्प्रष्टुमर्हति सोपाधिके च उपाधावेव दोषः पर्यवस्येत् नतूपहिते सच्चिदानन्दे, तस्मात् मायायाम् मायिके च प्रपञ्चे एव दूषणं तत्र दूषणं तु भूषणमेव तदुक्तं **मण्डन मिश्रैः** ब्रह्मसिद्धौ—'नहि मायायां काचिदनुपपत्तिः अनुपपद्यमानार्थैव हि माया, इति तस्माद्द्वैतवाद एव शिष्टैरादृतः श्रेयोऽर्थिभिराश्रयणीयः अन्यान्यपि दर्शनानि अद्वैत दर्शनस्यास्यैव सोपानतामाश्रयन्तीति चतुर्थसूत्रान्ते विकासेऽस्माभिः प्रदर्शितम् इति ।

अथैतन्मुद्रणद्रविणव्ययचिन्ताभाराक्रान्तमतेः यं कमपि सहायकमपेक्षमाणस्य मम काशीहिन्दूविश्वविद्यालयेऽस्मिन्नेकस्मिन् दीक्षान्तभाषणोत्सवावसरे अध्यक्षत्वेन समागतेन परमोदारचरितेन भारततदितरदेशनिष्ठविराजमानकीर्तिपताकापटेन समुल्लसित-मानसेन कुलपरम्परायातसंस्कृतशेमुषी समाराधनलब्धानवद्यविद्यावैभवेन गद्यपद्यरचना-चातुर्यचकितभव्यसभ्यवृन्देन मैथिलकुलकमलभास्करेण कोस्यधिपतिना महामतिना पुरातनवर्त्मानुगामिना वाग्मिना कानपुरनिवासिना वैयाकरणप्रकाण्ड शास्त्रार्थनैपुण्यवि-जितवादिव्रात काशीस्थ विशुद्धानन्दसरस्वती विद्यालयाध्यापक **जयगोपाल मिश्र** तनूजन्मना सर् श्री **हरगोविन्द शर्म्मणा** सह भगवतोऽन्नपूर्णापतेः विश्वनाथस्य कृपया संलापोऽजनि ततः प्रभृति अल्पीयस्येवानेहसि शास्त्रीयया वार्तया अतिप्रसन्नतामाप्तेनै-तन्मुद्रणव्ययचिन्ता सुदूरमपसारिता अतोऽहमतितमां मुदमनुभवन् वदान्यस्य एतस्य मिश्र महाभागस्य बहुभाषाविदः संस्कृतवाङ्मय सारभूताद्वैतविद्यानुरागिणः सपरिवारस्यानन्दो दीर्घायुष्यं च भूयादित्येतदर्थं भूयो भूयो भगवतो विश्वनाथानभ्यर्थये ।

अपि च दिगन्तविख्यातवैदुष्यैः रामराज्यसंस्थापनातिप्रयतमानमानसैः साम्प्रति-कदुर्व्यवहारोत्सादनोत्सादवद्भिः रात्रिंदिवं लोककल्याणमीहमानैः प्रतिदेशं प्रतिनगरं च स्वबुद्धिवैभवोपादितव्याख्यानकौशल्यैः धर्मविमुखेष्वपि जनेषु धार्मिकतां संपिपाद-यिषद्भिः यतिवरैः स्वामि श्री **करपात्रीजी** महानुभावैः सोल्लासं भूमिकास्य ग्रन्थस्य लिखितेति महानयमस्माकं प्रमोद इति ।

अयमपि च महान्प्रमोदावसरो यथा व्युत्पत्तिवाद प्रकाशटीकायाः मुद्रणम पूज्य-पादानां महामनसां भारत भास्कराणां कुलपतिपदालंकृतानां समये सम्यक् सम्पन्नमेवमेवै

तस्य पुस्तकस्य मुद्रणम् सकलजनतादुःखमुद्दिधीर्षताम् अतिप्रख्यातविद्यावतां विद्वत्समाजसमादृतानां श्रीमतामाचार्य **नरेन्द्रदेवमहोदयानां** हिन्दूविश्वविद्यालय कुलपतिपदविभूषणानाम्, एवमतिप्रसिद्ध वैदुष्याणां हितमितमधुरभाषिणाम् विश्वविद्यालयोत्तमप्रबन्धचतुराणामुपकुलपतिपदभूषणानाम् श्रीमतां **विष्णु वासुदेव नारलीकरजी महोदयानां** च समये साम्प्रतिके नवाधिकद्विसहस्रमिते वैक्रमाब्दे २००९ सम्पन्नमिति ।

एतस्य च पुस्तकस्य मुद्रणम् **श्रीरामलाल** शास्त्रिणा परमोदारविचारसदाचार कुलाचारानुगामिना सौशील्यादिगुणशालिना सोत्साहं सपरिश्रमं स्वकीये यन्त्रालये कारितमतोऽस्मै बहुशो धन्यवादानाशीर्वादांश्च वितरामि ।

प्रूफ संशोधकस्य व्याकरणाचार्य वेदान्तमीमांसाशास्त्रिपरीक्षामुत्तीर्णस्य श्रीकृष्णमोहन ठाकुर शर्म्मणः बहुतर कार्यभाराक्रान्ततया भूयस्योऽशुद्धयो जाताः ताः शुद्धि पत्रेण शोधनीया अवशिष्टाश्च विद्वद्भिः स्वयं शोधयितव्या इति निवेदयामि ।

सुधीजन विधेयः—

**श्रीलक्ष्मीनाथझा शर्मा ।**

प्रकाशविकासोपेते यस्मिन् पुस्तके मन्नामाङ्कितमुद्रणं 'मोहर' नोपालप्स्यत तच्चौर्येण लब्धमित्यवाधारयिष्यत इति ।



पण्डित श्रीलक्ष्मीनाथ झा



चारोरस्य प्रकाशस्य विकासस्यापि कारकः ।
विश्वविद्यालये काश्यां लक्ष्मीनाथो विराजते ॥

# शुभाः वाचः

इमे पण्डित श्रीलक्ष्मीनाथ झा शर्म्माणः मिथिलादेशैकदेश दरभङ्गा मण्डलान्तर्गत मधुवनी समीपस्थ **सीमा** ग्राम वास्तव्याः उक्तमण्डलान्तर्गत स्वमातृकुल निवासस्थान ढ़ाठीग्रामनिवासि वैयाकरणप्रकाण्डपण्डित **हरीशंकर झा** शर्म्मभ्यो गुरुवरेभ्योऽधीत्य शैशवावस्थायामेव व्याकरणव्युत्पत्ति मासाद्य प्रदर्शित मण्डलान्तर्गत **नवानी** ग्राममधिवसद्भ्यः मैथिलकुलकमल विवस्वद्भ्यः सर्वतन्त्र स्वतन्त्र **धर्मदत्त झा** प्रसिद्ध **बच्चा झा** महानुभावेभ्योऽध्येतुमगमन् तेच गुरुवराः तदीयं सौशील्यंमेधावित्वादिकंचावगत्य अति वात्सल्येन प्रथमं न्याय शास्त्रमध्याप्य तदीयग्रन्थ ग्रन्थि शैथिल्य पटीयसीं विद्वत्तां च प्रापय्य एतद्द्वारा चान्यान् बहूनान्तेवासिनोऽध्यापयन्तः सांख्य योग वेदान्त दर्शनानि अल्पीयसा वर्षेणाध्याप्य तत्तच्छास्त्र व्युत्पत्तिं कारयन्तः मीमांसायाश्च कांश्चिद् ग्रन्थानपीपठन् ।

अनन्तरमिमे लक्ष्मीनाथ झा शर्म्माणः सर्वदेवादिनमस्यतपस्यैकसाध्यपरमोपास्यगजास्यसमुपासनावासनालालसासमाकृष्टमानसाः काशीमागत्य तदाराधनं सम्पादयन्तः स्वावासस्थाने समागतानन्तेवासिनः सस्नेहं सोत्साहमध्यापयन्तः षण्मासाभ्यन्तर एव प्रख्यातकीर्तयः गुर्जर देशीय सुरत नगरमलंकुर्वता वल्लभाचार्य कुल कौस्तुभ गोस्वामि श्री व्रजरत्नलाल जी महाराजेन न्याय-शास्त्रमध्येतुकामेनाहूताः तंमध्यापयतामेषां प्रगाढ़पाण्डित्यं श्रावम् श्रावम् समाकृष्टहृदयेन पूज्यपादेन महामनसा मदनमोहन मालवीयजी महानुभावेन विश्व-विद्यालय जीवातुना धरातलभानुना महामतिना कुलपतिना स्वप्रयत्नसम्पादिते हिन्दू विश्वविद्यालये सादरं स्वयं समाहूय न्याय वेदान्ताध्यापने १९२६ ईशवीय वर्षे नियोजिताः सम्प्रति पुनरिमे दर्शनविभागाध्यक्षतामाश्रयन्ते ।

ते चेमे मम भाग्यवशाद् विश्वविद्यालये मिलिताः एतेषां विद्या प्रकर्षेणाकृष्टोऽतिप्रसन्नोऽहमस्मि मम च बहोः कालात् एतादृशविशिष्ट विद्वांसमन्वेषमाणस्य न कश्चिदेनान् विहायोपलब्धः ।

एभिश्चातिप्रतिभावद्भिः स्वकीयं बुद्धि वैभवं दर्शयद्भिः ये इमे शांकरभाष्य भामत्याः प्रसन्नगम्भीरायाः प्रकाश--विकासाभिधे टीके विरचिते ते एते विश्वेषामेव विदुषां चेतांस्यचिरमेव चमत्करिष्यतः ।

आवश्यकता चासीत् सर्वदर्शनमूर्धन्यवेदान्तदर्शनग्रन्थप्रधानतम शांकरभाष्य भामत्याः साम्प्रतिके समये एतादृश्याष्टीकायाः या मञ्जुलया भाषया भावमाविः कुर्वती सर्वेषां विचाररसिकानां भारतीयानां वैदेशिकानाञ्च अद्वैततत्त्वं प्रकाशयेत् ।

इयं हि शांकरभाष्य भामती न भारतीयानामेव महती सम्पत्तिः अपितु सर्वेषामेव पृथ्वीतलनिवासिनाम् परमतत्त्वं जिज्ञासतां श्रेयोऽभीशताम्, तस्मा-देतादृश्या प्राञ्जलभाषया कृतया टीकया गूढ़भावाभिव्यञ्जिकया प्रकाशाभि-धया विकाशाभिधया च विश्वानुपर्चिकीर्षद्भ्यः सकरिवार परहटमूलग्राम-बद्धयो मैथिलेभ्यः सर्वतन्त्रस्वतन्त्रेभ्यः श्री लक्ष्मीनाथझा शर्मभ्यः सोल्लासं धन्यवादान् वितरामीति ।

कानपुर निवासी—

Sir. सर श्री हरगोविन्द मिश्रः

* सर् श्रीहरगोविन्द मिश्र महोदयः *



श्री सर् पदालंकृतचारुकीर्तिर्यो वै विभूतिः किल तीरभुक्तेः ।
हरादि-गोविन्द-पदाभिलप्यः मिश्रोपनामा जयतात् शतायुः ॥



GOVERNMENT HOUSE.

PATNA.

The Governor,
*BIHAR.*

March 27, 1951.

Revered Pundit Lakshminath Jha,

I thank you sincerely for presenting me a copy of व्युत्पत्तिवाद with your commentary प्रकाशव्याख्या and a copy of the first part of चतुःसूत्री of शांकरभाष्य सहित ब्रह्मसूत्रम् with भामती, प्रकाश, विकास your 'Vikas' is a great help to readers in understanding Bhashya and Bhamati.

The Adwait Siddhanta is the highest expression of Indian philosophical thought. The text of the Shankar Bhashya was explained in Bhamati. But the subtle reasoning of Bhamati required to be more fully explained in simple language. The authors of Bhamti and Praksha have thrown hints to explain the propriety of expressions in the Bhashya.

They assumed the readers to have mastered the principles of Nyaya and Mimansa and to be thoroughly conversant with their way of reasoning. In writing 'Vikas' you have done a great service in rendering the metaphysical discussion in a simple style intelligible to students of Sanskrit not much advanced in the study of the classical works of Darshanas.

I'll be eagerly awaiting the publication of subsequent parts of your valuable work.

I am deeply obliged to you for presenting a copy of your valuable work.

With my best regards,
yours sincerely,
M. S. Anay.

**Pundit Laxminath Jha,**
Professor of Philosophy,
Sanskrit Mahavidyalaya,
Hindu University,
BANARAS.

सन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्ध एव, अहं वा नाहं वा नाहमेवेति वा संशीति विपर्यासयोरनुभवात् । न वा 'अहं स्थूलः कृशो वच्मि गच्छामि' इत्यादिदेहधर्मसामानाधिकरण्यदर्शनेन देहावलम्बनत्वाहं प्रत्ययस्य, तथात्वे बाल्ययौवनादिभेदेऽपि अहं प्रत्ययालम्बनस्य प्रत्यभिज्ञानानुपपत्तेः । भवति च प्रत्यभिज्ञा 'योऽहं बाल्ये पितरावन्वभवं सोऽहमेव यौवने भार्यापुत्रादीननुभवामि' इति । नचात्र शरीरप्रतिसन्धानं सम्भवति विलक्षणत्वात् बालादिशरीराणां व्यावृत्तत्वात्तेष्वनुवृत्तस्याहङ्कारास्पदस्य कुसुमानुवृत्तसूत्रस्येव तद्भिन्नस्यैवात्मत्वमुपेयम् । स्वप्नोत्थितस्य 'नाहं देवो मनुष्य' इति स्वप्नगतदेवदेहबाधेऽप्युभयत्रैवात्मैक्यानुभवाच्च न देहालम्बनताऽहंप्रत्ययस्य । तथैवेन्द्रियभेदेऽपि 'योऽहमद्राक्षं स एवाहं शृणोमि' इत्यहमर्थस्यैक्यानुभवान्न तान्यप्यात्मा 'योऽहं सङ्कल्पयामि स एवाहं मध्यवस्यामि' इति प्रतिसंधानाद्बुद्धिमनसोरिन्द्रियाणाञ्च करणत्वमेव न कर्तृत्वम् ।

यदप्युच्यते 'भूतधर्म एव चैतन्यम्' इति तन्न, समस्तव्यस्तबाह्यपृथिव्यादिषु तदनुपलम्भात् । ननु मदिराकारपरिणतानां किण्वानां मदशक्तिवत्कायाकारेण परिणतानामेव भूतानां धर्मश्चैतन्यमिति चेन्न, देहभावेऽपि मृतावस्थायां तदनुपलम्भात् । नच संयोगादिवत् अयावद्देहभावित्वेन तदुपपत्तिः ? चैतन्यस्य रूपादिवद्विशेषगुणत्वेन तदनुपपत्तेः यथाभूतं रूपादिरहितं न भवति तथैव देहेनापि चैतन्यरहितेन न भाव्यम् । एवमेवेच्छादिसम्बन्धेऽपि ज्ञातव्यम् । मृतावस्थायां प्राणचेष्टाद्यदर्शनादात्माधिष्ठानादेवामी देहधर्मा व्यज्यन्ते इत्यपि मन्तव्यम् । देहधर्मा रूपादयश्च परप्रत्यक्षा नैवमात्मधर्मा ज्ञानेच्छादयः स्वप्रत्यक्षा एव तु ते । यदपि भूतेष्वयावद्भूतभाव्यपि चैतन्यम्, देहाकारपरिणतेषु स्यान्मदशक्तिवदिति, तदप्यविचरितरमणीयम्—चैतन्यस्य भूतविशेषगुणत्वे यावद्देहभावित्वानुमानवद् यावद्भूतभावित्वानुमानात् । नच मदशक्त्यां व्यभिचारः, शक्तेर्विशेषगुणत्वाभावात् अपि च मदशक्तिर्यथा मात्रया प्रतिमदिरावयवं भवति तद्वच्चैतन्यमपि प्रतिदेहावयवं भवेदिति देहे चेतनबहुत्वापत्तिः, तत्र समुदायस्यावयविनश्चेतयितृत्वे एकस्मिन्नवयवे वृक्णेऽवयवी समुदायोऽपि वृक्णो भवेदिति प्रेततत्वापत्तिः न चेष्टापत्तिः वृक्णेऽप्यवयवेऽवयविनश्चैतन्यदर्शनात् प्रत्येकमवयवानाञ्चेतयितृत्वे बहूनामन्योन्याभिप्रायानुविधानासम्भवेन विरुद्धदिक्क्रियाभिमुखानां स्वातन्त्र्ये परस्परप्रतिबद्धस्वातंत्र्ये वा शरीरमुन्मथ्येत निष्क्रियं वा प्रसज्येत अपि च सति देहे जीवदवस्थायां ज्ञानेच्छादीनां सत्त्वेऽपि तदसत्त्वे तदसत्त्वानिर्णयात् नचानुपलम्भादसत्त्वनिर्णयः, सत्त्वेऽपि व्यञ्जकाभावादनुपलम्भसम्भवात् । जातेर्विमुक्ते सर्वत्र सत्त्वेऽपि व्यञ्जकाभावेनानुपलम्भवच्चैतन्यानुपलम्भोपपत्तेः ।

अपि च भूतचतुष्टयातिरिक्तस्येश्वरस्यानभ्युपगमे विलक्षणदेहेन्द्रियादिभावे भूतानां कथं संहतत्वम् ? नचाचेतनायाः प्रकृतेस्तथाविधानामेव परमाणूनां विद्युत्कणानां वा विविधवैचित्र्योपेतविश्वविरचयितृत्वसम्भवः, तथात्वेऽद्यापि विविधवायुयानपरमाणुबम्ब्वादिनिर्माणस्याप्यचेतनकर्तृकत्वापत्तेः । नचादृष्टेन स्वभावेन वा तच्छक्यसमाधानम्

प्रत्यक्षमात्र प्रमाणेन तयोरसिद्धत्वात् । यदि कार्यवैचित्र्यानुपपत्त्या कारणवैचित्र्यं कल्प्येत तदा त्वदृष्टमकृताभ्यागमकृतविप्रणाशादिभ्यो नित्य आत्मा सर्वनियामकश्चाभ्युपेतव्य एव ।

अपि च भूतचतुष्टयात्तत्त्वान्तरं लोकायतिकैर्नाभ्युपेयतेऽतो नान्यपरिणामभेदो रूपादिर्वा चैतन्यादिर्वा किन्तु भूतपरिणामभेद एवाभ्युपगन्तव्यः । तथा च यथा भूतधर्मा रूपादयो जडत्वाद्विषया न विषयिणः तथैव चैतन्यादिरपि विषय एव भवेत् ।

नच केषाञ्चिद्विषयित्वमपीति पक्षो युक्तः ? स्वात्मनि वृत्तिविरोधात् । नच भूतव्यतिरेकेण किञ्चित्तत्वमभिप्रैति लोकायतिकः, । यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्तर्हि विषयत्वात्तेषां न तद्धर्मत्वं स्वात्मनि क्रियाविरोधात् । न ह्यग्निरुष्णः सन् स्वात्मानं दहति, नहि नटवटुः सुशिक्षितोऽपि स्वस्कन्धमारोढुं शक्नोति । नहि भूतभौतिकधर्मेण सत्ताचैतन्येन भूतभौतिकानि विषयीक्रियेरन् । विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन । तस्याश्चैतन्यरूपाया भूतादिविषयाया उपलब्धेर्भावश्चेदभ्युपगतस्तदा भूतव्यतिरेकोऽपि स्वीकार्यः । उपलब्धिस्वरूपस्यात्मनो देहादिव्यतिरेकः सिद्धः । 'अहमिदमद्राक्षम्' इत्यवस्थान्तरेऽपि उपलब्धृत्वेन प्रत्यभिज्ञानात् स्मृत्याद्युपपत्तेश्च तस्या ऐकरूप्यात् नित्यत्वञ्च । एवं प्रदीपादौ सति भवत्युपलब्धिर्नासति तथापि न प्रदीपादिधर्म उपलब्धिर्यथा तथैव सति देहे भवत्युपलब्धिर्नासति तस्मादपि न देहधर्म उपलब्धिः प्रदीपवद्देहोपयोगसम्भवात् । स्वप्ने च निश्चेष्टेऽप्यस्मिन् देहे भवन्ति नानाविधोपलब्धय इति न भूतभौतिकधर्मश्चैतन्यम् ।

यदपि देहादिव्यतिरिक्तोऽपि देहादिभिः सहैवोत्पद्यते विनश्यति च । तदुक्तम्— 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति तन्न, जन्मान्तरीयादृष्टादिमन्तरा वैलक्षण्यानुपपत्तेः । प्राक्तनसंस्काराभावे स्तन्यपानादौ शिशोः प्रवृत्त्यनुपपत्तेश्च । इन्द्रियात्मपक्षेऽपि चेतनबहुत्वाद्युक्तदोषा अनुसन्धेयाः । 'अहं पश्यामि शृणोमि रसयामि जिघ्रामि स्पृशामीच्छामि' इत्येकात्मगोचरानुभवः पश्यतो जिघ्रतो रसयतः स्पृशतश्च परस्परं भिन्नत्वे नोपपद्यते तस्मान्मनस इन्द्रियाणाञ्चान्तर्बाह्यकरणत्वमेव न कर्तृत्वम् । 'कुठारेण छिनद्मि, तुरङ्गेण लङ्घयामि' इतिवत् 'चक्षुषा पश्यामि, कर्णेन आकर्णयामि' इत्यादिव्यवहारदर्शनात् । अपि च चक्षुःश्रोत्रादीनि खानि बुद्धिमनसी च न प्रत्यक्षाणि तेषामतीन्द्रियत्वात् । नचोपलभ्यमानानि चक्षुरिन्द्रियाणि, गोलकत्वात् । अतएव गोलकानामनुपघातेऽपीन्द्रियोपघातेन विषयाग्रहणम् । यथा दग्धाऽप्यग्निर्नात्मानं दहति अपि तु दाह्यकाष्ठादिकमेव, तथैवेन्द्रियाण्यपि स्वावगमनाक्षमाणि स्ववृत्तिविरोधात् । दृष्टिश्रुतिघ्रातिगतिमतिविज्ञात्यादयः करणपूर्विकाः क्रियात्वात् छिदिक्रियावदित्यनुमानेनैवेन्द्रियसिद्धेः । यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादिस्वलक्षणमुपलब्धं तथापि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत्करणम् । युगपज्ज्ञानानुत्पत्तिलिङ्गेन मन आदिकमपि तथैवानुमान-

गम्यमिति तदन्तरा कुत इन्द्रियादिसिद्धिः, कुतश्च तदात्मवादः ? प्रत्युत अचेतनानां प्रवृत्तिश्चेतनाधिष्ठिता अचेतनप्रवृत्तित्वात् रथादिप्रवृत्तिवत् । वैज्ञानिकेऽस्मिन् युगेऽपि स्वतश्चलितेष्वपि नानायन्त्रेषु संयोजकः प्रथमप्रवर्त्तकश्च चेतन एवापेक्षित इति नाव्याप्तिः । नापि स्वभावेनार्थान्तरता तस्यासत्त्वे कार्यकारणाक्षमता सत्त्वेऽप्यचेतनत्वे तस्यास्तादवस्थ्यात् चेतनत्वे नाममात्रभेदात् ।

देहादिसङ्घातः परार्थः सङ्घातत्वात् शय्याप्रासादादिवत् स्वविलक्षणस्य कस्याचिद् देवदत्तादेः कृतं यथा शय्यादिस्तथैव स्वविलक्षणस्यात्मन एव कृते देहादिसङ्घातोऽचेतनोऽनेकात्मकोऽनित्यो दुःखरूपोऽपूर्णस्तद्विलक्षणश्चेतन एकोऽसंहतो नित्यपूर्णानन्दस्वरूपश्च आत्मा सिद्धयति । अपि चाचेतनानां प्रवृत्तिर्नाचेतनार्था किन्तु इष्टप्रेप्सोरनिष्टपरिजिहीर्षोः कस्यचिच्चेतनस्यैवार्थे तत्प्रवृत्तिरिति वक्तव्यम् । न ह्यचेतनस्येष्टप्रेप्सानिष्टपरिजिहीर्षा न चेष्टानिष्टसुखदुःखप्राप्तिपरिहारौ ।

सौगतास्तु—'दुःखमायतनं समुदयो मार्ग' इत्येतदार्थसत्यचतुष्टयमुपयन्ति । सुगतस्तेषां देवो विश्वं च क्षणिकमिति संक्षेपेण तद्विवरणम् ।

"दुखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणो यस्मात्समुदेति नृणां हृदि ।
आत्मात्मीयस्वभावाख्यः स स्यात् समुदयः पुनः ॥
क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥"

तत्र माध्यमिकः सर्वशून्यत्ववादी, योगाचारो बाह्यार्थशून्यत्ववादी, सौत्रान्तिको बाह्यार्थानुमेयत्ववादी. वैभाषिको बाह्यार्थप्रत्यक्षत्ववादी । ज्ञानान्वितोऽर्थः प्रत्यक्षग्राह्यो वैभाषिकस्य, ज्ञानं प्रत्यक्षमर्थस्त्वनुमानग्राह्यः सौत्रान्तिकस्य, बाह्यार्थशून्यं साकारं ज्ञानमेवेति योगाचारस्य, सर्वशून्यमिति माध्यमिकस्याभ्युपगमः । तेषां सर्वज्ञत्वेन पुरोवर्तिनि कस्यचिच्चैत्रत्व बुद्धिः कस्यचिन्मैत्रत्वबुद्धिरपरस्य स्थाणुत्वबुद्धिरित्यादिवन्न भ्रान्तिः, न वा विरुद्धप्रतिपत्तिः सिद्धे वस्तुनि विकल्पायोगात् । न वैकल्पिकार्थप्रत्ययोऽपि सम्भवति किन्तु उत्तममध्यमादिविनेयबुद्धयनुसारेण सर्वे पक्षास्तद्विवरणभूता एव प्रस्थानभेदा इत्याहुः । तथाभ्रप्रदीपज्वालावद् घटादयः क्षणिकाः सत्त्वात् यत् सत्तत्क्षणिकमिति व्याप्तेः अर्थक्रियाकारित्वमेव सत्त्वम्, न चायमसिद्धो हेतुः घटादौ प्रत्यक्षसिद्धत्वात्, व्यापकव्यावृत्त्या व्याप्यव्यावृत्ति-

रितिन्यायेन व्यापकक्रमाक्रमव्यावृत्तौ अक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वात् । अर्थक्रियाकारित्वं हि क्रमाक्रमाभ्यां व्याप्तम् । क्रमाक्रमौ परस्पराभावरूपमेव प्रकारान्तरं न सम्भवति मिथोऽत्यन्तविरुद्धयोः सामानाधिकरण्यासम्भवात् । तमः प्रकाशवद्विरुद्धस्वभावयोर्विरोधेन क्रमाभावेऽक्रमस्य क्रमाभावे क्रमस्य चावर्जनीयत्वात् तदेतदुक्तम्—

"परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः ॥"

(कुसुमा ३।८)

तथा चाक्षणिकाद्व्यावर्त्तमानौ क्रमाक्रमौ स्वव्याप्यमर्थक्रियाकारित्वमपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयतः । नन्वीश्वरस्य कुलालादेश्चाक्षणिकस्याप्यर्थक्रियाकारित्वं सिद्ध्यत्येवेति चेत् ? न, विकल्पासहत्वात् । तथाहि तस्य वर्त्तमानार्थक्रियाकालेऽतीतानागतार्थक्रियासामर्थ्यमस्ति वा न वा ?, अस्ति चेत्—तदानीमेव त्रैकालिकार्थक्रियाकरणप्रसङ्गः समर्थस्य कालक्षये हेत्वभावात् । नचेत्सर्वदा तत्प्रसङ्गः स्थायिनः कदाचिदसामर्थ्यं कालान्तरेऽपि तथात्वात्, असमर्थवस्तु स्वरूपापेक्षया समर्थवस्तुस्वरूपे भेदाभ्युपगमे स्थायित्वभङ्गः । यद्यदा यन्न करोति तत्तदा तत्रासमर्थम्, यथाहि शिलाशकलमङ्कुरे । नचैष वर्त्तमानार्थक्रियाकरणकाले अतीतागते अर्थक्रिये करोतीति भूतभविष्यत्कालयोरपि तदकरणप्रसङ्गः ।

ननु स्थायिनः त्रैकालिकार्थक्रियाकरणसमर्थस्यैकरूपत्वेऽपि तत्सहकारिसमवधानेन क्रमेण तत्तदर्थक्रियाकारित्वमिति न सर्वदा सर्ववस्तूत्पादप्रसङ्ग इति चेन्न; एकस्मिन् धर्मिणि विरुद्धधर्मयोरसामञ्जस्यात् । नचैकस्मिन् घटे श्यामरक्तरूपयोरिवैकस्मिन् वृक्षे कपिसंयोगतदभावयोरिव कालमूलादितत्तदवच्छेदकभेदेन सत्त्वमिति कालभेदेन एकस्मिन्नपि धर्मिणि सामर्थ्यासामर्थ्ययोः सत्त्वमिति वाच्यम्, अवयवभिन्नतयाऽवयव्यसिद्ध्या तत्रैकत्वासिद्धेः । किञ्च सहकारिणः स्थायिनमुपकुर्वन्ति न वा ?, न चेन्नापेक्षणीयाः, अथ सहकारिभिः सहैव स्थायी कार्यं करोतीति तत्स्वभाव इति चेत्, स्वभावस्यानपायात् न कदापि सहकारिणो जह्यात् उपकुर्वन्तीति चेत्; तदाऽपि किं सोऽयमुपकारः स्थायिनो भिन्नोऽभिन्नो वा ? आद्ये तस्यागन्तुकस्यैव हेतुत्वं न स्थायिनः । आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्यस्य । सोऽप्यतिशयोऽतिशयान्तरमारभते न वा ? पक्षद्वयेऽपि पूर्वोक्तदूषणानि अनवस्था च । सहकारिष्वपि सहकार्यन्तरापेक्षायामप्यनवस्था । अपि च सलिलादिभिः सहकारिभिराधीयमाने बीजस्यातिशये बीजमुत्पादकमिति मन्तव्यम् । बीजञ्च सहकारिसापेक्षमेवातिशयमाधत्ते अन्यथा सहकारिणामसमवधानेऽपि उपकारापत्तौ अङ्कुरोऽपि सदोदियात् । तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिर्बीजेऽतिशयान्तरमाधेयम् । नचेदकिञ्चित्कुर्वतां सहकारिणां समवधानमनर्थकमिति केवलादपि

बीजादङ्कुरोत्पत्तिप्रसङ्गः, आधेयश्चेत् ? तत्राप्युपकारोत्पत्तये द्वितीय उपकारो जनयितव्य इत्येव मनवस्था। अथोपकारः कार्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्यं जनयति तत्सापेक्षं वा प्रथमे बीजादेरहेतुत्वापत्तिः द्वितीये अपेक्ष्यमाणेन बीजादिनोपकारेऽतिशय आधेयः एवं तत्रापीत्यनवस्था एवमुपकारेणापि बीजादावुपकारान्तरमाधेयम्। यदि च सहकारिभिराधीयमानोऽतिशयभावाभिन्न एव तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तोऽन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायते तस्मात्क्रमेणाक्षणिकस्यैकस्यार्थक्रिया दुर्घटा।

नाप्यक्रमेण घटते विकल्पासहत्वात् युगपत्सकलकार्यकरणसमर्थस्वभावस्तदुत्तरकालमनुवर्त्तते न वा ? प्रथमे तत्कालवत्कालान्तरेऽपि तत्कार्यकरणापत्तेः, द्वितीये न बीजादौ स्थायित्वम्। बीजादिर्भावः प्रतिक्षणं भिन्नः विरुद्धधर्मविशिष्टवान् जलधरवदिति प्रयोगात्। न च स्वरूपासिद्धिः ? स्थायिनि कालभेदेन सामर्थ्यासामर्थ्ययोरनुपपद्यमानत्वात्। यद्यदा यत्करोति तत्तदा तत्र समर्थं यथा सामग्री स्वकार्यं इत्यादीन्यनुमानानि। तथा च क्रमाक्रमानुपपत्त्या सत्त्वं क्षणिकत्वपक्षे एव व्यवस्थीयते। नच सत्तासामान्ययोगित्वमेव सत्त्वम्, तच्च स्थायिन्यस्त्येवेति वाच्यम्; सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्। नच स्वरूपसत्तानिबन्धनः सामानाधिकरण्यनिबन्धनो वा तत्र व्यवहारः, प्रयोजकगौरवादभावे प्रसङ्गाच्च। अपि च गोत्वसामान्यस्य विभुत्वे मनुष्यादिष्वपि तद्व्यवहारप्रसङ्गः, यदि व्यक्तिष्वेव सामान्यं स्थितं न व्यापकं तदोत्पद्यमानघटादिना गच्छत्सम्बध्नाति अगच्छद्वा ? आद्ये क्रियावत्त्वेन द्रव्यत्वापत्तिः। अन्त्ये विप्रकृततया सम्बन्धानुपपत्तिः, तस्मादर्थक्रियाकारित्वमेव सत्त्वमिति मन्तव्यम्। तच्च पूर्वोक्तदिशा क्षणिकत्वपक्ष एव व्यवतिष्ठते। सर्वं क्षणिकं क्षणिकमिति भावनीयम्, सर्वं दुःखं दुःखमिति भावनीयम्, स्वलक्षणानां क्षणानां क्षणिकतया सालक्षण्याभावादेतेन सदृशमिदमिति वक्तुमशक्यत्वात् अतः स्वलक्षणं स्वालक्षणमिति भावनीयम्, एवं सर्वं शून्यं शून्यमित्यपि भावनीयम्।

तत्र **सर्वास्तित्ववादिनां** मते—भूतं भौतिकं चित्तं चैत्यञ्च तदभिमताः पदार्थाः। भूतं पृथिव्यादयः, भौतिकं रूपादयः चक्षुरादयश्च खरस्नेहोष्णेरणस्वभावाः पृथिव्यादिपरमाणव एव पृथिव्यादिभावेन संहन्यन्ते। चितचैत्यात्मकश्च स्कन्धः पञ्चविधः—सविषयाणीन्द्रियाणि रूपस्कन्धः, आलयविज्ञानं प्रवृत्तिविज्ञानञ्च विज्ञानस्कन्धः'

"तत्स्यादलयविज्ञानं यद्भवेदहमास्पदम्।
तस्यात्प्रवृत्तिविज्ञानं यन्नोलादिकमुल्लिखेत्॥"

इत च तत्सङ्केतः। या प्रया प्रयानभयविषयस्पर्शे सुखदुःखतद्रहतावस्था चत्तस्य जायते स वेदनास्कन्धः। सविकल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासः संज्ञास्कन्धः। रागादयः क्लेशा मदमानादय उपक्लेशा धर्माधर्मौ च संस्कारस्कन्धः। एते चाध्यात्मं सर्वव्यवहारास्पदत्वेन संहन्यन्ते। सर्वमेतद्दुःखं दुःखसाधनञ्चेति निश्चित्य तन्निरोधोपायं तत्त्वज्ञानं

सम्पादयेत् तेन च विमलविज्ञानप्रवाहलक्षणमुक्तिर्भवति। तत्र धूमादिलिङ्गस्याप्रत्यक्षत्वे व्याप्तेरग्रहणादनुमानस्यासम्भवात् । साक्षात्कारोमीति लोकानुभवाच्च न केवलमनुमेय-एव पदार्थः, किन्तु प्रत्यक्षोऽपि स्वीकर्तव्य एव। तत्र निर्विकल्पज्ञानस्य कल्पनापोढत्वा-त्प्रमात्वम्, सविकल्पस्य कल्पनात्वादप्रमात्वम्। तत्र यथा मणिप्रभायामप्रमारूपयापि मणिबुद्ध्या प्रवृत्तानामर्थप्राप्तिः संवादश्च, तथैव सविकल्पज्ञानेनाप्रमारूपेणापि प्रवृत्ताना-मर्थप्राप्तिसंवादौ। अत्राहुः—तत्र नित्यसिद्धं चेतनमन्तरा न समुदायसम्भवः समुदा-यिनामचेतनत्वाच्चित्ताभिज्वलनस्य समुदायसिद्ध्यधीनत्वादन्यस्य स्थिरस्य भोक्तुः प्रशासि-तुर्वा कस्यचित्संहन्तुरनभ्युपगमादनुपरमप्रसङ्गेन निरपेक्षप्रवृत्त्यभ्युपगमानुपपत्तेश्च। नचा-हङ्कारास्पदस्यालयविज्ञानस्य पूर्वापरानुसन्धातृत्वेन संहन्तृत्वमिति वाच्यम्, तस्यैकस्य स्थिरत्वे नित्यात्माभ्युपगमापत्तिः, क्षणिकत्वे पूर्वपरानभिज्ञत्वेन संहन्तृत्वासम्भवात्। नच विज्ञानसन्तानेनाभीष्टसिद्धिः तस्य सन्तानिनोऽन्यत्वे स्थिरत्वे च तथैवात्माभ्युपगमापातात्, तदभिन्नत्वे क्षणिकत्वाविशेषात्। व्यापारवदाश्रयस्तत्कारणकश्च व्यापारो भवति तेन च व्यापारवता व्यापारात्पूर्वं तत्समये च भाव्यम्, समसमयोरसमसमयोश्च हेतुहेतुमद्भा-वाश्रयाश्रयिभावानुपपत्तेः तथा च न क्षणिकानां समुदायिनां समुदायसिद्धिः सम्भ-वयुक्तिका।

बाह्य आध्यात्मिकश्च प्रतीत्य समुत्पादो भवति, कारणं प्राप्य कार्यमुत्पद्यते यदयं प्रतीत्य समुत्पादः कारणम्, कार्योत्पाद इति च। तत्रैकैककारणसम्बन्धो हेतूपनिबन्धः। कारणसमवायसम्बन्धः प्रत्ययोपनिबन्धः प्रत्ययो हेतुसमवायः। बाह्यकार्ये हैतूपनिबन्ध-स्योदाहरणम्—बीजादिफलपर्यन्तं बीजादङ्कुरोऽङ्कुरात्पत्रं ततः काण्डं ततो नालो नाला-द्गर्भो गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमिति बीजादिषु सत्सु अङ्कुरादयो जायन्ते नासत्सु। अत्रान्याधिष्ठात् निरपेक्ष एव कार्यकारणभावनियमो दृश्यते।

प्रत्ययोत्पत्तिनिबन्धस्योदाहरणन्तु—बीजादङ्कुरजनने महाभूतानि धातुविशेष इति षण्णां धातूनां समवायः। स च पृथिवी धातुर्बीजस्य सङ्ग्रहकृत्यं करोति। यतः काठि-न्यमङ्कुरे अब्धातुर्बीजं स्नेहयति तेजो बीजं परिपाचयति वायुर्बीजमभिनिर्हरति येनाङ्कुरो बीजान्निर्गच्छति आकाशधातुर्बीजस्यानावरणकृत्यं करोति। ऋतुरपि बीजस्य परिणामे हेतुः। तदेषां समवस्ये सति बीजे रोहत्यङ्कुरो नान्यथा। नात्रापि कश्चिच्चेतनोऽधिष्ठाता हेतुः हेतुमानन्यो वापेक्षितः। यथा बाह्यप्रतीत्य समुत्पादे तथैवाभ्यन्तर आध्यात्मकेऽपि प्रतीत्य समुत्पादे।

हेतूपनिबन्धनस्योदाहरणम्—अविद्यादिदौर्मनस्यान्तं यथा षट्सु धातुषु यैकैव संज्ञा पिण्डसंज्ञा नित्यसंज्ञा सुखसंज्ञा सत्त्वसंज्ञा पुद्गलसंज्ञा भ्रातृदुहितृसंज्ञाअहङ्कारममकारसंज्ञा अविद्या, तस्यां सत्यां रागादयः संस्काराः ततो विज्ञानं ततो जीवस्य गर्भाशयद्रव्ये वृत्ति-लाभः ततो नाम ( चत्वारः पृथिव्यादयः उपादानकारणस्कन्धः ) ततो रूपम् ( तान्येव

कारणानि विकृत्य सितादिरूपवच्छरीरम् सम्पद्यते, अर्थात् विज्ञानसंसर्गाद्गर्भद्रव्यस्य कललपेश्याद्याकारेणाभिव्यक्तिर्नामरूपम्, ततः षडायतनम् ( षडिन्द्रियायतनं शरीरम् ) ततः स्पर्शः (गर्भगतविषयेन्द्रियसंसर्गजं ज्ञानम् ) तस्माद्वेदना सुखदुःखादिकम्, तस्मात्तृष्णा तत उपादानं ( वाक्कायचेष्टा ) ततो भवो धर्माधर्मौ ततो जातिर्जन्म ततो जरा ततो मरणम्, ततः शोकः परिदेवनं दुःखं दुर्मनस्ता ।

चेतनाधिष्ठिता एवैते कार्यकारणभावाः प्रसिद्धाः नात्र कारणं प्रत्येत्यहमेतन्निर्वर्त्तयामि न वा कार्यं प्रत्येति यदहमनेन निवर्त्तितः । आध्यात्मिकप्रतीत्य समुत्पादे प्रत्ययोपनिबन्धस्योदाहरणम् । पृथिव्यप्तेजोवाय्वाकाश विज्ञानधातूनां समवायाद्भवति कायः । तत्र काये पृथिव्याः काठिन्यम् अद्भिः स्नेहम्, तेजसा शितपीतपरिपाकः, वायुना श्वासादिः आकाशेनावकाशादिः, विज्ञानधातुना च नामरूपाङ्कुरं निर्वर्त्यते । अत्रापि चेतनानपेक्ष एव कार्यकारणभावः ।

तदेवं परस्परं निमित्तनैमित्तिक भावेन घटीयन्त्रवदनिशमावर्त्तमानेऽविद्यादिकलापेऽर्थाक्षिप्त उपपन्नः सङ्घातः ।

तत्र यद्यपीतरेतरनिमित्तत्वमविद्यादीनां सम्भवति तत्रापि सङ्घातस्य तु निमित्तमन्तरेण कथमुपपत्तिः ? अर्थाद्धेतुमात्राधीनोत्पत्तिकत्वादन्यापेक्षहेतूपनिबद्धं कार्यमुत्पद्यताम्, परन्तु नानाहेतुसमवधानसापेक्षः प्रत्ययोपनिबद्धस्तु न हेतुमात्राधीनोत्पत्तिकः, न च कश्चित्सन्निधायकोऽस्ति कारणानाम् ।

वस्तुतस्तु बीजाङ्कुरोत्पत्तिरपि प्रत्ययोपनिबद्धत्वेन विवादाध्यासितेतिपक्षकुक्षे प्रविष्टत्वात् न तेन व्यभिचारोद्भावनं युक्तम्, घटादिदृष्टान्तेनाङ्कुरादावपि चेतनकारणसत्त्वानुमानात् ।

यदप्यन्त्यक्षणप्राप्ताः क्षित्यादयोऽङ्कुरमारभन्ते तेषां तूपसर्पणवशात्परस्परसमवधानम् । न चैकस्मादेव हेतोः कार्यसिद्धावन्येषां वैयर्थ्यमिति वाच्यम्, कारणचक्रानन्तरं कार्योत्पादात्तदवैयर्थ्यात् । न चैकस्यैव समर्थत्वात्तदौदासीन्यम्, तेषामचेतनत्वेनास्मास्वेव एव समर्थः कृतं नः सन्निधिनेत्यालोचना सम्भवात् । तस्मादुपसर्पण प्रत्ययाधीनपरस्परसन्निधानोत्पादा नानुत्पत्तु नासन्निधातुं समर्थाः । नच कारणभेदात्कार्य भेदः सामग्र्या एकत्वेन तदयोगादिति तन्न, अनपेक्षादन्त्यक्षणात् कार्यजनन उपान्त्यानामपि तथात्वापत्त्या कुसूलस्थत्वावैशेष्यापत्तेः, नचेष्टापत्तिः, तथात्वे कृषीवलस्य दुःखबहुले कृष्यादौ प्रवृत्त्ययोगात् ।

यदपि सङ्घातमन्तरेणात्मानमलभमाना अविद्यादयस्तमाक्षिपन्तीति तदप्यपार्थकम् अधिष्ठातारं चेतनमन्तरेणाक्षेपेणापि तदनुपपत्तेः ज्ञापनस्यैवाक्षेपार्थत्वात् ।

नचाविद्यादय एव सङ्घातनिमित्तं तमाश्रित्यैवात्मानं लभमानानां तन्निमित्तत्वानुपपत्तेः। यदि च सङ्घातानां तदाक्षिप्तानामविद्यादीनामनादिपरम्पराऽभ्युपेयते, तदापि सङ्घातात्सङ्घातान्तरमुत्पद्यमानं नियमेन सदृशमेवोत्पद्येत। अनियमेन सदृशं विसदृशं वा नियमे मनुष्यपुद्गलस्य देवादियोन्यन्तरानुपपत्तिः। अनियमे क्षणे क्षणे देवमनुष्यहस्त्यादिसङ्घातोत्पत्त्यापातः। स्वभावोपरागमन्तरेणैव हेतुफलभावाभ्युपगमे तन्तुघटादावपि तत्प्रसक्तिः।

अपि चोत्पादनिरोधयोर्वस्तुनः स्वरूपत्वेऽवस्थान्तरत्वे वा नोपपत्तिः। द्वितीये आद्यन्ताभ्यामुत्पादनिरोधावस्थाभ्यां मध्यवर्त्तिवस्तुनः संसर्गे क्षणत्रयसम्बन्धेन क्षणिकत्वहानिः। वस्तुनस्ताभ्यामसंसृष्टत्वे शाश्वतप्रसङ्गो दुर्वारः। दर्शनादर्शने वस्तुन उत्पादनिरोधौ यदि मतौ तदापि तौ द्रष्टृधर्मौ वस्तुनः शाश्वतत्वप्रसङ्गस्तदवस्थ एव। यदपि वैनाशिकैरसत्येव कारणे फलोत्पत्तिरुच्यते बीजोपमर्द्देनाङ्कुरोत्पादानुरोधादिति, तदप्यविचारितरमणीयम्,—नीलाभासस्य चित्तस्य नीलालम्बनप्रत्ययान्नीलाकारता समनन्तरप्रत्ययात्पूर्वविज्ञानाद्बोधरूपता चक्षुषोऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः। आलोकात्सहकारप्रत्ययात् हेतोः स्पष्टार्थता। एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येवैतानि कारणानीत्येवंरूपायाः प्रतिज्ञाया हानिः हेतोरनपेक्षतया कार्योत्पत्तौ सर्वत्र सर्वोत्पत्तिप्रसङ्गोऽपि। यदि चोत्तरक्षणोत्पत्तिं यावदवस्थानं पूर्वस्य तथापि क्षणभङ्गभङ्गः। किञ्च बुद्ध्यबुद्धिपूर्वकौ प्रतिसंख्याप्रतिसंख्यानिरोधौ सन्तानसन्तानिगोचरौ न संभवतः सन्तानिनामविच्छिन्नहेतुफलभावेन सन्तानाविच्छेदात्। सन्तानिनामपि प्रत्यभिज्ञानबलेनान्वयिनामविच्छेदात् कचिद्दृष्टेनान्वय्यवच्छेदेनास्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु तदनुमानात् तप्तोपलपतितोदविन्दोरपि अम्बुदत्वादिरूपेणावस्थानान्न निरन्वयनाशः। तथा चाविद्यानिरोधोऽपि नोपपद्यते। अपि च साङ्गात्तत्त्वविज्ञानाद्वा स्वयमेव वा निरोधः? आद्ये निर्हेतुकविनाशाभ्युपगमविरोधः, द्वितीये मार्गोपदेशवैयर्थ्यम्, । किञ्चोपलब्ध्येककर्तृका स्मृतिरपि क्षणिकस्योपलब्धुर्न सम्भवति क्षणभङ्गवादे स्मर्तुरुपलब्धुश्च भिन्नत्वात्। प्रत्यभिज्ञालक्षणः प्रत्यक्षोऽपि एकस्मिन्नसति न सम्भवति, भिन्नकर्तृकत्वे 'योऽहमद्राक्षं सोऽहं स्मरामि' इति न स्यात् तत्स्वरूपम्, किन्तु 'अहं स्मराम्यन्योऽद्राक्षीत्' इति प्रत्ययो भवेत्। जन्मारभ्य यावन्मरणमात्मैककर्तृकाः प्रतिपत्तीः स्मरति सर्वोऽपि जनः। तेनेदं सदृशमिति द्वयोर्वस्तुनोर्ग्रहीतैव सादृश्यनिमित्तमुपलभ्य तद्व्यवहरति। नैतदपि क्षणभङ्गवादे सम्भवति। यदप्युच्यते—ज्ञानस्यैव सादृश्याकारकल्पनम्, ज्ञानाकारत्व एकाधिकरणकविरुद्धधर्मद्वयाभ्युपगमलक्षणस्य विवादस्य दत्तजलाञ्जलित्वापातः। बाह्यालम्बनत्वाभावे विकल्पानामेकार्थविषयत्वाभावेन विवादानुपपत्तेः।

यदपि बाह्यस्य ग्राह्यत्वानभ्युपगमेऽप्यध्यवसेयत्वेन सर्वव्यवहारोपपत्तिरिति तदपि कुशकाशावलम्बनम्, अर्थावसाया निर्णयात्। आन्तरस्य ज्ञानाकारस्य बाह्याकारेणाध्यवसायः किं तद्रूपेण निष्पादनं तेन सम्बन्धनं तेनाकारेणारोपणं वा ? न प्रथमोऽन्यस्यान्यतायाः कर्त्तुमशक्यत्वात्। न द्वितीयः आन्तरस्य बाह्यसम्बन्धानुपपत्तेः, तथात्वे बाह्यसम्बन्धनमित्येव प्रत्ययो भवेत् न चास्ति; नान्त्यः विकल्पानुपपत्तेर्वक्ष्यमाणत्वात्।

भोक्तुरपि स्थैर्यानुपगमे भोगस्य भोगार्थत्वापत्तेः। एवं मोक्षोऽपि कस्य ? यदि भोगमोक्षकालस्थायि स्थिरेण केनचिदुभयं प्रार्थ्यते तदा क्षणिकत्वाभ्युपगमविरोधः। अविद्यादीनामितरेतरनिमित्तत्वमपि नोपपद्यते, क्षणभङ्गवादे उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वस्य क्षणस्य निरोधेन पूर्वोत्तरक्षणयोर्हेतुहेतुमद्भावानुपपत्तेः। निष्पन्नस्य भावभूतस्य हेतुत्वे पुनर्व्यापारवत्त्वे क्षणान्तरसम्बन्धः। यदि तु तद्भावस्यैव व्यापारत्वं तत्रापि मृत्सुवर्णकारणानां घटरुचकादीनां मृत्सुवर्णात्मनाऽनुभूयमानत्वात्, फले हेतुस्वभावोपरागस्यैव वक्तव्यत्वेन हेतुस्वभावस्य फलकालावस्थायित्वाभ्युपगमे क्षणभङ्गाभ्युपगमप्रसङ्गात्। कस्यचिद्रूपस्याननुगमे सादृश्यमपि नोपपद्यते उपगमे तथैवाक्षणिकत्वापत्तिः। नच प्रत्ययान्तरमेवैतत् तेनेदमिति भिन्नपदार्थोपादानात् तथात्वे सादृश्यमित्येव स्यात्। नहि लोकप्रसिद्धपदार्थोपक्षेपणे दृष्टान्तव्याघातादिभिः स्वपक्षपरपक्षसाधनदूषणादिकमुपपद्यते। यदपि ग्राह्याध्यवसेययोर्भेदकल्पनम्, तदपि नोपपद्यते। यदपि स्वप्रतिभासेऽर्थाध्यवसायेन प्रवृत्तिस्तदप्यापातरमणीयम्, विकल्पाकारस्य करणयोजनारोपणासम्भवात्। नचान्तरं बाह्यं बाह्यसंयोजनं वा कर्त्तुं शक्यते, नाप्यारोपेण तत्सम्भवः विकल्पानुपपत्तेः। तथाहि गृह्यमाणेऽगृह्यमाणे वारोपः ?, नाद्यः पक्षः—तत्रापि विकल्पानुपपत्तेः। विकल्पेनाहोस्वित् तत्समयजेन निर्विकल्पेन गृह्यमाणता ? नाद्यः—अभिलापसंसर्गयोग्यगोचरेण विकल्पेन अभिलापसमयस्य स्वलक्षणस्य देशकालानुगतस्य गोचरयितुमशक्यत्वात् व्यक्तिग्रहणमन्तरा सामान्यात्मकस्य बाह्यस्यापि गोचरयितुमशक्यत्वाच्च। न द्वितीयः—तत्समयभुवा निर्विकल्पेन बाह्ये गृह्यमाणेऽपि विकल्पेनागृह्यमाणत्वाच्च। स्वाकारस्यारोपयितुमशक्यत्वात्, तथात्वे रजतज्ञानाप्रतिभासिनि पुरोवर्तिनि रजतज्ञानेन रजतारोपापातात्। नापि प्रथमद्वितीयः अगृह्यमाणे बाह्येऽधिष्ठाने विकल्पाप्रतीतावपि आरोपानुपपत्तेः। अपि च स्वसंवेदनेन विकल्पेन स्वाकारग्रहणानन्तरं बाह्यमारोप्यते युगपद्वा ग्रहणारोपणे? नाद्यः—क्षणिकत्वेन क्रमविरहिणा ज्ञानेन क्रमवर्तिग्रहणारोपणानुपपत्तेः। न द्वितीयः स्वाकारस्य स्वसंवेदनप्रत्यक्षतयातिवैशद्येन बाह्यस्य चारोप्यमाणतयाऽवैशद्येन च भिन्नत्वात् न स्वाकारारोपो वक्तुं शक्यते। नच भेदाग्रहमात्रेण समारोपाभिमानम्, वैशद्यावैशद्याभ्यां भेदग्रहस्य स्पष्टत्वात्। अपि चागृह्यमाणे चेद्बाह्येऽबाह्यात्स्वलक्षणात् भेदाग्रहणे तदभिमुखी प्रवृत्तिः तर्हि त्रैलोक्य एवानेन न भेदो गृहीत इति यत्र क्वचन प्रवर्तेताविशेषात्। वासनाप्रापितस्यालीकस्यापि ज्ञानाकारस्यैव बाह्यत्वादित्यपास्तम्, तस्यापि स्वप्रकाशत्वेन बाह्याद्भेदस्य समत्वात्। नचात्र सादृश्य-

निबन्धनो व्यवहारः। तथा सति सदृशमित्याकारानुभवो भवेन्न तदेवमिति। नच ज्वालादिष्विवासत्यामपि सादृश्यबुद्धौ सादृश्यात्तदेवमिति प्रत्ययः। बाह्ये वस्तुनि तथा सम्भवेऽपि 'स एवाहं स्यां तत्सदृशो वा' इत्युपलब्धरि सन्देहानुपपत्तेः। 'य एवाहं पूर्वेद्युरद्राक्षं स एवाहं स्मरामि' इति निश्चिततद्भावोपलम्भात्।

अपि च 'नानुपमृद्य प्रादुर्भावात्' इति रीत्या बीजानुपमर्दे नाङ्कुरानुपलम्भात् अभावाद्भावोत्पत्तिरित्यपि तन्मते नोपपद्यते तथात्वेऽभावत्वाविशेषात् सर्वत्र सर्वमुत्पद्येत। यदि बीजादीनामुपमृदितानामभावात् निःस्वभावत्वाविशेषात् शशविषाणादीनां कश्चिद्विशेषो न स्यात्तदा 'बीजादेवाङ्कुरो जायते, क्षीरादेव दधि जायत' इति नियमोऽपि किं निबन्धनः? यद्यभावस्यापि विशेषोऽभ्युपगम्येतोत्पलादीनामिव नीलत्वादिस्ततो विशेषवत्वादेव भावत्वमेवोत्पलादिवत् प्रसज्येत। अपि चाभावाद्भावोत्पत्तौ अभावान्वितमेव सर्वं कार्यमुपलभ्येत, भावान्वितमेव तु गृह्यते सर्वम्। न मृदन्विताः शरावादयस्तन्तुविकारा वक्तुं शक्यन्ते 'नानुपमृद्य प्रादुर्भावात्' इत्यवष्टम्भेनापि तन्न साध्यम्, क्रमवत्सहकारिसमवधानेन स्थिराणां सुवर्णादीनां रुचकादिकारणत्वदर्शनेन तद्व्यभिचारात्। बीजादिष्वपि अनुपमृद्यमानानां बीजाद्यवयवानामङ्कुरादिकारणभावाभ्युपगमात्। अभावाद्भावोत्पत्तौ क्षेत्रकर्मण्यप्रयतमानस्यापि कृषीवलस्य सस्यनिष्पत्तिः स्यात् स्वर्गापवर्गप्रयत्नोऽपि तथैव विफलः।

विज्ञानवादिनस्तु—सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात् विज्ञानस्थ एव सर्वोऽपि व्यवहार इति वदन्ति।

परमाणूनां कारणत्वे परमाण्वाभासमेव सर्वमुपलभ्येत समूहस्यान्यत्वानन्यत्वानिरूप्यत्वात् न कारणत्वम्। किञ्च नहीन्द्रियं नीलमेव विज्ञानं विषयज्ञानं जनयति। जन्यज्ञानस्य समानत्वेनानुपयोगादनवस्थानाच्च। नच विषये प्राकट्यलक्षणं फलमाधातुं शक्नोति अतीतानागतेषु तदसम्भवात्। धर्मिण्यसति धर्मानुपपत्तेः। ततो ज्ञानस्वरूपप्रत्यक्षतैवार्थप्रत्यक्षतेति मन्तव्यम्; ज्ञानाकारस्यार्थभेदव्यवस्थापकत्वासम्भवात्! अर्थभेदव्यवस्थापकतयाकार भेदोऽभ्युपेयः, स्वीकृते च विज्ञानस्य नीलाद्याकारे तेनैव व्यवहारसिद्ध्या बाह्यासिद्धः।

नीलतद्धियोः सहोपलम्भनियमादपि अभेदो विषयविषयिणोः—

'सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञाने दृश्येतेन्दाविवाद्वये॥'

नहि भिन्नयोरश्वमपिषयोरेवं नियमः, स्वप्नादिवच्च विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारं जागरेऽपि ज्ञानमेवाभ्युपेयम्; विज्ञानत्वाविशेषात्। वासनावैचित्र्यादसत्यर्थे बाह्ये प्रत्ययवैचित्र्यमुपपद्यते अनादौ संसारे विज्ञानानां वासनानाञ्च बीजाङ्कुरवत् निमित्तनैमित्तिकभावेन वैचित्र्यं नाविरुद्धम् स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तज्ञानवैचित्र्यदर्शनाच्च तथात्वमुपेयम्, विततश्चैतद्भामतीकल्पतर्वोः।

तदेतन्मतमपि न विचारचारु प्रतिप्रत्ययं बाह्यार्थोपलब्धेः। नचोपलम्भस्याबाधित-स्याप्रामाण्यम्, यथा भुजिसाध्यायां स्वयं तृप्तावनुभूयमानायाम् एवं ब्रूयान्नाहं भुञ्जे न वा तृप्यामीति तद्वदिन्द्रियसन्निकर्षेण स्वयमुपलभ्यमान एव बाह्यमर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवाणः कथमादरणीयवचनः स्यात्। नच विषयविषयिणोरैक्यम्, बाह्यार्थं प्रत्याचक्षाणा आन्तरं ज्ञेयं विज्ञानं बहिर्वत् अवभासत इतिवत् कुर्वन्तो बाह्यार्थमुपगच्छ-न्त्येव इतरथावदिति कस्माद्ब्रूयुः ? न ह्यत्यन्तासतो दृष्टान्तकोटौ निवेशः। नच विष्णुमित्रो बन्ध्यापुत्रवदवभासत इति भवति व्यपदेशः। यदपि बाह्यार्थस्यासम्भवत्वोक्तिरिति तत्र सत्त्वासत्त्वयोः प्रमाणमूलकत्वात्। यत्प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्येत तत्सत् यत्तु केनापि नोपलभ्येत तदसत्। यद्ययथायथं सर्वैः प्रमाणैरुपलम्भः तत्र कथमसत्त्वम्, नच ज्ञानस्य विषयसारूप्योपगमेनेष्टसिद्धिः विषयेऽसति तदनुपपत्तेः विषयस्य बहिरुप-लब्धेश्च। सहोपलब्धिनियमोऽप्युपायोपेयमूलको नाभेदमूलकः। अपिच घटाद्युपाधि-परामर्शमन्तरेणाकाशस्येव ज्ञानस्यापि भेदो न सिद्ध्यति, तथा सति ज्ञानभेदसाधनाय घटादिभेदोऽभ्युपेयः। यथा वा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदः न गोत्वस्य द्वाभ्यामेकस्यैकस्माच्च द्वयोर्भेदः सिद्ध्यति तथैवार्थज्ञानयोर्भेदः।

एवमनुभवस्मरणयोरपि भेदः। किञ्च पूर्वोत्तरकालयोः ग्राह्यग्राहकत्वानुपपत्तेः विज्ञानस्य भिन्नत्वक्षणिकत्वादिकं स्वलक्षणं सामान्यलक्षणं वास्यवासकत्वाविद्योपप्लव-सदसद्धर्मबन्धमोक्षप्रतिज्ञा हीयेरन्। अपि च यदि विज्ञानमनुभूयते इत्युपेयते तर्हि बाह्यार्थोऽप्यनुभूयत इति तत्कुतो नोपेयते। यत्तु विज्ञानस्य स्वेनैव प्रकाशत्वात् अभ्यु-पगतिर्न तथा बाह्यार्थस्येति तदनुपगम इति तदेतद्बालभाषितम् स्वव्यतिरिक्तविज्ञानग्रा-ह्येऽविरोधेऽपि स्वग्राह्ये विज्ञाने कर्मकर्तृविरोधात्। नच तस्यान्यग्राह्यत्वे तस्याप्येवं तस्याप्येवमित्यनवस्था प्रदीपवदवभासात्मकत्वाज्ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वाद-वभास्यावभासकत्वानुपपत्तिश्चेति वाच्यम्, साक्षिज्ञानयोः स्वभाववैषम्येण ग्राह्यग्राहकत्वो-पपत्तौ बाधाभावात् सर्वसाधकस्य साक्षिणः स्वतः सिद्धत्वात्। यदि च प्रमाणनिरपेक्षं विज्ञानमनधिगतगमकमप्युपेयते तदा शिलाघनमध्यस्थप्रदीपसहस्रप्रथनमप्युपेयं भवेत्। न चेष्टापत्तिः, चक्षुः साधनस्यान्यस्यावगन्तुः प्रदीपादिप्रथनदर्शनात् भास्यत्वाविशेषात् विज्ञानेनापि सापेक्षेणैव भाव्यम्, क्षणिकत्वनित्यत्वादिभिर्वैधर्म्यात्।

बाधाबाधाभ्यां वैधर्म्यादेव न स्वप्नादिवद्ग्राह्यम्, बाह्यार्थानुपलब्ध्या वासनावैचित्र्य-मपि नोपपद्यते। तत्रानादित्वकल्पनाप्यन्धपरम्परैव, नान्वयव्यतिरेकाभ्यामपि बाह्यार्थोपलब्धिः सिद्ध्यति विनार्थोपलब्ध्या वासनानुपपत्तेः। वासनाभिर्विनाप्यर्थोपलब्ध्युपगमात् विना-प्यर्थोपलब्ध्या वासनोत्पत्त्यनुपगमात् बाह्यार्थसद्भाव एवान्वयव्यतिरेकाभ्यां सिद्ध्यति अपि च स्थायिनमाश्रयमन्तरेण संस्कारात्मिका वासनापि नोपपद्यते आलयविज्ञानस्यापि क्षणिकत्वेन प्रवृत्तिविज्ञानस्येव न वासनाधिकरणत्वं सम्भवति नित्ये कूटस्थे सर्वार्थदर्शि

कस्मिंश्चिदसति न देशकालनिमित्तापेक्षवासनाधीनस्मृतिप्रतिसन्धानादिव्यवहारः सम्भवति स्थैर्याभ्युपगमे चालयविज्ञानस्य सिद्धान्तहानिः ।

शून्यवादिनस्तु—विज्ञानां स्वतः प्रामाण्यानभ्युपगमात्परतः प्रामाण्येऽनवस्थानात् स्वतोऽपि प्रमाणसिद्धत्यात् सर्वशून्यमेव तत्त्वमिति वदन्ति ।

तत्र शून्यवादिनोऽसदात्मकमेव शून्यमभ्युपगच्छन्ति ज्ञानानन्दात्मकं वेति विचारणीयम् ।

'केवलां संविदं स्वच्छां मन्यन्ते मध्यमाः पुनः ।'
'मन्यन्ते बत ! मध्यमाः कृतधियः स्वच्छां परां संविदम् ।'

इत्यादिवचनानुसारेण यद्यपि शून्यस्य सत्संविदात्मकतैव प्रतीयते । 'नास्ति बुद्धिरपीत्याह' इत्यपि साकारबुद्ध्यभावाभिप्रायम् इत्युच्यते, तथापि स्वप्रकाशात्मकस्य सवितुर्यथान्धकारस्वरूपत्वं न वक्तुं शक्यते तद्वदेव स्वप्रकाशात्मिकायां संविदि सत्यां शून्यतापदव्यपदेशोऽपि नोपपद्यते शून्यपदस्याभावार्थकता दृश्यते च लोके यथा 'मेघशून्यं नभः, जनशून्यो देश' इति । तथा च शून्यवादी सर्वनास्तित्ववाद्येव । नचैवमद्वैतमपि तथैव किन्न स्यादिति वाच्यम्, सतः सत्तायोगि लक्षणसतोऽतिरिक्तत्वेऽपि सद्रूपत्वात् । सद्बुद्धिविषयस्यैव सत्त्वं प्रसिद्धम्, आत्मा तु स्वप्रकाशात्मकत्वान्न सद्बुद्धिविषयः, नाप्यसद्बुद्धिविषयः; अपि तु अवेद्यः सन्नेवापरोक्षः । तदभिप्रायेणैव 'न सत्तन्नासदुच्यते' इत्याद्युक्तिः । तस्माच्छून्यवादस्य निरुपप्लुतसंविदेव शून्यमिति काचित् कदर्थैव ।

शून्यवादिनो निःस्वभावोऽसन्नेवेति शून्यतामभ्युपगच्छन्ति, अद्वैतिनस्तु स्वप्रकाशसदानन्दात्मकं ब्रह्मेति । सर्वाभावात्मकमेव तत्त्वमिति प्रदर्श्यते—

'फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा ।
मरीचिसदृशीः सञ्ज्ञाः संस्काराः कदलीनिभाः ॥
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना ।
एवं धर्मान् वीक्षमाणो भिक्षुरारब्धवीर्यवान् ॥
दिवा वा यदि वा रात्रौ संप्रजानन् प्रतिस्मृतः ।
प्रतिविध्येत्पदं क्षान्तं संस्कारोपशमं शिवम् ॥' इति ।

यत्तु—नित्यज्ञानरूपैव शून्यतेति, तन्न, प्रथमतो निरालम्बनतासाधने प्रयासाधिक्यमिति तावदर्थशून्यं ज्ञानमेव भावनीयमिति शून्यवादस्य काचित्कस्यैव शून्यस्य ज्ञानरूपता शून्यस्य हि वस्तुनो ज्ञानरूपत्वासम्भव इत्यवोचाम एतेन—

'अजरामरविज्ञप्ति शून्यता द्वयलक्षणा ।
अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥

निर्ममो निरहङ्कारो यश्च सोऽपि न विद्यते ।
निर्ममं निरहङ्कारं यः पश्यति स पश्यति ॥'

इत्यादिना शून्यस्य ज्ञानरूपत्वोक्तिः पराहता ।

'शून्यमाध्यमिकं पश्य पश्य शून्यं बहिर्गतम् ॥
न विद्यते सोऽपि कश्चिद्यो भावयति शून्यताम् ।
बुद्धैर्नात्मा नचानात्मा कश्चिदित्यपि देशितम् ॥'

इत्यादिवचनविरोधात् ।

अपरप्रत्ययमित्यादीनां त्वयमर्थः—नास्मिन् परप्रत्ययोऽस्ति, इत्यपरप्रत्ययं परोपदेशागम्यं स्वयमेवाधिगन्तव्यमित्यर्थः । यथा हि तैमिरिका वितथं केशमशकमक्षिकादिकं पश्यन्तो, वितिमिरोपदेशेनापि न शक्नुवन्ति केशानां यथावदवस्थितं स्वरूपं दर्शनन्यायेनाधिगन्तव्यम् अतैमिरिका इवाधिगन्तुम् । किन्तर्हि अतैमिरिकोपदेशात् मिथ्यैतदित्येतावन्मात्रकमेव प्रतिपद्यन्ते । यदा तु तिमिरोपघात्यविपरीतशून्यतादर्शनाञ्जनाञ्जितबुद्धिनयनाः सन्तः समुत्पन्नतत्त्वज्ञाना भवन्ति तदा तत्त्वमनधिगमनयोगेन स्वयमधिगच्छन्तीति एवमपरप्रत्ययं भावानां यत्स्वरूपं तत्तत्त्वम् । एतच्च शान्तस्वभावमतैमिरिककेशादर्शनवत् स्वभावविरहितमित्यर्थः । अतएवैतत्प्रपञ्चैरप्रपञ्चितम्, प्रपञ्चो हि वाक् प्रपञ्चयत्यर्थानिति कृत्वा प्रपञ्चैरप्रपञ्चितं वाग्भिरव्याहृतमित्यर्थः । निर्विकल्पश्च तद्विकल्पश्चित्तप्रचारः तद्रहितत्वात्तत्त्वं निर्विकल्पं यथोक्तं परमार्थसत्यं कतमत् यत्र ज्ञानस्याप्यप्रचारः । नानार्थोऽस्येति नानार्थं भिन्नार्थं न नानार्थमनानार्थमभिन्नार्थं इति नानेनासत्वं शून्यस्य निवर्त्तं किन्तु सर्वाभावात्मकत्वमेव सिद्ध्यति ।

"प्रतीत्य यद्यद्भवति नहि तावत्तदेव तत् ।
नचान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥
अनेकार्थमनानार्थमनुच्छेदमशाश्वतम् ।
एतत्तल्लोकनाथानां बुद्धानां शासनामृतम् ॥"

आर्यसत्यपरीक्षाप्रकरणे—यदि शून्यमिदं सर्वमेव नास्ति तदा सर्वान्तःपातित्वाद्धर्माधर्मौ सह तद्धेतुकेनेष्टानिष्टफलेन न सम्भवतः सर्व एव चामी लौकिका व्यवहाराः 'कुरु चर खाद तिष्ठ' इत्येवमादयोऽपि सर्वान्तर्गतत्वात् सर्वधर्माणाञ्च शून्यत्वान्नैव युज्यत इत्याक्षिप्य प्रतिक्षिप्तम्;

"अत्र ब्रूमः शून्यतायां न त्वं वेत्सि प्रयोजनम् ।
शून्यतां शून्यतार्थञ्च तत एवं विहन्यसे ॥"

शून्यतास्वरूपं तत्प्रयोजनश्च तत्रैवोक्तम्:—

"यः प्रतीत्य समुत्पादः शून्यतां तां प्रचक्ष्महे ।

कर्मक्लेशक्षयान्मोक्षः कर्मक्लेशाविकल्पनः ॥
ते प्रपञ्चात्प्रपञ्चस्तु शून्यतायां निरूप्यते ।
द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ॥"

निर्वाणस्वरूपञ्च निर्वाणप्रकरणे—

"अप्रहीणमसम्प्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ॥"

यद्धि नैव प्रहीयते रागादिवन्नापि प्राप्यते श्रामण्यफलवत्, नाप्युच्छिद्यते स्कन्धादिवत्, तच्चापि न नित्यं शून्यवत् तत्स्वभावतोऽनिरुद्धमनुत्पन्नञ्च सर्वप्रपञ्चोपशम लक्षणं निर्वाणमुक्तम् :—

"नचाभावोऽपि निर्वाणं कुत एवास्य भावता ।
भावाभावपरामर्शक्षयो निर्वाणमुच्यते॥"

शून्यवाद्यभिमतं शून्यं यदि निर्विशेषसंविदात्मकमेव भवेत्तदा नाद्वैतविरोधः । परन्तु नैतत्, तदुक्तं गौडपादाचार्यैः—

"क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तापिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥
( मा० का० प्र० ४, ९९ )

ज्ञानज्ञेयज्ञातृभेदशून्यं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितमिति भाष्यम् ।

यदपि—

"अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥
कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥
( मा० का० प्र० ४, ८३-८४ )

इत्यादिकारिकाभिः शून्यवाद्यभिमतकोटिचतुष्टयविनिर्मुक्तशून्यतावत् अद्वैतमपि कोटिचतुष्टयविनिर्मुक्तमेवेति कुतो न शून्यमेवाद्वैतं स्यात् ? तदेतत्परसिद्धान्तानभिज्ञानविजृम्भितम्, सम्प्रदायानभिज्ञत्वात् । अत्रास्ति बुद्धिविषयत्वात्सदेव तत्त्वमिति कश्चिन्नास्ति बुद्धिविषयत्वादसदेव तत्त्वमिति कश्चित् ? अस्तिनास्तीत्युभयबुद्धिविषयत्वात्सदसद्वादी कश्चित् नास्ति बुद्धिविषयत्वादत्यन्तासद्वादी कश्चित्, तत्र चलस्थिरोभयाभावैः सर्वैरपि पक्षैः भगवन्तमावृणोत्येव बालिशः, सर्वनिषेधावधेः सर्वकल्पनाविवर्जितस्य सर्वबुद्ध्यविषयत्वात्सर्वाधिष्ठानस्य सर्वशः कोटिचतुष्टयविनिर्मुक्तत्वमिति । यदि च 'अस्ति नास्ति' इत्यादिकल्पना विवर्त्तितत्त्वोक्तया शून्यवादापत्तिस्तदा 'न स तन्नासदुच्यते' 'अन्यदेव तद्विदितादथो अविदितादधि' 'नेदं यदिदमुपासते' इत्यादिनापि शून्यत्वापत्तिर्दुर्वारा ।

यद्पि चशून्यवाद एवाद्वैतवाद इति तन्न, सिद्धान्तापरिज्ञानात् । शून्यवादिनां शून्यं कोटिचतुष्टयशून्यमपि असत्येव पर्यवस्यति । अद्वैतिनां तत्त्वं तु स्वेतरसत्त्वादि कोटिचतुष्टयशून्यमपि स्वप्रकाशात्मकं सद्रूपमेव ।

कथञ्चित् शून्यस्यापि भावना तैरुपायत्वेनैवास्थीयते, अन्ते तत्रापि अभिनिवेशस्यानि त्वात् तथाहि शून्यं शून्यमिति भावनीयम्—स्वप्ने जागरणे च 'न मया दृष्ट मिदं रजतादि', इ विशिष्टनिषेधस्योपलम्भात् । यदि दृष्टं सत्तदा तद्विशिष्टस्य दर्शनस्य इदन्ताया अधिष्ठान च तस्मिन्नध्यस्तस्य रजतत्वादेः तत्सम्बन्धस्य च समवायादेः सत्त्वं स्यात् । न चैतदि कस्यचिद्वादिनः । नचार्धजरतीयमुचितम्, नहि कुक्कुट्या एको भागः पाकाय, अपरो भाग प्रसवाय कल्प्यते । तस्मादध्यस्ताधिष्ठानतत्सदर्शनद्रष्टॄणां मध्ये एकस्यानेकस्य असत्त्वे निषेधधीविषयत्वेन सर्वस्यासत्त्वं बलादापतेदिति भगवतोपदिष्टे माध्यमिकास्ताव त्तमप्रज्ञाः इत्थमचीकथन् । भिक्षुपादप्रसरणन्यायेन क्षणभङ्गाद्यभिधानक्रमेण सर्वशू तायामेव पर्यवसानम् । अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविमुक्तं शून्यमेव सत्पक्षे सत्त्वेनाभिनिवेशः असत्पक्षेऽपि मा भूदभिनिवेश इति तद्वारणायैव कोटिचतुष्ट विनिर्मुक्तत्वोक्तिः ।

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः ॥
आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
तस्याप्यभावमिच्छन्ति— ( श्लो० वा० )

श्रीकण्ठीयभाष्येऽपि 'सर्वथानुपपत्तेश्च' इति सूत्रे सर्वशून्यवादो युक्तो न व इति सन्दिह्य 'सर्वं जगन्न सत् बाधितत्वात्, नासत् प्रतीयमानत्वात्, नोभयात्मकम् विरोधात्; नानुभयात्मकम्, असम्भवात्. किन्तु चतुष्कोटिविनिर्मुक्तं सर्वं शून्यमेव प्रत्यक्षावभासस्तु संवृतिमूलः । तस्माच्छून्यवादः समीचीन इति पूर्वपक्षय्य न सम्भव सर्वशून्यवादः कुतः सदिति प्रतिज्ञायामिव असदिति प्रतिज्ञायामन्यथा प्रतिज्ञाया तुच्छत्वानुपपत्तेः । सदसद्बुद्धितच्छब्दानां वस्तुगतान्योन्यविरुद्धभावाभावरूपावस्थाविशे विषयत्वात् । यत्तु—संवृतिमूलः प्रत्यक्षावभास इति तदप्यपहास्यम्, सर्वशून्यत्वे क संवृतेराश्रयः यस्यैवमवभासः ततः सर्वशून्यवादः सर्वविरुद्ध एव इत्येवमधिष्ठानाभाव देवापाकृतम् ।

"नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् ।
एकानेकस्वभावेन वियोगात् वियदब्जवत् ॥
न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥" इति ।

शून्यतायामपि नाभिनिवेष्टव्यम्, अन्यथा भावाभिनिवेशो वा शून्यताभिनिवेशो वेति न कश्चिद्विशेषः, उभयोरपि कल्पनात्मकतया संवृतत्वात् । नचाभावस्य कल्पितस्वभावतया किञ्चित्स्वरूपमस्ति । नच भावनिवृत्तिरूपोऽभावः निवृत्ते निःस्वभावत्वात् । यदि च भावस्यैव कश्चित्स्वभावः स्यात्तदा तत्प्रतिषेधात्माभावोऽपि स्यात् । भावस्य तु स्वभावो नास्तीति प्रतिपादितमेव अतो न भावनिवृत्तिरूपोऽभावो नाम कश्चित् । नच भावाभावयोरुक्तक्रमेणासत्त्वे प्रतिपादिते तदुभयसङ्कीर्णता सम्भवति उभयप्रतिषेधस्वभावता वा, भावविकल्पस्यैव सकलविकल्पनिबन्धनत्वात् तस्मिन्निराकृते सर्व एवामी एकप्रहारेण निरस्ता भवन्ति । तस्मान्न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्, किञ्चिदभिनिवेशविषयतया मन्तव्यम् ।

"सर्वसङ्कल्पहानाय शून्यतामृतदेशना ।
यस्य तस्यामपि ग्राहस्त्वयासाववसादितः ॥"

एतेन सुस्पष्टं शून्यवादिनां शून्यं वेदान्तिस्वीकृतब्रह्मणो महद्विलक्षणम् । **अयमत्र** समुदायार्थः—सर्वधर्मशून्यता हि भावाभिनिवेशप्रहाणायोपादीयते । सापि शून्यता शून्यताभिमुखीकरणात् पश्चात् प्रहीयते । यापि कथञ्चित् भावकल्पना जायते सापि समनन्तरविचारेण निवर्त्तते । अतएवैतत्समस्तकल्पनाजालनिपर्त्तनाय भगवत्यां प्रज्ञापारमितायां विस्तरेणाध्यात्मशून्यतादयोऽष्टादशशून्यताः प्रोक्ताः ।

अद्वैतिनां मते—'अस्तीत्येवोपलब्धुस्य तत्त्वभावः प्रसीदति' 'शिवः केवलोऽहम्' इति भावरूपमेव तत्त्वम् ।

शून्यवादिनस्तु—

"यतस्ततो वास्तुभयं यद्यहं नाम किञ्चन ।
अहमेव न किञ्चिच्चेद्भयं कस्य भविष्यति ॥"

अपि च शून्यवादिभिरेव उपनिषद्वादिनां पक्षः बोधिचर्यावतारपञ्जिकायां नवमपरिच्छेदे निर्दिश्यते । उपनिषद्वादिनस्तु—समस्तप्राणिसन्तानान्तर्गतमेकमेव व्यापि नित्यञ्च ज्ञानमिच्छन्ति । तद्विवर्त्तरूपतया सकलमिदं क्षितिजलपवनहुताशनादिकं जगदवभासते । तत्स्वभाव एव चात्मा न बाह्यं किमप्यवयवि परमाण्वादिकं ग्राह्यं प्रमाणसिद्धमस्ति । स्वमते च रूपमेव शून्यम्, शून्यतैव रूपम्, न वेदनीयशून्यतया वेदना शून्या, वेदनैव शून्या, शून्यतायामपि नाभिनिवेशः कर्त्तव्यः । सर्वस्य शून्यत्वे संवृतेः क्वचिदाश्रय एव नास्ति यन्निष्ठा सती तदाच्छाद्यासत्यं प्रपञ्चं सत्यतयावभासयेदिति ।

श्रुतिरपि ब्रह्म सदात्मकम् 'सदेव सोम्य' सर्वनिषेधात्मकमेव शून्यमित्याह । "नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत्" ।

'नैवेह किञ्चनाग्र आसीत्'-इह संसारमण्डले किञ्चन किञ्चिदपि नामरूपविभक्तविशेषं नैव आसीत् न बभूव । अग्रे प्रागुत्पत्तेर्मन आदेः । किं शून्यमेव बभूव ? शून्यमेव स्यात् 'नैवेह किञ्चन' इति श्रुतेः ।

ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम्, सत्यम्; विज्ञाने प्रतिभासमानत्वं च तव तस्य च तुल्यमिति विज्ञानवादस्त्वदीयं दर्शनं किं न स्यात् ?, सत्यपि प्रतिभास्यत्वे सत्यमिथ्यात्वविभागोऽस्तीति चेदिहापि सत्यपि मिथ्यात्वे अर्थक्रियासमर्थसत्त्वासत्त्वविभागोऽस्त्येव । कल्पितत्वे नेयं विभागसिद्धिरिति चेत् ? प्रतिभास्यत्वेऽपि न सत्यमिथ्यात्वविभागसिद्धिः । दृश्यते विभाग इति चेत्, तदेव विभागदर्शनं मम किं न स्यात् ? घटादेर्मिथ्यात्वमप्रसिद्धमिति चेन्न, प्रतिभास्यसत्यत्वस्याप्यसिद्धत्वात् शुक्तिरजतघटार्थक्रियाभावाभावसत्त्वासत्वविभागदर्शनाच्च । दृश्यते च मायाप्रीतिद्वेषादिकारणम् । श्रूयते च देवासुरसङ्ग्रामादिषु मायाविनिर्मितशस्त्रभेदानां दाहच्छेदभेदादिहेतुत्वमित्यलमतिप्रसङ्गेन । वेदान्तिनः लौकिकं वैदिकं सर्वमेव कलापमुपगच्छन्तो भगवदाराधनादिकं सर्वमेव प्रामाणिकमुपयन्तो वेदवेदाङ्गस्मृतिपुराणेतिहासादिकं सर्वमेवोररीकुर्वन्तो ब्रह्मातिरिक्तेषु पारमार्थिकतां नित्यताञ्च नानुमन्यन्ते 'यत्र हि द्वैतमिव भवति' 'अतोऽन्यदार्त्तम्' इति श्रुतिशतेभ्यः तस्मात् पारमार्थिके ब्रह्मण्येव सर्वमध्यस्यते ब्रह्मातिरिक्तसत्ताशून्यत्वात् मिथ्याभूतं च सर्वमिति सिध्यति ।

न च प्रपञ्चस्य ब्रह्मसत्तातिरिक्त सत्ताकत्वाभावे सत्यरजतातिरेकेण शुक्तौ रजताभासकल्पनं व्यर्थमिति वाच्यम्, व्यवहितस्यासंनिकृष्टस्यापरोक्षत्वासम्भवेन तन्निर्वाहाय तत्कल्पनात् । ननु तर्हि प्रतिविम्बभ्रमेऽपि ग्रीवास्थमुखातिरेकेण दर्पणादावनिर्वाच्यमुखोत्पत्तिप्रसङ्गः ग्रीवास्थमुखे नयनगोलकललाटादिप्रदेशापरोक्ष्यासम्भवात् भ्रमे तदनुभवाच्च न चेष्टापत्तिः, तद्वदेव ब्रह्म प्रतिविम्बस्य जीवस्यापि मिथ्यात्वापत्तिरिति चेन्न दर्पणादिपरावृत्तनायनरश्मिमुखसंनिकर्षसम्भवेन तददोषात्, उपाधिदोषात् दर्पणस्थत्वप्रत्यङ्मुखत्वविम्बभिन्नत्वाध्याससम्भवेन न दर्पणे मुखाध्यासः कल्पनीयः गौरवात् 'दर्पणे मुखं नास्ति' इति संसर्गमात्रबाधः । ननु नेदं मुखमिति स्वरूपबाधः, दर्पणे मम मुखं भाति इति स्वमुखप्रत्यभिज्ञानञ्च दृश्यते फलबलकल्प्यस्वभावविशेषादेव शिलादौ ताम्रादौ दर्पणादौ प्रतिविम्बसत्त्वासत्वादिव्यवस्था ।

अन्ये तु-पार्श्वस्थैर्भेददर्शनात् मिथ्यैव प्रतिविम्बम्, तत्र दर्पणे मम मुखमस्तीति प्रत्यभिज्ञानविरोधः द्वित्वप्रत्यङ्मुखत्वदर्शनविरोधेन प्रत्यभिज्ञानस्य बाधितत्वात् । न च भेदभानमेव कुतो न गौणमिति बालानां प्रतिविम्बे पुरुषान्तरभ्रमस्य हानोपादित्साद्यर्थक्रियाद्यर्थस्यापलापासम्भवात् । न च विदुषामपि स्वमुखविशेषपरिज्ञानाय कथं दर्पणाद्युपादानाय भेदेऽपि विम्बसमानाकारत्वनियमविशेषज्ञानात्तदुपपत्तेः नात्र मुखमित्यत्रापि संसृष्टत्वेन मुखस्यैव बाधः, फलमुखगौरवञ्च न दोषावहम् । सामान्यसंस्कारेणापि विशेषा-

रोपः स्वप्नादौ दृष्ट एव, प्रतिबिम्बात्मकस्य जीवस्य मिथ्यात्वेऽप्यवच्छिन्नस्य सत्यत्वेन न मुक्त्यन्वयित्वम् । ननूपादानाज्ञानासंभवात् प्रतिबिम्बाध्यासोऽयुक्तः, आवरणांशेन अविद्याया नाशेऽपि विक्षेपांशेन सत्त्वात् । बिम्बादिसम्बन्धेन तस्याः कारणत्वसम्भवात् । बिम्बोपाधिसंनिधानसचिवाधिष्ठानज्ञानस्य तन्निवर्त्तकत्वसम्भवात् ।

ननु चाविद्यावृतेन साक्षिणा कथमविद्याहङ्कारादि प्रतीतिरिति चेन्न, राहुवत् स्वावृतप्रकाशप्रकाश्यत्वाभ्युपगमेनादोषात् । केचित्तु—अविद्यादीनामनावृतप्रकाशसंसर्गात् अज्ञानभ्रान्ति संशीत्यगोचरत्वानुभवात्, तदवभासकं साक्षिचैतन्यमपहायैवाज्ञानं चैतन्य-मात्रं वृणोति इति मन्यन्ते । नच तर्हि स्वरूपभूतस्यानन्दस्यापि प्रकाशापत्तिरिति वाच्यम्, इष्टापत्तेः, तदभाने निरुपाधिकपरमप्रेमास्पदत्वासम्भवः ।

ननु तर्हि मुक्तिसंसारयोरवैशेष्यापत्तिः, नच सोपाधिकस्य साद्यानन्दस्य भानेऽपि सर्वोपाधिविनिर्मुक्तस्य ब्रह्मानन्दस्य संसारदशामावृतत्वेनास्ति वैशेष्यम् आनन्देऽनवच्छेदां शस्यापुरुषार्थत्वात् । नच साद्यानन्दः सातिशयः सुषुप्तिसाधारणादनतिस्पष्टः, ततो विषयसुखेष्वतिशयानुभवादनवच्छिन्न ब्रह्मानन्दस्तु निरतिशय इति वाच्यम्, अद्वैतसिद्धान्ते आनन्दे उत्कर्षापकर्षासम्भवात् । नन्वेकस्यैव सौरालोकस्य कुड्यस्फटिकदर्पणादौ विशेषो-पधानेनाभिव्यक्तितारतम्यदर्शनात्, आनन्दस्यैकत्वेऽपि व्यञ्जकवृत्तिविशेषोपधानेनाभिव्य-क्तितारतम्यमिति चेन्न, दृष्टान्तासङ्गतेः, प्रतिरोधमन्तरा सौरालोकस्य सर्वतः प्रसृमरस्या-स्पष्टं भासमानस्य जलस्येव गति प्रतिहतौ बहुलीभावादधिकप्रकाशः, भास्वरदर्पणादिसम्बन्धेन गतिप्रतिरोधात्तदीयदीप्तिसंवलनाच्च ततोऽप्यधिकप्रकाश इति । तत्र व्यञ्जकोपाधितारत-म्यानभ्युपगमात् दृष्टान्तसंप्रतिपत्तौ च गगनप्रसृतालोकवदनवच्छिन्नानन्दस्यास्पष्टता । कुड्याद्यालोकवत् सुखवृत्त्यवच्छिन्नानन्दस्याधिकाभिव्यक्तिरिति मुक्तितः संसारस्यैवाभ्य-र्हितत्वापत्तेश्च ।

यदपि संसारदशायां मिथ्याज्ञानादिना तीव्रवायुविक्षिप्तप्रदीपप्रभावत्प्रकाशमानोऽप्यानन्दः स्पष्टं न प्रकाशते, मुक्तौ तु विक्षेपाभावात् स्पष्टं भासते इति तन्न, निर्विशेषे प्रकाशमानाप्रकाशमानानांमशभेदासम्भवात् तस्मात् साद्यानन्दस्यानावृतत्वकल्पन-मयुक्तम् । यथाऽतिभास्वरसुन्दररूपस्यैकस्यैव मलिनदर्पणेषु प्रतिबिम्बे सत्युपाधिमालिन्य-तारतम्यात् । तत्र तत्र प्रतिबिम्बे सौन्दर्यापकर्षस्तारतम्येनाध्यस्यते । एवं निरतिशयानन्द-स्यैकस्यैवान्तःकरणप्रतिबिम्बितत्वेन साक्षित्वं सुकृततारतम्यप्रयुक्तसत्त्वोत्कर्षापकर्षोपेत-सुखरूपान्तःकरणवृत्तिप्रतिबिम्बितत्वेन विषयानन्दरूपत्वम् । तथा च संसारदशायामप्य-स्यापकर्षस्तारतम्येन प्रतीयते । तत्त्वावगमेऽध्यासापगमे निरतिशयानन्दाभिव्यक्तिः, तथा च निरुपाधिकपरप्रेमास्पदत्वेन निरावरण एव साद्यानन्द उपेयः । निरुपाधिकप्रेमगोचर-त्वात् प्रकाशमानोऽपि 'मयि नास्ति न भाति सुखम्' इत्यावरणानुभवात् सावरण एव साक्षी ।

नच कथमेकस्मिन्नेवावरणानावरणकल्पनम्, अविद्याकल्पितरूपभेदेनानन्दचैतन्ययोरावरणानावरणसंभवात् । नच प्रकाशमानस्यावरणविरोधः स्वरूपप्रकाशस्यावरणविरोधात् 'त्वदुक्तमर्थं न जानामि' इति प्रकाशमान एवावरणानुभवात् । न च तत्रानावृतसामान्यावच्छेदेन विशेषावरणमेवानुभूयत इति वाच्यम्, अन्यावच्छेदेनान्यावरणानुभवेऽतिप्रसङ्गात् । नच सामान्यविशेषभावस्य नियामकत्वेन नातिप्रसङ्गः, तस्य व्याप्यव्यापकभावानतिरिक्तत्वेन वह्निं न जानामिति वह्न्यवच्छेदेन धूमावरणानुभवप्रसङ्गात् । ततो यदवच्छेदेनाज्ञानं प्रकाशते तदेवावृतमिति प्रकाशमानेऽप्यज्ञानं मन्तव्यम् । अज्ञानञ्च साद्यंशमिव तत्तत्सुखवृत्तिकवलीकृतमानन्दमपि विहायैवानन्दमावृणोति, स एव वैषयिकानन्दस्यावरणानुभवः कारणविशेषप्रयुक्तवृत्तिविशेषवशान्तरतमभावेनावरणाभिभवः प्रत्यूषसमये बाह्यावरणाभिभववत् भवति तेनैव स्वरूपानन्दविषयानन्दयोः सर्वप्रामानन्दानाञ्च परस्परभेदसिद्धिः । ततः साक्षिचैतन्यस्यानावृतत्वेनावरणाभिभवार्थं वृत्तिमनपेक्ष्यैव तेनाहङ्कारादिप्रकाशनम् ।

एवमेव केचित्कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः । केचित्तु—पतिः पशुः पाशश्चेतिपदार्थत्रयम्, पतिः = शिवः, पशुर्जीवः, पाशो मलः कर्ममायारोधशक्तिश्चेति । प्रत्यभिज्ञावादिनस्तु—जीवात्मपरमात्मनोरैक्यवादिनः जडं तु पूर्ववत्, किन्त्वात्मनस्तद्भिन्नमभिन्नञ्चेति, अन्यत्पूर्ववत् ।

स्वप्रकाशप्रत्यक्चैतन्याभिन्नस्य सजातीयादिभेदत्रयशून्यस्य ब्रह्मणो विवर्त्तोऽयं प्रपञ्चो न परिणाम इति वेदान्तविदः । तथाचाचार्यवाचस्पतिमिश्राः—

"विवर्त्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥"

नच सुखदुःखमोहात्मकप्रधानकारणकाः शब्दादयस्तदात्मनान्वीयमानत्वात्, हेमात्मनान्वीयमानरुचकादेर्हेमकारणकत्ववदिति वाच्यम्, साधनस्य स्वाध्यविपर्ययव्याप्ततया विरुद्धत्वात्, स्वरूपासिद्धत्वाच्च । बाह्यहेतुकाः खल्वान्तराः सुखदुःखमोहा न बाह्या अन्यथा हेमन्तेऽपि चन्दनं सुखं भवेत् निदाघेष्वपि कुङ्कुमपङ्कः सुखं भवेत् एवं कण्टक उष्ट्रस्येव सर्वस्मै सुखः स्यात् । नचाचेतनायाः प्रकृतेर्वत्सविवृद्ध्यर्थमचेतनस्य क्षीरस्येव पुरुषार्था प्रवृत्तिरुपपद्यते । तत्रापि परमेश्वरस्याधिष्ठानत्वाभ्युपगमेन दृष्टान्तासिद्धेः । अपि चानाधेयातिशयस्य कूटस्थस्य तात्त्विकभोगासम्भवात् अनिर्मोक्षप्रसङ्गाच्च न भोगार्था प्रकृतिप्रवृत्तिः । चिद्धातोर्नित्यशुद्धबुद्धमुक्तस्वभावतया प्रधानप्रवृत्ते प्रागपि मुक्ततया नापवर्गार्थापि प्रवृत्तिः, प्रवृत्तिस्वभावायाः प्रकृतेरौदासीन्यासम्भवान्न कदापि तन्निवृत्तिः । न च सत्त्वपुरुषान्यताख्यात्या कृतकार्यत्वान्निवर्त्तते सेति वाच्यम्, तस्या विचार्यकार्यकारित्वासम्भवात् । किञ्च साऽन्यताख्यात्या समुच्छिद्यते न वा ? आद्ये सर्वस्य संसारावसान

-प्रसङ्गः, अन्त्ये न कस्यापि मोक्षः। ननु प्रधानाभेदेऽपि तत्तत्पुरुषाविवेकख्यातिलक्षणाया अविद्यायाः सत्त्वासत्त्वाभ्यां बन्धमोक्षव्यवस्थेति चेन्न, प्रकृतेर्वैयर्थ्यापत्तेः। नचाविद्यापक्षेऽपि स एव दोष इति वाच्यम्, प्रतिजीवमविद्याभेदाभ्युपगमेन तददोषात्। नच चिदचितोः सारूप्याभावेन कथं प्रपञ्चस्य चिद्विवर्त्तत्वमिति वाच्यम्, सारूप्यस्याप्रयोजकत्वात्। कादाचित्के विभ्रमे भवेदपि सारूप्यापेक्षा अनाद्यविद्यनिबन्धने प्रपञ्चविभ्रमे तु न तरां तदपेक्षा नीरूपेऽपि नभसि तलमलिनताद्यारोपदर्शनात्।

शाङ्करभाष्यरीत्या तत्र चतुर्लक्षण्यामुत्तरमीमांसायां समन्वयाध्याये सर्वोपनिषदां ब्रह्मणि तात्पर्यविचारणम्, द्वितीयेऽविरोधाध्याये सांख्यादितर्कविरोधनिराकरणम्, तृतीये ब्रह्मावबोधसाधनम्, चतुर्थे विद्याफलमुक्तम्। प्रथमाध्यायस्य प्रथमपादे—स्पष्टं ब्रह्मलिङ्गं वाक्यजातं मीमांसितम्। द्वितीयेऽस्पष्ट ब्रह्मलिङ्गमुपास्यविषयम्, तृतीये तादृशं ज्ञेयविषयम्, चतुर्थेऽव्यक्ताजापदादि सन्दिग्धपदजातम्। द्वितीयस्य प्रथमेपादे सांख्ययोगकणादिस्मृति विरोधपरिहारः, द्वितीये सांख्यादिमतानां दुष्टत्वम्, तृतीये चतुर्थे च पञ्चमहाभूतश्रुतीनां जीवश्रुतीनाञ्च विरोधपरिहारः। तृतीयस्य प्रथमे पादे जीवस्य परलोकगमनागमनादिविचारपुरःसरं वैराग्यम्, द्वितीये तत्त्वं पदार्थपरिशोधनम्, तृतीये सगुणविद्यासु गुणोपसंहारः, चतुर्थे निर्गुणब्रह्मविद्याया बहिरङ्गान्तरङ्गाश्रमयज्ञशमदमादिसाधनजातम्। चतुर्थस्य प्रथमे ब्रह्मसाक्षात्कारेण जीवतः पापपुण्यक्लेशवैधुर्यलक्षणा मुक्तिः, द्वितीये मरणोत्क्रमणप्रकारः, तृतीये सगुणब्रह्मोपासकस्योत्तरमार्गः, चतुर्थे निर्गुणसगुणब्रह्मविदो विदेहकैवल्यब्रह्मलोकावस्थानानि।

तत्र पद्मपादाचार्यानुसारि पञ्चपादिकाविवरणादिरूपमेकं भाष्यव्याख्यानप्रस्थानम्, सुरेश्वराचार्यानुसारि भामती—कल्पतरुपरिमलादिरूपमपरं व्याख्यानप्रस्थानम्। तत्र प्रथमसूत्रम्:—

## अथातो ब्रह्मजिज्ञासा

तत्र 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र परमपुरुषार्थभूतामृतत्वसाधनीभूतात्मदर्शनसाधनत्वेन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं विधीयते। तत्र वेदान्तवाक्यानामुपक्रमोपसंहारादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः। तत्रैतद्विधिः कथमुपपद्यते इति विचार्यते। तत्रात्यन्ताप्राप्तस्य प्राप्तिफलको विधिरपूर्वः 'व्रीहीन् प्रोक्षति' इतिवत्। पाक्षिकाप्राप्तपरिपूरणफलको नियमविधिः यथा 'व्रीहीनवहन्ति' इत्यत्र पुरोडाशप्रकृतित्वेन व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिवत् पक्षान्तरे नखविदलनादिरपि प्राप्तः, तथाऽवहननाप्राप्तांशस्य पूरणादवघातेनैव तण्डुलनिष्पत्तिं कुर्यादिति नियमविधिः।

तत्र चान्यत्र च प्राप्तावन्यनिवृत्तिफलको विधिः परिसंख्या, यथा—पञ्च पञ्चनखा भक्ष्याः ।

तत्र केचित्—कृतश्रवणानामपि ब्रह्मसाक्षात्कारानुत्पत्त्या अकृतश्रवणस्य वामदेवस्य तद्दर्शनाच्चान्वयव्यतिरेकव्यभिचारात् वेदान्तश्रवणं न ब्रह्मसाक्षात्कारे हेतुरित्यप्राप्तत्वात् अपूर्वविधिः । नच श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारे हेतुरिति शास्त्रान्तरश्रवणेन सामान्यनियमो गृहीतो येनात्र विशिष्य हेतुत्वग्राहकाभावेऽपि सामान्यमुखेन हेतुत्वं प्राप्यते इत्याशङ्क्येत इति वाच्यम्, कर्मकाण्डादिश्रवणात्तदर्थधर्मादिसाक्षात्काराऽदर्शनेन व्यभिचारात्, तस्मादपूर्वविधिरिति ।

अन्ये त्वपरोक्षवस्तुविषयकप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य प्राप्तेः शाब्दापरोक्षवादे व्यवस्थापनात् वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहेतुत्वं प्राप्तमेव ।

नच ब्रह्मप्रमाणत्वेनापातदर्शनसाधारणब्रह्मसाक्षात्कारहेतुत्वप्राप्तावप्यविद्यानिवृत्त्यर्थमिष्यमाणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्त शब्दज्ञानस्य श्रवणस्य तद्धेतुत्वप्राप्तेः । नचोक्त उभयव्यभिचारः सहकारिवैकल्येनान्वयव्यभिचारस्यादोषत्वात् । वामदेवस्य जातिस्मरत्वेन जन्मान्तरश्रवणात्फलसम्भवेन व्यतिरेकव्यभिचारासम्भवात्, अन्यथा व्यभिचारेण हेतुत्वबाधे श्रुत्यापि तत्साधनताज्ञानासम्भवात् । घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव ब्रह्मसाक्षात्कारे श्रवणातिरेकेणोपायान्तरमस्तीति शङ्कायां व्यतिरेकव्यभिचारस्यापि दोषत्वात् । तथा च प्राप्तत्वान्नापूर्वविधिः, किन्तु नियमविधिरेवायम्; तदभावे यथा किंचिच्चक्षुषा वीक्षमाणः स्वागृहीते सूक्ष्मे विशेषान्तरे केनचित् कथिते तदवगमाय तस्यैव चक्षुषः पुनरपि सम्प्रणिधानं व्यापारे प्रवर्त्तते तथैव मनसाऽहमिति गृह्यमाणे जीवे वेदान्तैरुपदिष्टनिर्विशेषब्रह्मात्मचैतन्यरूपत्वमाकर्ण्य तदवगमाय तत्सावधानमनस एव प्रणिधाने कदाचित् पुरुषः प्रवर्त्ततेति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यात् । न च 'अप्राप्य मनसा सह' इति मनोगम्यत्व निषेधः 'मनसैवानुद्रष्टव्यम्' इति विरोधात्तस्यानवहितमनो विषयत्वात् । ततो वेदान्तश्रवणेनैव तत्त्वसाक्षात्कारनियमः । एवमेव 'जुष्टं यदा पश्यत्यन्यमीशम्' इति श्रवणाद्भिन्नात्मज्ञानान्मुक्तिरिति शङ्कासम्भवान्मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपे शास्त्रान्तरश्रवणेऽपि पक्षे प्रवृत्तिः स्यादित्यद्वैतात्मपरवेदान्तश्रवणनियमविधिरस्तु ।

अथवा स्वप्रयत्नसाध्याद्वेदान्तविचारादपि ब्रह्मापरोक्षज्ञानं सम्भवतीति गुरुमुखाधीनवेदान्तश्रवणनियमाद्दृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेनोपयुज्यते, अन्यथा प्रतिबद्धमविद्यामनिवर्त्तयत् परोक्षकल्पमेवापरोक्षविषयमपि ज्ञानं तिष्ठेत् ।

तत्रापि केचित्—परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्यस्य कामिनीपरिभावितविधुरचित्तस्येव मननादिसहकृतशब्दस्यापरोक्षज्ञानजनकत्वम्, अपरे निर्विचिकित्सपरोक्षज्ञानार्थत्वेनैव नियमविधिरिति। अन्ये यथा गान्धर्वशास्त्रश्रवणस्य चित्तसहकारितया षड्जादिसाक्षात्कारजनकत्वम्, तथा मनः सहकारितया श्रवणस्य ब्रह्मापरोक्षज्ञानजनकत्वम्।

"पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयापि यथा।
न फलाय मच्छुविषया भवति, श्रुतिसम्भवाऽपि तु तथात्मनि धीः॥
पुरुषापराधविनिवृत्तफलः सकलो विचार इति वेदविदः।
पुरुषापराध विगमे तु पुनः प्रतिबन्धकव्युदसनात्सफल इति।"

संक्षेपशारीरिककृतस्तु—ऊहापोहात्मकस्य विचाररूपस्य श्रवणस्य स्वतोऽप्रमाणरूपस्य नापरोक्षं परोक्षं वा फलम्, तस्य शब्दादिप्रमाणफलत्वात्। नच तादृशविचारावधारिततात्पर्यविशिष्टशाब्दज्ञानमेव श्रवणं तस्य च ब्रह्मज्ञानं सम्भवत्येव फलमिति वाच्यम्, ज्ञाने विध्यनुपपत्तेः तस्य पुरुषतन्त्रत्वात्तस्मात्पुंदोषतात्पर्यभ्रान्तिसंस्कारशान्तये नियमोऽभ्युपेयः।

वार्त्तिकानुयायिनस्तु—चिकित्साशास्त्र इव प्राप्तव्यापारान्तरवारकतया परिसंख्याविधिरेव श्रवणविधिः।

वाचस्पतिमतानुयायिनस्तु—'आत्मा श्रोतव्य' इति मननादिवदात्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजन्यं ज्ञानमेव न तु वाक्यार्थविचाररूपमिति न तत्र कोऽपि विधिः। विधिच्छायावचनानां स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थत्वात्, श्रवणस्य वेदान्ततात्पर्यविचाररूपत्वेऽपि तात्पर्यभ्रमसंशयरूपप्रतिबन्धकनिरास एव फलम्; न प्रतिबन्धकान्तरनिरासो ब्रह्मावगमो वा फलम्। तच्च लौकिकमेव साधनान्तरञ्च विकल्प्य समुच्चित्य वा न प्राप्तमिति न विधित्रयस्याप्यवकाशः।

विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसम्भवेऽदृष्टकल्पनायोगाद्गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थे पर्यवस्यति तावतैव स्वप्रयत्नसाध्यविचारव्यावृत्तिश्चेति। तदुक्तमेवाचार्यवाचस्पतिमिश्रैः—"तत्तदिष्टानिष्टविषयेप्सा जिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति, आत्मश्रवणविधिसरूपैस्तु वचनैः मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यत इति प्रवृत्तिविशेषकरत्वादनुवादानाम्" । इति।

तत्र विरक्तेनाधिकारिणाऽमृतत्वसाधनात्मज्ञानाय वेदान्तविचारः कर्त्तव्य इत्यधीतस्वाध्यायः पुमान् वेदादेवावगत्य पश्चादेवं सन्दिग्धे वैराग्यमधिकारि विशेषणमथान्यदपि नानाविशेषणेषु तद्विशिष्टाधिकारिणि किमधिकारिविषयफलरूपानुबन्धत्रयोपेतानि 'श्रोतव्य' इत्यादिश्रवणबोधकानि वाक्यानि सर्वमेतन्न्यायेन निर्णेतव्यम्।

अथातो ब्रह्मजिज्ञासेति । तत्रेच्छायां सत्यां विचारे सति पश्चादेव ज्ञानोत्पत्तिः। तथा च ज्ञानेच्छाभ्यां सन्दष्टत्वाद्विचारस्य ज्ञानेच्छयोरपुरुषतन्त्रत्वान्न तत्कर्त्तव्यतासम्भवः। ज्ञा-धातोरत्रापरोक्षज्ञानमर्थः । इच्छार्थकस्य सनो ब्रह्मापरोक्षसाक्षात्कारेच्छया तज्जनके वेदान्तविचारे लक्षणा तथात्वेनैव कर्त्तव्येत्यनेन जिज्ञासाया अन्वयः । साध्याकांक्षाया ममृतत्वसाधनं प्रत्यक्चैतन्याभिन्नब्रह्मापरोक्षज्ञानमुपतिष्ठते तस्यैवेप्सिततमत्वात् । साधनाकांक्षापूरकत्वेन वेदान्तवाक्यानामुपस्थितिः, इतिकर्त्तव्यताकांक्षायां विचारः समुदेति। अधिकारिविशेषणतया 'शान्तो दान्त' इत्यादिवाक्यसिद्धं साधनचतुष्टयमुपयुज्यते । तथा च साधनचतुष्टयसम्पन्नेनाधिकारिणामृतत्वफलकब्रह्मापरोक्षज्ञानाय वेदान्तविचारः कर्त्तव्य इति सूत्रार्थः सम्पद्यते ।

नन्वत्रेदङ्कारास्पदेभ्यो देहेन्द्रियादिभ्यो विवेकेनात्मनः स्पष्टं प्रतीयमानत्वात् । तस्यैव ब्रह्मरूपत्वात्तज्ज्ञानेऽपि मुक्त्यभावात् निःसन्दिग्धत्वात् निष्फलत्वाच्च न ब्रह्मजिज्ञा- स्यमिति चेन्न, निरस्तसमस्तोपाधिकस्यात्मतत्त्वस्य विचारमन्तरेणानवगतत्वात् तदवगमेन- विद्यातत्कार्यात्मकसंसारनिवृत्तिस्वरूपभूतपरमानन्दलाभफलस्य सद्भावाच्च । नच विमता- वात्मानात्मानौ भेदेन प्रमितावभेदायोग्यत्वात् तमः प्रकाशवदित्यनुमानेनाध्यासासम्भवात् ब्रह्मणो विचार्यत्वासम्भव इति वाच्यम्, 'अहं गच्छामि, लङ्घयामि, पश्यामि, शृणोमि, सङ्कल्पयामि; इच्छामीतिदेहादितादात्म्याध्यासस्यानुभवसिद्धत्वेनोक्तदोषाभावात् । न च तथा भूत एवात्मा, श्रुतिविरुद्धत्वात् । नच प्रत्यक्षादिविरोधात् श्रुतिरुपचारितार्था, उप- क्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया तत्त्वमवगमयन्त्याः श्रुतेरुपचारितार्थत्वानुपपत्तेः।

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इति रीत्या 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमः, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो !, इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनैकरूप्यम् एकं लिङ्गम् । असकृत्तत्त्वमसीत्युक्तिरभ्यासः, तेन भूयस्त्वमर्थस्य भवति नोपचरितार्थत्वम् 'अहो रमणीया अहो रमणीया' इतिवत् । प्रमाणान्तरागम्यत्वादपूर्वत्वम् ( येनाश्रुतं श्रुतं भवति ) इत्येक विज्ञानेन सर्वविज्ञानं फलम् । सृष्टिस्थितिप्रलयप्रवेशनियमनानीत्यर्थ- वादाः, मृदादिदृष्टान्ता उपपत्तयः । एतैर्लिङ्गैर्वेदान्तानां नित्यशुद्धबुद्धमुक्तब्रह्मात्मपरत्वं निश्चीयते । इत्थमौपनिषदस्यात्मतत्त्वस्याहमनुभवेऽनवभासमानत्वात्, तस्यानुभवस्याध्य- स्तात्मविषयत्वम् । नाहमनुभवे सर्वगतत्वमात्मनो भासत इति नैयायिकवैशेषिकाभिमत- स्याप्यात्मनो न तत्र भानम्, 'अहमिहैवास्मि सदने जानान' इत्यात्मनः प्रादेशिकत्वानु- भवात् । नच देहेऽहंशब्दस्योपचाराद्देहस्यैव प्रादेशिकत्वप्रतिभास इति वाच्यम्, उपचरितात्मभावस्य देहादेः स्वसमानाकृतिशिलापुत्रकादिवत् ज्ञातृत्वायोगात्, ज्ञातृत्व- मप्यौपचारिकमिति तु नोहनीयम्, प्रयोक्तुः स्वप्रतिपत्तिबोधके प्रयोगे प्रतिपत्तृत्वोप- चारानुपपत्तेः ।

अथ देहगतं प्रादेशिकत्वमपि आत्मनि उपचार्यते तदा देहात्मनोर्भेदेन भाव्यम्, प्रसिद्धभेदे माणवके सिंहशब्दप्रयोगदर्शनात् । सार्षपादौ तैलशब्दवन्निरूढगौणत्वेऽपि भेदप्रतीतिरस्त्येव । नच 'मम देह' इति भेदभानमस्त्येवेति वाच्यम्, देहादिभ्यो निष्कृष्या-साधारणधर्मत्वेन प्रतिभासमानत्वाभावात्; अन्यथा देहात्मवादोऽस्तमियात् । मम शरीर-मित्युक्तिस्तु 'राहोः शिर' इतिवदौपचारिकी, अत एव—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥"

इत्युक्तिः । तथा च व्यापकस्य भेदभानस्य निवृत्तौ व्याप्यस्य गौणत्वस्य निवृत्तिः । ननु सोऽहमिति प्रत्यभिज्ञया देहात्मभेदसिद्धिरिति चेन्न, पामराणां देहातिरिक्तात्मैक्या-वगाहिन्याः प्रत्यभिज्ञाया अनुदयात् । श्यामस्य लौहित्यवत् कारणविशेषात् अल्पस्यापि महापरिमाणत्ववच्चाविरुद्धमनुभवतां तद्देह एव तस्याः सम्भवाच्च । परीक्षकाणां च व्यव-हारसमये पश्वादिभिरवैशेष्यात् । न चाहंप्रत्ययप्रामाण्याय देहपरिमाणत्वमङ्गीकरणीयमिति वाच्यम्, तथात्वे सावयवत्वेन देहादिवत् अनित्यत्वे कृतहानाकृताभ्यागमप्रसङ्गात् । नचाणुपरिमाणत्वस्वीकारेण निर्वाहः ? स्थूलोऽहमिति प्रत्ययानुपपत्तेः । नच विज्ञानवा-श्रयेणापि निर्वाहः, 'यः सुप्तः सोऽहं जागर्मि' इतिस्थिरगोचरस्योल्लेखस्य क्षणिकज्ञान-गोचरत्वे अतस्मिंस्तद्बुद्धिरूपस्याध्यासस्य तदवस्थानात् । तदेवं यद्यपि सर्वोऽपि आत्मास्तित्वं प्रत्येति न नाहमस्मीति कश्चिद् विप्रतिपद्यते, प्रत्यगात्मैव च ब्रह्म तत्त्वमसीति सामानाधि-करण्यश्रुतेः तथापि तद्विशेषे विप्रतिपत्तिदर्शनात् सन्दिग्धत्वात् सफलत्वाच्च जिज्ञास्यत्वम् सर्वमेतदध्याससिद्धिसापेक्षमित्यध्यासः साधनीयः ।

तत्र किं लक्षणोऽध्यास इति चेच्छृणु, स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इति । अत्र ज्ञानविशिष्टोऽर्थः अर्थविशिष्टञ्च ज्ञानमिति द्विविधोऽध्यास उक्तः । अर्थस्य स्मर्यमाणसदृशोऽन्यात्मनावभास्यमानोऽन्योऽर्थोऽध्यास इति लक्षणम् । ज्ञानस्य तु स्मृति-समानोऽन्यस्यान्यात्मनावभास इति । तत्राख्यातिवादिनः—इदं रजतमित्यत्र चक्षुरा-दिप्रमाणाभावात् पारिशेष्येण स्मर्यमाणमेव रजतं न तत्सदृशमिति । नच पुरोऽवस्थित-त्वेनावभासमानत्वान्न स्मर्यमाणमिति वाच्यम्, इदमंशस्य तथावभासमानत्वात् । यद्यप्ययं घट इति सम्यक्स्थले यथा सामान्यविशेषावितरेतरसंसृष्टाववभासेते तथैवेदं रजतमित्या-दावपि प्रतिभासस्तथापि सामान्यविशेषयोर्नैरन्तर्येण प्रतिभासात्तथा व्यवहारः सम्भवत्येवेति न संसर्गसंवित्सद्भावः । न च परमार्थस्थलादीषदपि न्यूनताऽदर्शनात् कथमेवमिति

वाच्यम्, पुरोवर्तिनि रजताभावस्यैव न्यूनत्वात् । यदप्युक्तं किमपरोक्षसंविदभावाद्रजताभावनिश्चय आहोस्वित् नेदं रजतमिति बाधकज्ञानात् ? नाद्यः,—संविदभावस्यासम्प्रतिपत्तेः । अर्थाभावेन संविदभावनिश्चयेऽन्योन्याश्रयता, तस्मादपरोक्षसंवित्सद्भावादेव पुरोवर्तिरजतसत्ताऽभ्युपेतव्या न वैपरीत्येनार्थसत्तानिश्चयाधीनः संवित्सत्तानिश्चयः, तथासत्यर्थनिश्चयस्यापि निश्चयान्तराधीनत्वादनवस्थानम् । नान्त्यः—इदं रजतमितिपूर्वज्ञानेन विरुद्धस्योत्तरज्ञानस्य बाधासामर्थ्यात् । नच पूर्वज्ञानस्य का गतिरिति चेत् ? या गतिस्तवमते सैव मन्मतेऽपि । यथा त्वन्मते इदमाकाररजताकारयोरविवेकस्तथा निषेधेऽप्यविवेक एव ननु संसर्गसंविदिति किं न कल्प्यते ? तदेतदापातरमणीयम्—व्यवहारसम्वादज्ञानान्निषेधसंसर्गसंविदो निश्चयात् । नचैवं संविदः स्वप्रकाशत्वहानिः विप्रतिपन्नं प्रति तथा प्रसाधनात् । नच यथा प्रतिभासमेव मिथ्यारजतस्य शुक्तिज्ञानेन निरसनयोग्यस्याभ्युपगम उचितस्तस्यापि त्रैकालिकनिषेधविरुद्धत्वात् । नच निषेधस्य लोकप्रसिद्धपरमार्थरजतविषयत्वमिति वाच्यम्, तस्याप्रसक्तत्वात् ।

परमार्थरजतार्थिप्रवृत्तिदर्शनेन सामान्योपाधौ प्रसक्तिरेवान्यत्र निषेधे कारणम् अन्यथा भूतले घटनिषेधोऽपि दुर्भणः स्यात् सत्त्वे निषेधो व्याहतोऽसत्त्वेऽप्रसक्तप्रतिषेधः । ततो देशकालसामान्योपाधिना घटप्रसक्तिर्न तु साक्षात्तथैव परमार्थरजतस्याप्यस्तु प्रसक्तिः तत एवोत्तरकालीनो नास्त्यत्र रजतमिति प्रत्ययः परमार्थरजतविषयो मिथ्यैव रजतमभादिति प्रत्ययस्य मिथ्या रजतं विषय इत्युभयमप्युपपद्यते, अन्यथैकोऽपलप्येत, तदप्यनुपपन्नम्—संसृष्टावभासमन्तरेणैवापरोक्षशुक्तिज्ञानाविवेकादप्युपपत्तौ रजतापरोक्षत्वानुपपत्त्या संसृष्टावभासं परिकल्प्य तदुपपत्तये मिथ्यारजतकल्पनाक्लेशगौरवात् । यदपि विवेकज्ञानसमयेऽप्येतावन्तं कालं तद्रजतमनेनाविविक्तमित्यविवेक एव परामृश्येत न त्वेतावन्तं कालमिदं रजतमभादितिप्रत्यभिज्ञया संसृष्टावभास एव परामृश्येत । ततः पुरोवर्तिरजतमङ्गीकर्त्तव्यम्, अन्यथा शुक्तिं दृष्ट्वा रजते कथं प्रवर्तेत तस्मान्न स्मर्यमाणमिदं रजतं किन्तु स्मर्यमाणसदृशमेव । तत्सादृश्यञ्च पूर्वानुभवसापेक्षज्ञानगम्यत्वादुपपन्नम्, अननुभूतरजतस्य रजतभ्रान्त्यसम्भवात् । संस्कारजन्यत्वाज्ज्ञानाध्यासस्यापि स्मृतिसाम्यम् । नच स्मृतिव्यतिरिक्तज्ञानत्वेनासंस्कारजत्वं साध्यम्, संप्रयोगमात्रजन्यत्वस्योपाधित्वात् । नचानुमानागमादिजन्यज्ञानेषु साध्याव्याप्तिः, व्याप्त्यादिज्ञानसापेक्षत्वेन संस्कारजेषु तेषु साध्याभावादिति तदपि न विचारचारु,—प्रमाणं स्मृतिश्चेति ज्ञानस्य द्वैराश्याभ्युपगमेनादोषात् । विमताः प्रत्यया यथार्थाः प्रत्ययत्वात् सम्मतवदित्यनुमानमानम् । न हि प्रमाकरणानामप्रमाजनकत्वम्, मानाभावात् । नच दोषेणापि तत्सम्भवति तस्यौत्सर्गिककार्यजननप्रतिबन्धेनैवोपक्षीणत्वात् । तथा च रजतज्ञानं संस्कारजत्वात्स्मृतिः, शुक्तीदमंशस्य चानुभवस्तयोरसंस-

गांग्रहादिदं रजतमिति नैरन्तर्येणावभासः। नचातिसादृश्याच्छुक्त्यनुभवेन शुक्त्यन्तरमेव कस्मान्न स्मर्यते ? कर्त्तृरागादिदोषाणामपि निमित्तत्वात्, शुक्त्यन्तरे च तदभावात्। तैरेव दोषैः स्मरणाभिमानस्य प्रमुषितत्वान्न रजतस्मरणे तत्तोल्लेखः। तथा विशेषावभासस्य च तैरेव प्रतिबद्धत्वाच्छुक्तिग्रहणेऽपि नीलपृष्ठत्रिकोणादि न भासते। तथा च ग्रहणस्मरणयोरविविक्तत्वात्पुरोवर्त्तिनि रजतार्थिप्रवृत्तिः।

यत्तु—ग्रहणस्मरणयोरुभयोरपि प्रवर्त्तकत्वमेकैकस्य वा ? प्रथमपक्षेऽपि सम्भूय क्रमेण वा ? नाद्यः—स्मृतिग्रहणयोर्यौगपद्याभावात्, क्रमेणेत्यपि न पूर्वज्ञानस्य प्रवृत्तिं प्रति व्यवहितस्याकारणत्वात्। नाप्येकैकस्य व्यवहारस्य, विशिष्टविषयत्वात्; तस्माद्विशिष्टप्रवृत्तये संसृष्टप्रत्यय एष्टव्य इति तन्न,—ग्रहणस्मरणनैरन्तर्योत्पत्तेः प्रवर्त्तकत्वात्। नचेदं रजतमित्यभादितिसंसर्गप्रत्ययः प्रत्यभिज्ञायत इति वक्तव्यम्, यथा हि दूरस्थ वृक्षयोर्दूरत्वदोषेणानुत्पन्नमप्येकत्वं भासते तथैव प्रकृतेऽपि संसृष्टव्यवहारसम्भवात्, जातमात्रस्य बालस्य थूत्कारानुमेयस्तिक्तत्वावभासोऽपि जन्मान्तरीयानुभूततिक्तत्वस्मृतिरेव न भ्रान्तिरूपः पित्तदोषात्तु ग्रहणस्मरणयोर्माधुर्यतत्तांशौ प्रमुष्टौ बालस्य स्तनपानप्रवृत्तिदर्शनात् जन्मान्तरीयानुभूतस्मृतिरपि मन्तव्या, भ्रान्तिपक्षेऽपि जन्मान्तरानुभवः स्वीकर्त्तव्यः, अन्यथाऽननुभूतत्वाविशेषेण षड्रसोऽपि भ्रान्तौ भासेत अतो जन्मान्तरानुभूतं न स्मर्यत इति प्रायिकाभिप्रायं वचनम्, अतत्त्वे तत्त्वज्ञानमिति वचनमपि व्यवहाराभिप्रायेणैव। नच सम्यक् स्थले संसर्गप्रत्ययस्य प्रवर्त्तकत्वं क्लृप्तमिति कुतोऽत्र तत्त्याग इति वाच्यम्, गौरवात्। भ्रान्तिवादिनापि तत्कारणत्वेनाविवेकस्याङ्गीकर्त्तव्यत्वादुभयसिद्धेन तेनैव प्रवृत्तिसिद्धौ संसर्गज्ञानस्य प्रवृत्तिहेतुत्वकल्पने गौरवात्। तदेतदख्यातिवादं वेदान्तिनो न सहन्ते, तथाहि—अख्यातिः किं ख्यात्यभावमात्रमुतान्यार्थिनोऽन्यत्र प्रवृत्तिहेतुविज्ञानम् आहोस्विदविविक्तानेकपदार्थज्ञानम् ? । नाद्यः—सुमेरन्यत्र जाग्रत्स्वप्नयोर्भ्रमानुपपत्तेः, न द्वितीयः—झटिति बाधादालस्याद्वा यत्र प्रवृत्तिर्न भवेत्तत्र भ्रान्तिव्यवहारानुपपत्तेः। न तृतीयः— अविविक्तत्वप्रतियोगिविविक्तत्वस्यानिर्वचनात्। तथाहि—किं तद्भेदग्रह उताभेदाग्रह आहोस्विदितरेतराभावभेदद्वित्वादिसंख्याविशिष्टज्ञानम् ? नाद्यः—इदमिति रजतमित्यपुनरुक्तशब्दद्वयस्मृतिहेतुत्वेन सामान्यविशेषयोर्भेदग्रहे. सत्यविवेकासम्भवात्, न द्वितीयः— उक्तरीत्या भेदस्य गृहीतत्वादेव तद्विरुद्धस्याभेदस्याग्रहे सति तदग्रहनिषेधस्याविविक्तत्वस्य दुःसम्पादकत्वात्। तृतीयेऽपि किमाहत्यैव द्वित्वादिज्ञानमपेक्षितमुतानुषङ्गिकमपि पर्याप्तम्, आद्ये गामानय दण्डेनेत्यत्र गोदण्डयोरपि साक्षाद्द्वित्वाद्यप्रतीतेरविवेकप्रसक्तेः। द्वितीये पुरोवर्त्तिरजतयोरप्यानुषङ्गिकद्वित्वादिज्ञानसद्भावादविवेकाभावप्रसङ्गात्। ननु प्रतियोगिनमुपजीव्याविवेकानिर्वचनेऽपि धर्मिद्वारातन्निरुक्तिः सम्भवतीति चेन्न,

प्रतीयमानयोर्धर्मिणोरविवेकासम्भवात्, अप्रतीयमानयोस्तथात्वे शुक्तावपि भ्रमप्रसक्तेः। यदपि संसर्गाग्रहोऽविवेकः स च प्रतीयमानयोरपीदंरजतयोरिदंरजते असंसृष्टे इति प्रत्ययादर्शनात्, तदप्यसद्-विकल्पासहत्वात् ।

तथाहि—ग्रहणस्मरणयोरेवासंसर्गाग्रहो विवक्षित उत ययोः कयोश्चिदथवा संसर्गज्ञा नरहितयोः? आद्ये 'अहं मनुष्य' इति भ्रमो न स्यादुभयोरपि ग्रहणत्वात्, द्वितीये 'खण्डो गौः, 'शुक्लः पटः' इत्यस्यापि भ्रमत्वापातादसंसर्गग्रहे त्यभावात् । तृतीयेऽपि स एव दोषो न तदसंसर्गज्ञानं सम्भवति तद्विषयस्ये क्यस्याभावात् । यदि गुणगुण्यादिसम्बन्ध एव तद्विषयो नैक्यमिति मतं तर्हीदं रजतमि त्यत्रापि सादृश्यसम्बन्धस्तद्विषय इत्यपि वक्तुं शक्यत्वेन संसर्गप्रत्ययो दुर्वारः । अथ तत्र नेदं रजतमित्यसंसर्गप्रत्ययेन बाधान्न संसर्गतत्प्रत्ययौ सम्भवतस्तर्हि त्वन्मते गुण ण्यादावपीतरेतराभावज्ञानात्तयोऽसंसर्गप्रत्ययोऽस्त्येवेतिसंसर्गप्रत्यययोरसम्भवाद्भ्रमत्वापत्तिस्त दवस्थैव तस्मान्नासंसर्गाग्रहोऽप्यविवेकः ।

ननु विवेकं दूषयता विवेचकं किञ्चिन्निरूपणीयम् । नच ग्रहणं स्मर्यमाणात्स्वं विविनक्ति विशेषावभासकत्वस्य दोषैः प्रतिबद्धत्वात् । नापि स्मरणं गृह्यमाणात्स्वा विवेक्तुमलम्, स्मरणाभिमानस्य प्रमुषितत्वादिति चेन्न, उभयोरपि विवेचकत्वसम्भवात् तथाहि—किमिदमाकाररजताकारयोस्तत्तज्जातिव्यक्तिविशिष्टयोरिव त्वया भेदोऽभ्युपे किं वा केवलयोरपि ? नाद्यः, प्रकृतयोरिदमाकाररजताकारयोर्जात्याद्यविशिष्टयोर्भेदाभा नैक्ये सति तद्गोचरसंसर्गज्ञानप्रसङ्गात् । द्वितीयेऽपि किं प्रथमज्ञानेन वस्तु गृहीत्व द्वितीयज्ञानेन धर्मिप्रतियोगिभावमवगत्य पश्चात्तृतीयज्ञानेन भेदो गृह्यत उत वस्तु सहैव भेद ग्रहणम् ? आद्ये सर्वपदार्थज्ञानानां भेदग्रहणात्प्रागविविक्तविषयत भ्रमत्वप्रसङ्गात् । द्वितीये चेदंताग्रहणादेव भेदस्यापि गृहीतत्वेन भेदापेक्षितो विशेषोऽ भाषित एवेति ग्रहणस्य विवेचकत्वम्, तथैव स्मरणमपि विवेचकम्, स्मरणाभिम प्रमोषस्यानिरूपणात् । तथाहि किं विस्मृतिरेव स्मरणाभिमानस्तदन्यो वा, स्मृतिगतध वापूर्वानुभवशिष्टत्वेनार्थग्रहणं वा, स्वमत एव स्मृति विशेषो वा, पूर्वानुभवगोचराद्वि ज्ञेयनिमित्तोविशेषो वा फलभेदजनकत्वं वा, स्मरामीत्यनुभवो वा ? नाद्यः—स्मृ प्रमोषे रजतज्ञानस्यैवाभावप्रसङ्गात् । न द्वितीयः—अन्यस्य प्रमोषे स्मृतेरविवेचकत्वमि वैयधिकरण्यापातात् । न तृतीयः—तादृशधर्मानुपलम्भात् । न चतुर्थः—पूर्वदृष्टः स ए यमिति प्रत्यभिज्ञाभ्रमे पूर्वानुभवसम्भेदग्रहे सत्येव विना तत्प्रमोषमविवेकदर्शनात् किञ्च पूर्वानुभवः स्वात्मानमपि विषयीकरोत्युतार्थमात्रम् ? नाद्यः—वृत्तिविरोधात् । द्वितीयः—अर्थस्यैव स्मृत्यवभास्यत्वम्, नानुभवस्याननुभूतत्वात् । ननु 'ज्ञातो घट' इ ज्ञानाविशिष्टार्थस्मृतिर्दृश्यत इति चेन्न, स्मृत्यन्तरत्वात् । अनुव्यवसायेन ज्ञानगोचर भानेन वा जन्येयं स्मृतिर्घटव्यवसायजन्यस्मृत्यन्यैव ! न चानयापि स्वजनको विष

क्रियते किन्तर्हि अनुव्यवसायेनानुभूतो व्यवसायविशिष्ट घट एव । विमता स्मृतिर्न स्वमूलज्ञानविशिष्टमर्थं गृह्णाति स्मृतित्वात्पदार्थस्मृतिवत्, पदानि हि स्वसम्बद्धेष्वर्थेषु स्मृतिं जनयन्ति । यत्तूक्तम्—पदानामर्थैः संयोगादिसम्बन्धासम्भवात् पदार्थस्मारकत्वमसिद्धम्, बोधजननशक्तिरेव सम्बन्ध इति चेन्न, तदनिरूपणात् । अनुभवजननशक्तिस्तथेति चेन्न, पदानां वाक्यरूपेण वाक्यार्थानुभवजनकत्वेऽपि स्वार्थेषु तदसम्भवात् । व्युत्पत्तिकाले पदार्थानां मानान्तरगृहीतत्वेनापूर्वार्थत्वाभावात् । तदुक्तम् :—

"पदमभ्यर्थाधिकाभावात्स्मारकान्न विशिष्यते ।"

स्मृतिजननशक्तेस्तत्त्वेऽपि सा न तावदज्ञाता स्मृतिं जनयति, ज्ञानकारणत्वात् । नापि ज्ञाता, शक्तेः कार्यैकसमधिगम्यत्वेन स्मृत्युत्पत्तिज्ञानयोः परस्पराश्रयत्वात् । अथ मध्यमवृद्धप्रवृत्त्या प्रवृत्तिहेतुज्ञानमनुमाय शब्दानन्तर्याच्छब्दस्य तज्जनकत्वं निश्चित्यावापोद्वापाभ्यां व्युत्पत्तिकाल एव शक्तिनिश्चयात् नान्योन्याश्रयतेति, तदापि शब्दमात्रे शक्तिनिश्चयः अर्थविशेषसम्बद्धे वा ? नाद्यः,—'अस्माच्छब्दादयमर्थो बोद्धव्य' इति नियमासिद्धिप्रसङ्गात् । द्वितीयेऽपि शक्तिसम्बधस्य व्यवस्थापकसम्बन्धान्तरं मन्तव्यम्, तथा चानवस्था । शक्तिः स्वपरनिर्वाहिका चेत् ? तथापि स्मृतिकाले शब्दज्ञानमात्रादर्थः स्मर्यते, अर्थगोचरशक्तिमच्छब्दज्ञानाद्वा ? शक्तिज्ञानसंस्कारसहिताच्छब्दज्ञानाद्वा ? नाद्योऽनियमापत्तेः, न द्वितीयः शब्दज्ञानसमय एवार्थस्यापि ज्ञानात् शब्दजन्यस्मृतिवैयर्थ्यात्, न तृतीयस्तावता स्मृत्यसम्भवात् अन्यत्र स्मारकस्मार्ययोः सादृश्यविरोधिकार्यकारणभावादि सम्बन्धान्तरनियमात्, शब्दार्थयोस्तदभावात्, तस्मात्पदाणि स्मारकामि वाक्यं पुनः प्रमाणमिति वेदवादिनां प्रक्रियामात्रम्; तदेतदविचारितरमणीयम्, शब्दश्रवणाच्छक्तिसंस्काराच्चार्थस्मृतौ दोषाभावात्, शब्दे सादृश्यादर्शनाददृष्टस्य कल्पने गौरवात् । अन्यत्र दृष्टस्य सादृश्यस्यापलापासम्भवान्नानाविकल्पा अत्र प्रसरन्ति । तस्मात्प्रमोषणीयस्य स्मरणाभिमानस्य दुर्भणत्वात् स्मरणस्य विवेचकत्वं प्राप्नोत्येव । ननु ग्रहणस्मरणयोरर्थमात्रविषयत्वे भेदाभावप्रसङ्गेनावश्यं त्वयापि स्मृतेः पूर्वानुभवविशिष्टार्थविषयत्वं स्वीकार्यम्, तदेवं स्मरणाभिमानोऽस्तीति चेन्न, कारणविशेषादेव भेदसिद्धेः, अन्यथा त्वन्मतेऽपि पूर्वानुभवगोचरानुमानज्ञानात् स्मृतेर्भेदाभावप्रसङ्गः स्यात् विषयस्य समत्वात् । ननु 'स' इत्याकारेण स्मृतिर्ज्ञानानुमानाद्भिद्यते इति चेत् ? 'स' इत्याकारस्यानिरूपणात् । किं परोक्षदेशकालविशिष्टता उत पूर्वानुभवसंभिन्नता, किं वा संस्कारजन्यता ? नाद्यः,—अनुमानादिष्वपि स्मृतित्वप्रसङ्गात्, न द्वितीयः—ज्ञानानुमानेऽपि प्रसङ्गात्, तृतीये तु कारणविशेषस्यैव हेतुत्वम् ।

नन्वस्तु प्रकृतेऽपि संस्कारजन्यैव रजतस्मृतिरिति चेन्न, रजतस्य पुरोऽवस्थितत्वेन प्रतिभासादित्युक्तत्वात् । नच पुरोऽस्थितत्वमप्यविवेककृतम्, अविवेकस्य भ्रमं प्रत्यप्रयोजकत्वात् । तथाहि—किं गृह्यमाणयोरविवेकः किं वा गृह्यमाणस्मर्यमाणयोरुत स्मर्य-

माणयोः ? नाद्यः–स्वप्नदशायामात्मव्यतिरिक्तस्य कस्याप्यग्रहणेन द्वयोर्गृह्यमाणयोरभावे तदविवेकस्य भ्रमप्रयोजकस्याप्यभावेन भ्रमाभावप्रसङ्गात् । न द्वितीयः–स्वप्न एव गृह्यमाणेनात्मना स्मर्यमाणस्य नीलादेरविवेके सत्यहं नीलमिति प्रतिभास प्रसङ्गात् । तृतीये तु–परोक्षमेव सर्वं भ्रान्तौ प्रकाशेत सर्वस्यापि स्मर्यमाणत्वात् । एवञ्च प्रकृतस्य पुरोवर्ति-रजतभानस्य स्मृतित्वानुमाने परोक्षावभासित्वोपाधिरपि । यथार्थानुमानस्य चायं प्रति-प्रयोगः–"विवादाध्यासिताः प्रत्यया न यथार्था बाध्यमानत्वात् भ्रान्तिव्यवहारवत्" तस्मान्न ज्ञानद्वैराश्यमपि तु भ्रान्ति ज्ञानमेव ।

ननु तर्हि अन्यथाख्यातिरस्तु देशकालान्तरगतस्य रजतस्य शुक्तिसम्प्रयुक्तेन दोषोप-हितेनेन्द्रियेण शुक्त्यात्मना ग्रहणात् । नचैवमननुभूतस्यापि ग्रहणप्रसङ्गः, सादृश्यादेर्निया-मकत्वादिति चेन्न, विकल्पासहत्वात् । तथाहि–किं ज्ञानेऽन्यथात्वं किं वा फल उत वस्तुनि ? नाद्यः–रजताकारज्ञानं शुक्तिमालम्बत इत्येव ज्ञानेऽन्यथात्वं वाच्यम्, तत्र शुक्तेरालम्बनत्वं किं ज्ञानं प्रति स्वाकारसमर्पकत्वमुतज्ञानप्रयुक्तव्यवहारविषयत्वम् ? नाद्यः–रजताकार-ग्रस्तं ज्ञानं प्रति शुक्त्याकारसमर्पणासम्भवात् । न द्वितीयः—व्याघ्रादिदर्शनप्रयुक्तव्यव-हारविषयस्य खड्गकुन्तधनुरादेर्व्याघ्रादिज्ञानालम्बनत्वप्रसङ्गात् । नापि फलेऽन्यथात्वं फलस्य स्फुरणस्य भ्रान्तौ सम्यग् ज्ञाने वा स्वरूपतो वैधर्म्यादर्शनात् । वस्तुन्यन्यथात्वमपि किं शुक्तिकाया रजततादात्म्यं किं वा रजताकारेण परिणामः ? आद्येऽपि किं शुक्तिरजत-योर्भेद एव किं वा भेदाभेदौ ? नाद्यः–अत्यन्तभेदे तादात्म्यासम्भवात्, भेदाभेदपक्षे तु खण्डगौरितिवदभ्रान्तिप्रसङ्गः । शुक्तिकाया रजताकारेण परिणामपक्षोऽपि न शोभते बाधा-भावप्रसङ्गात् दध्याकारेण परिणतस्य क्षीरस्येव शुक्तेरप्यदर्शनप्रसङ्गः ।

यदप्युच्यते यथा सूर्यसन्निधानासन्निधाननिबन्धनौ पद्मिनिकासङ्कोचौ तथैव दोषभावाभावनिबन्धनौ शुक्तिकाया रजतात्मना विकासतदभावौ, तदप्यकिञ्चित्करम्–तत्र विकसितमेव पद्मं मुकुलितमितिवद्रजतमेव शुक्तिरासीदिति प्रतीत्यभावात् । किञ्च परिणा-माभ्युपगमे दधिवदेव सर्वस्यापि तत्प्रतीतिप्रसङ्गस्तस्मान्नान्यथाख्यातिः । ननु तर्हि भवत्वा-त्मख्यातिः,–सम्प्रयोगमन्तरेणैवापरोक्षत्वात् । ननु कथं विज्ञानरूपस्यात्मनो रजताकारतेति चेत् ? संस्कारसामर्थ्यादिति ब्रूमः । अनादिसिद्धविज्ञानसन्ततौ कदाचिद्रजतज्ञानं पूर्वमुत्पन्नं तस्यैव संस्कारः, तस्य विजातीयानेकज्ञानव्यवहितस्यापि कदाचित्सजातीयरजत-ज्ञानान्तरोत्पादकत्वं सम्भवति, ततोऽनादिवासनाप्रापितं रजतं विज्ञानात्मरूपमेव भ्रान्त्या बहिर्वदवभासते, अत एव 'अहं रजतम्' इति न प्रतीतिः किन्तु 'इदं रजतम्' इत्येवेति चेन्न, विकल्पासहत्वात् । तथाहि–किन्तद्रजतमलौकिकत्वादजातं जातं वा ? आद्ये ज्ञानरूपं न स्यात् तस्याजातत्वात् । द्वितीयेऽपि बाह्यार्थाज्जायत उत ज्ञानात् ? नाद्यः-विज्ञानवादिना बाह्यार्थानङ्गीकारात् । ज्ञानमपि विशुद्धन्न जनकम्, तस्य मोक्षरूपत्वात् । अथ

दुष्टकारणजन्यज्ञानाद्रजतोत्पादस्तथापि किं जनकप्रतीतिरेव रजतं गृह्णाति तदन्या वा ? नाद्यः—क्षणिकत्वेन जन्यजनकयोरेककालिकत्वासम्भवेनापरोक्षरजतप्रतीत्यभावप्रसङ्गात्, अन्यापि न रजतग्राहिण्यतिप्रसङ्गात्। दुष्टकारणजन्यापि यदि रजतजन्या प्रतीती रजतग्राहिणी तदा रजतस्यार्थक्रियाकारित्वेन सत्त्वे सति बाह्योऽर्थोऽङ्गीकृतः स्यात्, रजतान्यत्वे तु न रजतं तद्विषयः स्यात्, ज्ञानाकारार्पको हेतुर्विषय इत्यङ्गीरात्, तस्मादात्मख्यातिपक्षे न रजतप्रतीतिसम्भवः।

ननु तर्हि कथं भ्रान्तिज्ञानमनिर्वचनीयमुत्पद्यते तत्सामग्र्या असम्भवात्। नच सम्प्रयोगसंस्कारदोषाणां तत्सामग्रीत्वं दोषस्य प्रतिबन्धकत्वेन प्राप्तकार्यानुदयहेतुत्वेनोपक्षीणत्वादिति चेन्न, प्रागभावरूपस्यान्वयस्यानादित्वेन दोषाजन्यत्वात्, भस्मकदोषदुष्टस्यौदर्यवह्नेर्बह्वन्नपचनसामर्थ्यदर्शनात्, दावदग्धवेत्रबीजात्कदलीकाण्डप्ररोहदर्शनाच्च। ननु सम्प्रयोगस्येदन्तामात्रज्ञानोपक्षीणत्वात्संस्कारस्य स्मृतिजनकत्वेऽपि त्वया उदनङ्गीकारात् दोषस्य च स्वातन्त्र्येण ज्ञानहेतुत्वानुपगमात्कथं रजताभास इति चेच्छृणु—दोषसहितेनेन्द्रियेणेदमाकारमात्रविषयावृत्तिरुपेयेति तत इदन्तायां तद्ग्राहकवृत्तौ च चैतन्यं व्यज्यते, तच्चैतन्यनिष्ठाऽविद्या दोषवशात्संक्षुभ्नाति। तत्रेदमंशावच्छिन्नचैतन्यस्थाविद्या संक्षुभिता सती सादृश्यादुद्बोधितरूप्यसंस्कारसहायवशाद्रूप्याकारेण विवर्त्तते, वृत्त्यवच्छिन्नचैतन्यस्थाऽविद्या तु रूप्यग्राहिवृत्तिरूपेण विवर्त्तते। तौ च स्वस्वाधिष्ठानचैतन्येनावभास्येते। यद्यप्यत्रान्तःकरणवृत्तिरविद्यावृत्तिरिति ज्ञानद्वयम् तथापि तद्विषयः सत्यानृतयोरिदं रजतयोरन्योन्यात्मकतयैकत्वमापन्नस्ततो विषयावच्छिन्नफलस्यैकत्वेन ज्ञानैक्यमुपचर्यते। मिथ्याज्ञानमिथ्याविषयतत्सामग्रीसत्त्वान्न किञ्चिदवद्यम्, सम्प्रयोगसंस्कारजन्ययोः प्रमृतिस्मृत्योर्नैरन्तर्येणोत्पत्तिमात्रेण प्रवृत्त्यसम्भवात्। उभाभ्यामेकं मिथ्याज्ञानमुपेयते।

ननु भिन्नकारणजन्यत्वाद्रूपरसज्ञानमिव नैकं ज्ञानमिति चेन्न, अनुमानप्रत्यभिज्ञयोर्व्यभिचारात्। व्याप्तिसंस्कारलिङ्गदर्शने संप्रयोगसंस्कारौ चोभयत्र क्रमेण कारणम्। नच रूप्यधीर्न निरपेक्षानेककारणजन्या अभिज्ञत्वात् घटज्ञानवदितिचेन्न रूप्यधीरुक्तजन्या अभिज्ञाप्रमाणस्मृतिभ्यामन्यत्वात् प्रत्यभिज्ञावदिति सुवचत्वात्। नच रूप्यधीः प्रमा संस्कारसहितहेतुजन्यत्वात् अनुमानवदिति वाच्यम्, दोषाजन्यानुभवत्वस्योपाधित्वात्। ननु सत्त्वेनानुभूयमानस्य कथं मिथ्यात्वमिति चेन्मैवम्, शुक्तीदंतावत्तत्सत्ताया रजतसंसर्गाङ्गीकारात्। नच संसर्गस्यापि सत्त्वेन प्रतीतिर्विरुध्यते पारमार्थिकव्यावहारिकप्रातिभासिकत्रिविधसत्त्वाङ्गीकारेण दोषाभावात्। तथाकाशादिशुक्तिरजतादीनां व्यावहारिकप्रातिभासिकसत्त्वयोर्मिथ्यात्वे दोषाभावात्। मिथ्यैव रजतमभादिति मिथ्यात्वप्रत्यभिज्ञानात्। ननु यथावभासं पारमार्थिकमेवास्तु रजतमिति चेन्न, तथात्वे घटादिवद्दोषरहितैरपि तद्ग्रहणप्रसङ्गात्। मायारजतन्तु दोषजन्यबुद्ध्यभिव्यक्ते शुक्तीदमंशावच्छिन्ने चैतन्येऽध्यस्तमतो

निर्देशैर्न गृह्यते परबुद्धेरप्रत्यक्षत्वात् । अपि च तत्पारमार्थिकत्वेन 'इदं रजतम्' इ
प्रतिपन्नोपाधौ त्रैकाल्याभावबोधकबाधकप्रत्ययस्तस्य विरोधो दुष्परिहरः । मिथ्यात्वपक्षे
युज्यते प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वलक्षणत्वात् । अन्यथाख्याति
त्मख्यातिपक्षयोस्तु तद्रजतमहं रजतमिति वा परामर्शो भवेत् । ननु स्वप्ने निद्राख्यदोषस्य
दृष्टोद्बोधकसंस्कारस्य च सत्त्वेऽपि सम्प्रयोगाभावात्कथं भ्रमत्वम्, स्वप्ने जागरे चान्तः
करणवृत्तेः समानत्वेन सम्प्रयोगस्य तदुपलक्षणत्वात् । अधिष्ठानमपि सर्वत्र वृत्त्यवच्छि
चैतन्यमेव, शुक्तीदमंशादिस्तु चक्षुरादिसम्प्रयोगस्यैव ज्ञानकः, अन्यथा निर्विषयक
सम्प्रयोगस्यानुपपत्तेः अधिष्ठानचैतन्यावच्छेदकोपाधित्वात् । ततो यथा जागरे सम्प्रयोगजन्य
वृत्त्यभिव्यक्ते शुक्तीदमंशावच्छिन्ने चैतन्ये स्थिता विद्या रजताकारेण विवर्त्तते तथा स्वप्ने
ऽपि देहस्यान्तःकरणवृत्तौ निद्रादिदोषोपप्लुतायामभिव्यक्ते वृत्त्यवच्छिन्नचैतन्ये स्थिताऽविद्या
ऽदृष्टोद्बोधितनानाविषयसंस्कारसहिता प्रपञ्चाकारेण विवर्त्तताम् ।

असत्ख्यातिवादिनस्तु संवृतिबलाच्छून्य एव रजतादिरूपेण भातीति । नच निरधि
ष्ठानभ्रमासंभवः, केशोण्डूकगन्धर्वनगरादिभ्रमस्य त्वन्मतेऽपि तथात्वात् । नच निरव
धिकबाधासम्भवः ? 'न सर्प' इत्याप्तवाक्यस्य बाधकस्य तथात्वात् । तदेतदसत्—अङ्गु
ल्यापाङ्गावष्टम्भे सति वेष्टिनां नेत्ररश्मीनां केशोण्डूकाधिष्ठानत्वात् । आकाशस्य
गन्धर्वनगराधिष्ठानत्वात्, अन्यथा शून्यज्ञानस्य भ्रमत्वापत्त्या शून्यासिद्धिप्रसङ्गात्
ज्ञानज्ञेयभ्रमयोरन्योन्याधिष्ठानत्वे चाधिष्ठानस्य पूर्वभावित्वेनान्योन्याश्रयत्वात्
बीजाङ्कुरन्यायेन ज्ञानज्ञेयव्यक्तीनां परम्पराऽभ्युपगमेऽपि बीजाङ्कुरप्रवाहानुगतमृद
ज्ञानज्ञेयप्रवाहानुगतस्य कस्यचित्स्थायिनोऽभ्युपगन्तव्यत्वात् । 'न सर्प' इत्यादिवाक्
किन्तु रज्जुरित्येतत्पर्यन्तमतोऽसावधिक एव बाधः । न किमप्यत्र वृथा विभेषीत्यत्रा
देशस्याधिष्ठानत्वमस्त्येव । भ्रमबाधयोः साधकं साक्षिचैतन्यमेवाधिष्ठानमवधिश्च स
सुलभम् । नच तदपि बाध्यम्, तद्बाधस्य साधकाभावात् । नच शून्यस्याधिष्ठानत्व
अध्यस्यमानेष्वनुगत्यभावात् । नापि शून्यताया अवधित्वम्, सर्वबाधे तदप्रतीतेः, सर्वनि
राकरिष्णोस्तन्निराकरणमपि कथं प्रतिभासेत । ननु लोके 'इदं रजतम्, अयं स
इत्यादावधिष्ठानाध्यस्यमानयोर्गुणावयवकृतसादृश्यमपेक्ष्याध्यासो भवति, आत्मनः
निर्गुणत्वनिरवयवाभ्यान्न तत्सम्भवति । नच 'लोहितः स्फटिक' इत्यादौ सादृश्याभावेऽ
दृश्यतेऽध्यास इति वाच्यम्, तस्य सोपाधिकभ्रमत्वेन तदनपेक्षणात् । तथैव कर्तृत्वाद्य
अयाहङ्कारसन्निधानेनात्मनि कर्तृत्वाद्यध्याससम्भवेऽपि धर्मिलक्षणाहङ्काराद्यध्यासस्तु क
मिति चेन्न, 'केतकीगन्धसदृशः सर्पगन्ध' इत्यादौ गन्धस्य गुणावयवशून्यस्या
सौगन्ध्यधर्मेण यथा सादृश्यं तथैव पदार्थत्वधर्मेणात्मनः सादृश्यसम्भवात् । ननु चैतन्यै
करसे न कोऽपि धर्मोऽप्यात्मनीति चेन्न, निर्धर्मकेऽपि चैतन्यमानन्दादयश्च सन्ति धर्मा
इति धर्माभ्युपगमात् । किञ्च सादृश्यमन्तरेणैव 'पीतः शङ्ख' इति निरुपाधिकभ्रमदर्शने

निरुपाधिकभ्रमं प्रति न सादृश्यसामग्री ।

ननु तत्र रागपित्तोद्रेककाचकामलादिसामग्र्यन्तरमस्तीति चेन्न, अत्राप्यविद्याया: सामग्रीत्वाभ्युपगमात् । ननु ज्ञानाभावातिरिक्ता नास्त्येवाविद्येति चेत्तदसत्—'अहमज्ञो मामहं न जानामि' इति चिदानन्दाच्छादकत्वेन प्रत्यगात्मसत्त्वमात्रोपजीव्यस्य भावरूपस्यानादेरज्ञानस्यापलापासम्भवात् । नन्वज्ञानस्यानध्यस्तत्वे सत्यत्वापत्तिरध्यस्तत्वे तत्रापि सामग्र्यन्तरमपेक्षते । यद्यविद्यान्तरं सामग्री तर्हि तत्राप्येवं तत्राप्येवमित्यनवस्थेति चेन्न, अज्ञानस्य स्वपराध्यासे हेतुत्वाभ्युपगमेन विरोधासम्भवात् । यथा नैयायिकानामात्मा वेद्यं वेत्ति स्वमपि वेत्ति भेदश्च भेद्यं भिनत्ति स्वमपि भिनत्ति तथैवाज्ञानं स्वपरकल्पनानिमित्तमित्यनवद्यम् । नच प्रपञ्चप्रतीतौ सत्यामारोपः सति चारोपे प्रतीतिरित्यन्योन्याश्रयः, आरोपप्रतीतिपरम्पराया अनादित्वेन पूर्वपूर्वाध्यासोपदर्शितस्य प्रपञ्चस्य संस्काररूपेण स्थितस्योत्तरोत्तराध्यासहेतुत्वात् । नचारोप्यप्रमाहितसंस्कारस्याध्यासहेतुत्वमप्रयोजकत्वात् । आरोप्य संस्कारस्यैवोपपत्त्या प्रमाहितेत्यधिकस्य गौरवावहत्वात्, प्रतीतिमात्रेण तत्सिद्धौ प्रमावस्तुसत्त्वयोरनपेक्षणात् । 'इदं रजतम्' इत्यादौ सत्यानृतयोस्तादात्म्यमध्यस्तम् । नच सत्ययोरेव दूरस्थवनस्पत्योस्तादात्म्यमध्यस्यते, तत्रापि वृक्षद्वयेऽधिष्ठानेऽनृतस्यैवैकत्वस्याध्यासात् । नचान्योन्यस्मिन्नन्योन्यात्मकताध्यासेनान्योन्याधिष्ठानसाक्षात्कारेणान्योन्यबाधेन सर्वशून्यत्वमेवायातमिति वाच्यम्, अनात्मनः स्वरूपेणाध्यासेन बाधसम्भवेऽप्यात्मनः संसृष्टरूपेणैवाध्यासेन तददोषात् ।

ननु ज्ञानाभावरूपमेवाज्ञानमस्तु 'अहं सुखी' इतिवत् 'अहमज्ञ' इत्यपरोक्षानुभवात् । अभावरूपत्वे त्वनुपलब्धिप्रमाणगम्यत्वं भवेत् । प्रत्यक्षाभाववादेऽपि धर्मिप्रतियोगिनोरात्मज्ञानयोः प्रतीतौ 'मयि ज्ञानं नास्ति' इत्युक्तिर्विरुध्येत तयोरप्रतीतौ तत्प्रत्यक्षासम्भवः । ननु ज्ञानफलस्य व्यवहारस्याभावेन ज्ञानाभावानुमानमिति चेन्न, तदा धर्मिप्रतियोगिप्रतीत्यप्रतीतिभ्यामुक्तदोषात् । वेदान्तिनये तु—ज्ञानमात्राभावः साक्षिभास्यः ज्ञानविशेषाभावस्तु षष्ठप्रमाणगम्यः । अधिष्ठानरूप एवाभाव इति मते तु तच्चिदात्मनैव भाति । ननु भावरूपाज्ञानस्यापि ज्ञाननिवर्त्यत्वाङ्गीकारेण 'अहमज्ञ' इत्याश्रयविषयप्रतीतिगर्भिताज्ञानप्रत्यक्षमपि व्याहतमिति चेन्न,—आश्रयविषयाज्ञानानां त्रयाणामपि साक्षिभास्यत्वाभ्युपगमेन दोषाभावात् । तन्निवर्त्तकन्त्वन्तःकरणवृत्तिरूपं ज्ञानम्, तच्च नास्त्येवेति कुतो व्याहतिः । ननु 'घटमहं जानामि' इत्यत्राज्ञानव्यावर्त्तको घटो न सम्बन्धरहितेन साक्षिणा ज्ञेयः, बाह्यविषयस्य स्वसम्बन्धप्रमाणापत्तिसिद्धेः, नापि प्रमाणेन प्रमाणनिवर्त्यत्वादज्ञानस्येति चेन्न केवलस्य साक्षिभास्यत्वाभावेऽप्यज्ञातत्वविशिष्टस्याज्ञानद्वारा सम्बन्धवता साक्षिणा तत्प्रतीत्युपपत्तेः । न च केवलस्य साक्षिवेद्यत्वाभावेन विशिष्टस्य कथं तदुपपत्तिः केवलस्य राहोरप्रत्यक्षत्वेऽपि चन्द्रोपरक्तस्य प्रत्यक्षत्ववत्तदुपपत्तेः । सर्वंवस्तु ज्ञात-

तयाऽज्ञाततया वा साक्षिविषय एवेत्यङ्गीकारात् । विमतं प्रमाणज्ञानं स्वप्रागभावव्य
क्तस्व विषयावरणस्वनिवर्त्यं स्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वाद
प्रथमोत्पन्नप्रदीपप्रभावदित्याद्यनुमानेन, 'ज्ञानेनाभ्यपिहितम्' 'अज्ञानेनावृतं ज्ञानम्'

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।'

इत्यादिश्रुतिस्मृतिभिश्च भावरूपमज्ञानं सिद्ध्यति । ज्ञाननिवर्त्यत्वाच्चानिर्वच-
त्वमपि तस्य । तत्र जडस्याध्यस्तत्वे प्रतीतिमात्रशरीरत्वान्नावरणसम्भवः, प्रतीति
तदावरणं व्याहतमप्रतीतकाले तु स्वयमेव नास्त्यनस्तस्य मानगोचरत्वे कदाचिदप्यनिर्वृ
वेदान्तिनयेऽज्ञानविषययोः कार्यकारणभावसम्बन्धो नावरकाक्रियमाणत्वलक्षणः, प्रका
काशप्रतिबन्धश्चावरणस्य प्रयोजनं तदपि जडस्य न सम्भवति स्वतोऽप्रकाशत्वात्प्रमा
विषयत्वाच्च, चैतन्यावरणादेवतत्सिद्धौ पृथगावरणकल्पनावैयर्थ्याच्च । तथाचा
वावरणम् ।

ननु किमात्मन्यावरणं प्रकाशनाशः, किं वा प्रकाशस्य विषयप्राकट्याख्यकार्ये
प्रतिबन्ध उत तत्रैव सहकार्यन्तरप्रतीक्षा ? नाद्यः—प्रकाशस्य नित्यात्मचैतन्यरूपत्वा
नापि द्वितीयतृतीयौ—अन्तःकरणवृत्तिव्यक्तचित्प्रकाशमन्तरेण विषये पृथक् प्राक
नङ्गीकारादितिचेन्न,—कूटस्थं ब्रह्म नास्ति न भातीत्यनुभवसिद्धव्यवहारस्यैवावरणप्रयो
त्वात् । कैश्चित्तु—अज्ञानमित्यत्र नञोऽभावार्थत्वे ज्ञानाभावो विरोध्यर्थत्वे भ्रान्तिज्ञानं
अन्यार्थत्वे भ्रान्तिसंस्कार एतैरेव ब्रह्मतत्त्वावभासप्रतिबन्धैरुक्तव्यवहारसिद्धिरित्यु
इति तन्न,—सुषुप्तौ ब्रह्मतत्त्वावभासस्यानन्यथासिद्धत्वात् । नचाज्ञानस्य ब्रह्मसम्बन्धे
ङ्गत्वव्याहतिः सम्बन्धस्यानादेरज्ञानवत्कल्पितत्वाङ्गीकारेऽसङ्गत्वाभङ्गकत्वात् ।
विषयगतसादृश्यादिः कारणगतस्तिमिरादिर्द्रष्टृगतो रागादिरध्यासे कारणं भव
अत्र चात्मैव विषयकारणद्रष्टृरूपत्रितयस्थानीयोऽन्यस्य सर्वस्याध्यस्यमानत्वात्
नचात्मनि नित्यशुद्धे दोषाः सम्भवन्त्येवमात्मन्यधिष्ठानत्वमपि न सम्भवति निरंश
सामान्यविशेषाभ्यां ग्रहणाग्रहणानुपपत्तेः । नच निरंशोऽप्याकाशवन्न कार्त्स्न्येन
भासत इति वाच्यम्, तत्र स्वयं ज्योतिषो यावत्सत्त्वमवभासादिति चेन्न,शुद्धेऽप्यवि
द्यस्य दोषस्य श्रुतिसिद्धत्वात् 'एतं ब्रह्मलोकं न विदन्ति, अनृतेन हि प्रत्यूढाः' इ
श्रुतेः । ब्रह्माज्ञानाद् बन्धतो निवृत्तिः श्रूयमाणा प्रागनवबोधोऽस्तीति श्रुतार्थापत्त्या
विज्ञायते । नच प्रमाणगम्यत्वेनाज्ञानस्य तात्त्विकत्वमिति वाच्यम्, परंप्रति तदुपन्यासा
वस्तुतस्तु साक्षिचैतन्यसिद्धमेव तत्, 'अविद्यायामासित्वैवाविद्या निरूप्यते' इत्युक्ते
नचाज्ञानमाश्रयविषयभेदसापेक्षत्कथमेकस्मिन् स्थास्यति विमतमाश्रयविषयभेदनापे
अक्रियात्मकत्वात् घटादिवत्, विमतमेकपदार्थमेवावृणोत्याश्रयति चावरकत्वादप
कस्थतमोवदिति भेदानपेक्षितयैकस्मिन्नेव सम्बन्धद्वयसिद्धेः । नच ज्ञानवदेवाज्ञानमपि विषया
श्रयभेदमपेक्षते 'अहमिदं जानामि' इतिवत् 'अहमिदन्न जानामि' इति व्यवहारादि

वाच्यम्, द्वयापेक्षज्ञानपर्युदासाभिधाप्यज्ञानशब्दादेव तथा प्रतीतेः। अत एव मायादिशब्द व्यवहारे न तथा व्यवहारः, यथास्थितिः कर्मनिरपेक्षापि अगमनशब्देनाभिधीयमाना कस्य किं विषयमिति कर्म सापेक्षवद्भाति तद्वत्। तमोवदावरणत्वादेवाश्रयविषयैकत्वं न विरुद्ध्यते। नच प्रकाशस्वरूपस्य कथमज्ञानाश्रयत्वमिति वाच्यम्, अज्ञानबाधकसाक्षिचैतन्ये 'अहमज्ञ' इत्यज्ञानाश्रयत्वानुभवात्। नचात्मनो भासमानत्वादज्ञानाश्रयत्वं युक्तिविरुद्धं परैरपि जन्यज्ञानेनात्मनि भासमान एवाज्ञानाश्रयत्वाभ्युपगन्तव्यत्वात्। अन्यथा आत्माऽवभासक्षणेऽज्ञानाभावेन सर्वज्ञत्वप्रसङ्गः! नच प्रकाशत्वादात्मनोऽज्ञानविरोधित्वमन्तःकरणवृत्तिवदिति वाच्यम्, अज्ञानावभासकभाने व्यभिचारात्। नच तदसिद्धं परेषामपि स्वाभिमताज्ञानप्रतीत्यभावे तद्व्यवहारायोगात्। नच स्वयं प्रकाशत्वादज्ञानसंसर्गविरोधित्वमात्मन इति वाच्यम्, दृष्टान्ताभावात्। नच संवेदनं दृष्टान्तः तस्यैवात्मत्वात्। नचैवं ब्रह्मणः सदैकत्वहानिः? यथा बिम्बप्रतिबिम्बयोरैक्येऽपि प्रतिबिम्बे दर्पणादिगतमालिन्यारोपो न बिम्बस्यावदातताहानिस्तथैव जीवस्याविद्याश्रयत्वेऽपि न ब्रह्मणः सर्वज्ञत्वहानिरिति वक्तुं शक्यत्वात्। तदुक्तमाचार्यैः—

"नन्वविद्या स्वयं ज्योतिरात्मानं ढौकते कथम्।
सा कूटस्था द्वितीयञ्च सहस्रांशुं तमो यथा॥
प्रसिद्धत्वादविद्या या साऽपह्नोतुं न शक्यते।
आत्मनो नहि सा युक्ता विना नात्मा तया नहि॥"

तत्र संक्षेप शारीरकमते—शुद्धं ब्रह्म जगदुपादानम्, माया तु द्वारभूता। विवरणानुसारिणः—सर्वज्ञत्वादिविशिष्टं मायाशबलं ब्रह्मोपादानम्। केचित्तु—प्रपञ्चस्येश्वराश्रितमायापरिणामत्वमाहुः। तथान्तःकरणस्य जीवाश्रिताविद्यापरिणामत्वमाचक्षते। मायाऽविद्या भेदवादिनोऽपि जीवतादात्म्यप्रतीतेरन्तःकरणादीनां जीव एवोपादानमित्याहुः। अपरे तु—व्यावहारिकस्य सर्वस्य प्रपञ्चस्येश उपादानम्, प्रातिभासिकस्य जीव इति। स्वात्ममोहात्सेश्वरस्य सर्वस्यैव प्रपञ्चस्य जीव एव प्रकल्पक इत्यपि केचिद् ब्रह्मणः सत्ता चैतन्यानुस्यूतिवन्मायाया अपि जाड्यांशानुस्यूतिदर्शनात्। मायाऽप्युपादानमित्यपरे तत्र ब्रह्म विवर्त्तमानतयोपादानं माया च परिणममानतया। स्वाभिन्नकार्यजनकत्वस्योपादानलक्षणस्य सर्वत्राविशेष्यात्। सङ्क्षेपशारीरकमते तु—मृत्त्वमेतावदेव मायाजाड्यांशानुगतिः, कार्ये, अज्ञातं ब्रह्मैवोपादानमितिवाचस्पतिमिश्राः। अन्ये—कार्यकारणातीतस्य ब्रह्मणो नोपादानत्वमपि तु मायाया एव मुख्यन्तत्, मायाधिष्ठानत्वेन तु तत्र कारणत्वोपचारः।

अनादिविश्वप्रकृतिर्माया विक्षेपावरणान्विताऽविद्यावदेकदेशः। अन्ये—विशुद्धसत्त्वमयी मायाऽविशुद्धसत्त्वमयी चाविद्येति। अन्ये—विक्षेपशक्तिप्रधाना प्रकृतिर्माया

आवरणप्रधाना प्रकृतिरविद्येति प्राहुः। मायोपाधिरीश्वरोऽविद्योपाधिर्जीवः। तत्र कारणो-पाधिरीश्वरः कार्योपाधिर्जीवः। तथा च मायोपाधिरीश्वरोऽन्तःकरणोपाधिर्जीवः, तत्रा-चित्प्रतिबिम्बस्यैवेशत्वादिकम्। केचित्—अत्र बिम्बस्थानीयं ब्रह्म मुक्तोपसृप्यम्। अन्ये—घटाकाशमहाकाशवत्कूटस्थपरमात्मानौ जलाकाशाभ्राकाशवच्चित्प्रतिबिम्बभू-जीवेशौ। तत्रैव शुद्धलिताङ्कितपूर्णवर्णचित्रपटवद्ब्रह्मेशसूत्रविराजः। तत्र व्यष्टिभू-जीवाः समष्टिभूता ईशास्तत्र प्रतिबिम्बमिथ्यात्ववादिन आभासवादिनस्तत्सत्यत्ववादि-प्रतिबिम्बवादिनः।

अन्येऽवच्छिन्नः पारमार्थिको जीवस्तमावृत्य स्थितायां मायायां कल्पितेऽतःक-चिदाभासो व्यावहारिको जीवः, स्वप्नाभिमानी प्रातिभासिको जीवः। अपरे—अ-ज्ञाचित्प्रतिबिम्बस्य जीवत्वं बिम्बस्येश्वरत्वमाहुः। अन्येऽन्तःकरणावच्छिन्नं चैतन्यं जी-माहुः। मायावच्छिन्नं परमेश्वरं प्राहुः। अन्ये—कौन्तेयस्यराधेयत्ववत्स्वाविद्यया परस्ये जीवत्वम्। जीवब्रह्मविभागहेतुत्वमज्ञानस्य पुराणेऽपि प्रसिद्धम्—

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ?॥'

अविद्याया अनादित्वेऽनादिविभागहेतुत्वमपि सङ्गतमेव।

"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि" इति स्मृतेः। प्रकृतिर्नाम मा- 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः। मायाविद्ययोश्चाभेद एव।

यत्तु—आश्रयमव्यामोहयन्ती कर्त्तुरिच्छामनुसरन्ती माया तद्विपरीता त्वविद्ये- तन्न—तत्त्वावभासप्रतिबन्धविपर्ययावभासयोर्हेतुत्वलक्षणस्योभयत्राविशेष्यात्। न च मायाः सत्यत्वं 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति तत्त्वज्ञाननिवर्त्यत्वश्रवणात्। त्रिरूपजन- त्वाकारेणेच्छाधीनत्वाकारेण मायेति व्यवहारः, आवरणाकारेणास्वातन्त्र्याकारेणाविद्ये- व्यवहारः। क्वचित्तु विशुद्धसत्त्वप्रधानायां प्रकृतिलक्षणायां परमेशोपाधिभूतायां माया- विद्याशब्दप्रयोगोऽपि, अविशुद्धसत्त्वप्रधानमायायां प्रकृतावविद्याशब्दप्रयोगः; तथ- मूलाविद्यायां मायाऽविद्यादिशब्दप्रयोगोऽविरुद्ध एव।

ननु स्वप्रकाशस्याविद्याश्रयत्वेऽपि नाविद्याविषयत्वं सदाभासमानत्वात् भासमा- घटे 'घटं न जानामि' इति व्यवहारासम्भवाच्च। न च 'त्वदुक्तमर्थं न जानामि' इति भा- मानस्यैवार्थस्याज्ञानं प्रति व्यावर्त्तकतया विषयत्वं व्यवह्रियत इति वाच्यम्, तत्रा- ज्ञातस्यार्थगतविशेषाकारस्यैव विषयत्वात्। न चानवगतस्य कथं व्यावर्त्तकत्वेन प्रतीति- वाच्यम्, त्वयापि तद्गतेर्वक्तव्यत्वादिति चेन्न,—साक्षिप्रत्यक्षगम्यस्याज्ञानविषयत्वे वि- धाभावात्, प्रमाणस्याज्ञाननिवर्त्तकत्वात् तद्भास्यस्यैवाज्ञानविषयत्वं विरुद्ध्यते। सा- चैतन्यस्य तदनिवर्त्तकत्वेन तद्भास्याज्ञानविषयत्वेऽपि न क्षतिः अत एव सर्वप्रमाणैर्या- विरुद्धमप्यज्ञानं सिद्ध्यति।

"सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद्दिवाकरम् ॥"

विचारासहिष्णुत्वस्वाभाव्येनाविचारितरमणीयापि सा परमात्मानमाच्छादयति । तदुक्तमेव—

"अहो ! धाष्टर्यमविद्याया न कश्चिदतिवर्त्तते ।
प्रमाणं वस्त्वनादृत्य परमात्मेव तिष्ठति ॥"

युक्त्यैकशरणेनाप्यनुभवापलापो न युक्तः, अनुभवनिष्ठत्वाद्युक्तेः । अनुभूयते हि स्वप्रकाशस्याप्यात्मनो भोक्तुर्देहादिसङ्घातादव्यावृत्तत्वम्, अज्ञानतिरोहितत्वञ्च ।

तत्र संक्षेपशारीरकादिमते—साविद्या ब्रह्माश्रया ब्रह्मविषया तन्नाश एव मोक्षः । जीवन्मुक्तावविद्यालेशानुवृत्त्यभ्युपगमेन सांशत्वाद्ब्रह्मात्मावगमेन क्वचिदुपाधावंशेन निवर्त्तते । उपाध्यन्तरेण यथा पूर्वमंशान्तरेणानुवर्त्तते । तदुक्तम्—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥"

केचित्तु—जीवाश्रया ब्रह्मविषया विद्येति प्राहुः । अविद्या जीवेशादिभेदसिद्धिस्तत्सिद्धाविद्यासिद्धिरितिनान्योन्याश्रयः, अनादिपरम्पराभ्युपगमेन तददोषात् ।

'जीवाश्रया ब्रह्मपदाऽविद्या तत्त्वविन्मता ।'

इत्युक्तेः । तत्रापि केचिदविद्यैकत्ववादिनः, सन्ति । मिश्रास्तु—प्रतिजीवमविद्याभेदवादिनः, 'ब्रह्म नास्ति न भाति' इति व्यवहारो जीवाश्रितोऽतस्तत्कारणाज्ञानमपि तदाश्रितमेव । नच जीवस्याज्ञानाश्रयत्वे तस्यैव प्रपञ्चोपादानत्वमधिष्ठानत्वञ्च स्यान्न ब्रह्मण इति वाच्यम्, शुक्त्यादावज्ञानविषयत्वेनैवाधिष्ठानत्वादिदर्शनेनाज्ञानविषयत्वस्यैव तन्नियामकत्वात् । 'मायिनन्तु महेश्वरम्' इति मायित्वोक्तिरपि न मायाश्रयत्वेन किन्तु मायाविषयत्वेनैव धनाश्रयत्वाभावेऽपि धनिनो धनित्ववत्तदुपपत्तेः । अत्र मते जीवाश्रितमाया विषयीकृतं ब्रह्मैव जाड्याश्रय प्रपञ्चाकारेण विवर्त्तमानतयोपादानम्, माया तु सहकारिमात्रं न कार्यानुगतं द्वारकारणमिति नटवदज्ञातं ब्रह्मैवान्त्यं कार्यं तेन तेन रूपेण प्रतीयते । विकासकारस्त्वयम्-प्रलयेऽन्तःकरणादीनामविद्यायामवस्थानोक्त्या 'सर्वं हि विकारजातमविद्याशक्तिपरिणाम' इति भामतीवचनेन चाविद्यायाः परिणामितयोपादानत्वमपि मनुते । यद्यपि—शरावादिनिष्ठदुग्धादेर्घटादिनिष्ठदध्याकारेण परिणामादर्शनात्, जीवाश्रिताया अविद्याया ब्रह्मनिष्ठप्रपञ्चाकारेण परिणामासम्भवः, तथापि यत्राविद्या विषयतासम्बन्धेन वर्त्तते तत्रैव तत्परिणाम इत्यभ्युपगमेन प्रपञ्चस्य ब्रह्मनिष्ठत्वेन-कश्चिद्दोष इति जीवनिष्ठस्य शुक्त्यज्ञानस्य विषयतासम्बन्धेनैव शुक्तिनिष्ठरजताकारपरिणामदर्शनात्,तदेतदिह मङ्गलश्लोक विकासे द्रष्टव्यम् । अन्ये तु—अध्यासतदुपादानयोरेकाश्रयत्वनियममिच्छन्ति ततो व्यधिकरणत्वान्न जीवाश्रिताविद्या ब्रह्मनिष्ठप्रपञ्चाकारेण परिणमते ।

नच जीवाश्रितशुक्त्यवच्छिन्न चैतन्यविषयाविद्याशुक्त्यवच्छिन्नचैतन्यनिष्ठरजताकारेण परिणमत इति वाच्यम्, वृत्तिद्वारा विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदापत्त्या तत्र व्यधिकरणत्वाभावात् । अत एव प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्यनिष्ठाविद्या रजताकारेण परिणमत इति प्रक्रिया सङ्गच्छते । मायायाः प्रकृतित्वोक्तिस्त्वस्मिन् पक्षे सहकारित्वाभिप्रायेणैव 'शिखी ध्वस्तः, कुण्डली जातः' इत्यादौ सविशेषणे विधिप्रतिषेधयोर्विशेषण उपसङ्क्रमणदर्शनेनाज्ञातं ब्रह्मोपादानमित्यादावपि विशेषणोपसंक्रमणदृष्ट्या तदुपादानत्वोक्तिस्तदभिप्रायेणैव प्रपञ्चस्य तद्विकारत्वतदवस्थानत्वाद्युक्तिश्च । तत्र केषाञ्चिन्मते सूत्रात्मैक एव जीवः । परे तु स्वप्नवज्जीवाभासाः, अन्येऽन्तःकरणभेदेन जीवभेदं प्राहुः। अन्येऽविद्यांशानां भेदाज्जीवभेदं प्राहुः । परे तु–हृदयग्रन्थिसम्बन्धेनात्मन्यविद्यासंसर्ग इति हृदयग्रन्थिभेदाज्जीवभेदः । यथा भूतले घटात्यन्ताभावस्य वृत्तौ घटसंयोगाभावो नियामक इति, अनेकेषु प्रदेशेषु तद्वस्तु संसृज्य वर्तमानो घटात्यन्ताभावः, क्वचित्प्रदेशे घटसंयोगोत्पत्त्या तदभावनिवृत्तौ न संसृज्यते तथैवाज्ञानस्य चैतन्ये वृत्तौ हृदयग्रन्थिर्नियामक इति तदुपाधिना तत्प्रदेशे संसृज्य वर्तमानमज्ञानं क्वचिद्ब्रह्मदर्शनोत्पत्तौ हृदयग्रन्थिनिवृत्तौ न संसृज्यते ।

अपरे–जीवाश्रयं ब्रह्मविषयमज्ञानमन्तःकरणप्रतिबिम्बात्मकेषु जीवेषु व्यक्तिषु जातिवत्प्रत्येकपर्यवसायितया वर्तमानं जाततत्त्वसाक्षात्कारं कञ्चित्त्यजति नष्टां व्यक्तिमिव जातिरनुत्पन्नज्ञानं यथापूर्वमाश्रयतीति बन्धमोक्षव्यवस्थेत्याहुः । अन्ये–प्रतिजीवमविद्याभेदमाश्रित्य तद्विनाशक्रमाद्व्यवस्थामाहुः । तत्रैवानेकतन्त्वारब्धपटवद्विनगमनाविरहात्सर्वाविद्याकृतः प्रपञ्चः । तत्रैकस्याविद्यानाशे तत्साधारणप्रपञ्चनाशः, एकतन्तुनाशे पटनाशवत्तदानीमेवावशिष्टतन्त्वन्तरैः पटान्तरस्येव तदितरसाधारणप्रपञ्चान्तरस्योत्पादनमिति केचित् । अन्ये–प्रत्यविद्यं प्रपञ्चभेदं प्रातिभासिकप्रपञ्चवद्वदन्ति । रज्जुसर्पभ्रान्तिमतां प्रतिपुरुषं सर्पभेदेऽपि संवादित्ववदत्रापि तथा व्यवहारः । अन्ये प्रातिभासिकप्रपञ्चप्रकृतिर्जीवाश्रयाऽविद्या व्यावहारिकप्रपञ्चप्रकृतिरीशाश्रया मायेत्याहुः ।

ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं सत् स्वसंसृष्टं सर्वमवभासयतीति सर्वज्ञमुच्यते । जीवचैतन्यन्त्वविद्योपाधिकतया सर्वगतत्वेऽप्यनुपादानत्वेन विषयासङ्गत्यपि स्वभावादेवान्तःकरणे संसृज्यते । अश्वाद्यसंसर्ग्यपि गोत्वं यथा सास्नावद्व्यक्त्यैव संसृज्यते तद्वत् । तथा च चक्षुरादिद्वारा विषयाकाराकारितवृत्तिमदन्तःकरणमुपारुह्य जीवचैतन्यं विषयं प्रकाशयति, निरुपाधिकाग्न्यदाह्यस्यापि तृणादेः काष्ठादिसमारूढाग्निदाह्यत्ववत्केवलजीवचैतन्याप्रकाश्यस्यापि विषयस्यान्तःकरणवृत्त्युपारूढस्य तत्प्रकाश्यत्वं युक्तम् । यदा त्वन्तःकरणोपाधिक एव जीवस्तदा तु संसर्गाभावादेव विषयं न गोचरयति, वृत्तिद्वारा तत्संसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ विषयं भासयति । अविद्योपाधिकत्वपक्षेऽपि अविद्यावृतत्वात्स्वयमप्यनवभासमानतया विषयं न गोचरयति । वृत्त्युपरागादावरणतिरोधानेन तत्रैवाभिव्यक्तस्तमेव विषयं प्रकाशयति । तथा च चिदुपरागार्थत्वेन विषयचैतन्या-

भेदाभिव्यक्त्यर्थत्वेनावरणाभिभवार्थत्वेन वा वृत्तिनिर्गमसापेक्षवृत्तिसंसृष्टविषयमात्रभासकत्वादल्पज्ञत्वं जीवस्य ।

तत्र विषयसन्निहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे तस्यापि तद्द्वारकः परम्परासम्बन्धः सम्पद्यते स एव चिदुपरागः । अपरे तु —साक्षादपरोक्षचैतन्यसंसर्गेणैव सुखाद्यापरोक्षदर्शनात्तरङ्गतरुसंस्पर्शात्तरौ नदीसम्बन्धवद्वृत्तिसम्बन्धाद्विषये जीवस्यापि संयोगजसंयोगः सम्भवत्येव कारणाकारणसंयोगात्कार्याकार्यसंयोगवत् । कार्याकार्यसंयोगात्कारणाकारणसंयोगस्यापि युक्तिसाम्येन सम्भवात् । केचित्तु —अन्तःकरणोपाधिकस्य जीवचैतन्यस्य विषयावच्छिन्नचैतन्याभेदाभिव्यक्तिद्वारा विषयेणाध्यासिकसम्बन्धापादनमेव चिदुपरागं वदन्ति । अन्ये तु—विषयाकारवृत्तौ जीवाभिन्नविषयावच्छिन्नचैतन्य प्रतिबिम्बाभ्युपगमेन तेन जीवस्यैक्यं वदन्ति । नचैवं विषयःपरोदय आध्यासिकसम्बन्धस्यातन्त्रत्वापत्तिरिति वाच्यम्, विषयावच्छिन्नस्य विषयाधिष्ठानचैतन्यस्येव वृत्तौ प्रतिबिम्बनात्तदभेन तत्सम्बन्धसत्वात् । आवरणभङ्गपक्षेऽपि न ज्ञानेनाज्ञाननाशः, तथात्वे घटज्ञानेनैवाज्ञानमूलकप्रपञ्चनिवृत्तिप्रसङ्गात् । किन्तु खद्योतप्रकाशेनान्धकारस्यैकदेशनाशवच्चैतन्यमात्रावरकस्याज्ञानस्य ज्ञानेन विषयदेशस्थाज्ञानांशस्यैव नाशः कटवद्वेष्टनं भीतभटवदपसारणं वा । अपरे—चैतन्यमात्रावरकस्याप्यज्ञानस्य तत्तदाकारवृत्तिसंसृष्टावस्थविषयावच्छिन्नचैतन्यस्यानावरकत्वस्वाभाव्याभिभवमाहुः । अन्ये—वृत्तिसमसङ्ख्यमज्ञानं वृत्तिनाश्यमाहुः । तानि सर्वाण्यप्यज्ञानत्वान्मूलाज्ञानवदनादीनीति केचित् । निद्रावत्सादीनीत्यन्ये । अनादित्वपक्षे प्रागभावान्तराणामिवानाद्यज्ञानान्तराणां सत्त्वेऽपि ज्ञानेन स्वप्रागभावस्य स्वनिवर्त्याज्ञानस्य च निवृत्तौ विषयप्रकाशो न विरुध्यते । केचित्त्वावरणमेव पर्यायेणोपयन्ति । तत्त्वज्ञानेन मूलाज्ञाननाशेन तदवस्थाभूतानि नश्यन्ति । अपरे सविषयत्वस्वाभाव्यात्कदाचिदप्यनावरकत्वमज्ञानस्य नोपपद्यत इत्यपरितोषात्सर्वे सर्वदाऽऽवृणोत्येवेति । तथा च ज्ञानेनैकस्याज्ञानस्य विच्छेदमितरेषां पराभवमिच्छन्ति, कस्यच्छिरसि पतन्नशनिर्यथेतरानपसारयति तद्वत्पराभवश्चावरणशक्तिप्रतिबन्धः । धारावाहिकज्ञानस्थले तु यद्यपि प्रथमज्ञानेनैवाज्ञाननिवर्तनतिरस्कारौ सम्पन्नौ तथापि तमस्तिरस्कृत्य स्थिता दीपधारेव वृत्तिधाराऽऽवरणप्रागभावरक्षणार्थैवेति । केचित्तु—पर्यायेणैवावरणं बोधेन चार्थस्य स्वकालावरणक्षतिरेव । तथा च द्वितीयादिवृत्तीनामपि स्वस्वकालावरणनाशकत्वेन साफल्यम्, कारीरीफले दृष्टादावासन्नकालस्येवाज्ञानविषये घटादौ तत्कालस्योपलक्षणतया विषयकोटावननुप्रवेशेन सूक्ष्मतत्कालाभेदाद्विषयैर्धारावाहिकद्वितीयादिज्ञानैरज्ञान निवृत्तावपि नानुपपत्तिः । केचित्तु—प्रथमज्ञानेन घटाद्यज्ञाननाशोऽन्यैस्तु कालादिविशिष्टघटाद्यज्ञाननाश एकैव वृत्तिः स्थिरा । अपरे —उपास्तिवदप्रमाणभूता अन्या वृत्तयस्तत्रापि विक्षेपोपादानं कार्यकल्प्यविषयाश्रितमज्ञानमपरं पौरुषज्ञानं परोक्षज्ञानेन पौरुषाज्ञानबाधोऽपरोक्षाद्विषयाज्ञानस्यापि बाधः ।

केचित्तु—पौरुषाज्ञानमेव शक्तिद्वयाश्रयमाहुस्ततः परोक्षज्ञानादावरणांशः प्राहुः । परेतु—विषयस्थं मूलाज्ञानांशरूपमाहुः, अंशांशिनोरभेदान्मूलाज्ञानः साक्षिवेद्यत्वेन तदंशेऽपि तथा व्यवहारः । नचाविद्याहङ्कारसुखदुःखादितद्धर्मप्रत्यक्ष नाज्ञाननिवर्त्तकत्वमिति वाच्यम्, अविद्यादिप्रत्यक्षस्य साक्षिरूपत्वेन वृत्तिरूपापरोक्षज्ञानः वरणनिवर्त्तकत्वानपायात् ।

नन्वनाद्यविद्याया अनादिब्रह्मवदेवानन्तत्वमपि भवेदिति चेन्न,-अनादित्वस्य नन्तत्वाप्रयोजकत्वात् । निवर्त्तकसामग्रीसत्त्वाभ्यां निवृत्त्यनिवृत्ती, निवर्त्तकसामग्रीसत्त्वा प्रागभावस्यानादेरपि निवृत्तिः । नच भावरूपस्यानादेरनिवृत्तिरिति वाच्यम्, भावरूप पूर्वपूर्ववासनानां सौगतैस्तत्त्वज्ञाननाशकत्वाभ्युपगमात् । भावरूपस्यैव परमाणुगः श्यामत्वस्यानादेः पाकेन तार्किकैर्नाश्यत्वाभ्युपगमात् । बीजाङ्कुरपरम्पराया अन भूताया भावरूपाया एव यथाग्निदाहेन निवृत्तिस्तथैव भावरूपाया अविद्यायाः तत्फलपरम्परायाश्च तत्त्वज्ञानेन बाधः । अनादित्वेनानुत्पत्तिरेव बोध्यते नाविनाशोऽ भगवानपि जातस्य हि ध्रुवो मृत्युमेवाह न जातस्यैव मृत्युमित्यपि । ब्रह्मातिरिक्तेषु अन त्वमपि कल्पितमेव । तत्र यथा स्वप्ने केषाञ्चित्पदार्थानां तात्कालिकत्वेन केषां चि कालिकत्वेन कल्पनं तद्वत् ।

ननु 'घटः सन्' इत्यादिप्रत्यक्षविरोधाच्छ्रुतियुक्तिभिरद्वैतं न प्रत्याययितुं शक्यमि चेन्न,-अधिष्ठानत्वेन घटाद्यनुगतसन्मात्रस्यैव तद्विषयत्वात् । नच तथा सति सत्सदि प्रत्यक्षं स्यान्न घटः सन्निती‍न्द्रियान्वयव्यतिरेकानुविधायीति वाच्यम्, भ्रमेष्विदमंश वाधिष्ठानांशस्य ग्रहण एवेन्द्रियान्वयव्यतिरेकयोरुपक्षीणत्वाद्रजतांशस्येव घटांश सर्वत्र भ्रान्त्या प्रतिभासनात् । नच रजतांशबाधवदत्र बाधो नानुभूयत इति भ्रान्त्या भानाभ्युपगम इति वाच्यम्, देशकालव्यवहितवस्तुवत् घटादिवस्तुनः प्रत्य योग्यत्वेन तथाभ्युपगमात् । तथाहि--चक्षुरादिव्यापारानन्तरं सर्वतो व्यावृत्तत्वेनैव घट प्रतीयते, तदा तत्र संशयविपर्ययादर्शनात् । यत्र स्थाणवादौ पुरुषत्वादि संशयस्त तद्व्यतिरिक्तेभ्योऽसन्दिग्धोऽविपर्यस्तो भेदः प्रकाशत एव प्रतियोगिना सहोपलम्भनि वतो भेदस्य न प्रत्यक्षेण ग्रहणं सम्भवति, देशकालव्यवधानेनासन्निकृष्टाना प्रतियोगिनां सत्त्वात् । नच तत्तांशे प्रत्यभिज्ञानमिव संस्कारापेक्षणात्प्रतियोग्यंशे भेदः स्मृतिरूपमस्त्विति वाच्यम्, भेदगत प्रतियोगिवैशिष्ट्यांशे तदभावात् । नच कनका भेदप्रतियोगी वस्तुत्वादिति भेदप्रतियोगी वैशिष्ट्यगोचरानुमित्या तत्संस्कारसम्भवः, भेद विनाऽनुमित्यभावेनात्माश्रयापत्तेः । पक्षसाध्यहेतुपक्षताद्यभेदभ्रमे सति सिद्धसाधनादि नुमानाप्रवृत्त्या तदभेदज्ञानविघटनीयस्य तद्भेदज्ञानस्यापेक्षितत्वात् । नच भेदांश इव प्र योगिवैशिष्ट्यांशेऽपि प्रत्यक्षमेवेति वाच्यम्, प्रतियोगिनोऽप्रत्यक्षत्वे तद्वैशिष्ट्य प्रत्य

योगात् । सम्बन्धिद्वयप्रत्यक्षं विना सम्बन्धप्रत्यक्षायोगात् । तस्मात्प्रत्यक्षयोग्यस्य प्रतियोगिनो भ्रान्तिरूप एव प्रतिभासस्तदेकवित्तिवेद्यत्वनियतस्य भेदस्य भेदैकवित्तिवेद्यत्वनियतस्य घटादेश्च अनैकविषयत्वात्प्रत्यक्षं निर्विशेषसन्मात्रग्राह्यद्वैतसिद्ध्यनुकूलम् । अन्ये घटादेरैन्द्रियकत्वेऽपि 'सन् घटः' इत्यादिरधिष्ठानसत्तानुवेध इति न विरोधः । नचैवं 'नीलो घट' इत्यादावपि तथात्वापत्तिः, सतो जगदुपादानत्वश्रवणात्तदनुवेधेनैवोपपत्तौ घटादौ सत्ताकल्पने गौरवात् सतो रूपादिहीनत्वान्नैल्यादिकं घटादावेव कल्पनीयमितिवैषम्यात् । अन्ये तु—जडेष्वावरणासम्भवात्पराग्विषयस्य प्रत्यक्षादेस्तत्त्वावेदकत्वलक्षणप्रामाण्याभावात्तद्विरोधेनाद्वैतविरोधस्तदुक्तं संक्षेपशारीरके—

'अज्ञातमर्थमवबोधयदेवमानं
तच्च प्रकाशकरणक्षममित्यभिज्ञाः ।
न प्रत्यगात्मविषयादपरस्य तच्च
मानस्य सम्भवति कस्यचिदत्र युक्त्या ॥

"अज्ञातमर्थमवबोधयितुं न शक्त
मेवं प्रमाणमखिलं जडवस्तुनिष्ठम् ।
किन्त्वप्रबुद्धपुरुषं व्यवहारकाले
संसृत्य सङ्गमयति व्यवहारमात्रम् ॥"

श्रुतिरपि—'आत्मा वा अरे द्रष्टव्य' इत्यात्मन एव प्रमेयत्वन्नियच्छति । नात्र दर्शनं विधीयते प्रमाणपरतन्त्रस्य तस्य विध्यगोचरत्वात्, किन्त्वज्ञातत्वादात्मैव प्रमेय इत्येवश्रुत्यर्थः । अपरे पुनः—सत्ताजातिरूपं देशकालसम्बन्धरूपं घटादिस्वरूपमेव वा सत्त्वमुपेत्य घटादिसत्त्वग्राहिणः प्रत्यक्षादेः प्रामाण्येऽपि न तन्मिथ्यात्वबोधकमानविरोधः, मिथ्यात्ववादिभिरपि घटादेः स्वरूपं देशकालसम्बन्धो वा जात्यादिकं वा न प्रत्याख्यायते, किन्तु तेषामबाध्यत्वलक्षणं सत्यत्वमेव प्रत्याख्यायते । नचाबाध्यत्वमेव सत्त्वमत्र प्रत्यक्षग्राह्यमस्त्विति वाच्यम्, प्रत्यक्षस्य वर्त्तमानमात्रग्राहित्वेन कालत्रयाबाध्यत्वस्य तद्ग्राह्यत्वासम्भवात् । अन्ये पुना 'राजराजो मन्मथ मन्मथ' इत्यादिवत्सत्यस्य सत्यमित्यादावपि सत्यत्वोत्कर्षापकर्षप्रतीतेर्यावद्ब्रह्मज्ञानमबाध्यत्वं घटादिप्रपञ्चस्य सत्यत्वं सर्वदैवाबाध्यत्वं ब्रह्मणः सत्यत्वम् । तथा च सत्त्वभेदेनाविरोधः । केचित्तु—प्रपञ्चस्य मिथ्यात्वसत्यत्वबोधकयोः श्रुतिप्रत्यक्षयोर्विरोधेऽपि शङ्कितदोषत्वात्प्रथमप्रवृत्तादपि प्रत्यक्षान्निर्दोषादपच्छेदन्यायेन परत्वाच्च श्रुतिरेव बलीयसीति प्रत्यक्षस्य श्रुतिबाध्यत्वम् । नचोपजीव्यविरोधः ? आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्य तत्सत्यत्वांशोपमर्द्दने तदयोगात् । ननु प्रत्यक्षादागमस्य बलीयस्त्वे 'यजमानः प्रस्तरः' इत्यत्र प्रत्यक्षविरोधाय यजमानशब्दस्य प्रस्तरे गौणीवृत्तिर्नाङ्गीकरणीया स्यात् । 'सोमेन यजेत' इत्यत्र—

वैयधिकरण्येनान्वये वाक्यभेदापत्त्या सामानाधिकरण्येनान्वयो विवक्षितस्तत्र प्रत्यक्षविरोधाय मत्वर्थलक्षणा च न स्यात्प्रत्यक्षमनादृत्योभयत्रापि बलीयसाऽऽगमेन प्र यजमानाभेदस्य यागे सोमाभेदस्य च सिद्धिसम्भवादिति चेदत्रोच्यते—तत्परा श्रुतिमा न्तराद्बलवती न श्रुतिमात्रं मन्त्रार्थवादाना तु स्तुतिद्वारभूतेऽर्थे न तात्पर्यम्, तथा चा त्परेभ्यः प्रत्यक्षस्यैव प्राबल्यमिति तदविरोधाय वृत्त्यन्तरकल्पनं न विरुद्धम्। 'सोमेन यजे इत्यत्र विशिष्टविधिगोचरे वाक्ये सोमद्रव्याभिन्नयागरूपं विशिष्टं विधेयमित्युपगमे त विधेयस्य 'दध्ना जुहोती' त्यादौ विधेयस्य दध्यादेरिव लोकसिद्धत्वाभावेन विधिपराद्वाक्य देव रेवत्याधारवारवन्तीयविशेषणस्येव विना तात्पर्यसिद्धिरेष्टव्या। न ह्यतत्परादाग द्यागसोमभेदग्राहिप्रत्यक्षविरुद्धार्थः सिद्ध्यतीति तदविरोधाय मत्वर्थलक्षणाश्रयणं त चाद्वैततात्पर्यवत्या श्रुत्या प्रत्यक्षबाधः। केचित्तु—'कृष्णल श्रपयेत्' इति विधेः श्रपण कृष्णलार्थत्वप्रतिपादने तात्पर्येऽपि रूपरसपरावृत्तिलक्षणस्य श्रपणस्य प्रत्यक्षविरुद्धार्थत्वा ष्णीकरणमात्रे लक्षणाश्रयणात्। 'तत्त्वमसि'वाक्यस्य जीवब्रह्माभेदप्रतिपादने तात्पर्ये विरोधपरिहाराय निष्कृष्टचैतन्ये लक्षणाङ्गीकाराच्च न प्रत्यक्षस्य सर्वथा बाधः, निर्दोषत्वात त्वाच्च यद्यपि श्रुतिमात्रस्यप्रत्यक्षात्प्राबल्यं तथापि स्वोचितविषयोपहारेण प्रत्यक्षम सम्भावनीयम्। ततश्चाद्वैतश्रुतिविरोधेन तत्त्वावेदनात्प्रच्यावितमर्थक्रियाकारिव्यावहारिकवि यसमर्पणेन प्रत्यक्षमप्युपपादनीयम्। यत्र प्रत्यक्षस्य सर्वथा निर्विषयत्वापत्तिर्भवति त श्रुतिरेवान्यथा नीयते। केचित्तु—'कृष्णलं श्रपयेत्' इत्यादौ अनुष्ठानाशक्त्या लक्षण श्रयणं न प्रत्यक्षानुरोधेन सोमयागाभेदानुष्ठानाशक्त्यैव च 'सोमेन यजेत' इत्यत्र लक्षणा। तस्माच्छ्रुतिबलीयस्त्वस्य न क्वापि बाधः। यथा प्रजापतिर्वरुणाश्वमनयदित्युपक्रम नुरोधेन 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेत्' इति वाक्यस न्यथानयनं तथैवोपक्रमाधिकरणन्यायेनासञ्जातविरोधित्वात्प्रत्यक्षमेवागमात्कुतो न बल इति चेच्छृणु—यत्रैकवाक्यता प्रतीयेत तत्रैकस्मिन्नेवार्थे पर्यवसानेन भाव्यमन्यथा वाक्य भेदः प्रसज्येत। तत्र प्रथममसञ्जातप्रतिपक्षेण 'प्रजापतिर्वरुणायाश्वमनयत्' इत्युपक्रमे दातुर्वारुणचतुष्कपालेष्टिः प्रतीयते 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपाल निर्वपेत्' इत्युपसंहारवाक्येन यद्यपि प्रतिग्रहीतुरिष्टिर्भाति तथापि सञ्जातप्रतिपक्षत्वा द्वाक्यगतं पदजातं यथाश्रुतार्थाप्रतिपादनेन तन्निर्वाहाय णिजर्थमन्तर्भाव्य तदानुगुण्ये 'आत्मानं लभत' इत्युपक्रमस्य प्राबल्यम्। यत्र परस्परमेकवाक्यता न प्रतीयते तत्र विरु र्थकमपि वाक्यं यथाश्रुतमेवार्थं बोधयत्येव। यथा षोडशिग्रहणवाक्यमविगणय्य तदग्रह वाक्यस्य स्वार्थबोधकत्वं तत्र गत्यन्तराभावाद्विकल्पाश्रयणम्, प्रकृते चाद्वैतागमे प्रत्यक्षेणैकवाक्यत्वाभावात्पूर्ववृत्तमपि तदविगणय्य स्वार्थबोधकत्वमप्रतिहतमेवात एव 'पूर्वंपरमजातत्वादबाधित्वैव जायत' इत्यपच्छेदन्यायस्यैव प्रवृत्तिः। यथा शुक्तिरूप्यप्रत्य ज्येष्ठमपि नेदं रजतमित्याप्तवाक्येन बाध्यते तद्वत्। तदुक्तम्

"पूर्वं परमजातत्वादबाधित्वैव जायते ।

परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः ॥

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।

अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥"

न च कर्मोपासनापरश्रुतिविरोधेनाद्वैतश्रुतेर्न स्वार्थबोधकत्वमिति वाच्यम्, कर्मोपासनापरत्वेऽपि श्रुतेस्तद्भेदसत्यत्वप्रतिपादने तात्पर्याभावात्। 'तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसि' इति न्यायेन तत्पराद्वैतश्रुत्याऽतत्परश्रुतिबाध एव। किञ्च 'यत्र हि द्वैतमिव भवती तीवशब्दप्रयोगाद् द्वैतस्य बाध्यत्वलक्षणं शैथिल्यं प्रतीयते। एकमेवाद्वितीयम्' इति एवकारयोगेनैकत्वस्याबाध्यत्वलक्षणं दार्ढ्यं प्रतीयते। नच विजातीयभेदनिराकरणमात्रेणैकत्वप्रतिपादनं चरितार्थमितिवाच्यम्, नात्र 'काचन भिदाऽस्ति,'नेह नानास्ति किञ्चन्' इत्यादिश्रुतिषु 'काचन, किञ्चन शब्दप्रयोगेण सर्वविधभेदस्य निराकरणात्। नच 'नेह-नानाऽस्ति' इतिस्वरूपनिषेधादुपजीव्यविरोधः, वृषमानयेतिवाक्यस्य श्रवणदोषाद्वृषमानयेतिश्रवणेऽपि स्वार्थबोधकत्वदर्शनेन भ्रमप्रमासाधारणेन वर्णपदादिप्रत्यक्षेणापि कार्यनिर्वाहसम्भवात्। अथवा यावद्ब्रह्मज्ञानमनुवर्त्तमानस्यार्थक्रियासमर्थस्यासद्विलक्षणप्रपञ्चस्वरूपस्याङ्गीकारेण तदविरोधः। नच स्वरूपेण निषेधेऽपि कथं प्रपञ्चस्वरूपलाभः, निषेधस्य प्रतियोग्यप्रतिक्षेपकत्वे व्याघातादिति वाच्यम्, 'शुक्ताविदं रजतं नेदं रजतम्' इति प्रतीतिद्वयानुरोधेनाधिष्ठानगताध्यस्ताभावस्य बाधपर्यन्तानुवृत्तिकासद्विलक्षणप्रतियोगिस्वरूपसहिष्णुत्वाभ्युपगमात्। न च स्वरूपेण निषेधेऽपि प्रपञ्चस्य शशशृङ्गवदसत्वमेवेति वाच्यम्, ब्रह्मज्ञाननिवर्त्त्यस्वरूपाङ्गीकारेण वैषम्यात्। **अपरे तु**—नेह नानेतिपारमार्थिकसत्त्वमेव प्रपञ्चस्य निषिध्यते न व्यावहारिकसत्त्वम्, यतो हि समानसत्ताकयोरेव भावाभावयोर्विरोधो न तु विषमसत्ताकयोः प्रपञ्चे पारमार्थिकसत्यत्वाभावेन व्यधिकरणावच्छिन्नप्रतियोगिताकाभावाभ्युपगमेनेह पारमार्थिकत्वेन प्रपञ्चो नास्तीति निषेधे बाधाभावात्। **अपरे**—ब्रह्मरूपाधिष्ठानगतपारमार्थिकसत्तानुवेधेन घटादौ शुक्तिरजतादौ च सत्त्वाभिमानोपपत्त्या नोपजीव्यविरोध इति ब्रुवते। नच प्रपञ्चसृष्ट्यादिवर्णनं किमालम्बनमिति वाच्यम्, 'फलवत्सन्निधावफलं तदङ्गम्' इतिन्यायेनाफलस्य सृष्टिवर्णनस्य फलवद्ब्रह्मप्रतिपादनाङ्गत्वात्। **दृष्टिसृष्टिवादिनस्तु**—ज्ञानस्वरूपमेव जगदाहुः। ननु दृष्टिसृष्टिवादे कथं मिथ्याभूतस्यार्थक्रियाकारित्वमिति चेन्न,—स्वसमानसत्ताकार्थक्रियाकारित्वे विरोधाभावात्। अथवा स्वप्नोत्थभयकम्पादेर्जागरेऽप्यनुवर्त्तनदर्शनान्मिथ्याभूतार्थानामर्थक्रियाकारित्वेन न विरोधः।

"एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मा मृतम् ॥"

इति स्मरणात् । नच मिथ्यात्वस्य सत्यत्वे ब्रह्माद्वैतक्षतिस्तस्यापि मिथ्यात्वे प्रपञ्चसत्यत्वमेव मिथ्याभूतमिथ्यात्वस्य प्रपञ्चसत्यत्वाप्रतिक्षेपकत्वादिति वाच्यम्, स्वधर्म्यनन्यूनसत्ताकस्य मिथ्यात्वस्य सत्यत्वप्रतिक्षेपकत्वे बाधाभावात्तत्र पारमार्थिकत्वस्यातन्त्रत्वाद्घटत्वादिप्रतिक्षेपके घटत्वादौ पारमार्थिकत्वासम्प्रतिपत्तेः । ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकमिति न निष्प्रपञ्चत्वप्रतिक्षेपकम् । अथवा स्वधर्मिसाक्षात्कारानिवर्त्यधर्मः स्वविरुद्धबाधक इत्युपगमेन यथा शुक्तिसाक्षात्कारानिवर्त्यशुक्तितादात्म्यमशुक्तित्वस्य विरोधि तच्च शुक्तिसाक्षात्कारनिवर्त्यं रजततादात्म्यमरजतत्वाविरोधि, एवमेव प्रपञ्चमिथ्यात्वं कल्पितधर्मि प्रपञ्चसाक्षात्कारानिवर्त्यमिति प्रपञ्चसत्यत्वप्रतिक्षेपकं ब्रह्मणः सप्रपञ्चत्वं ब्रह्मसाक्षात्कारनिवर्त्यमिति न तन्निष्प्रपञ्चत्वप्रतिक्षेपकम् । नन्वेवं कर्मणां निरवकाशत्वापत्तिरितिचेन्न,–'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इतिश्रुत्या संयोगपृथक्त्वन्यायेन विविदिषायामुपयोगप्रतिपादनात् । केचित्तु—यद्यपि प्रत्ययार्थप्राधान्ये न विविदिषायां कर्मणामन्वयः प्राप्तस्तथापि इच्छाविषयतया शब्दबोध्य एव शब्दसाधनतान्वय इति बलवतान्यायेन 'अश्वेन जिगमिषति, असिना जिघांसति' इत्यादाविष्यमाणगमनहननादौ अश्वास्योरन्वयवदिष्यमाणवेदन एव यज्ञाद्यन्वय इति वदन्ति ।

नन्वेवमद्वैतिनामपि नानामतभेदाः सुन्दोपसुन्दन्यायेन कथन्न परस्परव्यापादका इति चेन्न—तत्त्वबोध एव सर्वेषां तात्पर्येण प्रक्रियाभेदानादरात् । तदुक्तम्—

"यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियासाध्वीत्यादि

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ इत्यादिकंच

अथ महाविदुषां भामतीकृतां श्रीमद्वाचस्पतिमिश्राणां सम्बन्धे यथाश्रुतं किञ्चिदुपनिबद्ध्यते—एते किल षड्दर्शनकृतो महाभागा महर्षिकल्पाः परमविद्वांसः श्रीमदाचार्यवाचस्पतिमिश्राः पवित्रतमेन स्वजनुषा "मिथिला" जनपदमलङ्कृतवन्तः तैर्विरचितस्वो पज्ञे न्यायसूचीनिबन्धे—

"न्यायसूची निबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इति स्वकण्ठरवेणोक्तत्वात् ८९८ तमः श्रीवैक्रमाब्द एतद्ग्रन्थनिर्माणकाल:

स च ८४१ तमः ईसवीयवत्सर इति निश्चितम्। तथाच ईसवीयवत्सरस्य नवमीशताब्दी एतस्य महानुभावस्य स्थितिकाल इति निश्चीयते। प्रकृतग्रन्थे भामत्यामन्ते च—

"नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्त्तुं नच पारयन्ति।
तस्मिन् महीपे महनीयकीर्त्तौ
श्रीमन्नृगेऽकारि मया निबन्धः॥

श्रीमन्महाराजनृगविषये च शार्ङ्गधरपद्धतौ विशिष्टराजवर्णनप्रसङ्गे नृगनृपति-पाषाणयज्ञयूपप्रशस्तिनाम्ना पद्यद्वयं समुद्धृतम्। सच शार्ङ्गधरपण्डितः वीरहम्मीरराज-सभापण्डितस्य श्रीदामोदरस्यात्मजः। वीरहम्मीरराजस्य १२३५ वैक्रमेऽब्दे राज्यसिंहा-सनाधिरोहणम्, १२६५ वैक्रमेऽब्दे च निधनं सम्मन्वते ऐतिहासिकाः। तथाचोपर्युक्त-समये श्रीमद्वाचस्पतिमिश्राणां स्थितिः सुनिश्चिता। अस्य महतो निबन्धस्य भामतीनामधे-यत्वमपि सकारणमेव। तथाहि—किम्वदन्ती शास्त्राभ्यासरसिका आचार्यश्रीमद्वाचस्पति-मिश्राः स्वरसतः शास्त्राध्ययनाध्यापनव्यापृतचित्ताः ब्रह्मानन्दपरायणाः सकलं गृहकुटुम्बं स्वधर्मपत्नीमपि विसस्मरुः। प्रोषितभर्त्तृकाव्रतं पालयन्ती समापन्नवार्धकभामत्यभिधाना तत्पत्नी वेदवेदाङ्गानि निखिलदर्शनादीनि चाधीत्य प्रतिनिवृत्तेभ्यो विद्वद्भ्यः स्वपतेः सुयशः श्रावं श्रावं तद्दर्शनसमुत्कण्ठया नक्तं महानिबन्धमारचयतां श्रीमदाचार्यवाचस्पतिमिश्राणां पुरतः आसन्नलोपां दीपशिखामाकलय्य वर्त्तिकावर्धनेन तद्ध्यानमात्माभिमुखं चक्रे। कुतूहलितया आचार्येण पृष्टा प्रत्यवोचत्—भगवन्! अहं श्रीमतां धर्मपत्नी मदीय नामधेयमेव सुचिरं लोके प्रतिष्ठां प्राप्नुयादिति। भामतीनाम्ना स एव निबन्धोऽद्यापि प्रसिद्धः। एतैर्महानुभावैः षडपि दर्शनशास्त्राणि उट्टीकितानि। एतच्च भामत्यामेव ग्रन्थसमाप्तौ उपान्त्येन श्लोकेन प्रतीयते—

'यन्न्यायकणिका-तत्त्वसमीक्षा-तत्त्वविन्दुभिः।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः॥"

( १ ) विधिविवेकस्य टीका--न्यायकणिका
( २ ) ब्रह्मतत्त्वसमीक्षा
( ३ ) तत्त्वविन्दुः
( ४ ) न्यायसूची निबन्धः
( ५ ) न्यायवार्त्तिकतात्पर्य टीका
( ६ ) सांख्यतत्त्वकौमुदी
( ७ ) पातञ्जलयोगदर्शनव्यासभाष्यस्य टीका -तत्त्व वैशारदी
( ८ ) शारीरकभाष्य-टीका--भामती

अन्येऽपि वाचस्पतिमिश्रनामानः। केचित्तु–विवादचिन्तामणि–तीर्थचिन्ताम धर्म--शास्त्रनिबद्धारः। केचिच्च-सिद्धान्तशिरोमण्यादिज्यौतिषनिबन्धव्याख्यातृल दासस्य पितरः श्री वाचस्पतिमिश्रा इति तद्ग्रन्थसमालोचनात्स्पष्टम्।

अस्याश्च सुप्रसिद्धाभिधानाया भगवत्या भामत्याः सर्वतन्त्रस्वतन्त्रमैथिलकुल धर्मदत्तप्रसिद्ध (बचाझा) शर्ममहानुभावानां दिगन्तविश्रान्तकीर्तीनां वृद्धावस्थां गतानां शादतिवात्सल्येनाधिगतन्यायवेदान्ताद्यखिलास्तिकदर्शनैः साम्प्रतं काशीविश्वविद्याल दर्शनविभागाध्यक्षैः "लक्ष्मीनाथझा" महोदयैः प्राञ्जलभाषया व्युत्पत्तिवादस्य विरलि म्भीरार्थप्रकाशनकुशलविद्वद्वरलब्धप्रतिष्ठप्रकाशाभिधानटीकैः दुरवबोधस्थलाभिप्रायं ममवगमयन्त्यौ तत्तत्स्थलेषु तेषां तेषां शास्त्राणां दुरूहवचनानां भावं यथावदाविष्कृ विनेयानां हृदयस्थलमाविशन्त्यौ प्रकाशविकासनाम्न्यौ टीके रचिते। बोद्धॄणां शृणाञ्च मोदावहे स्यातामितिशम्।



# विषय सूची



# ब्रह्मसूत्रशाङ्करभाष्यम् ।

## भामती–प्रकाश–विकास–सहितम् ।

श्रीगणेशाय नमः

# अथ भामती

अनिर्वाच्याऽविद्या द्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदम्
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥

अथ प्रकाशः

अज्ञोऽपि प्रज्ञतामेति यत्कृपालेशमात्रतः ।
स गजास्यो नमस्यो मे प्रत्यूहव्यूहवारकः ॥ १ ॥
शुक्तिरूप्यवदनाद्यविद्ययोत्पद्यतेऽनिति विलीयते जगत् ।
यत्र तन्निखिलवेदगोचरं नौमि सर्वगुणहीनमद्वयम् ॥ २ ॥
गुरोः श्रीधर्मदत्तस्य स्मृत्वा चरणपङ्कजम् ।
भामत्या गूढभावायाः प्रकाशोऽयं विरच्यते ॥ ३ ॥
क्वाहमल्पमतिः क्वेयं भावगम्भीरभामती ।
पूर्वाचार्यकृतव्याख्याऽवश्यं मां पारयिष्यति ॥ ४ ॥
सुमनः सङ्गमासाद्य कीटः शंकरसङ्गतिम् ।
यथाऽऽप्नोति तथैवाहं लभे शंकरसङ्गतिम् ॥ ५ ॥

प्रारिप्सितग्रन्थसमाप्तिप्रतिबन्धकदुरितपटलीप्रशमनपटीयसीं भगवत्प्रणतिं शास्त्रप्रतिपाद्यं विषयादिकं च दर्शयन्नादौ निबध्नाति अनिर्वाच्येति अनि-

र्वचनीयाविद्याद्वयसहकारेण आकाशानिलानलसलिलावनिनिर्वर्त्तकं ब्रह्म नमाम इत्यर्थः । अत्राविद्याद्वयमनादिर्मूलाविद्या पूर्वपूर्वविभ्रमजन्यः संस्कारश्च तत्सचिवः सहकारि यस्य तस्य सचिवः सहकारीति वा विग्रहः सहकारित्वं हि कारणानां परम्परं भवतीत्यविद्याया ब्रह्मसहकारित्ववद् ब्रह्मणोऽप्यविद्यासहकारित्वमुपपन्नमेव। नचैतन्मते प्रतिजीवमविद्याया भिन्नतया बहुत्वेनाविद्याद्वयोक्तिरसङ्गतेति वाच्यम् एकैकजीवाभिप्रायेणोक्तत्वात् अस्ति हि एकैकस्य जीवस्यानादिमूलाविद्या तत्तद्विभ्रमजन्यः संस्कारश्चेति। यद्यपि प्रतिजीवं संस्कारव्यक्तयो बहुविधास्तथापि संस्कारत्वेनानुगतीकृत्य द्वितयाभिधानम् ॥ तत्र परिणामितयोपादानत्वमविद्यायाः अधिष्ठानतया तु ब्रह्मण इत्युपरिष्टाद्व्यक्ती भविष्यति। तस्यामेतस्यामविद्यायामस्ति शक्तिद्वयमावरण विक्षेपश्च आवरणमपि द्विविधमभानापादकमसत्त्वापादकं च। तत्र न भातीत्यादिव्यवहारप्रयोजकं प्रथमम्, नास्तीत्यादिव्यवहारप्रयोजकमपरम्। तदेतद्द्वयमपरोक्षया वृत्त्या नश्यति परोक्षया तु तया द्वितीयमात्रम्। भवति हि घटादेरपरोक्षवृत्तिदशायां घटोभातीतिव्यवहारः, शाब्दादिवृत्तिदशायां तु घटोऽस्तीत्येव नतु भातीति व्यवहारः। कार्योत्पत्त्यनुकूला शक्तिर्विक्षेपः सा चेयमविद्याऽऽवरणशक्त्या ब्रह्मणः स्वरूपमावृत्य विक्षेपशक्त्या तत्र तद्विवर्त्तं जगज्जनयति। तदेतदविद्याद्वयं तत्कार्यं च सर्वं सत्त्वासत्त्वाभ्यां निरूपयितुमनर्हमनिर्वाच्यमित्यभिधीयते सत्त्वे हि न बाध्येत असत्त्वे च न प्रतीयेतेति। अनिर्वाच्यत्वं न शब्दाप्रतिपाद्यत्वं सर्वेषामेवाविद्यादीनां येन केन चिच्छब्देन प्रतिपाद्यत्वात् अपितु बाध्यत्वमिति।

अथ विकासः

यन्नामस्मरणादेव विघ्ना यान्ति विलीनताम्।
सोऽयं मद्धृदयाविष्टो विघ्नेशः सर्वदाऽवतु ॥ १ ॥
स्मृत्वा मैथिलपण्डितेन्द्रतिलकं विश्वेशपूजारतं
वेदान्तार्णवमज्जतां च तरणिं न्यायेऽपरं गौतमं।
सांख्ये वै कपिलं तथाऽतिविदितं मीमांसयाऽलंकृतं
बच्चाझाऽपरनामकातिकरुणं श्रीधर्मदत्तं गुरुम् ॥ २ ॥
कठिनत्वेन प्रकाशे त्यक्तं यत्तत्समालोच्य।
तनुते पुनर्विकासं लक्ष्मीनाथाभिधो धीरः ॥ ३ ॥

अविद्याद्वितयेति अत्र द्वितीया न तूलाविद्याऽभिप्रेयते सत्ताद्वयपक्षे सर्वस्यैव प्रपञ्चस्य प्रातिभासिकत्वेन शुक्तिरूप्यादेरपि मूलाज्ञानस्यैव कार्यतयाऽवस्थाऽज्ञानपदव्यपदेश्यायास्तस्या अनभ्युपगमात्। सत्तात्रैविध्यपक्षेऽपि मूलाज्ञानस्यैव शुक्त्यादिप्रदेशे तदावरणविक्षेपशक्त्योरपि स्वीकारेण रजतादिविभ्रमोपपत्तौ, शुक्तित्वादिप्रकारकज्ञानादुभयविधशक्तिनाशे न रजतादिविभ्रमानुवृत्तौ च सम्भवन्त्यां तदतिरिक्तायास्तूलाविद्याया विशिष्टचैतन्या-

वरिकाया अनङ्गीकारात् । अङ्गीकारेऽपि तस्याः प्रातिभासिकप्रत्येव जनकतया व्यावहारिक-वियदादिकार्ये प्रत्यकारणत्वेन तदुत्पत्तौ ब्रह्मणोऽविद्याद्वयसहकारित्वानुपपत्तेः । तस्मात्पूर्व-पूर्वविभ्रमजन्यः संस्कार एवात्र द्वितीयोऽभिमतः। अविद्यालक्षणं तु अनादिभावत्वे सति ज्ञाननिवर्त्यत्वम्, तत्रोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिवारणायानादित्वम्, ज्ञानप्रागभावेऽति-व्याप्तिवारणाय च भावत्वम् । तदेतदभावविलक्षणत्वमेव न तु वस्तुतो भावत्वं भावत्वे-नाभावत्वेन च निर्वक्तुमशक्यायास्तस्या वस्तुतो भावरूपत्वासम्भवात् । आत्मन्यतिव्याप्ति-वारणाय च विशेष्यम् । तदपि साक्षाज्ज्ञाननिवर्त्यत्वम्, तेन जीवत्वेश्वरत्वादेरविद्यानाशद्वारा ज्ञाननिवर्त्यत्वेऽपि नक्षतिः। नन्वविद्याया अनादित्वान्नाशासम्भव इति चेन्न अनादेरपि प्रागभावस्य नाशेनानादित्वस्याप्रयोजकत्वात् । वस्तुतो ब्रह्मभिन्नेष्वनादित्वमपि कल्पितमेव यथा हि स्वप्नावस्थायां केचित्पदार्थास्तदानीमुत्पद्यमानत्वेन केचिच्च बहुतरकालिकत्वेन केचिदनादित्वेन कल्प्यंते तद्वज्जागरणावस्थायामपि कल्प्यमाने पदार्थे काल्पनिकस्यैवाना-दित्वस्य स्वीकारादिति ॥ अथ शुक्तिरजताद्युपादानाज्ञानस्य सादितया प्रतिभासिकाभावो-पादानाज्ञानस्य च उपादानोपादेययोः सजातीयत्वनियमेन भावत्वशून्यतया तयोरव्याप्तमे-तल्लक्षणमिति चेन्न, उपदर्शितरीत्या प्रतिभासिकोपादानाज्ञानस्य मूलाज्ञानानतिरेकात् अति-रेकेऽपि अनादिचैतन्यसम्बन्धित्वेन तस्यानादित्वमेव शुक्त्यादिकं तु तदवच्छेदकमात्रम् । एवमभावोपादानाज्ञानस्यापि पूर्वोक्ताभावविलक्षणत्वरूपमेव भावत्वं सर्वथा साजात्ये उपादानो-पादेयभावविरहात् अतो न कश्चिद्दोषः अविद्यायाम्मानं त्वग्रेऽभिधास्यामः ।

तामिमामविद्यामन्तःकरणावच्छिन्नचैतन्यरूपजीवनिष्ठां जीवभेदेन भिन्नामेव भामती कृदुपजगाम । नात एकमुक्तौ सर्वमोक्षापत्तिः । अत एव वक्ष्यति 'तदधीनत्वादिति, सूत्रभामत्याम् ( १-४-३ ) न वयं प्रधानवदेकामविद्यामाचक्ष्महे येनैवमुपालभेमहि किंत्वियं प्रतिजीवं भिद्यते तेन यस्यैव जीवस्य विद्योत्पन्ना तस्यैवाविद्याऽपनीयते न जीवान्तरस्य भिन्नाधिकरणयोर्विद्याऽविद्ययोरविरोधात्, इति ।

भवति च ब्रह्म नास्ति न भातीत्यादिव्यवहारो जीवाश्रितोऽतस्तत्कारणमज्ञानमपि तदा-श्रितमेव कार्यकारणयोः सामानाधिकरण्यस्यैव युक्तत्वात् अन्यथाऽतिप्रसङ्गाच्च श्रुतिश्चात्र भवति 'ज्ञाज्ञावजावीशानीशौ, इति । ईश्वरस्याज्ञानाश्रयत्वे तु भ्रान्तत्वेन जीवत्वापत्तेः जीवेऽहमज्ञ इति प्रतीतिबाधश्च स्यादिति । एतत्पक्षेऽन्योन्याश्रयं दोषं तु स्वयमेव निराकरिष्यति 'अवस्थिते-रिति काशकृत्स्नः, इतिसूत्रभामत्याम् (१-४-२२) "अविद्योपधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते । नचैवमप्यन्यो-न्याश्रयः जीवविभागाश्रयाऽविद्याऽविद्याश्रयश्च जीवविभाग इति बीजाङ्कुरवदनादित्वात्, इत्यनेन । जीवधर्मत्वे च सुखदुःखादिवत्साक्षिभास्यत्वमप्यविद्यायाः संभवति, न ब्रह्मधर्मत्वे जगदुपादानत्वादीनामन्येषां केषामपि ब्रह्मधर्मत्वेन कल्पितानां साक्षिभास्यत्वाभावात् । ननु जीवस्याज्ञानाश्रयत्वे तस्यैव प्रपञ्चोपादानत्वमधिष्ठानत्वं च स्यान्न ब्रह्मण इति चेन्न अज्ञानस्य विषयत्वमेव हि उपादानत्वाधिष्ठानत्वयोर्नियामकं नतु तदाश्रयत्वमपि तथाहि शुक्त्यवच्छिन्न

चैतन्याज्ञानवतो जीवस्य रजतोपादानतायापत्तेः। अस्ति च ब्रह्मणोऽविद्याविषयत्वमतस्तस्यैव विवर्तोपादानत्वमधिष्ठानत्वं चेति ? नचैवमपि मायाऽविद्ययोरैक्यात् मायिनन्तु महेश्वरमिति श्रुतिविरोधः वृत्तिनियामकेन सम्बन्धेन धनाश्रयत्वाभावेऽपि धनी चैत्र इति वत् वृत्तिनियामकेन सम्बन्धेन ब्रह्मणि मायाया आश्रयत्वाभावेऽपि विषयतासम्बन्धेन तदुपपत्तेः पर्वते वह्निरनुमितिः जायते द्रव्यत्वे द्रव्यंघट इति शाब्दबोधो जायत इत्यादिप्रतीत्या विषयताया अपि वृत्तिनियामकत्वोपगमात् मायाऽविद्ययोर्भेदोपगमाच्चेति। अविद्याया विषयस्तु न जीवस्तथा सति सर्वव्यवहारोच्छेदापत्तेरिति ॥ तत्सिद्धमविद्याया नानात्वं जीवनिष्ठत्वंचेति।

अत्र स्वस्वबुद्धिवैभवं दर्शयन्तो वहवो विद्वांसो वहुधा विचारयाञ्चक्रुः तदि किंचित्प्रदर्श्यते तत्र प्रदर्शितयुक्त्या जीवस्याज्ञानाश्रयत्वे सिद्धे प्रतिजीवं संसारभेदोऽपि भाम कृतामभिमत इति सिद्धान्तविन्दुटीकायां ब्रह्मानन्दसरस्वत्यः 'तद्यो यो देवानां प्रत्यबुध्य ब्रह्मैव तद्भवदित्यादिश्रुत्या येषामात्मसाक्षात्कारस्तेषां मोक्षोऽन्येषां वन्ध इति प्रतिपादना जीवानां भिन्नतया तत्तन्निष्ठाज्ञानानामपि भेदेन तत्तदविद्यापरिकल्पित ईशादिप्रपञ्चोऽपि जीवभेदेन नानैव। यथा तत्तत्पुरुषीयापेक्षाबुद्धिजन्यं द्वित्वादिकं तत्तत्पुरुषेणैव गृह्यमा नाना, यथा वा स्वाप्नः प्रपञ्चः स्वाप्नपुरुषेणैव गृह्यमाणो भवति नाना तद्वत्, अत एकस्याज्ञा नाशेऽप्यपरस्याज्ञानतत्कार्योपलम्भसम्भवः।

नचाज्ञानभेदेन प्रपञ्चभेदकल्पने मानाभावः सर्वैरज्ञानैः सम्भूय सृष्टयारम्भसम्भवा सकलप्रपञ्चपरिणाम्यज्ञानकूटान्तर्गतैकाज्ञाननाशेन सकलप्रपञ्चनाशेऽपि विद्यमानाज्ञा पुञ्जात्तद्द्वितीयक्षणे एव प्रपञ्चान्तरोत्पत्तौ महापटध्वंसजन्यखण्डपटोत्पत्ताविव वाधकाभा दिति वाच्यम् एतस्मादात्मन आकाशः सम्भूतः, इत्यादिश्रुतिभिः क्रमेण सृष्ट्यामनन युगपदाकाशादिसृष्टौ मानाभावात् तत्तदसाधारणकारणसमवधानमन्तरेण एकमुक्त वहिर्तद्द्वितीयक्षणे एव सकलप्रपञ्चोत्पत्त्यसम्भवाच्च। नच प्रतिजीवं प्रपञ्चभेदे योऽयंघटस्त्व दृष्टः स एव मयाऽपीति प्रत्यभिज्ञानुपपत्तिरिति वाच्यम् तत्तत्पुरुषीयभ्रमविषयस्य शु रजतस्य भिन्नत्वेऽपि यद्रजतं त्वया दृश्यते तदेव मयाऽपीति प्रत्यभिज्ञानस्य, केन चित् स्वप्ने मया देवदत्तो दृष्ट इत्युक्ते स्मृतम्मयापि स्वप्नेऽद्य स देवदत्तो दृष्ट इत्यादिसम्वाद च वहुलमुपलब्धेः स्वप्नद्रष्टुर्जीवस्य भेदेन स्वाप्निकस्य पदार्थसार्थस्य भिन्नस्यापि प्रत्यभिज्ञान एकजीवाज्ञानपरिकल्पितस्य जीवान्तरेण ग्रहणे वाधकाभावात् प्रत्यभिज्ञाया भ्रमत्वा विवेचयाञ्चक्रुः।

अपरे पुनर्भामतीकृन्मतमेतत्परिशीलयन्तः सकलजीवाज्ञानैः सम्भूय एक एव प्रप ऽनेकतन्त्वारब्धपटतुल्यो जायते इत्येकस्मिन् मुक्ते महापटनाशे खण्डपटस्येव महाप्रपञ्च खण्डप्रपञ्चस्यानुवृत्तौ वाधकाभावात् जीवान्तरं प्रति जगदवतिष्ठत एवेति न प्रतिपु संसारभेदो नवा प्रत्यभिज्ञाऽनुपपत्तिर्नवा क्रमोत्पादप्रतिपादकश्रुत्यादेरनुपपत्तिः त प्रलयोत्तरादिसर्गविषयकत्वादिति प्रतिपेदिरे।

जीवाश्रिताविद्यासमुदायाद्भिन्ना परमेश्वरोपाधिरूपा मायैव वियदादिप्रपञ्चोपाद

जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकरजतादिसृष्टौ चोपयुज्यन्त इत्यपि परे एतन्मतं वर्णयाम्बभूवुरिति ॥

केचित्तु चैतन्यस्याविद्याश्रयत्वे जीवत्वं जीवत्वे च सत्यविद्याश्रयत्वमित्यन्योन्याश्रय- इत्याशंक्य जीवाश्रयत्वमित्यनेन न जीवत्वविशिष्टचैतन्यस्याश्रयत्वं विवक्षितं किंतर्हि चैतन्या- श्रयत्वमेव यस्मिन् हि अविद्यया कल्पिते चैतन्यस्य प्रदेशेऽन्तः करणं तादात्म्येनाध्यस्तं तस्मिन्नेव प्रदेशे ऽविद्या ऽवतिष्ठते एवं चाविद्यायाश्चैतन्यवृत्तौ जीवत्वमवच्छेदकमात्रं शाखायां वृक्षे कपिसंयोग इति वत्, तदपि जीवत्वानवच्छिन्नप्रदेशावच्छेदेन ब्रह्मण्यविद्यायाः स्थिति- वारणायाश्रीयत इति समादधिरे ॥

अन्ये तु अविद्याया जीववृत्तित्वे जीवत्वमुपाधिरतो नात्माश्रयः यथा घटत्वादिकं यदि घटत्वादिविशिष्टे वर्तेत तदाऽत्माश्रयो घटत्वादिरहिते चेत्तदा पटादावपि प्रसज्येत अतो घटत्वाद्युपहिते वर्तते तद्वदविद्याकार्यान्तःकरणोपहितेऽविद्या वर्तते इत्याहुः ॥

मधुसूदनसरस्वतीप्रभृतयो मतमेतद्भामतीकारीयमुपपादयन्तोऽमुमत्र विशेषमाचक्षिरे तथाहि जीवस्याज्ञानाश्रयत्वेऽपि नान्योन्याश्रयतादोषः, सहि उत्पत्तिस्थितिज्ञप्तिषु त्रिष्वेव दोष- भावं भजते नचैवमस्ति प्रकृते जीवाविद्ययोरुभयोरनादित्वेन जीवस्याविद्याधीनोत्पत्तिकत्वा- भावान् नोत्पत्तौ, जीवे एवाविद्याश्रयत्वं कल्प्यते नत्वविद्यायां जीवाश्रयत्वमिति न स्थितौ, अज्ञानस्यैव चिद्भास्यत्वं नतु चितो ऽज्ञानभास्यत्वमिति न ज्ञप्तौ । नन्वेवमविद्याया जीवनिष्ठत्वे कथं ब्रह्मणः प्रपञ्चोपादानत्वमितिचेन्न 'पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम्' इत्यादिश्रुत्या ऽज्ञानोपहितरूपेण जीवचैतन्यमेव हि एतन्मते जगद्विवर्तो- पादानं, न तु ब्रह्म अविद्या तु दोषविधया निमित्तं कारणं नतु परिणामि । अत एव ब्रह्मणो- ऽभिन्ननिमित्तोपादानत्वमिति सिद्धान्तोऽपि संगच्छते यत्र कर्तृत्वादिना निमित्तत्वं तत्रैवोपा- दानत्वं मुख्यं तदुभयं च स्वाप्नं प्रतीव जाग्रत्प्रपञ्चं प्रत्यपि जीवस्यैव सम्भवति नतु ब्रह्मण- स्तस्य शुक्त्यादेरिवाविद्याविषयत्वेन भाक्तमेवोपादानत्वम् उपहितस्य च वस्तुतो ब्रह्माभेदाद् ब्रह्मोपादानत्वबोधकभाष्यादिकं यतोवा इमानि भूतानि जायन्ते इत्यादिश्रुतिश्च नोपरुध्येते इति ॥

वयं त्वत्रेदं समीक्षामहे भामतीकृतोऽप्यविद्यापरिणामत्वमेव जगतोऽभिमतमिति अत एव समाननामरूपत्वात् ( १—३—३० ) इतिसूत्रभामत्याम् अन्तःकरणादीनां प्रलयेऽविद्याया- मवस्थानोक्तिः संगच्छते नहि निमित्तकारणे कार्याणि प्रविलीयन्ते, अत एव च अविद्या हि सर्वानर्थबीजमिति वक्ष्यति किं बहुना अन्तर्याम्यधिदैवादिषु (१-२-१८) इति सूत्रभामत्याम् सर्वं हि विकारजातं तदविद्याशक्तिपरिणाम इति स्पष्टमेवाविद्यापरिणामत्वं जगतोऽभिधास्यति तस्मात् विभ्रमे दोषस्यापि कारणत्वात् अविद्याया दोषविधया जगद्भ्रमे निमित्तत्वं परिणामित- योपादानत्वं चेति द्वयमपि भामतीकृतोऽभिमतमिति भवति सर्वमवदातम् । इत्थं चाविद्याया- निमित्तकारणत्वमात्रं भामतीकृतो मतमिति वर्णयन्तस्तदीयाशयमजानन्तः सर्वे ग्रन्थकृतः मौढ्यमेव प्रकटयाञ्चक्रुः ॥

बृहस्पत्यवतारस्य गूढतत्त्वार्थदर्शिनः ।
वाचस्पतेरभिप्रायं कः सम्यग्ज्ञातुमर्हति ॥

केवलं गौडब्रह्मानन्दसरस्वतीचरणाः सिद्धान्तविन्दुटीकायां, यद्यपि जीवनिष्ठाज्ञान-विषयब्रह्मोपादानकमेव जगत् अविद्या तु दोषविधया जगतो निमित्तं नतूपादानं ब्रह्मनिष्ठ-जगतो व्यधिकरणत्वात्। नहि शरावादिनिष्ठदुग्धादेः घटादिनिष्ठो दध्यादिरूपः परिणामः सम्भवतीति कल्पतर्वादौ वाचस्पत्याशयो वर्णितः तथापि मायोपादानत्वबोधिकायाः 'त्रयमेतत्सुप्तं मायामात्रम्' मायां तु प्रकृतिं विद्यादित्यादिश्रुतेः स्वारस्यादित्याद्युदीरयन्तो वाच-स्पतिमिश्रमतेऽप्यज्ञानपरिणामत्वं जगतः सम्भावयामासुः। परंतु तन्मते जगतोऽविद्यापरि-णामत्वबोधकस्तदीयभामतीग्रन्थ एव स्पष्टार्थोऽभ्यर्णे प्रदर्शितो मानमस्तीति निश्चप्रचमेव तन्म-तेऽप्यविद्यापरिणामत्वं जगत इति ॥

नच यत्राविद्या तत्रैव तत्परिणामोऽतो जीवनिष्ठमेव जगत्स्यान्न ब्रह्मनिष्ठं व्यधिकरणत्वा-दिति कल्पतरूक्तो दोष इति वाच्यम् यत्राविद्या विषयतासम्बन्धेन वर्तते तत्रैव तत्परिणामस्य युक्तत्वेन जगतो ब्रह्मनिष्ठत्वे बाधकाभावात् भवति हि शुक्त्याद्यज्ञानस्य जीवनिष्ठस्य विषयतया शुक्त्यादिवर्त्तिनस्तत्र रजताद्याकारः परिणाम इति।

विद्वन्मूर्धन्यो मैथिलकुलालङ्कारो मण्डनमिश्रोऽपि जीवनिष्ठामेवाविद्यामुरीचकार अत एव ब्रह्मसिद्धौ ब्रह्मकाण्डे, यत्तु कस्याविद्येति जीवानामिति ब्रूमः ननु जीवा न ब्रह्मणो भिद्यन्ते, एवं ह्याह अनेन जीवेनात्मनाऽनुप्रविश्येति सत्यं, परमार्थतः न कल्पनया भिद्यन्ते कस्य पुनः कल्पना भेदिका न तावद् ब्रह्मणः तस्य विद्यात्मनः कल्पनाशून्यत्वात्, नापि जीवानां कल्पनायाः प्राक् तदभावात्, इतरेतराश्रयप्रसङ्गात्। कल्पनाधीनो हि जीवविभागः जीवाश्रया कल्पनेति। अत्र केचिदाहुः वस्तुसिद्धावेष दोषः नासिद्धं वस्तु वस्त्वन्तर-सिद्धयेऽलम् न मायामात्रे, नहि मायायां काचिदनुपपत्तिः अनुपपद्यमानार्थैव हि माया उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात्, इति प्रत्यपीपदत्। अत्र ननु कल्पनया भिद्यन्ते इत्यत्र एको नकारः पूर्वेणानुवर्तनीयः तथाच कल्पनया न भिद्यन्ते इति न अपितु कल्पनया भिद्यन्त एवेत्यर्थः। तत्सिद्धं मण्डनमिश्रमतेऽपि जीव एवाविद्याश्रय इति ॥ तदेतत्समग्राहि-कैश्चित् स्वेनैव कल्पिते देशे व्योम्नि यद्वद् घटादिकम्। तथ ाजीवाश्रयाविद्यां मन्यन्ते ज्ञान-कोविदा इति ॥

परे तु ब्रह्मनिष्ठत्वमेवाविद्याया मन्यन्ते तदुक्तं संक्षेपशारीरके "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः!" इति एतत्पक्षे तु अज्ञं ब्रह्मेत्यापत्त्यादिः पूर्वोक्तदोषः प्रसज्यतेऽतो जीवनिष्ठैव सेति मन्तव्यम् ॥

दृष्टिसृष्टिवादोऽप्येतन्मतेवानुसरतीत्यप्याह कश्चिद्विपश्चिदिति ॥

**प्रकाशः**

अत्राविद्याया अनिर्वाच्यत्वोक्त्या तत्परिणामस्य नामरूपात्मकस्य जगतो-ऽप्यनिर्वाच्यत्वेन कल्पितत्वलाभात् वस्तुतो जीवब्रह्मैक्यमेतच्छास्त्रस्य विषय इति

समसूचि। नन्वविद्यासाचिव्ये ब्रह्मणोऽनीश्वरत्वापत्तिरस्वातंत्र्यादत आह प्रभवत इति सामर्थ्यवतः कर्तुरुपकारापेक्षत्वं हि न तदीयं स्वातंत्र्यमपहन्ति न-जातु कश्चित् कुठारादिकरणाद्युपकरणगणमपेक्षमाणः कर्ता ऽस्वतन्त्रो दृष्टश्छिदा-दाविति। तदेतद्वक्ष्यति स्मृतेश्च (१-२-६) इतिसूत्रे भामत्याम् "अनाद्यविद्यालब्ध जीवभावः परमात्मा स्वतो भेदेनावभासते, तादृशां च जीवानामविद्या न तु-निरुपाधितो ब्रह्मणः नचाविद्यायां सत्यां जीवात्मविभागः सति च जीवात्म-विभागे तदाश्रयाविद्येत्यन्योन्याश्रय इति साम्प्रतम्, अनादित्वेन जीवाविद्ययो-र्बीजाङ्कुरवदनवक्लृप्तेरयोगात्। नच सर्वज्ञस्य सर्वशक्तेश्च कुतोऽकस्मात्संसारिता, यो हि परतन्त्रः सोऽन्येन बन्धनागारे प्रवेश्यते नतु स्वतन्त्र इति वाच्यम् नहि तद्भागस्य जीवस्य सम्प्रतितनी बन्धनागारप्रवेशिता, येनानुयुज्येत, किंत्वियमनादिः, पूर्वपूर्वकर्माविद्यासंस्कारनिबन्धना नानुयोगमर्हति। न चैतावता ईश्वरस्यानीशता, नहि उपकारापेक्षिता कर्तुः स्वातन्त्र्यं विहन्ति" इति। ननु प्रपञ्चोपादानत्वे ब्रह्मणो विकारित्वापत्तिरत आह **विवर्त्ता इति**। अयमाशयः, प्रसज्येतापि ब्रह्मणो विकारित्वं यदि तत्परिणामो जगदुपगम्येत नचैतत् निरवय-वस्य तस्य तदसंभवात् तथोपगमे विकारित्वापाताच्च यथा हि यदा खल्विदं दुग्धा-दिकं दध्यादिरूपेण परिणमते तदा न तस्य पृथक् स्वरूपमुपलभ्यते, दधिनाशेन नाशश्च भवति तद्वद् ब्रह्मणोऽपि स्यात्। किंतु विवर्त एव तदीयो जगत् अतो न-विकारित्वं, नहि सर्पादेरज्जुविवर्त्तत्वे रज्जुर्विक्रियते इति। उपादानसमसत्ताकः कार्यः परिणामः उपादानविषमसत्ताकश्च कार्योविवर्त्त इति तयोर्भेदात्। वक्ष्यति च 'योनिश्च गीयते (१-४-२०) इतिसूत्रे भामत्याम्' इयं चोपादानपरिणाम-परिभाषा न विकाराभिप्रायेण, अपितु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदु-पादानं द्रष्टव्यम्, इति॥ भूतस्रष्टृत्वमभिधाय, भौतिकस्रष्टेरपि हिरण्यगर्भद्वारा ईश्वर एव कर्तेत्याह **यतश्चेति** इदमत्रावधेयम्, यद्यपि भूतस्रष्टृत्वमीशस्य, भौतिकस्रष्टृत्वं हिरण्यगर्भस्य, तथापि उपादानत्वं जीवनिष्ठाज्ञानविषयतया ब्रह्मण एव ईश्वरस्य वस्तुतस्तदभिन्नतया उपादानत्वमतस्तदीयविवर्त्त त्वमपि वियदादीनामुपपन्नमिति। **उच्चावचम्** नानाविधम्। विवर्त्तोपादानत्वरूपं ब्रह्मणस्तटस्थलक्षणमभिधाय मुमुक्षुप्राप्यं स्वरूपलक्षणमप्याह **अपरिमितेत्यादि** अखण्डानन्दचिन्मात्रमित्यर्थः। एतेन शास्त्रप्रयोजनं स्फुटीकृतम् अविद्यानिवृत्त्युपलक्षिताखण्डानन्दो हि मोक्षः स च ब्रह्मैव।

ननु जीवब्रह्मणोः सर्वथैक्यात् नानाजीववादे एकजीववादे चैकस्यान्तःकरणादिनाशेऽप्यपरस्य पुंसो बन्धसद्भावात्, अन्तः करणान्तरावच्छेदेन दुःखादिमत एव ब्रह्मणः स्वरूपप्राप्त्या न वस्तुतो बन्धो निवृत्त इति चेन्न ब्रह्मणि बन्धस्य सर्वदैवासत्त्वात् सुखदुःखादेरन्तःकरणस्यैव धर्मत्वात् अन्तः करणमेव हि

ब्रह्मणि 'आत्मनि' दुःखादिकं कल्पयति, नच तावता ब्रह्मापि तथा भवति नहि रज्ज्वादौ सहस्रमपि सर्पादिकल्पना रज्जुमन्यथयन्ति तथाच मोक्षे यदन्तःकरणाद्नाशः न तेनान्तःकरणादिना दुःखादिकल्पना क्रियते, येन क्रियते न तेनापि ब्रह्मणि दुःखादिकं वस्तुतः प्राप्यते ब्रह्म तु सर्वदैवैकरूपम् अत एव वक्ष्यति भगवान् भाष्यकारो यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स सम्बध्यते, इति। अमृतम् अविनाशि त्रिकालाबाध्यम् ॥

अत्रायं निष्कर्षः जीवाश्रिता ब्रह्मविषयिणी अविद्या जगदाकारेण परिणमते ईश्वरश्च तत्र कर्तृतया निमित्तम् तदपि भूतसृष्टौ साक्षात् भौतिकसृष्टौ च हिरण्यगर्भद्वारा। ब्रह्म तु जीवाविद्याविषयतयोपादानम् तदप्युपहितमेव तदभिन्नतयेश्वरोऽप्युपादानमुच्यते। अविद्या तु जगद्विभ्रमे दोषविधया निमित्तमपीति ॥ १ ॥

विकासः

**नमाम इति** अत्र बहुवचनं, जीवबहुत्वाभिप्रायेण, भिद्यन्ते हि अन्तःकरणावच्छिन्नचैतन्यरूपा जीवाः प्रत्यन्तःकरणम्। नचैवं, घटसम्भृत आकाशो नीयमाने घटे यथा। नीयेत नाकाशं तद्वज्जीवो नभोपम, इत्यादिव्यापकत्वाभिधायकश्रुत्यादिना विरोधः तस्य पारमार्थिकस्वरूपाभिप्रायकत्वात्। परमार्थतो हि न जीवभेदोऽस्ति अपितूपाधिभेदादेव। तत्र यद्यविद्या उपाधिस्तदैकजीववादः, यदिचान्तःकरणमुपाधिस्तदा नानाजीववाद इति व्यवस्थितिः

अस्मिश्च नानाजीववादे तद्वैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहम्मनुरभवमहसूर्यश्च कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृतचक्षुरमृतत्वमिच्छन्, तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः, अभयं वै प्राप्तोऽसि जनक, एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेत्यादिर्वामदेवादीनामात्मज्ञानमभिदधती एवं तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणामित्यादिश्च येषामात्मसाक्षात्कारस्तेषां मुक्तिं प्रतिपादयन्ती एवं कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः, इत्यादिश्चान्तःकरणोपाधितां जीवस्य ब्रुवतीश्रुतिः 'बहवो ज्ञानतपसा पूता मद्भावमागताः, इत्यादिस्मृतिः बन्धमोक्षव्यवस्थाऽनुपपत्तिश्च प्रमाणम्, तथाहि चैतन्यस्यासङ्गस्यात्मनः सदैव मुक्तस्य वस्तुतो भेदाभावात् नानाविधशोकमोहादिमत्तत्तदन्तःकरणतादात्म्याध्यासनिमित्तक एव भेदो बन्धश्च भणितुमर्हति न तु वास्तविक इति नाविदितं विशुद्धान्तःकरणानां व्रष्यन्तचिन्तकानां विदुषां केषामपि, तथा च यदन्तःकरणं यामात्मसाक्षात्कारात्मिकां वृत्तिं प्रसूते सा वृत्तिस्तदन्तःकरणं तदवच्छिन्नचैतन्याश्रितमज्ञानं तत्कल्पितं बन्धं च तदानीमपनुदतो नान्यदीयबन्धसद्भावं मनागपि विघटयितुमुत्सहते इति न नानाजीववादे एवमुक्तौ सर्वमोक्षापत्तिः। एकाज्ञानैकजीववादे त्वियमापत्तिर्दुर्वारा अद्यावधि च कस्य चित्कदाचिदपि शुकवामदेवादेराजानसिद्धस्य महर्षेरपि मोक्षो नाजानि, पुनरर्वाचीनस्यास्मदादेर्गविष्यतीति का प्रत्याशाऽतो मोक्षमार्गप्रवृत्तिरप्युपरुध्येत कस्य चिद् ब्रह्मसाक्षात्कारेण हि सर्वेषाम्मुक्तिः स्यादेवेत्यतो ममाप्यनायासेनैव भविष्यतीति किमर्थं तदर्थमपि

क्लेशः कार्य इति ब्रुवन्नालस्यान्न कश्चित्तदुपाये प्रवर्तेत । एवं तद्यो यो देवानां प्रत्यबुध्यत इत्यादयः प्रदर्शिताः श्रुतयश्चैतत्पक्षे नाञ्जस्येनोपपत्तुमर्हन्ति, तस्माद्वस्तुतोऽभिन्ना अपि तत्तदन्तःकरणोपाधिभेदेन भिन्ना एव जीवास्तदाश्रिता अविद्याश्चेत्ययमेव पक्षो युक्तः । नचैतस्मिन्नन्तःकरणोपाधिकजीवभेदवादे ब्रह्मैव स्वाविद्यया संसरतीत्युत्तरगीताव्याख्यायां गौड़पादीयवचनम् ब्रह्मैव स्वाविद्याया संसरति स्वविद्यया मुच्यते इति वृहदारण्यकोपनिषद्भाष्यं च विरुध्यतेऽत्र हि अविद्याया एवोपाधित्वाभिधानात् तस्याश्चैकत्वेन भेदासाधकत्वादिति चेन्न, एतयोर्वाक्ययोर्ब्रह्मैव स्वविषयकाविद्यया नानान्तः करणरूपेण परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया मुच्यते इत्यभिप्रायकत्वात् । नानाजीववादे प्रतिजीवमेकैकस्या अविद्यायाः स्वीकारादुक्तवाक्यद्वयघटकस्वाविद्ययेत्यस्य स्वविषयकतत्तदविद्ययेत्यर्थकत्वाद्वा विरोधविरहात् ॥

एनेन योऽस्माकमविद्यायाः पारं तारयसीत्यादिश्रुतावेकवचनदर्शनेन जीवोपाधिभूताया अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति परास्तम्, सा हि श्रुतिः इन्द्रो मायाभिः पुरुरूप ईयते इत्यादि श्रुत्या भेदानुभवसनाथया प्रतिक्षिप्यमाणा ऽविद्यात्वरूपैकधर्माश्रयविषयकत्वेन प्रतिजीवमेकैकाविद्येति ज्ञापनेन चोपपद्यमाना न मनागप्यविद्याया नानात्वमुन्मूलयितुमुत्सहते ॥

इमं च नानाजीववादम् अनुपपत्तेस्तु न शारीरः ( ३–२–१ ) इति सूत्रीयम्, जीवस्तु शरीर एव भवतीति भाष्यम्, तदनन्यत्वमिति ( २–१–४ ) सूत्रीयम्, सच स्वात्मभूतानेव घटाकाशस्थानीयान् अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे, इति भाष्यम्, नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ( २–३–१७ ) इति सूत्रीयं, जीवात्माऽपि पुण्यापुण्यसुखदुःखभाक् प्रतिशरीरं प्रविभक्त, इत्यादिकं भाष्यम् एवं कृतप्रयत्नापेक्षस्तु, यावदधिकारं स्थितिरधिकारिणाम्, इत्यादिसूत्रं तद्व्याख्यानभाष्यं चानुमोदते । चित्सुखाचार्योक्तिरपि नानाजीववादमेव समर्थयतिउक्तंहि तैः, सूत्रभाष्यादिवाक्यानां श्रुतिस्मृतिगिरामपि । मुख्यार्थत्वोपपत्त्यर्थं व्यवस्थैवाभ्युपेयताम्, इति ॥

एकजीववादिनस्तु न वास्तवो व्यावहारिको वा जीवभेदोऽस्ति तथाहि अविद्याप्रतिबिम्बितचैतन्यं जीवः अविद्या च लाघवानुगृहीतया अजामेकामित्यादिश्रुत्या तद्भेदे प्रमाणाभावेन च एका सिद्ध्यन्ती स्वोपाधिकस्य जीवस्याप्येकत्वमासादयति । स चैकोऽप्यविद्याकार्यतत्तदन्तःकरणावच्छेदेनानेकरूपकर्तृभोक्तृप्रमातृभावं प्रतिपद्यमानो जीवोऽखिलमेव लौकिकवैदिकभेदव्यवहारमुपपादयतीति नानन्तजीवकल्पना युक्ता प्रमाणाभावाद् गौरवाच्च, एतत्पक्षे चान्तःकरणस्यैव सुखदुःखाद्युत्पादकत्वेन तद्वृत्तेरेव चैतन्याभिव्यञ्जकत्वेन च न घटाद्यवच्छेदेन सुखदुःखाद्युत्पत्तिः, यथा सौरालोकस्य सर्वतो विसृत्वरस्यापि काचाद्यवच्छेदेनैवाभिव्यक्तिः न तु तृणाद्यवच्छेदेनेति । एवं च यदन्तःकरणावच्छेदेन यो ब्रह्मसाक्षात्कार उदेति तेन तदन्तःकरणं तद्धर्मश्च नश्यति तथा च यथा पटैकदेशे दग्धे स एकदेशः कार्यक्षमो न भवति तद्वत् यदन्तःकरणं नश्यति तदवच्छेदेन दुःखादिकं नोपभुङ्क्ते इत्येकत्वेऽपि जीवस्य न भोगसांकर्यप्रसक्तिरिति

अत्रेदमालोचनीयम् ब्रह्मसाक्षात्कारो निर्विकल्परूपः समानविषयकमज्ञानमेव साक्षा
र्तयति तयोरेव हि ज्ञानाज्ञानयोः समानविषयकयोर्विरोधः तद्द्वारा च तत्कार्यमपीति।
च रज्जोः स्वरूपसाक्षात्कारः तदज्ञानं नाशयन्नेव तत्कार्यभूतं सर्पादिकं तत्कार्यं च भयकम्
निवर्तयतीति तदेतन्नानाजीववादे एव सामञ्जस्यमर्हति तत्पक्षे हि अज्ञानानां भेदाद्
साक्षात्कारो जायते स तस्यैवाज्ञानं नाशयन्नन्तःकरणादिकं तस्य नाशयति नान्यस्य।
जीववादे तु नैतत्सामञ्जस्यम् दृष्टविरुद्धा चेयं कल्पना ब्रह्मसाक्षात्कारोऽन्तःकरणमेव निवर्
अज्ञानं त्ववशिष्यत एवेति । प्रादर्शि च तदनन्यत्वमिति सूत्रे भाष्यकृद्भिः ज्ञानस्याज्ञान
धित्वमिति। किञ्च अन्तःकरणकारणस्याज्ञानस्य विद्यमानत्वेन सत्कार्यवादस्य सिद्धान्तेऽपि
तत्वेन च मोक्षानन्तरमपि पुनः संसारित्वापत्तिः सांख्यमत इवैतन्मतेऽप्यनिवार्या स्यात्
तस्मात् कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इत्यादिश्रुतिभिरन्तःकरणानामेव जीवो
त्वमभिदधतीभिः अन्तःकरणभेदेन जीवनानात्वं व्यवस्थापयन्तीभिर्भूयोभाष्योक्तिभिर्युक्तिः
प्रदर्शिताभिः अन्तःकरणावच्छिन्नचैतन्यं जीवः अविद्यावच्छिन्नं चैतन्यमीश्वर इति भ
कृतामेव सिद्धान्तः समीचीनतामाश्लिष्यतीति ॥

विवरणानुसारिणस्तु अविद्यायामीश्वरप्रतिविम्ब एव जीवः नच रूपवत एव दर्पणादे
धित्वं रूपवत एव च मुखादेर्बिम्बत्वं दृष्टमिति नाविद्यायां चैतन्यप्रतिविम्बो घटते इति वा
एवं हि सति रूपहीनस्य रूपपरिमाणादेः प्रतिविम्बानुपपत्तिरतो रूपवत्त्वं तत्राकिञ्चित्
नच द्रव्यप्रतिविम्बे एव रूपवत्त्वं प्रयोजकमिति न रूपशून्यस्य रूपादेः प्रतिविम्बानुप
ब्रह्मणस्तु द्रव्यस्य रूपशून्यतया प्रतिविम्बासम्भव इति वाच्यम्, द्रव्यगुणपरिभाषाया वे
सिद्धत्वाभावात् निर्धर्मकस्य ब्रह्मणो द्रव्यत्वविरहाच्च तत्प्रतिविम्बे रूपानपेक्षणात्।
वाय्वादिप्रतिविम्बवारणाय रूपादिप्रतिविम्बोत्पादनाय च चाक्षुषत्वमेवानुगतं विम्बत्वप्र
मतो न ब्रह्मणः प्रतिविम्बसम्भव इति वाच्यम् अचाक्षुषस्यापि नभसोऽभ्रनक्षत्रादिमण्डल
तस्य जलादौ प्रतिविम्बदर्शनेनेदृशप्रयोजकस्य कल्पयितुमयुक्तत्वात्, तस्मात्फलबलेन
यस्य प्रतिविम्बो यत्र यत्रोपाधौ प्रमाणसिद्धस्तस्य तस्य तत्तदुपाधिधर्मिकप्रतिविम्बं प्र
मतैव हेतुता कल्पनीयेति नीरूपेऽप्यज्ञानेऽचाक्षुषस्यापि ब्रह्मणः प्रतिविम्बः सम्भव
समर्थितश्चायं पक्षः सूत्रकृद्भिः आभास एव च (२–३–५०) इत्यादिसूत्रेण तस्मादवि
प्रतिविम्ब एव जीव इति विवेचयन्ति ।

तमेनमाचार्यवाचस्पतिमिश्रानुयायिनोऽवच्छेदवादिनो भूयांसि दूषणान्युद्भावयन्तः
सूत्रादितात्पर्यं स्वपक्षानुगुण्येन वर्णयन्तः प्रतिविम्बवादं नानुमन्यन्ते अचाक्षुषस्य ब्रह्मणो
षेऽज्ञाने प्रतिविम्बासम्भवात् वाय्वादिप्रतिविम्बवारणाय विम्बप्रतिविम्बभावे चाक्षुषत्वस्य
जकत्वात् आकाशस्य तु जलादौ न प्रतिविम्बो येनोक्तप्रयोजकत्वं बाध्येत अपित्वभ्रनक्षत्रा
क्षुषस्यैवेति नाचाक्षुषस्य कस्य चित्प्रतिविम्बसम्भव इति ॥ नच नीरूपे ध्वनौ नीरूपस्य व
प्रतिविम्बदर्शनेन न चाक्षुषत्वं प्रयोजकत्वमिति वाच्यम् ध्वनिधर्माणामुदात्तत्वादीनां स
तानां विवेकाग्रहाद्वर्णेष्वध्यासोपपत्त्या ध्वनौ वर्णप्रतिविम्बकल्पनाया अप्रामाणिकत्वात्

यन्ते च चन्दनादिप्रतिविम्बे चाक्षुषा एव रूपादयो नतु गन्धस्पर्शादयस्तेषां घ्राणादिसम्बन्धे- पि सौरभाद्यननुभवात् अतश्चाक्षुषत्वमनुगतमेव तत्र प्रयोजकमुपेयम् न चैवमपि दर्पणे मानजातीयस्य दर्पणस्य प्रतिविम्बापत्तिः, इष्टत्वात् तत्रात्यन्तसादृश्यात् पार्थक्येनाप्रतीतेः थवा गन्धादिप्रतिविम्बवारणाय चाक्षुषत्वस्य तत्र प्रयोजकत्वे सिद्धे प्रतियोगितासम्बन्धेन र्पणानुयोगिकप्रतिविम्बं प्रति तादात्म्येन दर्पणस्य प्रतिवन्धकत्वकल्पनात् ।

ननु रूपं रूपं प्रतिरूपो वभूवेत्यादिश्रुत्या चितः प्रतिविम्बसिद्धौ तत्र व्यभिचारान्न क्षुषस्यैव प्रतिविम्ब इति नियमसिद्धिरिति चेत् भवेदेतदेवम् यदि श्रुतेस्तत्र तात्पर्यं सिध्येत् देव तु न प्रतिविम्बकल्पार्थकतयाऽपि श्रुतेरुपपादनस्य प्रदर्शयिष्यमाणत्वेन चितः प्रति- म्बस्यैवाद्याप्यसिद्धेर्व्यभिचाराभावादिति ॥ नन्वेवमाकर्ण्यमानो गुहादिरूपे गगने जायमानस्य दुभ्यादिध्वनेरचाक्षुषस्य प्रतिविम्बात्मकः प्रतिध्वनिरनुपपन्न इति चेन्न पञ्चीकरणप्रक्रियया दुन्दुभिसमुद्रदावानलझंझावातादिध्वनयः पृथिवीसलिलानलानिलानामेव शब्दाः ये च भ्यो जायमानाः प्रतिध्वनय इत्युदीर्यमाणाः शब्दास्त एव वस्तुत आकाशस्य शब्दाः नतु ते तविम्बा इति न काचिदनुपपत्तिः ।

स्यादेतत् योऽयं गुहायां समुपलभ्यमानो वर्णप्रतिशब्दः सोऽयं न साक्षाद्वर्णरूपो व्यञ्ज- स्य कण्ठताल्वादेस्तत्राभावादतस्तत्र गगने तत्तद्वर्णप्रतिविम्ब एवोपगन्तव्यो ऽतो न चाक्षुषत्वं योजकमुपगन्तुं शक्यमिति चेन्मैवम्, यो हि कण्ठताल्वाद्यभिघातजन्मा ध्वनिर्वर्णमभिव्यनक्ति न्यः प्रतिध्वनिरपि मूलध्वनिवदेव वर्णात्मकप्रतिशब्दमभिव्यनक्तीति न तत्रापि कश्चित्प्र विम्बोऽतो नाचाक्षुषस्य कुत्रचित् कस्य चित्प्रतिविम्ब इति सिद्धे चाक्षुषत्वस्य तत्र प्रयोजकत्वे- चाक्षुषेऽज्ञानेऽचाक्षुषस्य ब्रह्मणः प्रतिविम्बासम्भवात् अत्यन्तसन्निकृष्टयोर्विम्बप्रतिविम्बभावस्य प्यदर्शनाच घटावच्छिन्नाकाशवत् अन्तःकरणावच्छिन्नं चैतन्यं जीवः मायावच्छिन्नं चै- यमीश्वर इत्ययमेव पक्षः साधीयनिति ।

नन्वेतत्पक्षेऽन्तःकरणस्य गमनागमनाभ्यां तदवच्छिन्नस्यचैतन्यस्य भिन्नतया क्वचित्प्रदेशे त्वं क्वचित्प्रदेशे भोक्तृत्वमिति कृतहानिरकृताभ्यागमश्च प्रसज्येयातामिति चेन्न, यदेव हि न्तःकरणं कर्तृत्वस्यावच्छेदकं तदेव प्रदेशान्तरगतमपि भोक्तृत्वस्यापीति यत्कर्मकर्तृत्वा- यदन्तःकरणतादात्म्याभिमानात् यत्कर्मकर्तृत्वं, तत्फलसुखदुःखाद्याश्रयतदन्तःकरणतादा- भिमानादेव भोक्तृत्वमपीति न कृतहान्यादिप्रसक्तिः प्रदेशभेदस्याकिञ्चित्करत्वात्, निरवय- य चैतन्यस्य वास्तविकप्रदेशाभावेनावच्छेदकक्कृतस्यैव प्रदेशभेदस्य वाच्यतयाऽवच्छेदकैक्ये शभेदस्याप्यभावाच्च । प्रतिविम्बवादे तु अन्तःकरणस्य गमनागमनाभ्यां प्रतिविम्बस्य न्नतया कृतहान्यादयो दोषा अनिवार्या एव, यत्र हि यदन्तःकरणं गच्छेत् तत्प्रदेशस्थमेव न्यं तत्र प्रतिविम्बेत, अतिविप्रकृष्टस्य पूर्वदेशस्थचैतन्यस्य तत्र प्रतिविम्बासम्भवात्, नहि सन्निहिते दर्पणेऽसन्निहितो मैत्रः प्रतिविम्बते ऽतोऽवच्छेदकरूपोपाधेरैक्येऽपि देशभेदेन तस्यैव प्रतिविम्बस्य वाच्यतया एकस्य कर्तृत्वमपरस्य भोक्तृत्वमिति कृतहान्यादयो दोषाः शक्या निवर्त्तयितुम् ।

नन्वविद्याप्रतिबिम्बस्य जीवत्वेऽभ्युपगम्यमानेऽविद्याया ऐक्यात्तदुपाधिकस्य भवत्यैक्यमित्येकजीववादः समर्थ्यते, तथासति व्यापकतया जीवस्य गत्यभावेन प्रतिबि नालम्भ्यते अन्तःकरणं च सर्वतः प्रसृतस्य सौरालोकस्य दर्पणादिरिव विशेषाभि स्थानमिति न कृतहान्यादिदोषप्रसंगावसर इति चेत्तर्हि, एवमेवावच्छिन्नत्वपक्षेऽप्यव च्छिन्नं चैतन्यं जीव इत्यभ्युपगन्तुं शक्यत एव । जीवभेदबोधकश्रुतिभाष्यादेर्भेदवत्त स्मत्पक्षेऽपि सुखदुःखाद्यभिव्यञ्जकान्तःकरणभेदप्रयुक्तोपाधिकभेदपरत्वेनोपपादनसम्भवे पत्तिविरहात् । वस्तुत एकजीववादे पूर्वप्रदर्शितो गरीयान् दोषो जागरूक एव ता प्रतिबिम्बस्यावास्तविकत्वेन जीवब्रह्माभेदबोधकश्रुत्यादीनां निरालम्बनतादोषोऽपि प्रसज्यत एवेति न प्रतिबिम्बवादः समीचीनः । ननु प्रतिबिम्बो नाम न कि रिच्यतेऽपि तु बिम्ब एवोपाधिप्रतिहतैर्नायनैरश्मिभिः परावर्त्तमानैर्बिम्बग्राहिभिर्दे देशस्थतयाऽभिमुखतया च गृह्यमाणः प्रतिबिम्बसंज्ञाम्प्रतिपद्यमानो नोक्तदोषप्रसक्तिं लिङ्गते इति चेत् एवं हि सति साक्षात्सूर्यावलोकिनामिव प्रतिबिम्बसूर्यावलोकिनाम नयोः पीडनं, साक्षाच्चन्द्रावलोकिनामिव प्रतिबिम्बचन्द्रावलोकिनामपि नयनयोराप्या स्यात् । तस्मात् प्रतिबिम्बस्य ग्राहकेण यन्त्रेण प्रतिबिम्बग्रहणानुपपत्तेश्च बिम्बप्रति भेदस्यैवोपगन्तव्यतया पूर्वोक्तदोषस्यावारणादिति ।

अथावच्छेदवादे यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा, एक एव तु भूतात्मा भूते भूते व्यवस्थितः। बहुधा चैव दृश्यते जलचन्द्रवत्, रूपं रूपं प्रतिरूपो बभूव इत्यादिश्रुतिः, अत एवोप कादिवदित्यादि सूत्रं च विरुणद्धीति चेत् ॥

अत्र वदन्ति तत्रत्यभाष्यपर्यालोचनया प्रतिबिम्बपक्षनिराकरणमेव प्रतीयते अम्बुवदग्रहणात्तु न तथात्वम् । ( ३–२–१९ ) इति सूत्रभाष्ये सूर्यादिभ्यो हि पृथग्भूतं विप्रकृष्टदेशं मूर्त्तं जलं गृह्यतेऽतस्तत्र युक्तः प्रतिबिम्बोदयः न त्वात्मा मू दिना प्रतिबिम्बपक्षमाक्षिप्य तदग्रिमे वृद्धिह्रासभाक्त्वमिति सूत्रभाष्ये जलगतं हि सूर्य जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते इत्येवं जल धर्मि भवति नतु परमार्थतः सूर्यस्य तथात्वमस्ति एवं परमार्थतोऽविकृतमेकरूपमपि देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्, इत्यादिना प्रतिबिम्बस्य वर्णयता भगवता भाष्यकृता प्रतिबिम्बभिन्न एव जीवोऽभ्युपगतः नहि दृष्टान्तदार्ष्टान्ति त्यैक्यम् सादृश्यस्य भेदघटितत्वात् । एवं यथाह्ययं ज्योतिरात्मा विवस्वान्, रूपं रूपं बभूव, दृश्यते जलचन्द्रवदित्यादिश्रुतिष्वपि प्रतिबिम्बस्य दृष्टान्तत्वमेव वर्णि प्रतिबिम्बरूपो जीवः श्रुतिभाष्याद्यनुमतः । अत एव बृहदारण्यकभाष्येऽपि स एष इ ग्रेभ्य इति वाक्यव्याख्यायाम् सर्वगतस्य परमात्मनः कः प्रवेशो नाम इत्युपक्रम्य प्र प्रवेश इति पक्षं विप्रकृष्टदेशाद्यभावेन दूषयित्वा देहादावात्मन उपलभ्यमानत्वं प्र पाषाणादाविव देहादावात्मनोऽनुपलब्धिरस्ति, इति प्रवेशपदार्थमन्यथा व्याख्याय

पक्षप्रतिक्षेपः स्थिरीकृतः । अत एव च तत्सृष्ट्वा तदेवानुप्राविशदिति तैत्तिरीयकवाक्यभाष्ये-ऽपि, जलसूर्यकादिवत्प्रवेशः स्यादिति चेन्न अपरिच्छिन्नत्वादमूर्त्तत्वाच्च परिच्छिन्नस्य मूर्त्तस्यान्य स्यान्यत्र सूर्यादेः प्रतिबिम्बः स्यात् नत्वात्मनोऽमूर्त्तत्वात् व्यापकत्वात् तद्विप्रकृष्टप्रतिबिम्बाधारवस्त्वभावाच्च न प्रतिबिम्बरूपः प्रवेशो युक्त, इति प्रतिबिम्बभावेन प्रवेशो निराकृतः । आभास एव चेत्यादिसूत्रमपि प्रतिबिम्बसमानार्थकत्वेन न विरोधमावहतीति न प्रतिबिम्बपक्षः सूत्रभाष्याद्यनुमतोऽपि तु भाष्यविरुद्धो युक्तिविरुद्धो ब्रह्माभेदबोधकश्रुत्यादिविरुद्धश्चेति ॥

अत एव भगवता गौड़पादाचार्येणापि, मनःस्थं मन मध्यस्थं मध्यस्थं मनवर्जितम्, ( ३२–१–अ ) इत्युत्तरगीतापद्यं विवृण्वता मनःस्थमित्यस्य मनोऽवच्छिन्नमित्येव व्याख्यानमकारि न तु मनः प्रतिबिम्बितमिति । अत एव च मण्डनमिश्रेणापि मैथिलकुलललामेन ब्रह्मसिद्धौ 'अव्यतिरेकेऽपि ब्रह्मणो जीवानां प्रतिबिम्बवद्विद्याऽविद्या व्याख्याता' इति प्रतिबिम्बसादृश्यमभिदधता जीवानां प्रतिबिम्बरूपताऽनभ्युपगतैव । अत एव च पद्मपादाचार्येणापि पञ्चपादिकायाम्, जीवः पुनः प्रतिबिम्बकल्पः सर्वेषां नः प्रत्यक्षश्चिद्रूपो नान्तःकरणजाड्येनास्कन्दित इति प्रतिबिम्बकल्पतामाकलयता न प्रतिबिम्बरूपता स्वीकृता जीवानाम् । अतएवाचार्येणापि, विप्रतिषेधाच्चासमञ्जसम्, ( १०–२–२ ) इति सूत्रभामत्याम् 'अविद्योपधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्प' इति, वक्ष्यते नतु प्रतिबिम्ब इति, अतएवच 'अवस्थितेरिति, सूत्रभामत्याम् तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते, इति वक्ष्यते । सर्वगतस्य च परमात्मनोऽन्तःकरणप्रदेशेऽवस्थानावश्यकत्वादन्तःकरणादिनाऽवच्छेदोऽवश्यम्भावीत्यवच्छेदपक्ष एव समीचीनोऽनुमतश्च परीक्षकैरिति । यदि तु यथा मुखादेर्दर्पणादौ प्रतिबिम्बो न तथा ब्रह्मणोऽविद्यादौ येन प्रतिबिम्बरूपत्वे जीवस्य बिम्बाद् ब्रह्मणोऽतिरिक्तत्वेन मिथ्यात्वापत्त्या ऽभेदबोधकश्रुतिरुपरुध्येत, किन्तु यथा दर्पणाद्युपाधिसान्निध्ये तद्गतत्वतदीयमालिन्यादयो धर्मा मुखादावध्यस्यन्ते एवमेवान्तःकरणाश्रिता धर्मा ब्रह्मण्यध्यस्यन्ते, तावतैव चात्र बिम्बप्रतिबिम्बभाव इत्युपचर्यते न तु वस्तुतस्तथेत्युच्यते, तदा भवताऽपि प्रतिबिम्बसाम्यम्प्रतिपादयता न प्रतिबिम्बरूपताऽभ्युपगतेत्यवच्छेदपक्ष एव द्राविड़प्राणायामेनादृत इति । घटसम्वृतमाकाशमित्याद्याः श्रुतयोऽपि जीवस्य घटसंवृताकाशतुल्यत्वाभिधायिन्योऽवच्छेदपक्षमेवैनं समर्थयन्ति, नहि घटादावाकाशः प्रतिबिम्बतेऽपित्ववच्छिद्यते इति ॥ इत्थं च श्रुतिस्मृतिभाष्यभामत्यादिषु यदि क्वचित्प्रतिबिम्बशब्दो जीवे प्रयुज्यमानो दृश्येत तदा स प्रतिबिम्बसदृशार्थकतया नेतव्य इति भवति सर्वमवदातम् ॥

यदुक्तं सिद्धान्तलेशसंग्रहे अप्पयदीक्षितेन चतुर्थपरिच्छेदे मुक्तस्वरूपविचारे 'अवच्छेदपक्ष इव मुक्तस्य पुनर्बन्धापत्तेः' अतएवानेकजीववादेऽवच्छेदपक्षो नाद्रियते यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः, इति तदेतदसङ्गतम् असङ्गस्य हि चैतन्यस्य सदैव मुक्तस्य न वस्तुतो बन्धोऽस्ति किन्त्वविद्याकल्पितान्तःकरणादिसम्बन्ध एव नतु प्रदेशभेदस्तत्र नियामकः कामादेरन्तःकरणधर्मत्वस्यैव श्रुतिस्मृतिभाष्यादिषूद्घोषितत्वात् । तथा च तदन्तःकरणावच्छिन्नचैतन्यस्य तस्य जीवस्य यदन्तःकरणं तस्य तत्कारणाविद्यागाध

निवृत्तौ मोक्षे सति कथं पुनर्बन्धः प्रसज्येत । अवशिष्यमाणतत्तदन्तःकरणावच्छे
काल्पनिको बन्धस्तस्य तस्य तत्तदन्तःकरणनिवृत्तिं विनोच्छेत्तुमशक्यतया तेषां विद्य
तत्तदवच्छेदेनास्त्येव काल्पनिको बन्धोऽतोऽत्रच्छेदपक्षे प्रदेशभेदोऽकिंचित्कर एव प्रत्यु
विम्बपक्षे एवं यत्र यत्रान्तःकरणं गच्छेत् तद्देशस्थमेव चैतन्यं तत्र प्रतिविम्बेतेति एकस्
त्वमपरस्य भोक्तृत्वं प्रसज्यते इत्युक्तमधस्तात् स्वयमपि चाप्पयदीक्षितेन समन्वयसूत्रे
वच्छेदपक्षे एव निर्भरस्य दर्शितत्वाच्चेति ॥ १ ॥

### भामती

**निश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ।**
**स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥**

### प्रकाशः

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रव्युत्पादितमुपादानत्वं
त्तत्वं चाधिष्ठानत्वकर्तृत्वाभ्यां ब्रह्मणोऽभिधाय, तस्य वेदकर्तृतया सर्वज्ञ
भिदधाति निःश्वसितमिति तदुक्तं श्रुतौ 'अस्य महतोभूतस्य निःश्वसि
ऋग्वेदोयजुर्वेदः सामवेदोऽथर्ववेद" इत्यादिः निःश्वासवत् प्रयत्नाधिक्यानपे
निःश्वसितमित्युक्तम् । अत्र वेदानां निःश्वसितत्वोक्त्या तेषां नित्यत्वं प्रत्याख्य
तदेतत्तृतीयसूत्रे व्यक्ती भविष्यति । वीक्षणमात्रेण सृष्टत्वाद् भूतानि वी
हिरण्यगर्भद्वारोत्पाद्यं चराचरं वीक्षणाधिकप्रयत्नापेक्षणात् स्मितम् इ
पूर्वापेक्षयोत्तरत्र कश्चिदधिकःप्रयत्नोऽपेक्षित इत्यवगमाय विशेषोक्तिः ॥ २

### विकासः

निःश्वसितमिति यथा पुरुषस्य निःश्वासो न कर्तव्यत्वादिज्ञानमपेक्षते
ज्ञानविरहिणि पुरुषे तदभावप्रसंगात् तथा वाक्यरचनां प्रति वाक्यार्थज्ञानविषय
यत्प्रमाणजन्यं ज्ञानं तन्न वेदः स्वोत्पत्तावपेक्षत इत्यर्थः । अयमाशयः यद्यपि तदैक्षत
श्रुत्या परमेश्वरस्येक्षणं कार्यमात्रं प्रति हेतुत्वेन प्रमितमिति कार्ये वेदेऽपि तत्कारण
प्रतिषिध्यते ऽपि तु वाक्यरचनां प्रति वाक्यार्थज्ञानत्वेन यत्कारणत्वं तदेव प्रति
तस्मिन्नेव हि वाक्ये वाक्यार्थज्ञानं कारणं यदानुपूर्वीमद्वाक्यं वक्ता पूर्वं नानुभू
सर्वत्र । अन्यथा वाक्यार्थानभिज्ञः श्रुतपूर्वं वाक्यं नोच्चारयेत्, दृश्यते च मैत्रेणोच्चारि
बालकस्तदर्थानभिज्ञोऽप्युच्चारयतीति । एवं चागृहीतार्थकश्रुतपूर्वानुपूर्वीकवाक्योच्चारण
गृहीतार्थकश्रुतपूर्वानुपूर्वीकवाक्योच्चारणं प्रत्यपि, तादृशानुपूर्व्यवच्छिन्नज्ञानमेव कारण
विद्यमानमप्यर्थज्ञानमन्यथासिद्धमेव । अगृहीतानुपूर्वीकवाक्यरचनां प्रति तु अगत्या येन
प्रमाणेन जनितं वाक्यार्थसमानविषयकं ज्ञानं हेतुरास्थीयते सति चैवं सर्वज्ञे परमेश्वरे वा
नस्य सत्त्वेऽपि तस्यान्यथासिद्धतया वेदम्प्रत्यकारणत्वात् प्रवाहानादेर्वेदराशेः पूर्वसर्गेऽपि
त्वेन तदानुपूर्वीज्ञानस्येश्वरे एतत्कल्पीयवेदोत्पत्तेः प्रागपि सत्त्वात् वेदस्योक्तवाक्यार्थज्ञान

वच्छेदकानाक्रान्तत्वान्निःश्वसिततुल्यत्वमव्याहतमित्याहुरस्मद् गुरुचरणाः गीतामधुसूदन्या गूढ़ार्थतत्त्वालोके ॥ २ ॥

भामती

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि ।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥
मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान् नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥
ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे ।
ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥
नत्वा विशुद्धविज्ञानं शङ्करं करुणाकरम् ।
भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥
आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

प्रकाशः

वेदशिवयोः साम्यं प्रतिपादयन् स्तवीति षड्भिरिति सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे । इत्युक्तानीमानीश्वरस्य षडङ्गानि दशाव्ययानि च । वेदस्य च षडङ्गानि शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषं चेति अव्ययानि तु प्रादीनि ॥ ३ ॥ तिलकप्रियः स्वामी तिलकस्वामी शाकपार्थिवादित्वात्समासः । आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा । महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् । इति स्मृतिप्रसिद्धमेषां सर्वसिद्धिविधायित्वम् ॥ ४ ॥ वेधसे विधात्रे ईश्वराय जीवब्रह्मणोरभेदात् सर्वज्ञायेति वा वेधाः स्रष्टु स्यात्सर्वज्ञे नरि विष्णुविरिञ्च्योरिति नैघण्टुकोक्तेः । हरेर्ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन् स तथा, तदुक्तं पराशरेण 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं सुबहुधा कुरुते जगतो हितम्' इति ॥५॥ प्रसन्नगम्भीरमिति तत्त्वं च समधिगतशाब्दन्यायतत्त्वानां श्रवणमात्रेणार्थप्रत्यायकत्वे सति तात्पर्यविषयीभूतनिगूढार्थकत्वम् ॥ ६ ॥ स्वस्मिन् भाष्यव्याख्यातृत्वप्रयुक्तमौद्धत्यं परैः शंक्यमानं शिष्टाग्रणीराचार्यो भामतीकृत्परिहरति आचार्येति अवधूतमपवित्रं रथ्योदकं यथा गङ्गाप्रवाहपातः पवित्रयति तस्यापि

गङ्गाजलत्वमापाद्य परमसुखसाधनतां सम्पादयति तथा आचार्यस्य भग शंकरस्य कृतिर्ग्रन्थसन्निवेशोऽस्मदादीनां वाणीं पवित्रयति स्वीयत्वमा मोक्षसाधनज्ञानसाधनतां सम्पादयतीत्यर्थः ॥ ७ ॥

इह खलु साधनचतुष्टयसम्पत्तिसमनन्तरं ब्रह्मणो जिज्ञास्यत्वमुपदि नैसर्गिककारुण्यवता मुमुक्षुजनानुद्दिधीर्षता श्रौतार्थेऽप्रामाण्यशंकाकलङ्कपङ्क क्षालयता भगवता सूत्रकृता यदिदं संदिग्धत्वमनुदितानस्तमितानातिशयिता ताखण्डानन्दाद्वितीयचैतन्यैकरसमोक्षरूपं प्रयोजनं च समसूचि तदेतदन्त णादिरूपस्य बन्धस्याखिलस्याध्यासिकत्व एव सम्पद्यते इत्याकलय्य प्रथमम समेव वर्णयाम्बभूव भगवान् भाष्यकारो नैसर्गिकोऽयं लोकव्यवहार इत्य सन्दर्भेण तस्यैतस्य भाष्यस्याभिप्रायमाविःकरोति अथेति ।

अत्र यद्यपि मङ्गलश्लोके एव संक्षेपतोर्विषयप्रयोजने दर्शयन् मै कुलसुधाब्धिसमुद्भूतचारुविचारचातुरीकुमुदिनीकलाकरः परीक्षणवि चक्रचूडामणिस्तत्रभवानाचार्यो वाचस्पतिमिश्रो ऽन्वर्थनामधेयः कृत्स्नस्य प्रसन्नगम्भीरस्य भाष्यस्याभिप्रायं प्राचीकटत् तथापीदानीं ग्रन्थग्रन्थिं वि यितुं प्रतिग्रन्थं व्याख्यानमारभ्यते इत्यावेदयितुमथशब्दं प्रायुंक्त ॥

## विकासः

अथेति एहाध्येतॄणां सौकर्याय पूर्वोत्तरपक्षभाष्यभामत्योः संक्षेपतस्तात्पर्यमा तथाहि शरीरादिभिन्न आत्मैव ब्रह्म तच्चाहमिति प्रतीतेर्विषयत्वेन प्राणभृन्मात्रस्य प्र वेति नास्य विचारविषयत्वम्, तत्प्रतीतिश्चाविद्यया सदैवानुवर्त्तमाना न तामतिस्निग्धां मिवापनोदयितुमुत्सहतेऽविरोधात् तथाचेयम्प्रतीतिर्ब्रह्मसम्बद्धाऽपि खण्डकवधूरिव न ष्यति मोक्षमिति व्यर्थोऽयमुद्यमः । नचोपनिषद्भ्योऽवगम्यमानं यदखण्डानन्दाद्वितीयम तन्नाहमिति प्रत्यक्षं क्षमते गोचरयितुमतस्तदेवेह विचार्यमिति साम्प्रतम्, अध्यय पादितप्रयोजनवदर्थबोधकत्वेऽपि वेदान्तानां प्रत्यक्षेण प्रबलाहम्प्रत्ययेन बाधिततयाऽवि स्वार्थकानां तेषां कर्तृदेवतादिप्राशस्त्यरूपोपचरितार्थत्वे ऽपि वायुर्वै क्षेपिष्ठा देवं वत् प्रयोजनवदर्थपर्यवसानोपपत्तेरहमिति प्रतीतिविषयादतिरिक्तस्यात्मनोऽसिद्धेः । निषत्प्रतिपादिते आत्मनि अन्तःकरणतद्धर्माध्यासः सम्भवति द्विविधो हि भवद्भ्यो उरीक्रियते, सोपाधिको निरुपाधिकश्चेति आद्योऽपि द्विविधः प्रतिबिम्बाध्यासो धर्माध्या तत्र प्रथम उपाधिबिम्बयोः पृथग्देशं सान्निध्यं चाक्षुषत्वं चापेक्षते यथाऽरुणः स्फ दर्पणे मे मुखमित्यादिः, प्रकृते च चैतन्यान्तःकरणयोर्न पृथग्देशत्वादिकमस्तीति सोपाधिकोऽध्यासः नवा धर्माध्यासरूपो द्वितीयोऽपि स हि धर्मिणोर्बिम्बप्रतिबिम्बभाव भवति यथा दर्पणस्थमुखमालिन्यादेर्ग्रीवास्थे मुखे ऽध्यासः, न चात्र धर्मिणोश्चैतन्यान्त योरस्ति बिम्बप्रतिबिम्बभावो येनैकस्य धर्मो ऽपरत्र प्रतिभासेत नापि निरुपाधिकोऽध्य स हि अध्यस्यमानाधिष्ठानयोः भेदाग्रहे सादृश्यग्रहादौ च विद्यमाने सति भवति,

सर्पादिविभ्रमे तथा दर्शनात् नचात्रास्ति भेदाग्रहो नवा सादृश्यग्रहो विरुद्धस्वभावत्वात् तस्मादयुक्तोऽयमध्यास इति ।

अत्रेदं प्रतिविधानम् यादृशमात्मतत्त्वं निरस्तसमस्तोपाधिकमानन्दैकरसमद्वितीयं श्रुतिस्मृतिपुराणादिषु प्रसिद्धं तादृशं चेदहमनुभवे भासेत स्यात्तदा विचारवैयर्थ्यम् नत्वेवम् अपितु तद्विपरीतमशनायाद्युपतेमपेताद्वितीयानन्दत्वादिरूपं नानाविधानर्थव्रातोपप्लुतमेव भासते नातस्तन्निर्णयफलकविचारवैयर्थ्यशंकाकलङ्कपङ्कावकाशलेशोऽपि निर्विकल्परूपा हि श्रुत्यादिप्रतिपादितात्मतत्त्वावगतिरविद्यानिवर्त्तिका, सा चेदिदानीं स्यात्तदा न मनागपि संसारोऽवस्थातुं शक्येत नत्वियमिदानीमस्तीति नानुपपत्तिः ।

अथ दोषसंस्कारसादृश्यज्ञानानामध्यासकारणानामभावान्नाध्यासः सम्भवति, न च सादृश्यज्ञानस्य व्यतिरेकेऽपि अरुणः स्फटिक इत्यध्यासदर्शनेन न तस्य सर्वत्राध्यासकारणत्वमिति वाच्यम्, तस्य सोपाधिकभ्रमत्वेन सादृश्यानपेक्षणात् लौहित्याश्रयीभूतस्य सन्निहितस्य जपाकुसुमस्योपाधेः स्फटिके लौहित्याध्यासनिमित्तत्वात् । नन्वेवं कर्तृत्वाद्याश्रयं सन्निहितमन्तःकरणमुपाधिमाश्रित्य कर्तृत्वादेरात्मन्यध्यासः शक्यः समर्थयितुमिति चेदस्तु तर्हि कथंचिदेष सादृश्यज्ञानाजन्यः सोपाधिकः कर्तृत्वादिधर्माध्यासः, निरुपाधिकस्तु अहंकारेन्द्रियशरीरादेर्धर्मिणोऽध्यासो नात्मनि सम्भवति सादृश्यविरहादिति चेन्नैवम् पदार्थत्वादिधर्मेणेहापि सादृश्यस्य सम्भवात्, आत्मनि निर्गुणे वस्तुतः कोऽपि धर्मो नास्तीति चेन्माभूद् वास्तविकः कोऽपि धर्मः, काल्पनिकस्तु स्यात्तेनैव धर्मेण सादृश्ये को विरोधः । वस्तुतो निरुपाधिकभ्रमं प्रत्यपि न सादृश्यज्ञानं कारणं शरीरादिनिष्ठाया ब्राह्मणत्वादिजातेरात्मनि सादृश्याभावेऽपि अध्यासस्य सर्वैरेवाभ्युपेतत्वात् । पीतः शंख इत्यादौ सादृश्यविरहेऽप्यध्यासदर्शनाच्च । एवं सति सर्वत्रानुगतो दोषोऽधिष्ठानाज्ञानं संस्कारश्च कारणं, तच्चास्त्येव प्रकृते, अत एवाज्ञानस्य दोषतयोपादानतया च कारणत्वमुपगच्छन्तः पूर्वपूर्वानुभवजन्यसंस्कारस्य च सर्वत्राध्यासात्पूर्वं स्थितिमभिदधन्तोऽध्याससामग्र्यनुपपत्तिं परिहरन्तः सिद्धान्तिनो विजयन्ते

किंचोक्तयुक्तिविरोधादध्यासस्यायुक्तत्वमवस्तुत्वं चापाद्यते किं वा तस्य स्वरूपमेवापलप्यते भवता, नाद्यः, जगतामनिर्वचनीयत्ववादिभिरेकस्यैव ब्रह्मणः पारमार्थिकत्वमुरीकुर्वद्भिरस्माभिरध्यासस्यावस्तुत्वयुक्तिविरुद्धत्वयोरङ्गीकृतत्वेनेष्टापत्तेः । भवत्येव हि अवस्तुभूतो युक्तिविरुद्धश्च रज्ज्वादौ सर्पाद्यध्यासोऽत एवापारमार्थिकतामेव जगतां मन्यामहे । स्वरूपतो विरुद्धस्वभावत्वेऽपि अयमात्मा, इदमन्तःकरणमिति पार्थक्येनाग्रहाद्विवेकाग्रहाद्योनोऽध्यासो रज्जुसर्पादिवदत्रापि संभवत्येवेति न काचिदनुपपत्तिरिति । नन्वस्तु तर्हि द्वितीय एव पक्षोऽध्यासस्य स्वरूपमेवापलप्यते इति चेन्न दोषादीनां कारणानां सत्त्वेन तज्जन्यस्य कार्यस्याध्यासस्य रज्जुसर्पवदपलपितुमशक्यत्वात् । यदपि प्रत्यक्षविरोधेन वेदान्तानामुपचरितार्थत्वमाशंकितं तदपि तात्पर्यनिर्णायकोपक्रमोपसंहारादिलिङ्गोपेतागमापेक्षया प्रत्यक्षे एव दौर्बल्यस्य व्यवस्थापयिष्यमाणत्वान्निरस्तमिति ॥

## भामती

( अथ यदसन्दिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरो, यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्ता वा, तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः। तथाहि बृहत्त्वाद्बृंहणत्वाद्वाऽऽत्मैव ब्रह्मेति गीयते, स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेनाहमिति असन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम्, नहि जातु कश्चिदत्र संदिग्धेऽहं वा नाहं वेति, नच विपर्यस्यति नाहमेवे[illegible]

### प्रकाशः

आत्मनो जिज्ञास्यत्ववादिनं प्रति देहादिभिन्न एवात्मा कर्तृत्वभोक्तृत्वाद्याश्रयो ऽहमनुभवेऽवभासतेऽतो नायं सन्दिग्धो नाप्येतदनुभवः सहानुवर्त्तमानस्य विविधबन्धवर्गस्य निवर्त्तनरूपमपवर्गमर्जयितुमर्हत्यविरोधादतो जिज्ञास्यत्वव्यापकयोः संदिग्धत्वसप्रयोजनत्वयोरभावाज्जिज्ञासैव तावच्छक्योत्याविर्भवितुमित्याशंकमानो निगूढाभिसन्धिः पूर्वपक्षी प्रचण्डपाखण्डखण्डलचार्वाकादि तं खण्डयन्नेव प्रत्यवतिष्ठते यदसंदिग्धमित्यादिना। तथाहि असन्दिग्धमप्रयोजनं च इदम् जिज्ञास्यत्वेनाभिमतं ब्रह्म, इति शब्दोऽत्र इत्यर्थकः यत एवंविधं ब्रह्म अतो जिज्ञास्यत्वव्यापकयोः सन्दिग्धत्वसप्रयोजनत्वयोर्विरुद्धे ये असन्दिग्धत्वनिःप्रयोजनत्वे ते एव ब्रह्मणि विज्ञायेते अतश्च व्यापकाभावाद्व्याप्यस्य जिज्ञास्यत्वस्याभावो ब्रह्मणि सिध्यतीत्यर्थः। तथाच ब्रह्म अजिज्ञास्यम् असन्दिग्धत्वात् समनस्केन्द्रियसन्निकृष्टस्फीतालोकमध्यवर्त्तिकुम्भवत् एवमप्रयोजनत्वात् काकदन्तवदिति चात्र प्रयोगौ भवतः, तत्राद्यहेतुं विवृणोति तथाहीत्यादिना, बृहत्त्वात् व्यापकत्वात्, ननु व्यापकत्वं गगनादावप्यस्तीत्यत आह न केवलं [illegible] बृंहणत्वादिति देहादिपरिणामयितृत्वात् आत्मा [illegible] पवन्नमश्नंश्च देहादीन् वर्धयतीति [illegible] शरीरेन्द्रियमनोबुद्धिविषयेभ्यो विविक्तो मुमुक्षुभिर्जिज्ञास्य आत्मा स [illegible] न जिज्ञासास्पदमित्याह स चेति आत्मा च, असन्दिग्धाविपर्यस्तत्वे स्फुटयति नहीति।

### प्रकाशः

अह [illegible] ष्यतानिरूपितकोटिताख्य विषयता [illegible] तदभावयोर्वा कोटित्वसम्भवेऽपि तन्निरूपिता

च्छिन्नविशेष्यताकत्वाभावात् कथमस्य संशयत्वम्, कथं वा नाहमित्यस्य विपर्यासत्वं किंचिद्धर्मावच्छिन्नविशेष्यताकत्वविरहादिति चेन्न, इदंत्वावच्छिन्नविशेष्यताकस्य संशयस्य विपर्यासस्य च विवक्षितत्वात् । तथाच अयमहं नवा, अयं नाहमित्याकारक संशयविपर्यासौ प्रति अयमहमस्मीत्याकारकस्येदन्त्वावच्छिन्नविशेष्यताकस्य अहं सुखीत्यादिसुखत्वाद्यवच्छिन्नप्रकारतानिरूपिताहंत्वावच्छिन्नविशेष्यताकस्य अहमित्याकारकस्य निरवच्छिन्नविशेष्यताकस्य वा ज्ञानस्य प्रतिबन्धकत्वमनुभवबलादास्थेयमिति न काचिदनुपपत्तिरिति । प्रादर्शि चैतदस्मद्गुरुभिर्गीतामधुसूदनीयगूढार्थतत्त्वालोके ॥

## भामती

न चाहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनात् देहालम्बनोऽयमहङ्कार इति साम्प्रतम् । तदालम्बनत्वे हि योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीति प्रतिसन्धानं न भवेत् ।

### प्रकाशः

ननु स्यादप्यात्मनोऽजिज्ञास्यत्वं यद्यहमनुभवे देहादिसंघातविविक्ततयाऽऽत्मतत्त्वमवभासेत, नत्वेतदस्ति अपित्वात्मैक्याध्यस्तदेहादिसंघात एव तत्रावभासते इति कुतोऽस्य जिज्ञासानास्पदत्वमिति ब्रुवन्तं सिद्धान्तिनं प्रत्याह नचेति अथवा देहात्मवादिनं चार्वाकं प्रत्याह नचेति । देहे। आत्मैक्याध्यस्तदेहेत्यर्थः, यथाश्रुते जिज्ञास्यत्ववादिना केवलदेहेऽहमिति प्रतीतिविषयत्वस्यानङ्गीकारेण तत्प्रत्याख्यानमसङ्गतं स्यात्, चार्वाकमतनिराकरणपरत्वे तु यथाश्रुतमेव सम्यगिति बोध्यम् । देहधर्मसामानाधिकरण्यदर्शनात् देहधर्मस्य स्थूलत्वादेरहंत्वाश्रयवृत्तित्वदर्शनात् । देहालम्बनोऽयमिति चार्वाकाः खलु देहमेवात्मानं प्रत्यक्षमेव च प्रमाणं भूतचतुष्टयमेव च तत्त्वम् अङ्गनाऽऽलिङ्गनजन्यं सुखमेव पुमर्थं मरणमेव चापवर्गमुपगच्छन्तः परलोकं तत्साधनमदृष्टं तत्साधनं च लौकिकवैदिककर्मकलापमपलपन्तः गौरोऽहं मनुष्योऽहं जानामि जातो देवदत्तः मृतो देवदत्त इत्यादिप्रतीतिं प्रमाणयन्तः चैतन्यविशिष्टः कायः पुरुषः, काम एवैकः पुरुषार्थः, मरणमेव चापवर्गः, इति बार्हस्पत्यानि सूत्राणि प्रमाणत्वेनोपन्यस्यन्तः,

यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

इत्यादिकमभिदधन्तः केवलचूर्णादौ रागाद्यभावेऽपि चूर्णपर्णादिसमुदाये ताम्बूले रागोत्पत्तिदृष्टान्तयन्तः केवलस्य पृथिव्यादेर्ज्ञानाद्यभावेऽपि मिलितस्य

शरीरमात्रमापन्नस्य तस्य ज्ञानादिमत्त्वेऽविरोध इति प्रलपन्ति, तेषु च केचि मृते शरीरे ज्ञानाद्यभावात् मरणपर्यन्तं विद्यमानानीन्द्रियाण्येवात्मेत्युदीरयन्ति अन्ये तु अन्येन्द्रियविनाशेऽपि स्मरणस्य जायमानतया मन एवात्मेत्युद्घोषयन्ति, तन्मतं दूषयन् अहम्प्रत्ययविषयस्यात्मनो देहाद्भेदग्रहात्राधा इत्युपपादयति तदालम्बनत्वे हीति ।

## विकासः

तदालम्बनत्वे हीति इदमन्यत्रावधेयम् पृथिव्यादिचतुर्विधास्तत्त्वः संघीभूत शरीरभावमधिगताश्चैतन्यमापद्यमाना आत्मेति व्यपदिश्यंते इति चार्वाक मतं सर्वथैव नोपपद्य तथाहि चतुर्णां भूतानां मेलकस्य कस्य चिच्चेतनस्याभावेन मेलनासंभवात् नचादृष्टं तन्मेल संभवति प्रत्यक्षमात्रं प्रमाणं वदता भवता तस्याभिधातुमशक्यत्वात् तदुपगमे तत्साधन स्वर्गादेः तन्नियामकस्येश्वरस्य च भवतोऽभ्युपगमप्रसङ्गः

अपि च पशुमनुष्यादिनानाविधशरीरवैचित्र्यमदृष्टं विनाऽनुपपद्यमानं जन्मान्तरजन्यमदृ कल्पयति, कथं च एकमातापितृजन्ययोर्युग्मबालकयोर्वैलक्षण्यमदृष्टं विनोपपद्यते, नच स्वभा विशेषो नियामकः प्रत्यक्षमात्रप्रमाणमुपगच्छता भवताऽप्रत्यक्षस्य स्वभावविशेषस्य स्वीकर्तुं शक्यत्वात् स्वभावेऽपि नित्यत्वानित्यत्वविकल्पप्रसङ्गाच्च नित्यत्वे च कार्यमात्रस्य नित्यत्वापत्ति अनित्यत्वे तदुत्पादकस्य कस्य चिद् वक्तव्यत्वापत्तिश्च तस्मान्न किञ्चिदेतत्, दूषयिष्यति चाचार्य देहात्मवादमेनमन्यत्रापि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रीयं स्वप्नदशाऽवगत्यबाधेन भाष्यवाक्यं व्याचक्षाणः 'यदा खल्वयं चैत्रस्तारक्षवीं व्यात्तविकटदंष्ट्राकरालाननामुत्तम्भवभ्र न्मस्तकावचुम्बिलाङ्गूलामतिरोषणारुणध्वस्तविशालवृत्तलोचनां रोमाञ्चसंचयोत्फुल्लभीष स्फटिकाचलभित्तिप्रतिबिम्बितामभ्यमित्राणां तनुमास्थाय स्वप्ने प्रतिबुद्धो मानुषीमात्मनस पश्यति तदोभयदेहानुगतमात्मानं निश्चिनोति ननु देहमात्रम् तन्मात्रत्वे देहद्वयप्रतिसंधानाभा प्रसङ्गात्, इत्यादिना। अत्र तारक्षवीम् व्याघ्रमयीम् तनुं स्वप्ने आस्थायेत्यन्वयः । तनुं विशिन व्यात्तेति व्यात्तम् विवृतम् विकटदंष्ट्राभिः करालम् भयानकमाननं यस्याः सा तथोक्ता उत्त उन्नम्य धृतम् वंभ्रमत् अत्यर्थं भ्रमत् मस्तकावचुम्बि लाङ्गूलं यस्याः सा तथोक्ता अतिरो अतिक्रोधेनारुणे ध्वस्ते इतस्ततः संचलिते, ध्वंसु गतौ चेति धातोः ध्वस्तपदव्युत्पत्तेः, वि वृत्ते गोलायमाने लोचने यस्याः सा तथोक्ता रोमाञ्चस्य संचयेन समूहेन उत्फुल्लाम् अत भीषणाम्, एतादृशीं स्फटिकगिरौ प्रतिबिम्बिताम् अभ्यमित्रीणाम् साम्मुख्येन शत्रुम समुपस्थिताम् तनुम् स्वशरीरम् आस्थाय ज्ञात्वेत्यर्थः ॥ यः स्वप्ने स्वकीयमति व्याघ्रशरीरमभिमन्वानः स्फटिके च तस्य प्रतिबिम्बं पश्यन्नेव प्रतिबुद्धो मानुषीमात्मन पश्यति अनुसंदधाति चोभयशरीरावच्छेदेनात्मानम् तदिदं न शरीरस्यात्मत्वे संभवति, हि व्याघ्रो वा स्यान्मनुष्यो वा, तस्मान्न शरीरमात्मेति भावः ।

एतेन देहेन्द्रियाद्यतिरिक्तो देहेन सहोत्पद्यते विनश्यति चेत्ययमपि पक्षः प्रतिक्षिप्तः युग्मस्थले वैलक्षण्यस्य जन्मान्तरजन्यमदृष्टं विनाऽनुपपत्तेः तस्मान्नित्य एवात्माभ्युपेयः । अत एव बालकस्य स्तन्यपानादौ प्रवृत्तिरुपपद्यते भवन्मते जन्मान्तराभावेन तदवच्छेदेनानुभूताया इष्टसाधनतायाः स्मरणस्याभिधानुमशक्यत्वात् । नच जन्मान्तरानुभूतस्यान्यस्य कुतो न स्मरणमिति वाच्यम् तत्स्मारकस्य फलबलकल्प्यस्योद्बोधकस्याभावात् इह तु नानाविधसुखदुःखसाधनस्य जीवनादृष्टस्यैवोद्बोधकत्वात् इदानीमपि कदाचित्क्वचिज्जायमानस्य जातिस्मरस्य जन्मान्तरानुभूतविषयकस्मरणोदयाच्च ।

अत एव न प्राण एवात्मा तस्यापि शरीरेण सहोत्पद्यमानत्वेनेष्टसाधनतास्मरणाभावात् बालकस्य स्तन्यपाने प्रवृत्त्यभावप्रसङ्गात् । नापि मन एवात्मा तस्याणुत्वेन सुखदुःखादिप्रत्यक्षं न स्यात् प्रत्यक्षे महत्त्वस्य कारणत्वात् सकलदेहव्यापिशैत्याद्यनुपलब्धिप्रसङ्गाच्च, किंच तन्नित्यमनित्यं वा नाद्यः अनित्यसुखदुःखादिधर्माश्रयत्वेन नित्यत्वासंभवात् समवायस्य निराकरिष्यमाणत्वेन धर्मधर्मिणोस्तादात्म्यस्यैवोपगन्तव्यत्वात्, न द्वितीयः तदुत्पादकस्य वक्तव्यत्वापातात् दर्शितायाः स्तन्यपानप्रवृत्तेरनुपपत्तेश्च ।

नापि प्रत्यक्षमात्रं प्रमाणं शक्यतेऽभ्युपगन्तुम् तथा सति चक्षुः श्रोत्रादेरतीन्द्रियस्यासत्त्वप्रसङ्गात् ज्वरादिनाऽनुमेयस्य रोगस्याचिकित्स्यत्वापत्तेः पूर्वोक्तयुक्तिभिरनिच्छताऽपि भवता शरीरभिन्नस्यैवात्मनः स्वीकार्यतया परदेहादौ तदप्रत्यक्षेण तदसत्त्वापत्त्या परानुद्बोधयिषया चिख्यापयिषा भवतो वाग्व्यवहारविलोपापत्तेश्च । वक्ष्यति चाचार्यः, व्यतिरेकस्तद्भावाभावित्वादिति सूत्रभामत्याम्, नास्तिकस्तु पशोरपि पशुः, इति गवादयो हि पशवः प्रत्यक्षमनुमानं शब्दं च प्रमाणमुपगच्छन्ति अतस्ते तृणादिकं पश्यन्तीत्यस्माभिर्न शक्यतेऽपह्नोतुम् दण्डादिमन्तमसन्तं सम्मुखमायान्तं भयानकं जिघांसन्तं पुमांसमुपलभ्य अयं मां हन्तुमुद्यतोऽस्तीत्यनुमिमानाः पशवः पलायन्ते इत्यपि न शक्यते निषेद्धुम् एवं प्रियं शब्दं शृण्वन्तः समीपमुपसर्पन्ति अप्रियं चाकर्ण्य द्रुतं पलायन्ते इत्यपि न शक्यतेऽन्यथयितुम् तस्मात्सिद्धमेतत् पशवोऽपि त्रीणि प्रमाणान्युपगच्छन्तीति ।

अपि च तेऽपि परस्परं जात्यादिभेदमुरीकुर्वन्ति अत एव महिषोच्छिष्टमण्डतृणादिकं गावो नाभ्यवहरन्ति यथाकामं च न यां कामपि कामयन्ते नहि वृषभा महिषीमुपभुञ्जाना दृश्यन्ते. तस्मात्पशोरपि सकाशात्स्वस्य पशुतामापादयन्तः यथेष्टमाचरन्तः स्त्रीषु स्वैरिणीत्वमारचयन्तः काममेव पुमर्थमिच्छन्तः स्वस्मिन् प्रचण्डपाखण्डमण्डलाखण्डलताभाश्रयन्तः मन्दाक्षममन्दमपनयन्तः श्रौतस्मार्तकर्मनिकरनिगडं परिमोचयन्तः परम्पराऽऽयातलोकमर्यादां समूलमुन्मूलयन्त एव चार्वाकमतमेतदधिकर्तुमर्हन्ति नान्ये केचन विवेचका इति ।

## भामती

नहि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं,

यथा कुसुमेभ्यः सूत्रम् । तथा च बालादिशरीरेषु व्यावर्तमानेष्वपि प्र स्परमहङ्कारास्पदमनुवर्तमानं तेभ्यो भिद्यते । अपि च स्वप्नान्ते दि शरीरभेदमास्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरी मात्मानं पश्यन् 'नाहं देवो मनुष्य एवेति' देवशरीरे बाध्यमानेऽप्यहमा स्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । अपि च योगव्याघ्रः शरी भेदेऽपि आत्मानमभिन्नमनुभवतीति नाहङ्कारालम्बनं देहः । अत ए नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवंतर्हि स्पृश मीत्यहमालम्बनस्य प्रत्यभिज्ञानात् ।

### प्रकाशः

बालस्थविरदेहयोः परिमाणभेदान्नैक्यमित्याह नहीति । मनागपि ईषदपि गन्धः सम्बन्धः अवयवोपचयापचयाभ्यां स्थूलकृशादि परिमाणभे भवतीति सर्वेषां नः प्रत्यक्षं, तत्रावयवोपचयस्थले आगतैरवयवैरनुप्रविष्टैः पू सिद्धावयव्यारम्भकस्यावयवसंयोगस्यासमवायिकारणस्य नाशात्तैः पूर्वैः श्चावयवैरवयव्यन्तरमारभ्यते अपचयस्थले च अवयवविश्लेषेण समवायि रणसंयोगनाशात् पूर्वावयविविनाशेऽवशिष्टैरवयवैरारभ्यमाणः खण्डावय सम्पद्यते इत्याहुस्तार्किकाः ॥ वेदान्तिनस्तु उपचयस्थले नवागताः सं श्लिष्टाः पूर्वावस्थिताश्चावयवाः सम्भूय शरीरात्मना परिणमन्ते, अपचय स्थले च अवशिष्टा एवावयवाः शरीरात्मना परिणमन्ते, सिद्धान्ते असम स्यारम्भवादस्य च खण्डितत्वेन समवायिकारणत्वादेरुपपादनासम्भवा प्राहुः ॥ एतदहमास्पदमेतच्छरीराद्भिन्नम् एतच्छरीरशून्यकालवृत्तित्वा रीरसम्बन्धिपटादिवदित्यनुमाने सामान्यव्याप्तिं दर्शयति यथेति ष्विति ।*परिमाणभेदेऽपि देहैक्यं मन्वानं प्रत्याह अपिच स्वप्नान्ते जाग्रत्यप्याह अपिचेति मनुष्यः सन् योगबलेन कृत्रिमं व्याघ्रशरीरं मानो योगव्याघ्रः, अत्यन्तमसम्भावितमपि हि योगबलेन सम्पाद्य दितं योगिनां योगशास्त्रविदामन्येषां च विपश्चितां केषांचित् नाहं देह इति अत्रापि देहपदमात्मैक्याध्यस्तदेहपरम् चार्वाकमतखण्ड यथाश्रुतमेव सम्यक् ॥ इदमपि च विचारसहाते शरीरस्यैवात्मत्वे नाशेन शरीरनाशे चैतन्यानुपलब्धिः प्रसज्येत, अपि च शरीरस्यावयवाः भूताश्चैतन्यमापद्यन्ते प्रत्येकम्वा सर्वेऽवयवाश्चेतनाः आद्य पूर्वोक्त एव दोषः देशनाशे हि संघातस्याभावात्कुत्र चैतन्यं स्यात् । द्वितीये बहूनां चेतनानामै

वाक्यत्वाभावात् शरीरमुन्मथ्येतेत्यभ्यर्णमार्हतपरीक्षायां वक्ष्यमाणं दूषण मेतन्मतमप्याक्रामति, किंच शरीरस्यात्मत्वे जातमात्रस्याननुभूतमरणधर्मकस्य मातुरङ्कात्प्रस्खलतः कम्पमानस्य मातुरुरःपटमतिगाढं पाणिग्राहमवलम्बमानस्य बालकस्य कम्पविशेषानुमितो मरणत्रासः कथं स्यादिति योगसूत्रभाष्यं विवृण्वद्भिरेभिरेवाचार्यवाचस्पतिमिश्रैरुक्तमप्रतिसमाधानं दूषणमपि शरीरात्मत्वं तिरस्कुर्वन्जन्मान्तरं साधयदात्मनोनित्यत्वं स्थापयतीति । **नेन्द्रियाण्यपीति** अत्रेन्द्रियपदमात्मैक्याध्यस्तेन्द्रियपरम् केवलस्येन्द्रियस्य ब्रह्मणो जिज्ञास्यत्वाभिधायिना सिद्धान्तिनाऽप्यहमिति प्रतीतिविषयत्वानङ्गीकारेणायुक्तोऽयमुपालम्भः स्यात् इन्द्रियस्यैवात्मत्वमभिमन्यमानां चार्वाकैकदेशिनां मतनिराकरणपरत्वे तु यथाश्रुतमेव सम्यक् । **अस्य** अहंकारस्य । **इन्द्रियभेदेऽपीति** अहंप्रत्ययस्येन्द्रियविषयकत्वेऽहमर्थगोचरैक्यप्रत्यभिज्ञानस्यैकेन्द्रियविषयकत्वमभिधातव्यं न च तत्संभवति त्वक्चक्षुषोर्भेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीति प्रत्यभिज्ञानात् तस्मादिन्द्रियातिरिक्त आत्माऽहम्प्रत्ययवेद्य आस्थेय इति भावः । नन्वात्मैक्याध्यस्तबुद्धिर्मनो वाऽहम्प्रत्ययालम्बनतामालम्बतामत आह **बुद्धिमनसोश्चेति** तत्र बुद्धिर्निश्चयात्मकवृत्तिमदन्तःकरणं मनश्च संशयात्मकवृत्तिमदन्तःकरणम् । अथवा बुद्धिरेव सुखदुःखाद्याश्रयो नात्मा तदाश्रय इति ब्रुवन्तं सांख्यम्प्रति, मन एवात्मेत्याचक्षाणं चार्वाकविशेषं प्रति चाह

## भामती

विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः । कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यभेदे कथञ्चि'न्मञ्चाः क्रोशन्ती'त्यादिवदौपचारिका इति युक्तमुत्पश्यामः । तस्मादिदङ्कारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् ।

## प्रकाशः

**बुद्धिमनसोश्चेति** अनालम्बनत्वे हेतुगर्भविशेषणमाह **करणयोरिति** अहम्मनसा संदेह्मि, बुद्ध्या निश्चिनोमीति प्रत्ययसिद्धं यतस्तयोः संशयनिश्चयौ प्रति करणत्वं नातस्तयोरहंकरोमीति कर्तृप्रत्ययव्यवहारयोर्विषयत्वमित्यर्थः । इदमत्र पूर्वपक्षिणामाकूतम् भवेदपि बुद्ध्यादेरहं प्रत्ययालम्बनत्वं यदि तत्र कर्तृत्वादयो धर्माः प्रतिभासेरन् आत्मधर्मतयैव तु ते प्रतिभासन्ते चेतनोऽहंकरोमीतिप्रत्ययात्, मनसोऽणुत्वेन तद्धर्मत्वे सुखादीनां प्रत्यक्षानुपपत्तिश्च, एवं च बुद्धिमनःशब्दाभ्यामन्तरं करणमेवोपस्थापयतः तेन च करणविशेषेणात्मा संशयनिश्चयौ जनयति

सुखादिकं चानुभवतीत्यतो नाहंप्रत्ययालम्बनत्वं तयोरिति । प्रतिभासप्रख्या प्रतिभासः प्रतीतिः प्रख्यानं शब्दप्रयोगरूपो व्यवहारः । नन्वेवं कृशोऽहमन्धो मित्यादिव्यवहारः शरीरेन्द्रियादितादात्म्याध्यासमन्तरेण कथमुपपद्येत यत कृशोऽहमिति परम्परासम्बन्धनिबन्धनो गंगातीरादौ गंगाव्यवहारवद्‍ ऽयं व्यवहारो नत्वध्यासाधीनः, परम्परासम्बन्धनिबन्धनत्वे च न भ्रान्तत्वं सम्बन्धेन कृशत्वादेरात्मनि वस्तुत एव सत्त्वादितिभावः । द्वितीयं हेतुमुपपाद

## शांकरभाष्यम्

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमः प्र शवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां त र्माणामपि सुतरामितरेतरभावानुपपत्तिः ।

### भामती

अप्रयोजनत्वाच्च । तथाहि संसारनिवृत्तिरपवर्ग इह प्रयोजनं ि क्षितम् । संसारश्चात्मयाथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन ि र्तनीयः । स चेदयमनादिरनादिनाऽऽत्मयाथात्म्यज्ञानेन सहानुवर्तते ऽस्य निवृत्तिरविरोधात् । कुतश्चात्मयाथात्म्याननुभवो ? नह्यहमित्यनु दन्यदात्मयाथात्म्यज्ञानमस्ति, न चाहमिति सर्वजनीनस्फुटतरानुभ थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्य मनुभवविरोधात् । नह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मा भवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्पश्याम इत्याशय शङ्क्य परिहरति—युष्मदस्मत्प्रत्ययगोचरयोरिति ।

अत्र च युष्मदस्मदित्यादिमिथ्याभवितुं युक्तमित्यन्तः शङ्काग्र तथापीत्यादिपरिहारग्रन्थः । तथापीत्यभिसम्बन्धाच्छङ्कायां यद्यपीति तव्यम् । इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युस्मद्ग्रहणमत्यन्तभे लक्षणार्थम् । यथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः, 'एते मिमे वयमास्महे' इति वहुलं प्रयोगदर्शनादिति । चित्स्वभाव आ विषयी, जड़स्वभावा बुद्धीन्द्रियदेह विषयाः । एते हि चिदात्मानं वि

न्वन्ति अवबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् । परस्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्तस्तमःप्रकाशवदिति । नहि जातु कश्चित्समुदाचरद्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति । तदिदमुक्तमितरेतरभावानुपपत्ताविति । इतरेतरभाव इतरेतरत्वं तादात्म्यमिति यावत् तस्यानुपपत्ताविति ।

**प्रकाशः**

अप्रयोजनत्वाच्चेति। संसारेति कर्तृत्वभोक्तृत्वप्रमातृत्वादिः संसारः । अननुभवनिमित्तः अज्ञानोपादानकः । ननूर्णनिपङ्कयोऽवगम्यमानमात्मतत्त्वमन्यदेवेत्यत आह नचाहमिति । मिथ्येति भवितुं युक्तमिति भाष्येऽभिधानान युष्मदस्मदित्यादे राद्धान्तग्रन्थत्वशंका स्यात्तां निराकर्तुं विभजते अत्र चेति । ननु शिष्टाग्रणीर्भाष्यकारः कथम्मङ्गलमत्यजदिति चेन्न अननुसंधाय ब्रह्मणः स्वरूपं तस्मिन्नध्यासानुपपत्तेः प्रदर्शनस्याशक्यतया तत्प्रदर्शकेन युष्मदस्मदित्यादिना संदर्भेणैव ब्रह्मणः स्मरणरूपस्य मङ्गलस्य कृतत्वात्, प्रत्यपादि चैवम भगवत्पादशिष्यैः पद्मपादाचार्यैरपि पञ्चपादिकायाम् ।

ननु किमित्यादावेवाध्यासः सूत्राक्षरासम्बद्धोऽभाषि भाष्यकृतेति चेन्न, वास्तविकधर्मनिवृत्तेर्धर्मिनिवृत्तिनान्तरीयकतयाऽशेषदुःखादिसम्बन्धबन्धप्रयोजकस्याहंकारादितादात्म्यस्यात्मनि वास्तविकत्वे हि ब्रह्मसाक्षात्कारादपि न भवेत्तन्निवृत्तिरिति व्यर्थेयं ब्रह्मजिज्ञासा स्यात्, तन्मूलस्यास्य शास्त्रस्य प्रणयनमपि निरर्थकं स्यादतो जिज्ञासोपपत्तये शास्त्रस्यार्थवत्त्वाय च सर्वतोऽभ्यर्हितमादावेवाध्यासनिरूपणमित्याकलय्य तथैव कुर्वन कथं नियोगमर्हति भगवान भाष्यकार इति स्वयमेवावधारय ।

ननु पुरुषान्तरवाचिनं युष्मच्छब्दं कथमचेतने देहादौ प्रायुङ्क्तेत्यत आह इदमस्मादिति । बहुलं प्रयोगदर्शनादिति यद्यपीदंकारप्रयोगोऽपि प्रत्याययत्येव भेदमेवं त्वंकारप्रयोगोऽपि, गौणश्चायमहमिति वत् त्वमहमित्यपि प्रयुज्यत एवेति न कश्चिद्विशेषः, तथापि विरलत्वात्त्वमहमिति प्रयोगो न भेदं तिरोधातुमर्हति अय महमिमे वयमित्यादिप्रयोगस्तु बहुलत्वाद्भेदं तिरो दधात्येवेति विशेषः। दृश्यते च लाक्षणिकत्वाविशेषेऽपि प्रयोगबाहुल्याबाहुल्यकृते निरूढसाम्प्रतिकते इति, यथा शुक्लः पट इत्यादौ गुणिनि शुक्लादिशब्दो निरूढः राजा पुरुष इत्यादौ राजसम्बन्धिनि राजन् शब्दः साम्प्रतिक इतिभावः । विषयविषयिणोरित्यनेनापि भेदं भाष्यकृत्स्फुटी चकारेत्याह चित्स्वभाव इति । बुद्धीन्द्रियेति बुद्धिः अन्तःकरणम् । स्वोक्तं विसिन्वन्तीतिपदं व्याचष्टे अवबध्नन्तीति निर-

वयवस्य वस्तुनो वस्तुनो बन्धनासंभवादाह स्वेन रूपेणेति । ननु [illegible] यदिदं तमः प्रकाशवद्विरुद्धस्वभावत्वमुक्तं तत्किं निवर्त्यनिवर्तकभावः [illegible] नवस्थायित्वं वा नोभयमपि सम्भवति विषयविषयिणोरुभयोरेकदा स[illegible] दित्याशंकां निराचिकीर्षुः परस्परविलक्षणत्वमेव विरुद्धस्वभावत्वमुक्तं[illegible] परस्परानध्यासहेतावत्यन्तवैलक्षण्ये इति पदद्वयमेतत्समानाधिकर[illegible] दृष्टान्त इति अत्र शरीरमात्मतादात्म्यप्रतीतिविषयत्वाभाववत् तद्विल[illegible] स्वभावत्वात्, एवमात्मा शरीरतादात्म्याभाववान् तद्विलक्षणस्वभावत्[illegible] तमः प्रकाशवदिति प्रयोगौ प्रत्येतव्यौ । एतेन परस्परतादात्म्यस्य प्र[illegible] तन्निषेधानुपपत्तिः अप्रसिद्धौ चाप्रसिद्धविशेषणतेत्याशंका निराकृता ।

ननु सत्यपि तमःप्रकाशयोरत्यन्तवैलक्षण्ये उलूकादीनां तमस[illegible] त्म्यस्य प्रकाशेऽध्यासदर्शनात् स्वरूपतोऽत्यन्तवैलक्षण्यस्य तादात्म्याध्यास[illegible] रोधित्वेऽपि ज्ञायमानस्य तस्य तज्ज्ञानस्य वा तद्विरोधित्वं नानुपपन्नं [illegible] क्षणीयं चेह तदेवाशयेनाह नहि जात्वित्यादि समुदाचरन्त्यौ [illegible] भासमाने वृत्तौ वर्तमाने यस्ते तथा अयम्प्रकाशः इदं तम इति स्फुटतया [illegible] भासमाने इत्यर्थः तथा च परस्परात्मत्वेनावभासमानत्वलक्षणवैलक्ष[illegible] विरहादुलूकादीनामस्तु तमःप्रकाशयोः परस्परतादात्म्यविभ्रमः इह तु भेदेन [illegible] माणयोरात्मानात्मनोः स संभवतीति भावः । इतरेतरभावानुपपत्ताविति भा[illegible] इतरेतरभावप्रतीत्यनुपपत्तिरित्यर्थः अध्यस्यते इह शरीरात्मनोरित[illegible] भावस्य वास्तविकत्वे सिद्धान्तिन[illegible] स्वीकारात् तद्विघटने सिद्धसाध[illegible] सिद्धान्ती ब्रूयादतः तादात्म्य[illegible] भाव एव साधनम् [illegible] इत्यभिप्रा[illegible] परस्परात्मतया प्रतिपत्तुमर्ह[illegible] इतरेतरभाव इत्यर्थकत्वे एकस्या[illegible] संसर्गो लभ्यते तथा च समानु[illegible] र्शने सिद्धान्तीति इष्टापत्तिमेवोद[illegible] सिद्धान्तिना हि शरीरेन्द्रियादेर[illegible] तादात्म्याध्यास एवोपेयते न तु सं[illegible] दिसंसर्गाध्यासोऽत आह इतरेतर[illegible] लभ्यमिति ।

[illegible]म्

**इत्यतोऽस्मत्प्रत्यय[illegible] विषयिणि चिदात्मके यु[illegible] ष्मत्प्रत्ययगोचरस्य विषय[illegible] णां चाध्यासः तद्विपर्ययेण विषयिणस्तद्धर्माणां च [illegible] ऽध्यासो मिथ्येति भवि[illegible] युक्तम्**

### भामती

स्यादेतत् । मा भूद्धर्मिणोः परस्परभावस्तद्धर्माणां तु जाड्यचैतन्य-नित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति, दृश्यते हि धर्मिणो-र्विवेकग्रहणेऽपि तद्धर्माणामध्यासो, यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम इत्यत उक्तम्—तद्धर्माणामपीति । इतरेतरत्र धर्मिणि धर्माणां भावो विनिमयस्तस्यानुपपत्तिः । अयमभिसन्धिः रूपवद्धि द्रव्य-मतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति । यथाहुः—"शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता" इति । तदिह पारि-शेष्याद्विषयविषयिणोरन्योन्यात्मसम्भेदेनैव तद्धर्माणामपि परस्परसम्भेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसं-भिन्नौ; असम्भिन्नाः सुतरां तयोर्धर्माः, स्वाश्रयाभ्यां व्यवधानेन दूरापेत-त्वात्, तदिदमुक्तं सुतरामिति ।

तद्विपर्ययेणेति । विषयविपर्ययेणेत्यर्थः । मिथ्याशब्दोऽपह्नववचनः । एतदुक्तं भवति ।

### प्रकाशः

शंकते स्यादेतदिति एतत् वक्ष्यमाणदूषणं स्यात् भवत्वित्यर्थः । परस्पर-भावः तादात्म्यप्रतीतिरूपोऽध्यासः । दृश्यते हीति ननु स्फटिके जपाकुसुमलौहित्या-ध्यासेऽपि जपाकुसुमे स्फटिकत्वस्यानध्यासात् धर्माणामितरेतराध्यासेऽयुक्तोऽयं दृष्टान्त इति चेन्न यथा धर्मिणोः स्फटिकजपाकुसुमयोर्भेदेन गृह्यमाणयोरपि एकस्य धर्मोऽपरत्राध्यस्यते तथा प्रकृतेऽपि एकस्य धर्मोऽपरत्राध्यस्यतामित्यस्य विवक्षित-त्वात् । विनिमयो व्यत्यासः । धर्माणामितरेतरभावानुपपत्तिरेवोक्ता भाष्ये, न तु तत्र कश्चिद्धेतुरुक्तोऽतोभाष्याशयं स्फोरयति अयमभिसंधिरिति धर्माध्या-सेऽपि धर्मिणोरन्यतरस्यान्यत्र प्रतिबिम्बः धर्मिणोः परस्परतादात्म्याध्यासो वा हेतुस्तत्राद्यं तावद्विघटयति रूपवद्धीति चाक्षुषस्यैव चाक्षुषे एव प्रतिबिम्ब इति विवेचितमस्माभिः पुरस्ताद्विकासेऽतो नेह प्रतन्यते । विषयच्छायाम् विषय-

प्रतिबिम्बम्, एवं विषयोऽपि न नीरूपस्य चिदात्मनः प्रतिबिम्बं ग्रहीतुमर्हत्यूहनीयम् । नीरूपस्य न प्रतिबिम्ब इत्यत्र परसम्मतिमाह यथाऽऽकाशे तयोर्धर्मिणोः परस्परतादात्म्याध्यासरूपो द्वितीयोऽपि धर्माध्यासहेतुरत्र नास्तीति विशदीकरोति तदिहेति । अन्योन्यात्मकस्य भेदेनैव परस्परतादात्म्याध्यासः किमतोऽत आह तौ चेदिति असम्भिन्नशब्दोऽत्र तादात्म्याध्यासानापन्नार्थः दूरापेतत्वात् सर्वथैवाध्यासानुत्पादकत्वात् । मिथ्याशब्दोऽनिर्वचनीयवचनोऽपह्नववचनश्च तत्र कः प्रकृतेऽत आह मिथ्याशब्द इति । पूर्वपक्षस्यातिसारांशमभिदधाति एतदुक्तं भवतीति ।

भामती

अध्यासो भेदाग्रहेण व्याप्तस्तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति । मिथ्येति भवितुं युक्तं यद्यपि तथापीति योजना इदमत्राकूतम् भवेदेतदेवं यद्यहमित्यनात्मतत्त्वं प्रकाशेत, नत्वेतदस्ति तथाहि—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते ।

प्रकाशः

इदमत्रेति श्रुतिस्मृत्यादिषु यादृशमात्मतत्त्वमभिहितं तादृशं चेदहं भवेऽवभासेत स्यात्तदोक्तरीत्याऽध्यासासम्भवो नत्वेतदस्तीति योजना ॥

विकासः

समस्तोपाध्यनवच्छिन्नेतिअयमाशयः अतोऽन्यदार्तम्, यत्र हि द्वैतमिव सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिः प्रपञ्चस्य विनाशित्वमनृतत्वं च ख्यापयन्ती ब्रह्मणः सत्यत्वं बोधयन्ती आत्मस्वरूपादन्यस्य त्रिकालाबाध्यस्वरूपं सत्यत्वं व्यवच्छिन्नं तिरोहितं त्रय्यन्तचिन्तकानाम्, उपपद्यते चैतत् अनुदिनमनुभूयमाना हि जागरिकोऽयमुच्चावचः प्रपंचः स्वप्ने नानुवर्तते यो हि जागरे स्वस्मिन् समस्तवसुधाधिपत्यमनुभवति स्वप्ने दरिद्रतामनुभवन्नास्ते यश्च जागरे दरिद्रतामनुभवति स एव च स्वप्ने स्वाराज्यमुपहितकरणग्रामोऽपि चक्षुषा पश्यामीत्यादिकं तदानीं प्रत्येतीति नाविदितं केषां चिदपि तामविपश्चितां च, स्वाप्निकोऽपच पदार्थसार्थः सुषुप्तावन्तः करणस्य जाग्रत्स्वप्नयोर्भेदजनकस्याविद्यायां लये नानुवर्तते आत्मा तु सर्वदैकरूप एवावतिष्ठमानस्तदानीमप्यनुवर्तते कथमन्यथा सुप्तोत्थितः पूर्वारब्धकार्यमपूर्णमनुसंदधानस्तूर्णमेव तत्पूरणाय प्रयतेत तदनन्तरेऽपीत्यात्मैव सत्यस्त्रिकालाबाध्यो व्यवतिष्ठत इति ।

अथास्त्वात्मनः सत्यत्वमेवंविधस्य तस्य ज्ञानरूपत्वं तु न सम्भवति तथात्वे तस्य धात्वर्थतया ज्ञानमुत्पन्नं विनष्टमित्यादिप्रतीत्या च ज्ञानस्योत्पत्तिनाशवत्त्वेनात्मनोऽप्युत्पत्तिविनाशौ स्याताम् घटमहं जानामीत्याश्रयार्थिभावप्रत्ययोऽपि नोपपद्येत, अत एव च नानन्तत्वमपि देशकालवस्तुपरिच्छेदत्रयशून्यो हि पदार्थोऽनन्तो भवितुमर्हति न जात्वपि क्व चिद्वर्त्तमानाः क्व चिच्चावर्तमानाः पूर्वोत्तरकालावधिमन्तो घटपटादयः परस्परं व्यावर्त्तमाना अनन्तत्वं प्रतिपद्यन्ते तद्वदात्माऽपीति कुतोऽस्य ज्ञानत्वमनन्तत्वं च स्यादितिचेन्न घटज्ञानं पटज्ञानमित्यादिरूपेण हि जाग्रति स्वप्ने चानुभूयमानानां तत्तद्विषयाणां व्यवच्छेदेऽपि तेषां सर्वेषामवभासकं ज्ञानमनुवर्तत एवेति समेषां नः प्रत्यक्षम्, एवं सुषुप्तावन्तः करणस्य लयात्तद्वृत्तिविरहेऽपि अज्ञानतद्वृत्त्योरवभासकं स्वरूपचैतन्यमनुवर्त्तत एव कथमन्यथा सुप्तोत्थितः सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यनुसन्दधीत तस्मादेकमेव ज्ञानमास्थेयम् उत्पत्तिविनाशौ च तदभिव्यञ्जिका वृत्तिरेवाप्नोति न ज्ञानम् नहि वृत्तिश्चैतन्यरूपा वस्तुप्रकाशिका भवितुमर्हति जडपरिणामत्वेन जडत्वात् सा हि अन्तःकरणपरिणामरूपा सर्वतः प्रसृतस्य चैतन्यस्याभिव्यञ्जिका तदाश्रयान्तःकरणतादात्म्याध्यासादेव जानामीत्याश्रयाश्रयिभावप्रतीतिरुपपद्यते तदुत्पत्तिविनाशाभ्यामेव च तदभिव्यङ्ग्ये चैतन्ये उत्पत्तिविनाशौ प्रतीयेते ध्वन्यवच्छेदेन शब्दस्येव सैव च ज्ञानभिन्नत्वेन व्यवतिष्ठमाना वृत्तिर्धात्वर्थो नतु स्वरूपतश्चैतन्यं येन तस्योत्पत्तिविनाशौ प्रसज्येते अत एव नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादिति श्रुतिरपि संगच्छते, अत्र च द्रष्टुर्दृष्टेरिति समानाधिकरणे षष्ठ्यौ हेतुगर्भं विशेषणम् यतो द्रष्टैव दृष्टिरतो द्रष्टुर्विपरिलोपाभावात् दृष्टेरपि विपरिलोपो न भवतीत्यर्थः स चायमात्मा एक एव सन्न विद्यापरिकल्पितं समस्तभेदव्यवहारमुपपादयतीत्युपरिष्टाद्व्यवस्थापयिष्यते तस्य च सद्रूपत्वेन तस्मिन्नध्यस्तानां सर्वेषां सदात्मकत्वेन प्रतीयमानानां न ततो भिन्नत्वं तद्व्यतिरेकेण सत्त्वरूपमतः सिद्धमात्मनः सत्यत्वं ज्ञानत्वमनन्तरूपमपरिच्छिन्नत्वं चेति, तदेतदेव एकमेवाद्वितीयमिति श्रुतिः पदत्रयेण देशतः कालतो वस्तुतः परिच्छिन्नत्वराहित्यमभिदधाति तत्राद्यं परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वं द्वितीयं ध्वंसप्रतियोगित्वं तृतीयमन्योन्याभावप्रतियोगित्वम् न च तज्ज्ञापिकायाः प्रमाणरूपायाः श्रुतेरपि सत्त्वस्यावश्यकतया तदन्योन्याभावप्रतियोगित्वस्य वस्तुपरिच्छेदस्यैव ब्रह्मणि सत्त्वमिति वाच्यम् एकमेवाद्वितीयम् सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि शास्त्रं हि स्वप्रमेयसिद्ध्यर्थं स्वस्यापि कल्पितत्वमापादयति, नह्यन्यथा स्वस्य प्रामाण्यं सम्भवतीत्यतः श्रुतेरपि काल्पनिक्येव सत्ता न पारमार्थिकी कल्पितस्य च वस्तुनो नाकल्पितवस्तुपरिच्छेदकत्वं सम्भवति, एवं तस्यैवानन्दस्य मात्रामन्यानि भूतान्युपजीवन्ति, यदेव आकाश आनन्दो न स्यादित्यादि श्रुतिप्रसिद्धमानन्द रूपत्वमपि तस्य बोध्यम् ।

ननु कथं तदाऽहंदुःखीत्यादिप्रतीतिरिति चेच्छृणु जागरणे स्वप्ने च स्वरूपसुखावरकेणाज्ञानेन तत्कार्येण च प्रतिक्षणमुपचीयमाननानाविधशोकमोहादिजनकतत्तद्विषयविषयकवृत्तिमता ऽहंकारेणावृततया सततं तदीयदुःखादिकमेदायमनुभवन् स्वरूपानन्दोऽप्रकाशमान इवास्ते सुषुप्तौ लीयमाने चान्तःकरणे तस्यैकमज्ञानमेवावरणमवशिष्यते तदानीं च

यथा पटेनाऽऽवृतः प्रदीपो यदा काष्ठादिनाऽप्याव्रियते न तदा भवति पूर्ववद्वस्तुप्रकाशः, ऽपगमे च काष्ठाद्यावरणे पटमात्रावरणकः प्रदीपो भासयति पटमन्यच्च किंचिद्वस्तु एवमेवायं सुषुप्तावहंकाराद्यपगमेऽज्ञानमात्रावरकोऽज्ञानं तद्वृत्ति स्वरूपसुखं च भासयति इति [illegible]विदितं केषामपि, भवति हि सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति [illegible] सार्वजनीना अत एव तत्तद्भेदभानप्रयोजकस्याहंकारस्य तदानीमज्ञानरूपे कारणे लयात् आ क्षुद्रजन्तून् आ च सम्राजं समानमेव सुखं सुषुप्तौ भासते भेदश्च न प्रतीयते तस्य कल्पितत्वेन तत्कल्पनामूलस्याहंकारस्य तदानीमभावादिति, इममेवार्थं [illegible] प्रवृत्ते श्रुतिः सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति, तद्यथा हिरण्य निधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः, इत्यादिः । ननु सुषुप्तावहंकारस्य लये [illegible] तद्[illegible] सुप्तोत्थितः सुखमहमस्वाप्समिति परामृशन् कथंकारमहंकारमनुसंदधीत [illegible] [illegible] परामृश्यते नान्यया वृत्येति सार्वजनीनम् इत्थं च सुषुप्तौ विलीनस्याहं वृत्ति[illegible] प्रबोधे पुनः प्रादुर्भवतस्तस्य याऽहमाकारा वृत्तिः प्रबोधकालीना [illegible] सुषुप्ति[illegible] [illegible]मात्मानं गोचरयन्ती सुखमहमस्वाप्समिति परामर्शमुपपादयति ग्रामका[illegible] अहं ग्राममगममित्यनुसंधानवत्, तदुक्तं नैष्कर्म्यसिद्धौ ॥

[illegible] अतिसूक्ष्मत्वादात्[illegible]नुशीलनात् । अतो वृत्तीर्विहायान्याह्यहं वृत्त्योपलक्ष्यते ॥ इति त[illegible]सिद्धं निरस्तसमस्तधर्मकमेकमद्वितीयमेवात्मतत्त्वमन्यत्सर्वं कल्पितमिति ॥

[illegible] ब्रह्मणो निर्धर्मिकत्वे ब्रह्म बाध्यं सत्त्वानधिकरणत्वादित्यनुमानं ब्रह्म बाध[illegible] इति चेन्न अत्र हि यदि अखिलप्रपंचाधिष्ठानस्य ब्रह्मणः पक्षत्वं तदा आश्रय[illegible]: तस्य बाध्यत्वेऽधिष्ठानत्वासम्भवात् निर्धर्मके हेतोरप्यभावेन स्व सिद्धि[illegible] ब्रह्म न बाध्यं सदात्मकत्वादिति सत्प्रतिपक्षश्च एवमन्यान्यपि परोद्भावितानि मान[illegible] [illegible]नीयानीति ॥

### प्रकाशः

[illegible] सन्तु नाम श्रुतिस्मृत्यादिवाक्यानि तादृशानि तानि पुनरनुभवा[illegible] [illegible]रितार्थानीति ब्रूम इत्याशंकां निराचष्टे नचेति । एतानि श्रुति त्यादि[illegible] अभिदधति शत्रन्तस्य बहुवचनान्तं रूपमेतत् । अयमभिप्रायः

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये,

इत्युक्तेषु तात्पर्यनिर्णायकलिङ्गेषु यत्राल्पतममप्यस्ति लिङ्गं [illegible] तत्रापि तात्पर्यस्य निर्णयः, किमु वक्तव्यं यत्रैतानि सर्वाण्येवाविकलानि सन्ति तत्र तन्निर्णये । सन्ति च वेदान्तवाक्यानि निरस्तसमस्तोपाधि[illegible] [illegible]नन्दैकरसे ब्रह्मणि तात्पर्यवन्ति तन्निर्णायकयावल्लिङ्गसत्त्वात् [illegible]

सदेव सोम्येदमग्र आसीदित्युपक्रमः, तत्त्वमसीत्युपसंहारः, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ! इति नवकृत्वोऽभ्यासः, जीवब्रह्मैक्यस्य प्रमाणान्तरागोचरत्वेनापूर्वता, 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इत्याचार्योपदेशजनितात् ब्रह्मज्ञानादखण्डानन्दलक्षणमोक्षः फलम्, येनाश्रुतं श्रुतं भवतीत्यर्थवादः, मृल्लोहपरशुग्रहणदृष्टान्तश्चोपपत्तिरिति, सति चैवं कथमिमानि स्वार्थे तात्पर्यवन्ति वाक्यानि उत्सृज्य परार्थाभिधायकतां लक्षणामाश्रयितुमुत्सहेरन्निति ॥ उपक्रमः प्रारम्भः तत्रोपक्रमोपसंहारावेकीकृत्य क्वचित्षड्विधत्वोक्तिः क्वचिच्च पृथक्कृत्य सप्तविधत्वोक्तिरित्यवधेयम्। परामर्शः मध्ये निर्देशः, उपसंहारः सामान्येनाभिहितस्य विशेषे नियामकं चरमं वाक्यम्, क्रियासमभिहारः पौनःपुन्यम्, उपचरितार्थत्वं लाक्षणिकत्वम्, भूयस्त्वम् दार्ढ्यम्, विधूताप्रामाण्यशंकाकलङ्कपङ्कज्ञानविषयत्वमिति यावत्। दर्शनीया सुन्दरीति शेषः। न्यूनत्वम् अप्रामाण्यशंकास्कन्दितज्ञानविषयत्वम्। प्रागेव सुतरामेव। यदिदमात्मतत्त्वं प्रादर्शि तन्नानुभवेऽवभासते इत्युपपादयति-अहमनुभवस्त्विति। कथं न्वाऽनुपप्लव इति प्लवो विपर्यासस्तद्भिन्नः कथमहमनुभव इत्यर्थः, अपरिच्छिन्नमात्मानं हि परिच्छिन्नत्वेन विषयीकुर्वन्नहमनुभवो विपर्यास एवेति भावः। अत्र कथमात्मतत्त्वगोचर इत्यनेनात्मतत्त्वस्याज्ञातत्वमुक्तं तथाचाज्ञातज्ञापकत्वेन श्रुतीनां प्रामाण्यमिति प्राकाटि, तत्राहमनुभवस्य प्रत्यक्षरूपस्योपजीव्यत्वात् तद्विरोधादाम्नायस्याप्रामाण्यमुपचरितार्थत्वं च युक्तमित्याशंकामपाकरोति—न चेति अत्र केवलं ज्येष्ठत्वं न बाधकत्वप्रयोजकमुद्गात्रपच्छेदपश्चाद्भाविप्रतिहर्त्रपच्छेदेन पूर्वजातोद्गात्रपच्छेदनैमित्तिककर्तव्यताबुद्धेर्बाधादत आह—तदपेक्षत्वस्येति। प्रतिहर्त्रपच्छेदो हि न पूर्वापच्छेदसाकाङ्क्षोऽतोयुक्तः पूर्वस्य परेण बाधः, इह तूपक्रमाधिकरणन्यायेन पूर्वापेक्षस्य परस्यैव बाध उचित इतिभावः॥ किमागमः स्वजन्यज्ञानप्रमात्वे प्रत्यक्षमपेक्षते उत स्वजन्यज्ञानोत्पत्तौ आद्येऽपि किमप्रामाण्यशंकाधूननाय स्वविषयसम्वादाय वा, तत्राद्यं निरस्यति—तस्यापौरुषेयतयेति। अप्रामाण्यशंका हि न निर्दोषस्वेदमास्कंन्दितुं प्रभवति येन तामपनेतुं प्रत्यक्षं अपेक्षेद्वेद इति भावः।

## विकासः

**अपौरुषेयतयेति** अथ वेदानामपौरुषेयत्वे किंमानं न तावत्प्रत्यक्षमयोग्यत्वात् नानुमानं अभावात् न च वेदा अपौरुषेयाः सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वात् आत्मवदित्य-

नुमानं मानमिति वाच्यम् प्रलये सम्प्रदायविच्छेदेन हेतुविशेषणासिद्धेः, तस्मात्त्रयो वेदा
यन्त, तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे, इत्यादिश्रुतिभिः कर्तुः स्मर्यमाणत्वात्
नैकेन केन चिदस्मरणं सर्वैर्वा विवक्षितम् आद्येऽस्मर्यमाणकर्तृके चिरन्तनश्लोकादावनैका
द्वितीये सर्वास्मरणस्यासर्वज्ञदुर्ज्ञेयत्वम्, नाप्यागमः तादृशागमाभावात् न च 'यो ब्रह्माणं वि
पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, इति श्रुतिर्मानम् स्वयं निर्मायापि प्रदानसम्भवात्
च वेदाः पौरुषेयाः वाक्यत्वात् अस्मदादिवाक्यवदित्यनुमानमपि पौरुषेयत्वमेवानुगृह्णाति

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा ॥

इत्युक्तरीत्याऽपौरुषेयत्वानुमानात्सत्प्रतिपक्षतेति वाच्यम् यतः सर्ववेदाध्ययनपक्ष
दृष्टान्तासिद्धिः अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनम् सर्गाद्यकालीना
पक्षीकारे सृष्टिप्रलयावनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धिश्च । किंच शब्दोऽनित्यः
न्यत्वे सति बहिरिन्द्रियग्राह्यत्वात् घटवदित्यनुमानात् सर्वेषामेव शब्दानाम
सिद्धे सुतरां तदन्तर्वर्तिनां वेदानामपि पौरुषेयत्वमापतति । न चोपान्त्यादिशब्देषु
ग्राह्येषु भागासिद्धिः श्रोत्रग्राह्यशब्दस्यैव पक्षीकरणात् । यदि चाभिव्यक्तिरेव वेदानां
रित्युच्यते तदा पाखण्डाद्यागमानामपि नित्यत्वप्रसङ्गः । नचाशरीरस्येश्वरस्य कण्ठा
द्यभावात् तेन वर्णोच्चारणासम्भवान्न तत्प्रणीतत्वमपि सम्भवतीतिवाच्यम् वस्तुतोऽशरी
तस्य भक्तानुग्रहार्थं मायिकलीलाविग्रहग्रहणोपपत्तेः तस्मात्पौरुषेया एव वेदा
चेदत्राहुः

किं नाम पौरुषेयत्वमभिमतमायुष्मताम्भवताम् यदि पुरुषाधीनोत्पत्तिमत्त्वं तदेत
कमप्यभीष्टमेव अभ्युपेयते हि सिद्धान्तिभिरपि 'अस्य महतो भूतस्य निःश्वसितमे
यजुर्वेदः सामवेदोऽथर्ववेदः' 'ऋचः सामानि जज्ञिरे' इत्यादिश्रुतेः एकविज्ञानेन सर्व
प्रतिज्ञाभङ्गभयाच्च आकल्पस्थायिनामपि वर्णानामुच्चारणक्रमविशिष्टानां वेदशब्द
सर्गादावुत्पत्तिमत्त्वम् अतोऽन्यदार्त्तमित्यादिश्रुतेर्विनाशित्वं च, नन्वेतावता नैयायि
क्षणमात्रावस्थायित्वमुपगम्यतेऽपितु सृष्ट्यादिकालीनोत्पत्तिमत्त्वे सति प्रलयकाल
प्रतियोगित्वरूपं वियदादीनामिव गौणमेव नित्यत्वं न तु मध्ये उत्पत्तिविनाशौ गौण
नैवं सर्वदा ग्रहणप्रसङ्गः तदुच्चारणस्य व्यञ्जकस्याभावात् अन्धकारस्थघटानुपलम्भवत्
मुत्पन्नः ककार इत्यादिप्रत्ययस्तु सोऽयं ककार इत्यादिभिप्रत्यभिज्ञाविरोधेनाप्रामाणि
भिव्यञ्जकध्वनिगतोत्पत्तिमेव वा परम्परासम्बन्धेन वर्णवर्त्तिनीमवगाहमानो न विरुध्यते

एतेन वाचा विरूपनित्यया, अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवेत्यादि
त्यादयोऽपि व्याख्याताः तासां प्रदर्शिताकल्पस्थायित्वरूपनित्यत्वाभिप्रायकत्वात् तदुक्तं
भूतसम्प्लवं स्थानं नित्यत्वं हि भाष्यते' इति । यदि च प्रमाणान्तरेणार्थोपलब्धिपूर्वक
पौरुषेयत्वमित्युच्यते तदैतदसम्भवपराहतम् सर्गादौ यागादेः प्रमाणान्तरेणोपलब्ध्यसम्भ
तदुक्तं चित्सुखाचार्यैः ।

श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम् ।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते इति ।

इत्थं च वाक्यार्थज्ञानसापेक्षोच्चारणकवृत्त्यानुपूर्वीशून्यवाक्यत्वम् सजातीयोच्चारणानपेक्षोच्चारणकवृत्त्यानुपूर्वीशून्यवाक्यत्वं वाऽपौरुषेयत्वमभिमतमौपनिषदानाम् तत्र प्रथमे लक्षणे वाक्यार्थज्ञानशून्येन पुंसोच्चारिते द्वितीये पौरुषेयवाक्येऽतिव्याप्तिवारणायोक्तोच्चारणकभिन्नत्वमनिवेश्यानुपूर्व्याः प्रवेशः, तथाच वाक्यरचनाकारणीभूतं ज्ञानमपेक्ष्यैव प्राथमिकतादृशवाक्यस्योच्चारणात् तादृशानुपूर्वीमत्त्वमेव द्वितीयादिवाक्येऽपीति नातिप्रसंङ्गः, द्वितीये तु लक्षणे पौरुषेयवाक्यानुपूर्वी विज्ञायोच्चारिते द्वितीयपौरुषेयवाक्येऽतिप्रसङ्गभङ्गायानुपूर्वी निवेशिता, अस्ति चैतत् सर्वस्मिन्नेव वेदवाक्ये, पूर्वपूर्वसर्गीयवेदानुपूर्वी समालोच्यैव उत्तरोत्तरसर्गे सर्वज्ञेनेश्वरेण वेदोपदेशादिति ।

नन्वेवमपीन्द्रादीनां सर्गोत्तरभाविनां नामानि वेदे समुपलभ्यमानानि कथं संगच्छेरन्निति चेदत्राहुः आकृत्या शब्दस्य सम्बन्धो न व्यक्तिभिर्व्यक्तयस्तु लक्षणयाऽवभासन्ते आकृतिश्चानादित्वेनैव कल्प्यमाना यावत्स्वेवेन्द्रादिषु इन्द्रत्वादिरूपा एकैव एवमेवाग्न्यादिष्वप्यग्नित्वादिरूपैकैव, इन्द्रादिव्यक्तयो हि कल्पभेदेन भिद्यमाना इन्द्रत्वादिसामान्यवत्त्वं नातिवर्तन्ते एवमन्यान्यपि जनकयाज्ञवल्क्यादिनामानि वेदेषूपलभ्यमानान्युपपद्यन्ते व्यक्तीभविष्यति चैतत् 'शब्द इति चेन्न' इतिसूत्रभाष्यभामतीषु ॥

## भामती

न चैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाऽहो दर्शनीयाऽहो दर्शनीयेति, न न्यूनत्वं प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मनमादर्शयन् कथमात्मतत्त्वगोचरः कथं वाऽनुपप्लवः । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति युक्तम् ।

तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया स्वतः सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न । उत्पादकाप्रतिद्वन्द्वित्वात् । न ह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावान्न भवेदपि तु तात्त्विकम् । न च तत्तस्योत्पादकम्, अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्त-

३ उपक्रम न्याय तथा अपच्छेद न्याय भेद से पूर्व मीमांसक के यहाँ दो न्याय हैं। अतः पूर्व से पर का बोध

त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्माः समारोपितास्तत्त्वप्रतिपत्तिहेतवः

**प्रकाशः**

आद्यद्वितीयं निरस्यति बोधकतयेति अज्ञातज्ञापकेन स्वतः सिद्धप्र भागेन वेदेन स्वजन्यज्ञानविषये प्रमाणान्तरसंवादो नापेक्ष्यते इत्य प्रमिताविति भावप्रधानो निर्देशः तथाच स्वकार्यनिष्ठप्रमितित्वे इत्यर्थः। वाक्यान्तरवद्वेदवाक्यमपि स्वजन्यज्ञानोत्पत्तावपेक्षत एव प्रत्यक्षं कथम श्रोत्रेण प्रत्यक्षात्मकप्रमाणेन शब्दप्रत्यक्षाभावे तत्तद्वेदवाक्यं शाब्दप्रमां प्र प्रभवेत्, तस्मात् यदि नेह नानाऽस्तीत्यादिश्रुतिः श्रोत्रादिकं तद्गतं प्रा चापजह्यात् तदा श्रोत्राद्यभावादागमो ज्ञानमेव न जनयेदित्याश द्वितीयं पक्षं कक्षीकरोति प्रमितावनपेक्षत्वेऽपीति प्रमितित्वेऽनपेक्षत्वेऽपीत आगमजन्यज्ञानेन स्वकारणे 'उपजीव्ये' प्रत्यक्षे श्रोत्रादौ व्यावहारिकं प्रा नापह्नूयते किंतु तात्त्विकं प्रामाण्यमतो व्यावहारिकप्रामाण्यवतां श्रोत्रा प्रयोजकानां सत्त्वाज्ज्ञानोत्पत्तिलक्षणमप्रामाण्यमागमजन्यज्ञानस्य प्रसज्यते, हि आगमिकं ज्ञानं स्वोत्पत्तौ तात्त्विकप्रामाण्यविशिष्टं प्रत्यक्षमपेक्षिष्यत कारणवैधुर्यान्नोदपत्स्यत, न चैवमस्तीत्याशयेनोत्तरयति नेति । उत्पाद तिद्वन्द्वित्वादिति आगमजन्यज्ञानस्योत्पादकं यच्छ्रोत्रादिकं तदविरो दित्यर्थः। एतदेव विवृणोति नहीति। नच तत्तस्योत्पादकमिति तात्त्विकप्रामाण्यविशिष्टं प्रत्यक्षं च तस्य आगमजन्यज्ञानस्य नोत्पाद स्यन्वयः। नन्वेवं ब्रह्मातिरिक्तं सर्वमेवातात्त्विकमतोऽतात्त्विकप्रामाण्य प्रत्यक्षगृहीतेनातात्त्विकप्रामाण्यवताऽऽगमेन जायमानं ब्रह्मज्ञानमपि अ भवेदित्यत आह अतात्त्विकेति। साम्व्यवहारिकेति आविद्यकेत्यर्थः, उ दृष्टान्तमाह तथाचेति। अन्यधर्मा इति वर्णो हि न ह्रस्वत्वदीर्घत्वोदात्तत्व धर्मो अपितु तदन्यो ध्वनिरेव तद्धर्मा। अत्र वर्णे इत्युक्त्या स्फोटो न सिद्ध इत्यसूचि तदेतत्तृतीयसूत्रे व्यक्तीभविष्यति। तत्त्वप्रतिपत्तिहेतव इति उप

**भामती**

नहि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरं वा वा प्रतिपद्यमाना भवन्ति भ्रान्ताः। न चानन्यपरं वाक्यं उपचरितार्थं युक्तम्। उक्तं हि "न विधौ परः शब्दार्थ" इ ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे, रजतज्ञानस्य ज्या

निराकृतम् २५५१११८ लेखि भाग्यम्हैं ५२- [illegible]

शुक्तिज्ञानेन कनीयसा बाधदर्शनात् । तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् ।

प्रकाशः

यामेतत् प्रसौति हि प्रातिभासिकस्वाप्नदर्शनं रेतःस्खलनादिरूपव्यावहारिकं कार्यजातम्, धूमव्याप्यवह्निमान् पर्वत इति भ्रमात्मकश्च परामर्शः पर्वतो धूमवानिति प्रमामनुमितिम् । प्रतिपद्यमानाः जानन्तः तथाच ब्रह्मबोधक मानं श्रुतिरूपमेव तत्त्वावेदकं नच तत् प्रत्यक्षादिनाऽपोद्यते इति सिद्धम् ॥ श्रुत्यादेरप्रामाण्यं निराकृत्योपचरितार्थत्वं निराकुरुते नचेति ननु पूर्वमपि शक्रेणाप्युपचरितार्थानि कर्तुमिति वदता उपचरितार्थत्वं निराकृतमेवेति तत्करणे पानरुक्त्यमिति चेन्न पूर्वं हि भेदाग्रहं साधयितुमुक्तमिहोपजीव्यविरोधं परिहर्तुमिति फलभेदेन पुनरभिधानं न दुष्यति ॥ यत्परः स एव मुख्यतः प्रतीयमानः शब्दार्थो नोपचरितार्थ इत्यत्र शबरस्वामिसम्मतिमाह उक्तं हीति विधौ विधायके वाक्ये परः लक्ष्यार्थो नोपादीयते इत्यर्थः । यद्यपीदं विधायके शब्दे शबरस्वामिनोक्तं तथापि वेदान्तवाक्यस्याप्यनधिगतार्थज्ञापकत्वेन तत्साम्यादिहापि प्रवर्तते इत्याशयः ॥ उपजीव्यत्वेन प्रत्यक्षस्य प्राबल्यमपाकृत्य प्रथमप्रवृत्ततया ज्येष्ठत्वेन तत्प्राबल्यं पराकरोति ज्येष्ठत्वं चेति । ज्यायसः पूर्वोत्पन्नत्वमात्रेण ज्येष्ठस्य, कनीयसा पश्चादुत्पन्नेन । तदनपबाधन इति शुक्तिप्रत्ययो हि रजतज्ञानमपनुदन्नेवोत्पद्यते, यदि हि रजतप्रत्ययं नोपमृद्नीयात् न तदा स रजतप्रत्ययबाधात्मकः स्वरूपं लभेतेत्यर्थः । नन्वागमेन चेत् तात्त्विकं प्रामाण्यं प्रत्यक्षे बाध्येत न तदा तेन प्रत्यक्षमपेक्ष्येतेत्यत आह दर्शितं चेति । अनपेक्षितत्वमिति एतेनोपक्रमाधिकरणन्यायमनुसृत्यापि न प्रत्यक्षस्य बाधकत्वम् तथाहि प्रजापतिर्वरुणायाश्वमनयत्, इत्युपक्रमवाक्येऽश्वदातृकर्तृकेष्टिः प्रतीयते अश्वमनयदित्यस्य हि अश्वं दत्तवानित्यर्थः यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुः कपालान्निर्वपेत् इत्युपसंहारवाक्ये च प्रतिग्रहीतृकर्तृकेष्टिः प्रतीयते तत्रोपक्रमवाक्यसापेक्षतयोपसंहारवाक्ये प्रतिगृह्णीयादित्यत्र णिजर्थमन्तर्भाव्याश्वदातृकर्तृकेष्टिर्विधीयते इत्युपक्रमाधिकरणम्, तत्र हि पूर्वसापेक्षतयोत्तरस्य विरुद्धार्थग्राहिणो भवति बाध्यत्वम् आगमस्तु न तात्त्विकप्रमाण्यविशिष्टं पूर्वोत्पन्नं प्रत्यक्षमपेक्षते येनैनेन बाध्येत इति बोध्यम् ।

विकासः

दर्शितं चेति नन्वेवमागमस्य प्रत्यक्षात्प्राबल्ये सोमेन यजेदित्यादौ सोमयागयोरभेदान्वये प्रत्यक्षविरोधपरिहाराय मत्वर्थलक्षणामाश्रित्य श्रुतेरन्यथानयनमनुचितम् प्रत्यक्षतः क्षतो ऽपि

सोमयागयोरभेदः प्रबलागमप्रमाणात्तत्सम्भवादिति चेदत्रायं सिद्धान्तो भामतीकृतामवगन्त
तात्पर्यवती श्रुतिः प्रत्यक्षाद्बलीयसी न श्रुतिमात्रमिति, सोमेन यजेदित्यत्र च सोमलताय
योरभेदान्वये न तात्पर्यमतो न तद्बोधने श्रुतिर्बलवतीति भवति प्रत्यक्षस्यैव तत्र प्रा
मतस्तद्विरोधापनुत्तये मत्वर्थलक्षणाश्रयणम् एवमादित्यो यूपः, यजमानः प्र
इत्याद्यर्थवादवाक्यानां स्तुतावेव तात्पर्यं न तु मुख्येऽर्थेऽतस्तत्रापि लक्षणा युक्त

नन्वेवं वज्रहस्तः पुरन्दर इत्याद्यर्थवादात् देवताविग्रहादिकं न सिध्येत् तस्
स्तुतावेव तात्पर्यान्न मुख्येऽर्थे इति चेन्न आकाङ्क्षाज्ञानादिशाब्दकारणस
सत्यसति च प्रत्यक्षादिविरोधे तात्पर्याविषयीकृतस्यापि श्रुत्या प्रतीयमानस्य वस्
सिद्धौ बाधकाभावात्, न हि वयं तात्पर्याविषयोऽर्थः श्रुत्या नाभिधीयते इति प्रति
यामो येनैवं पर्यनुयुञ्जेमहि अपितु यत्रार्थे श्रुतेस्तात्पर्यं तत्र तस्याः प्रमाणान्तरात
प्राबल्यमिति, सति चैवमुपक्रमादिषड्विधलिङ्गावगमिताद्वैततात्पर्याऽद्वैतश्रुतिः प्रत्यक्षाद्ब
सीयसी तः प्रत्यक्षस्यैव बाधो न तु तद्विरोधपरिहाराय श्रुतेरन्यथानयनमिति ॥

## भामती

तथा च पारमर्षं सूत्रं 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' ।

## प्रकाशः

पूर्वस्य परेण बाधे पारमर्षं सूत्रं प्रमाणयितुमुपन्यस्यति—तथाच पार
सूत्रमिति यद्युद्गाताऽपच्छिन्द्याददक्षिणेन यजेत् यदि प्रतिहर्ता सर्वस्वदक्षिणे
श्रूयते तद्वाक्यस्यायमाशयः प्रातः सवने बहिः पवमानेन स्तोष्यमाणा ऋत्वि
यज्ञशालातो बहिर्निर्गत्य एकस्य पृष्ठतोऽन्य इत्येवं पिपीलिकापङ्क्त्याकारेण ग
न्ति तत्र पुरतो गन्तुः कच्छं गृहीत्वैवापरेण गम्यते तेषु यदि प्रमादादुद्गाता गृ
कच्छमृत्विजं मुञ्चेत् तदा दक्षिणामदत्त्वैव प्रक्रान्तो यज्ञः समापनीयः तं स
य पुनरपि स यज्ञः प्रयोक्तव्यः तस्मिन् प्रयोगे पूर्वं यद्दित्सितं तद्दद्यात्
प्रतिहर्त्ता प्रमादान्मुञ्चेत् तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यादिति, तत्रो
प्रतिहर्त्रोः क्रमेण विच्छेदे ऽदक्षिणत्वसर्वस्वदक्षिणत्वयोर्विरुद्धयोः समुच्चि
नुष्ठानायोगादन्यतरस्यानुष्ठेयत्वे प्राप्ते किमुद्गात्रपच्छेदनिमित्तकमद
कर्मानुष्ठेयमुत सर्वस्वदक्षिणाकमिति संशये, अनन्तरं प्रतिहर्त्रपच्छे
उद्गात्रपच्छेदकाले प्रतिहर्त्रपच्छेदाभावेनानुपजातविरोधित्वादुद्गात्रप
निमित्तकमदक्षिणमेव कर्मानुष्ठेयमिति पूर्वपक्षे, इदमाह सूत्रकारः, पौ
पूर्वदौर्बल्यं प्रकृतिवत्, इति निमित्तभूतयोरपच्छेदयोः पौर्वापर्ये
पूर्वस्य पूर्वनैमित्तिकस्य, दौर्बल्यम् पूर्वनिरपेक्षं हि यदुत्तरं नि
तत् पूर्वस्य बाधकत्वेनैव उदेति, तत्काले च उत्तरस्याप्राप्तत्वेन न तद्बाध
पूर्वस्मिन् सम्भवति, तस्मात्तत्र सर्वस्वदक्षिणाकमेव कर्मानुष्ठेयमिति सिद्ध
अत्र पूर्वस्य परेण बाधे दृष्टान्तः प्रकृतिवदिति प्रकृतौ कुशमयं बर्हिर

तीति विधिः श्रूयतेऽतः कुशमयैर्बर्हिर्भिरास्तरणं विधीयते विकृतौ तु शरमयं वर्हिस्तृणाति पृथक् विधिः श्रूयते तत्र यद्यपि प्रकृतिवद्विकृतिः कर्त्तव्ये त्यतिदेशात्प्रकृतौ क्लृप्तोपकारककुशमयैर्बर्हिर्भिरास्तरणमेवासंजातप्रतिपक्षित्वादपेक्षितं न तु शरमयैर्बर्हिर्भिः, तथापि तत्र श्रूयमाणो विधिर्निरवकाशः स्यादिति परैरेव शरमयैर्बर्हिर्भिर्बाध्यन्ते पूर्वप्राप्ता अपि कुशाः तद्वदिह परापच्छेदरहिते पूर्वापच्छेदे सावकाशस्य पूर्वनैमित्तिकस्य निरवकाशेन

भामती

( जै० अ० ६ पा० ५ सू० ५४ ) इति । तथा "पूर्वात्परवलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥" इति । अपि च येऽप्यहंकारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्, 'अहमिहैवास्मि सदने जानान' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्, उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् न चेदं देहस्य प्रादेशिकत्वमनुभूयते न त्वात्मन इति सांप्रतम् । नहि तदैवं भवत्यहमिति, गौणत्वे वा न जानानइति ।

प्रकाशः

परेण बाध इति । अत्रैवाभियुक्तोक्त्यन्तरमाह—पूर्वादिति इदंरजतमित्यादिज्ञानस्य पूर्वस्य इयं शुक्तिरित्याद्युत्तरेण तन्निरपेक्षेण ज्ञानेन भवति बाधः, अयं दण्ड इति ज्ञानस्य पूर्वस्य दण्डी पुरुष इत्युत्तरेण ज्ञानेन पूर्वसापेक्षेण तु न बाध इति तदर्थः ॥ यदिदमियता प्रबन्धेनाहंप्रत्ययस्य विपर्यासत्वमुक्तं तदेतदकामेनापि प्रतिद्वन्द्विना तार्किकादिनाऽवश्यमुपेयं तन्मतेऽप्यहंप्रत्यये आत्मतत्त्वानवभासनादित्याह अपिचेति । येऽपीति तार्किकादय इति शेषः । अहंकारास्पदम् अहमितिप्रतीतिविषयीभूतम्, आस्थिषत स्वीकुर्वन्ति स्म । अस्य, अहं प्रत्ययस्य, 'तात्त्विकत्वम्' तात्त्विकविषयकत्वम्, व्यापिनः, व्यापकस्य आत्मन इतिशेषः । प्रादेशिकत्वेन प्रदेशवृत्तित्वेन । निर्भासप्रत्ययेति निर्भास एव प्रत्ययस्तथा, प्रात्यक्षिकप्रत्यय इत्यर्थः । नन्वात्मवाचिनो ऽहंशब्दस्य देहादौ गौणः प्रयोगो ऽस्तु न च तावतोक्तप्रतीतेर्भ्रमत्वं न हि गङ्गायां घोष इत्यादि गौणं प्रयोगं प्रयुञ्जाना भवन्ति भ्रान्ताः तथा च मदीयो देह इहैवास्तीत्यर्थः पर्यवसन्नोऽतोनानुपपत्तिरत आह गौणत्वे वेति । न जानान इति परम्परासम्बन्धनिबन्धनस्य देहादावहंपदप्रयोगस्योपगमेऽपि देहादे

ज्ञानाभावात्तत्र जानान इति प्रतीतिर्न भवतीतिभावः । नन्वस्तु जाना ज्ञानाभावात्तत्र जानान इति प्रतीतिर्न भवतीतिभावः । नन्वस्तु जानातीत्यपि इति प्रयोगोऽपि देहादावौपचारिक इति चेत् तदा मदीयोदेहो जानातीत्यर्थं स्यात्तथासति वक्ता न स्वज्ञानं प्रकाशयितुमहमिहैवास्मि जानान इ ब्रूयादिति बोध्यम् । यदुक्तं देहादावहं शब्दप्रयोगो गौण इति तत्परीक्ष

## भामती

अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः । तथा नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः ( जै० अ० १ पा० ४ सू० ४ प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि 'मासमग्निहोत्रं जुहोति' ( जै० अ० ७ पा० ३ सू० १ ) त्यत्र साध्यसादृश्येन गौण माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः ।

## प्रकाशः

अपिचेति । परशब्दः अन्यार्थस्य प्रत्यायकः शब्दः परत्र शक्यभिन्ने लक्ष्यमाणगुणयोगेन लक्ष्यमाणः मुख्येऽर्थे गृह्यमाणो यो गुणः, धर्मः तद्योगेन तत्सम्बन्धेन अत्र यः शब्दः स्वमुख्येऽर्थे गृह्यमाणस्य धर्मस्य यस्मिन्नन्यस्मिन्नर्थे चिख्यापयिषया प्रयुज्यते तस्मिन्नर्थे स शब्दो भवति गौणः यथा सिंहो माणवक इत्यादौ सिंहधर्मस्य क्रौर्यादेर्माणवके चिख्यापयिषया प्रयुक्तः सिंहशब्दः, यश्च शब्दो यस्मिन्नर्थे कथं चिच्छक्यसम्बन्धनिबन्धनमात्रेण प्रयुज्यते तस्मिन्नर्थे स शब्दो लाक्षणिकः यथा गङ्गायां घोष इत्यादौ गङ्गासामीप्येन तीरेऽर्थे प्रयुक्तो गङ्गाशब्द इति तयोर्भेदाऽवगन्तव्यः । तदुक्तं संक्षेप शारीरके—

गुणतो गुणवृत्तिरिष्यते ह्यपरा लाक्षणिकी तु संगतेः ।
इति भेदकमस्ति लक्षणागुणवृत्त्योरिति वेदवादिनः ॥ इति ॥

गौणत्वमपि द्विविधम् साम्प्रतिकं निरूढं च तत्र माणवके सिंहशब्दस्य साम्प्रतिकं गौणत्वं सार्षपरसादौ तैलशब्दस्य निरूढत्वं तदिह नाह इत्याह स्म परशब्द इत्यादिना ॥ प्रतिपत्ता श्रोता, सम्प्रतिपत्तिः ज्ञानम् अग्निहोत्रं जुहोतीति विधिः श्रूयते तत्र संशयः किमयमग्निहोत्रशब्दो देवताप्रगुणविधिरुत कर्मनामधेयमिति तत्राग्नये होत्रं यस्मिन् कर्मणि तदग्निहोत्रमिति समासान्तवर्तिन्या चतुर्थ्याऽग्नेर्देवतात्वप्रतीतेर्गुणविधिरेवायमिति प्राप्ते, अग्नये च प्रजापतये च सायं जुहोतीत्यत्र चतुर्थ्यैवाग्नेर्देवतात्वप्रतीतेः प्राप्ते च विधिवैयर्थ्याद् भवत्यग्निहोत्रशब्दः कर्मनामधेयं तदेतद

(1) स्पाद॰२५ शे॰ प्मा॰ १ मा॰ है ४म लिखा, दूसरा स्पादक पद्मा। सिंहो माणवकः दूसरा ...

नैयमिकाग्निहोत्रवचन इति नित्याग्निहोत्रवाचीत्यर्थः नित्यत्वं चास्य याव-ज्जीवमग्निहोत्रं जुहोतीतिश्रुतेरवगम्यते स चायं नित्याग्निहोत्रवाची अग्नि-होत्रशब्दः कौण्डपायिनामयने कर्मान्तरे उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यत्र प्रयुज्यमानो भवति गौणः नहि तत्र नित्याग्निहोत्रमुद्दिश्य केवलो मासलक्षणो गुणोऽप्राप्तत्वादनेन विधिना विधीयते इति शक्यं वदितुम् उपसद्भिश्चरित्वेत्युक्तत्वादुपसन्मासोभयस्यैवाप्राप्तत्वेन विधातुमुचितत्वात् न च तदपि सम्भवति उभयविधाने उद्देश्यविधेयभेदेन वाक्यभेदापत्तेः एवं च कर्मान्तरप्रकरणे पठितेनानेन वाक्येनासन्निहितं नित्याग्निहोत्र-मुद्दिश्य न गुणो विधीयतेऽपितूपसन्मासोभयविशिष्टं कर्मान्तरमेव न चैवमपि वाक्यभेदः अप्राप्ते कर्मण्यनेकगुणविधाने तदभावात् तत्र गुण-कर्मणोरुभयोरेवाप्राप्तत्वेन विशिष्टस्यैव फलमुद्दिश्य विधेयतयाऽनेकगुणविशि-ष्टकर्मविधानेऽपि वाक्यभेदाभावात् प्राप्तस्य तु कर्मणः सिद्धत्वेन तदंशे विधे-यत्वाभावात् गुणमात्रस्य भवति विधेयत्वमतो ऽनेकगुणविधाने उद्देश्यविधे-यभेदेन वाक्यभेदस्यानिवार्यत्वम् तदुक्तम् ।

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते वहवो-ऽप्येक यत्नतः ॥ इति तथा च नित्याग्निहोत्राद्भिन्ने उपसद्भिश्चरित्वेतिवाक्यवि-हितहोमे प्रयुज्यमानोऽग्निहोत्रशब्दो भवति गौण इति भावः ॥ अत्र उपसदिति आहुति समाख्या बोध्या, यत्तूपसदश्चरुरूपत्वमभिहितं गदाधरभट्टाचार्येण व्यु-त्पत्तिवादे द्वितीयायां तत्तस्यैव प्रकाशटीकायां प्रत्युक्तमस्माभिः वैरिदुर्गोपसदन कारित्वेनैता आहुतय उपसद उच्यन्ते इति तैतरीयसंहितायाम् १ काण्डे २ प्रपाठके ११ अनुवाक भाष्येऽभिधानात्, आपस्तम्बश्रौतसूत्रे च ११ प्रश्ने २ खण्डे १२ सूत्रे, स्रुवेणोपसदं जुहोतीति सूत्रव्याख्यायाम् उपसदित्या-हुतिसमाख्या तामाज्यस्थाल्यामाज्येन जुहोतीत्यभिधानाच्च । साध्यसाद-श्येनेति साध्यं विधेयं मुख्याग्निहोत्रम् तत्सादृश्यं च समानद्रव्यदेवतात्वादिना ।

वैदिकं प्रयोगमभिधाय लौकिकमप्याह माणवके चेति सिंहादनुभवसिद्ध-भेदे माणवके मुख्यार्थसिंहनिष्ठक्रौर्यादिगुणयोगात् सिंहशब्दः प्रयुज्यमानो गौण इत्यर्थः । तदाऽहंशब्दः शरीरादौ गौणो भवेत् यदाऽहंशब्दस्य योमुख्यो-ऽर्थोऽखण्डो व्यापक आत्मा स शरीरेन्द्रियादितः पृथक्त्वेनानुभूयेत यथा-सिंहादितः पृथक्त्वेनाभूयते माणवकादिः नत्वेवमस्ति प्रकृते तथाऽनुभवे सती

भामती

न त्वहङ्कारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नो ऽनुभूयते येन परशब्दः शरीरादौ गौणो भवेत् । न चात्यन्तनिरूढतया

गौणेऽपि न गौणत्वाभिमानः सार्षपादिषु तैलशब्दवदिति वेदितव्यम् तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वे भिमानो, न त्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः । तत्सिद्धं गौणत्वमुख्य दर्शिनो गौणमुख्यविवेकज्ञानेन व्याप्तम्, तदिह व्यापकं विवेकज्ञानं नि र्तमानं गौणतामपि निवर्तयतीति । न च बालस्थविरशरीरभेदे सोऽहमित्येकस्यात्मनः प्रतिसंधानाद्देहादिभ्यो भेदेनास्त्यात्मानुभ इति वाच्यम् । परीक्षकाणां खल्वियं कथा न लौकिकानाम् ।

प्रकाशः

दानीं वादिविवाद एवायमस्तमियादित्याह—नत्विति । अहंकार अहंपदस्य यो भवन्मते मुख्योऽर्थः स निर्लुठितगर्भतया, निर्लुठि निःकृष्य लुठितः प्रतिभासितः गर्भः असाधारणाकारो व्यापकत्वज्ञाना मत्त्वादिः, यस्य स निर्लुठितगर्भः । देहादिभ्यः पृथक्त्वेनात्मभाने सत गौणः स्यान्नत्वेवमस्तीति सारम् । साम्प्रतिकं गौणत्वं निरस्य निरूढं ता रस्यति नचेति अस्य वेदितव्यमित्यनेन सम्बन्धः । निरूढतयेति निरू नाम प्रयोगप्राचुर्यान्मुख्यवद्भासमानत्वं साम्प्रतिकत्वं तु गुणसम्बन्ध प्रयुज्यमानत्वमात्रम् । गौणत्वेऽपीति देहादावहंशब्दस्येति शेषः । नि गौणप्रयोगे ऽपि अर्थयोस्तादात्म्यं न प्रतीयते प्रतीयते तु प्रकृते इति महद्वै मित्याह—तत्रापीति । तत् तस्मात्, गौणत्वव्यापकं गौणमुख्ययोर्वि ज्ञानं निवर्त्तमानमिह गौणतामपि निवर्त्तयतीतिसिद्धमित्यन्वयः ।

इदमत्रावधेयम यन्मतेऽपि देहादावात्मशब्दो गौणस्तन्मतेऽपि शाब्द तेगौणार्थविषयकत्वेऽपि प्रात्यक्षिकादिप्रतीतेस्तदसंभवः शब्दो हि जघन मपि लक्षणादिवृत्तिं कामयते ननु प्रत्यक्षादिकमपीति ॥ वक्ष्यति अपरिग्रहाच्चात्यन्तमनपेक्षा (१७—२—२) इति सूत्रभामत्यां नहि शब्दवृत्त्यनुसारि प्रत्यक्षम् नह्यग्निर्माणवक इत्युपचरिताग्निभा माणवकः प्रत्यक्षेण दहनात्मना प्रथते, इति । तस्मात् अहमि वास्मि सदने जानान इति वाक्यमाश्रित्य विचारः प्रदर्शित इति बोध्यम् अभेदाध्यवसाय इति प्रकृते तु सोऽस्तीति शेषः । नन्वभि रूपादहंप्रत्ययाद्विवेकासिद्धावपि प्रत्यभिज्ञारूपादहम्प्रत्ययाद्विवे सिद्धिरस्त्विवत्याशंक्य निषेधति नच बालस्थविरेति अयमाशयः शरी परिमाणभेदोऽवयवापचयोपचयसाध्यः अवयवापचये सति जायमा

पादाननाशात्पूर्वावयविविनाशेऽवशिष्टैरेवावयवैरुपादानैर्महापटध्वंसजन्मा खण्डपट इवावयव्यन्तरमुत्पाद्यते अवयवोपचये च उपचितानामवयवानां पूर्वसिद्धमवयविनं प्रत्यजनकतया पूर्वावयवसचिवैरेवागतैरवयवान्तरैः मिलित्वाऽवयव्यन्तरमुत्पाद्यते इत्थमस्ति बालस्थविरशरीरयोर्भेद इति, एतदुपन्यस्तं पुरस्तादपि, परमसौ न प्रत्यक्षः किंतु विरुद्धपरिमाणवत्त्वेन हेतुनाऽऽनुमानिकः प्रत्यक्षेण तु योऽयं मम देहो बाल्ये कृश आसीत्स एवेदानीं पुष्टः सम्पन्न इत्यभेद एव प्रत्यभिज्ञायते एवं च बालवार्धक्यभेदेन भिन्नाभ्यां देहाभ्यां सम्बध्यमानो ऽहंत्वेन प्रतिभासमानो ऽभिन्न आत्मेतिज्ञानमपि परीक्षणक्षमाणामानुमानिकमेव भवति न तु प्रत्यक्षं लौकिकानामभावादित्याह परीक्षकाणामिति विवेकज्ञानकुशलानामित्यर्थः। नन्वस्तु तर्हि परीक्षकाणां देहादावात्मशब्दो गौणोऽत आह

## भामती

परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते वक्ष्यत्यनन्तरमेव हि भगवान् भाष्यकारः—पश्वादिभिश्चाविशेषादिति। बाह्या अप्याचाहुः—शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति न प्रतिपत्तार" इति। तत्पारिशेष्याच्चिदात्मगोचरमहंकारमहमिहास्मि सदन इति प्रयुञ्जानो लौकिकः शरीराद्यभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घटमणिकमल्लिकाद्युपाध्यवच्छेदादिति युक्तमुत्पश्यामः। न चाहंकारप्रामाण्याय देहादिवदात्मापि प्रादेशिक इति युक्तम्। तदा खल्वयमणुपरिमाणो वास्याद्देहपरिमाणो वा अणुपरिमाणत्वे—

## प्रकाशः

परीक्षका अपीति। देहादावहम्प्रत्ययोऽपरोक्षाध्यासरूपोऽपरोक्षेणैव तात्त्विकज्ञानेन निवर्त्तते न त्वानुमानिकेन, नहि रज्जौ जायमानमपरोक्षसर्पभ्रमं नायं सर्प इति यौक्तिकज्ञानमुन्मूलयितुमर्हति अपितु रज्जुतत्त्वसाक्षात्कार एवेत्यतः परीक्षकाणां जातेऽपि यौक्तिकतात्त्विकज्ञाने पूर्ववदेव भवति व्यवहार इति भावः। पश्वादिभिरिति प्रवृत्त्यादिलक्षण व्यवहारसमये विदुषामपि पश्वादिभिः देहात्मप्रत्ययसाम्यादित्यर्थः। प्रतिपत्तारः सामान्यज्ञानवन्तः। उपसंहरति —तदिति अहंकारमिति प्रयुञ्जानमित्यनेन सम्बध्नाति। अभिमन्यते अध्यस्यति। प्रादेशिकत्वभ्रमे

दृष्टान्तमाह नभस इवेति । मणिकमल्लिकौ विस्तीर्णमुखौ घटाधिकपरि-माणवन्तौ मृत्पात्रविशेषौ। अहंकारप्रामाण्याय अहमिहैवास्मीति प्रतीतिप्रामाण्याय ।

विकासः

अणुपरिमाणत्व इति अणुपरिमाणवादिनस्तु इत्थमाचक्षते तथाहि विभुत्वे उत्क्रान्तिगत्यागत्यादिश्रुतयो नोपपद्यन्ते तत्रोत्क्रान्तिश्रुतिः यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति (कौ० १।३) इति, गतिश्रुतिश्च ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ० १।२) इति, आगतिश्रुतिश्च तस्माल्लोकात्पुनरेति अस्मै लोकाय कर्मणे (बृ० ४।४।२) इति, एवम् एषो ऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविशन्ति, (मु० ३।१।९) वालाग्रशतभागस्य शतधा कल्पितस्य च। जीवः भागः स विज्ञेयः स चानन्त्याय कल्पते ॥ आराग्रमात्रोह्यवरो ऽपि दृष्ट इत्याद्याः श्रुतयः, एष हृदिह्येष आत्मेति (प्र ३।६) स वा एष आत्मा हृदि (छा ८।३) कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, इत्याद्याश्च श्रुतयः परिच्छिन्नमेवात्मानमवगमयन्त्योऽणुरूपतामेव तस्य साधयन्ति। यास्तु आकाशवत्सर्वगतश्च नित्यः, इत्याद्या महत्त्वबोधिकाः श्रुतयः स्ताः परमात्मप्रतिपादनपरा न जीवपराः जीवपरमात्मनोर्वस्तुतो भेदात् तत्त्वमस्यादिवाक्यन्तु युक्तिविरोधान्न वस्तुतत्त्वनिर्णायकं किंतूपासनापरं तस्मादणुर्नानैव चात्मेति ।

सेयं दोषशतसमावृताऽतिस्थवीयसी नितान्तगरीयसी नेदीयसी विचारपद्धतिः परीक्षणक्षमाणां विचक्षणानां पक्षपातशून्यानां मनागपि मनांसि सन्तोषयितुमुत्सहते एकेनैव हि सता चेतनेन सकलचेतनव्यवहारोपपत्तौ परमगुरुत्वापादिकायाः, एकमेवाद्वितीयम् नान्योऽतोऽस्ति द्रष्टा, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति, योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यथा ह्ययं ज्योतिरात्मा विवस्वानपां भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा, एक एव तु भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवत् एकं सद्विप्रा बहुधा वदन्ति, तदात्मानमेवावेदहंब्रह्मास्मीति, एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च रूपं रूपं प्रतिरूपो बभूव, इत्याद्यसंख्यश्रुतिविरुद्धायाः पारमार्थिकासंख्यजीवभेदकल्पनाया अप्रामाणिकत्वात्, आत्मन एकत्वेऽपि चैत्रः सुखी न मैत्रः, मैत्रोऽयं घटं पश्यति न पटमित्यादिव्यवहाराणां वीणोपाधिके मृदङ्गोपाधिके चैकस्मिन्नेव वियति इतरेतरव्यावृत्तविलक्षणशब्दवत् तत्तदन्तः करणोपाधिभेदपरिकल्पितभेदेषु जीवेषु तत्तदन्तः करण

णामान वत्तदिन्द्रियलिङ्गशब्दादिनिमित्तजानां ज्ञानाभिव्यञ्जकवृत्तीनामानन्दाभिव्यञ्जक-सुखात्मकवृत्तीनामिच्छादीनां च परस्पराश्रयव्यावृत्तानामुपगमेनोपपादनात् ।

एवं सवा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु, घटसम्वृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाकाशस्तद्वज्जीवो नभोपमः ॥ इत्यादिषु श्रुतिषु शारीरस्यैव साक्षान्महत्त्वप्रतिपादनात् अन्यास्वपि च तत्सृष्ट्वा तदेवानुप्राविशत्, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तद्यथा वटबीजसामान्यमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुत्पाद्य तत्र तत्र पूर्णं तिष्ठति एवमेवैषा स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति, कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः, अहं ब्रह्मास्मि, तत्त्वमसि इत्यादिषु च भूयसीषु श्रुतिषु .परमात्मन एवान्तःकरणाद्युपधानेन जीवभावप्रतिपादनाच्च न परमात्मस्वरूपस्य जीवस्य वस्तुतोऽणुत्वसंभवः ।

नच जीवपरमात्मनोर्भेदाभेदोपगमादभेददृष्ट्या जीवस्य तत्र तत्र महत्त्वमुक्तं नाणुत्वं प्रतिक्षिपतीति वाच्यम् विरुद्धयोर्भेदाभेदयोरेकत्र समवधानासम्भवेनोभयोः पारमार्थिकत्वस्य वक्तुमशक्यत्वात् अभेदस्य तत्र पारमार्थिकत्वे जीवस्य महत्त्वमेव पारमार्थिकमणुत्वं त्वौपाधिकमपारमार्थिकमित्यायातम् तच्चास्माकमेव मतमनुसरन्न दुष्यति । भेदस्यैव पारमार्थिकत्वेऽभेदस्यैव कल्पितत्वे च भेदपारमार्थिकत्वपक्षनिराकरणदक्षवक्ष्यमाणाक्षुण्णयुक्त्यालिसम्वलिता, उपाधिना क्रियते भेदरूपः, इत्यादिश्रुतिरुपमृद्येत तस्मान्न भेदः पारमार्थिकः ।

न च तथापि निर्गुणे ब्रह्मणि महत्त्वधर्मस्याभावेन महत्त्वबोधकश्रुत्युपमर्दस्तुल्य इति वाच्यम् परिच्छिन्नत्वाभावस्यैव तस्य विवक्षितत्वात् अभावस्य चाधिकरणरूपताया एवाङ्गीकारात्, तदेतदभिदधाति अस्थूलमनण्वदीर्घमह्रस्वमित्यादिः श्रुतिः ।

सांख्यमतेऽप्यसङ्गस्य पुरुषस्य व्यापकत्वमनयैव दिशा समर्थनीयम् अन्यथा निर्धर्मके पुरुषे महत्त्वरूपधर्माभावात् अपरिणामित्वेन सर्वमूर्त्तसंयोगाभावाच्च व्यापकत्वं तन्मते दुरुपपादमेव स्यात् न च व्यापकस्य सर्वमूर्त्तसंयोगित्वमावश्यकं न्यायमतेऽपि जात्यादेर्गगनाभावादेश्च व्यापकत्वेऽपि संयोगाभावात् न च व्यापकस्य द्रव्यस्य तथा, पुरुषस्य निर्धर्मकत्वेन द्रव्यत्वानङ्गीकारात् तस्मात्तन्मतेऽपि परिच्छिन्नत्वाभाव एव व्यापकत्वमिति ॥

न वा स वा एष महानज इत्यादि महत्त्वबोधकश्रुतीनां ब्रह्मपरत्वेन गतिः साधीयसी स एष इत्याभ्यां पदाभ्यां प्रत्यक्षगोचरप्रक्रान्तजीवस्यैव परामर्शात् विज्ञानमयशब्देन बुद्ध्युपाधिकस्य जीवस्यैव श्रुतत्वात् ॥

यदप्युत्क्रान्त्यादिहेतुभिर्जीवस्याणुत्वमुक्तं तदपि दुरुक्तम् उक्तश्रुतिभिर्वक्ष्यमाणानुकूलतर्कसहकृतानुमानैश्च स्वतो महत्त्वसिद्धौ उत्क्रान्त्यादिश्रुतीनामन्तःकरणोपाधिकोत्क्रान्त्यादिपरत्वेनाणुत्वासाधकत्वात्, अत एव ,बुद्धेर्गुणेनात्मगुणेन चैवमाराग्रमात्रो ह्यवरोऽपि दृष्ट, इत्यादिश्रुतौ बुद्धिगुणेनौपाधिकेनाराग्रमात्रोऽतिसूक्ष्मोऽभिहितः बुद्धिर्हि अन्तःकरणं तच्च परिच्छिन्नमेव सर्वैरुपेतम् अतिसूक्ष्मस्य च कीटादेरन्तःकरणमतिसूक्ष्ममेवेति युक्तं तदुपाधिक-

स्यात्मनोऽपि सूक्ष्मत्वमिति, आत्मगुणेन चेत्यवर इत्यनेन सम्बध्यते यथासंख्यान्व स्यात्मनोऽपि सूक्ष्मत्वमिति, आत्मगुणेन आत्मधर्मेणापरिच्छिन्नत्वादिनाऽवरः न विद्यते वरं श्रेष्ठं महत् यस्मात् सः आत्मगुणेन आत्मधर्मेणापरिच्छिन्नत्वादिनाऽवरः न विद्यते वरं श्रेष्ठं महत् यस्मात् सः वान्तः करणोपाधिकत्वेन सूक्ष्मः स्वस्वरूपेण तु महान् अपरिच्छिन्न इत्यर्थः। न वस्तुतो ऽणुत्वं सिध्यति, अथवा आराग्रमात्र इत्यनेन दुर्ज्ञेयत्वमिन्द्रियाग्राह्यत्वरूपं प्रतिपाद्यते हि सर्वेषामन्तःकरणमाराग्रमात्रं, मनुष्यादीनां तदसंभवात् अन्तः करणे शरीरसमानपरिमा त्वस्य व्यवस्थापयिष्यमाणत्वात् तथा च बुद्धितादात्म्यापन्नत्वेनापि तदुपाधिको इन्द्रियाग्राह्यः स्वतस्तु सुतरामिति सिद्ध्यति तथाच श्रुतिः, पराञ्चि खानि व्यतृणत्स्वयम्भू स्मात्पराङ् पश्यति नान्तरात्मन्, यन्मनसा न मनुते, अगृह्यो न हि गृह्यते इत्या इममेव चाभिप्रायमाकल्य्य सहैवोपदिशति श्रुत्यन्तरम् अणोरणीयान् महतो यानिति। यदि चाणुत्वप्रतिपादकशब्दश्रवणमात्रेणाणुत्वं जीवस्य स्यात् स परमात्मनोऽपि भवन्मते ऽणुत्वं दुर्निवारम् परमात्मप्रकरणेऽपि हि एष आत्माऽणीयान् व्रीहेर्वा यवाद्वा, स य एषोऽणिमैतदात्म्यमिदं सर्वमित्यादिश्रवणात् तस्मा ह्यणुत्वबोधकशब्दानामौपाधिकाणुत्वपरतया श्रुत्यन्तरप्रसिद्धेन्द्रियागोचरत्वपरत वा गतिः साधीयसी। कथमन्यथा एक एव तु भूतात्मा भूते भूते व्यवस्थि आकाशवत्सर्वगतश्च नित्यः, घटसंवृतमाकाशमित्याद्याः प्रदर्शिताः श्रुतयोऽणुत्वा विभुत्वमुपदिशन्त्यः एवं तत्त्वमसि यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् सूक्ष्मात्सूक्ष नित्यं तत्त्वमेव त्वमेव तत् इत्याद्याः साक्षात्ब्रह्मरूपतां जीवस्य प्रतिपादयन्त्य नतु वद् द्वि यमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्, यत्र हि द्वैतमिव भवतीत्यादयो द्वैतं प्रतिक्षि श्रुतयः प्रामाणिकतामासादयेयुः तस्माद् बुद्ध्याद्युपाधिकृतमेवाणुत्वमिन्द्रियाग्राह्यत्वेन दुर्ज्ञे मेव वेमा बोधयन्त्यो नाणुपरिमाणतां भिन्नतां च ख्यापयन्तीति भवति सर्वमनवद्यम् ॥

परमते तत्सृष्ट्वा तदेवानुप्राविशत्, अन्तः प्रविष्टः शास्ता जनानामित्यादिश्रु परमात्मनः प्रवेशश्रवणात् व्यापकस्याप्राप्तदेशाभावेन प्रवेशासम्भवेनाणुत्वश्रु देरुपाधिसम्बन्धादेव ब्रह्मपरवाक्ये वक्तव्यतया जीवपरवाक्येऽपि तथैवाभ्यु न्तुमुचितत्वात् एवं गुहां प्रविष्टाविति श्रुतौ एकस्यैव प्रविष्टपदस्य जीवे मु ईश्वरे गौणी वृत्तिरित्येतत्कल्पनापेक्षयोपाधिकृतस्यैवोभयोः प्रदेशप्रवेशस्य कल्प मुचितत्वादिति ॥

ननु स एनान् ब्रह्म गमयतीति श्रुतौ विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमु दिव्यमिति श्रुतौ च दर्शितं गतिमुक्त्योः सामानाधिकरण्यमनुपपन्नम् नहि मुक्तावु करणमस्ति येन तदुपाधिकस्यापि ब्रह्मगमनं संभाव्येतेति चेन्न अणुवादिनामेव दोष एष आपतति न ब्रह्मवादिनाम् तथाहि यस्मिन् देशे जीवोऽस्ति तत्र ब्रह्म नवा आद्ये ब्रह्मप्राप्त्यर्थं तद्देशादपक्रम्य जीवस्य गमनानुपपत्तिः द्वितीये ब्रह्म व्यापकत्वहानिः।

न च प्राकृतदेहपरित्यागेनाप्राकृतदेहोपभोगयोग्यदेशप्राप्तिरेव मुक्तिः तादृशदेशस्याप्रामाणिकत्वात् न हि तत्र प्रत्यक्षमाक्रमितुं क्षमते ऽसन्निकर्षात् नाप्यनुमानं लिङ्गाभावात् नाप्यागमस्तथाविधागमाभावात्, न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते, इत्यादिश्रुतिविरोधेन अविद्यानिवृत्युत्तरं मुमुक्षुभिः प्राप्यस्य कस्यचिदपि देशस्याभावात् प्राणोत्क्रमणं विना तद्देशगमनासंभवात् तदेव चानया श्रुत्या निषिध्यते तस्मान्न निर्गुणब्रह्मसाक्षात्कारवतां प्राप्यः कश्चिद्देशोऽस्तीति किंतु ब्रह्मभावरूपो मुख्य एव मोक्षो भवति ब्रह्मैव सन् ब्रह्माप्येति, ब्रह्मविद्ब्रह्मैव भवति, वहवो ज्ञानतपसा पूता मद्भावमागता इत्यादिश्रुतिस्मृतिभ्यः, किं च, भवदुक्तदेशस्य सावयवत्वेनानित्यतया मोक्षस्यानित्यत्वप्रसङ्गः अभ्युपेयते च सर्वैरेव मोक्षवादिभिस्तस्य नित्यत्वम्, श्रुतिरप्याह न स पुनरावर्त्तते इति तस्मान्मुख्यगतेरसम्भवादुपाधिनिवृत्त्या तत्कृतभेदनिवृत्तिरेव गतिशब्देन विवक्ष्यते ॥ ये तु पुराणादिषु प्रसिद्धाः कैलासवैकुण्ठसत्यलोकादिशब्दैरुदीर्यमाणाः स्थानविशेषास्तेऽपि सत्त्वप्रधानकमायापरिणामा एव तत्र प्राकृतेनैव देहेनोपभुज्यमानः सगुणोपासनया लभ्यमानश्चिरतरकालपर्यन्तमवतिष्ठमानः मोक्षपदेन कैश्चिद्व्यपदिश्यमानः सुखविशेषो न मुख्योमोक्षः ॥ तदुक्तं पुराणे

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्

इति भवति सर्वमवदातम् ।

एतेन तेन प्रद्योतेनैष आत्मा निःक्रामतीति गतिश्रुतिः यथा ऽनः सु समाहित उत्सर्जन् याति एवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् यातीति स्वाभाविकगतिमच्छकटदृष्टान्तेन प्रतीयमाना जीवस्य स्वाभाविकी गतिरनुपपन्नेति प्रलापोऽपि नितरांनिरस्तः परेषाम्, अत्र हि एष इत्यनेन बुद्ध्युपहितस्यैव परामर्शात् गतेः शुद्धात्मनिष्ठत्वाप्रतिपादनान् दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यस्य कुत्राप्यसम्प्रतिपन्नत्वेन गत्यंशे साम्यस्य विवक्षणेन स्वाभाविकगतेः श्रुत्याऽबोधनात् शकटगतेरपि पारमार्थिकत्वस्यासम्प्रतिपन्नत्वेन व्यवहारसिद्धाया एव वाच्यत्वाच्चेति ॥ ननु तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुतौ प्राणशब्दप्रतिपाद्यान्तःकरणस्योत्क्रान्तेः प्रागेव आत्मोत्क्रान्तेरवगमयन्त्यामौपाधिकगतिपरता न सम्भवतीति चेन्न अन्तः करणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्च तत्र प्राणपदेन क्रियाशक्तिमत एवान्तः करणस्याभिधानेन तदुत्क्रमणात्प्रागेव ज्ञानशक्तिमदन्तः करणमुत्क्रामतीत्यभिप्रायकत्वात् दृश्यते च सुषुप्तौ ज्ञानशक्तिमतोऽन्तः करणस्य लयेऽपि क्रियाशक्तिमतस्तस्यावस्थानम् अन्यथा श्वासप्रश्वासनिःसरणानुपलब्धिप्रसंगादिति ॥

इदमपि च विचारमर्हति ' अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, इत्यादिश्रुतिप्रमाणकाङ्गुष्ठपरिमाणकत्वेन स्थूलत्वस्य आराग्रमात्रो ह्यवरोऽपि दृष्ट इत्यादिश्रुत्याऽऽराग्रपरिमाणकत्वेन सूक्ष्मत्वस्य अणोरणीयानित्यादिश्रुत्या सूक्ष्मतरत्वस्य वालाग्रशतभागस्येत्यादिश्रुत्या सूक्ष्मतमत्वस्य चागत्या भवतोपगन्तव्यतया न्यूनाधिकपरिमाणमापन्नानां

जीवानां सावयवत्वेन विनाशित्वापत्त्या मुक्त्यन्वयानुपपत्तिः अणुत्वानुपपत्तिश्च ।
कत्वपक्षे तु मनुष्यशरीरसम्बन्ध्यङ्गुष्ठप्रमाणकहृदयाकाशस्थितसंकोचविकास
करणोपधानभेदेनाङ्गुष्ठप्रमाणकत्वम् कीटादिसूक्ष्मसूक्ष्मतरसूक्ष्मतमशरीरसम्ब
करणोपधानभेदेन सूक्ष्मत्वादिकं च व्योम्न इव सूचीकटाहकोटरादि भेदेन सर्वमुपपद्यते ।

किंचात्मनोऽणुत्वे गङ्गादिनदीगवगाहमानस्य सर्वाङ्गीणशैत्याद्युपलम्भानुप
रात्मनोऽणुत्वं तिरस्करोति युगपद्धस्तपादादिसम्बन्धस्याणावात्मन्यसम्भवा
न चैकदेशस्थितेऽप्यणावात्मनि सर्वाङ्गीणसुखदुःखाद्युत्पत्तौ न कश्चिद्विरोधः साक्षा
दात्मासम्बन्धिनोऽपि हस्तपादादेरात्मसम्बद्धशरीरसम्बन्धित्वेनात्मसम्बन्धितया यौग
तन्निष्ठसुखाद्यवच्छेदकत्वसम्भवादिति वाच्यम् वृक्षनिष्ठसंयोगादौ वृक्षसाक्षात्सम्बन्धि
व संयोगादेः अवच्छेदकत्वदर्शनेन परम्परासम्बद्धस्यावच्छेदकत्वासंभवात् अ
वृक्षसंयुक्तनेत्रादिशरीरावयवेऽपि वृक्षगतकपिसंयोगाद्यवच्छेदकत्वप्रसंगात् अतस्त
त्कार्यस्य स्वाश्रयसाक्षात्सम्बन्धिन्येव देशादाववच्छेदकतया सुखाद्याश्रयीभूतेनात्मना हस्त
युगपत्साक्षात्सम्बन्धाभावेन न संभवत्यवच्छेदकत्वम् अतः सर्वाङ्गीणशैत्याद्यनुपल
प्रसङ्गस्तदवस्थ एव । अपि चोक्तरीत्यैतच्छैत्योपलब्ध्युपपादने चरणे जायमानायाः क
कव्यथायाः नेत्राद्यवच्छेदेनाप्युपलब्धिः प्रसज्येत । नेत्रादावप्यात्मसम्बद्धशरीरसम्ब
तया ऽऽत्मनिष्ठदुःखाद्यवच्छेदकत्वस्य वारयितुमशक्यत्वादिति ॥

यदप्यणुत्वादिनोत्प्रेक्ष्यते यथा शरीरैकदेशस्थितेऽपि चन्दनबिन्दौ शरीरव्या
गन्धोपलब्ध्याऽऽश्रयं वियुज्यापि गन्धो गुणो गच्छति, यथा वा प्रदीपप्रभाऽऽश्रयं वियु
देशान्तरं व्याप्नोति तथा ज्ञानसुखादयोऽप्यात्मगुणाः अणुमात्मानं वियुज्य श
व्याप्नुवन्तीति न सर्वाङ्गीणसुखाद्युपलम्भासंभवः । किंच द्रोणं बृहस्पतेर्भागमित्यादिस्मृ
त्यनुरोधेन जीवानामंशवत्त्वात् करचरणादिवर्त्तिषु तत्तदंशेषु सुखदुःखादिसम्ब
दात्मनोऽप्यंशिनः सुखदुःखादियौगपद्यानुभवस्य योगिनां योगबललब्धकायव्यूह
ध्वंशेषु भोगवैचित्र्यस्य चोपपत्तिः जीवानामणुत्वेन परस्परव्यावृत्ततया भोगासांकर्य
श्वरादूभेदश्च सिध्यतीति ।

तदपि व्यामोहमात्रम् । गुणानां स्वाश्रयमपहाय गमनस्य कै
विचक्षणैस्तार्किकादिभिरनङ्गीकारात् , तथासति तेषां द्रव्यत्वप्रसङ्गात् गमनं
तादात्म्येन मूर्तस्य कारणत्वात् चन्दनसूक्ष्मांशानामितस्ततो भ्राम्यतां वायुना वीज्यमा
नामनुद्भूतरूपवतामुद्भूतगन्धवतां रूपस्य न प्रत्यक्षमयोग्यत्वात् गन्धस्य च योग्यत्वाद् भव
प्रत्यक्षमिति न स्वाश्रयमपहाय सम्भवति गन्धस्य गमनमिति चन्दनबिन्दु
दृष्टान्तत्वासम्प्रतिपत्तेः । प्रभाऽपि प्रदीपाज्जायमाना संकोचविकासशालिनी द्रव्यमेव न गु
संकुचति हि प्रदीपे संकुचति प्रभा विकसति च तस्मिन् विकसतीति सार्वजनीनानुभ
तदः प्रभाया अपि दृष्टान्तत्वासम्प्रतिपत्तेः, जीवस्याणुत्वे चांशित्वासम्भवेन करचर

दिप्रदेशेषु तदंशगमनस्यासम्भवदुक्तिकत्वात् सांशत्वे विनाशप्रसंगात् करचरणाद्यवच्छेदे-नानुभूयमानसुखाद्यनुपलब्धिप्रसङ्गस्योपदर्शितस्यानिवार्यत्वाच्च ।

द्रोणं बृहस्पतेर्भागमित्यर्थवादवाक्यं तु केवलं द्रोणप्राशस्त्यबुबोधयिषया प्रवृत्तं नासंख्यश्रुतिस्मृतियुक्तिविरुद्धं निरवयवस्य नित्यस्यात्मनो मुख्यमंशित्वं शक्नोति व्यवस्थापयितुं नहि बृहस्पतेः खंडीकृत्यैकेनांशेन द्रोणस्य जनिरन्यैश्चांशैर्बृहस्पतेः स्थितिरिति शक्यते केनापि विश्वस्तुम्, भवन्मतेऽप्यात्मनो नित्यतयाऽखण्डनीयस्य खण्डासम्भवेन द्रोणत्वबृहस्पतित्वादेः शरीरवृत्तिधर्मतया शरीरस्यैव खण्डीकृत्योत्पत्तेर्वक्तव्यतया ऽत्यन्तमसंभावितत्वात् अंशबोधकवाक्यमंशसदृशार्थकथनतयाऽर्थवाद एव अत एव अंशो नाना व्यप देशादिति सूत्रे अंश इवेतिव्याख्यास्यति भगवत्पादः, अर्थवादवाक्येन पदार्थव्यवस्थितौ आदित्यो यूपः, यजमानः प्रस्तर इत्याद्यर्थवादैरादित्यादेर्यूपादिरूपताया अपि स्वीकारप्रसङ्गात् तस्मन्नांशित्वं नाप्यंशत्वं जीवानामिति ॥

यदपि जीवोऽणुरपि शीघ्रगमनशालितया क्रमेण तत्तदिन्द्रियसंयुक्तः क्रमिकतत्तदिन्द्रियजन्यज्ञानजनकोऽपि शतपत्रभेदनवन्न तस्य क्रमः प्रतीयते इत्याह, तदपि पराहतम् एवमपि हि आत्ममनसोरुभयोरसंख्यगतिकल्पनाऽतिगरीयसी स्याद् भवताम्, गतिमत्त्वेनात्मनो विनाशित्वप्रसङ्गादिकं च, अस्माकं तु चैतन्ये गतिजन्यत्वाभावेन मनोमात्रे गतिः सापि शरीरसमानपरिमाणस्य मनसो बहुषु समयेषु तत्तदिन्द्रियसंयुक्तत्वमेवास्तीति भवत्पक्षापेक्षयाऽल्पीयसी गतिरिति भवति लघीयसी कल्पना ॥

अपिचात्मनोऽणुत्वे सर्वेषां जीवानां भोगसांकर्यापत्तिः भेदेऽपि जीवकरादिवर्त्तितदंशयोरभेदस्यापि स्वीकृतत्वेन तयोर्भोगसांकर्यस्य भवद्भिरुपगततया स्वतोभिन्नानामपि जीवनां चेतनत्वादिनाऽभेदस्यापि सत्त्वात् । ननु शुद्धभेदोऽननुसंधानप्रयोजकः सचास्त्येव परस्परं जीवानामिति कुतो भोगसांकर्यम् जीवकरादितवर्त्तिदंशयोस्तु न शुद्धो भेद इति नायं दोष इति चेत् किं तच्छुद्धत्वम् अंशांशिभावासहचरितत्वमभेदासहचरितत्वम्वा आद्ये भवन्मते जीवस्य वस्तुत ईश्वरांशत्वेन जीवेशयोर्भोगसांकर्यस्य दुर्वारत्वात् अननुसंधानप्रयोजकस्य कस्य चिदभावात् । ननु जीवं प्रति यथा जीवांशानामंशत्वं न तथेश्वरं प्रति जीवानामंशत्वम् अपित्वन्यदेव तद्धि तत्सदृशत्वे सति ततो न्यूनत्वरूपमौपचारिकम् अस्ति चैतत् चन्द्रबिम्बस्य गुरुबिम्बः शतांश इत्यादावतो न दोष इति चेत् किमत्र जीवांशानां मुख्यमंशत्वम् भवतामभितम् न घटादिकं प्रति कपालादीनामिवारम्भकत्वं जीवानामनादित्वात्, न वा खंडत्वं निःप्रदेशत्वादच्छेद्यत्वाच्च भिन्नाभिन्नद्रव्यत्वमंशत्वमिति चेत् तथासति जीवेशयोर्जीवानां च परस्परं भोगसांकर्यस्य दुर्वारत्वात् स्वतो भिन्नानां तेषां चेतनत्वादिनाऽभेदस्यापि भवद्भिरुपेतत्वात् एवं समूहसमूहिनोर्भेदमभेदञ्चाभ्युपगच्छतां भवतांमते एक समूहान्तर्गतजीवानां स्वाभिन्नसमूहाभिन्नत्वेनाभेदस्य स्वतो भेदस्य च सत्त्वेन भोगसांकर्यस्य वारयितुमशक्यत्वात् ॥

अभेदासहचरितत्वमिति द्वितीयस्मिन्नपि पक्षे जीवेशयोर्भेदमभेदं चाङ्गीकुर्वता-मद्वैतमतप्रवेशमनिच्छतां जीवेषु दुःखित्वादयोधर्माः पारमार्थिका एव न काल्पनिका इत्युपगच्छतां भवताम्मते सकलेभ्यो दुःखिभ्यो जीवेभ्यो ऽभेदस्य सत्त्वादीशस्यापरि-मितानि दुखान्यापतेयुः अननुसधानप्रयोजकस्याभेदासहचरितभेदस्यासत्त्वात् वेदान्त-सिद्धान्ते नैतद्दूषणमापतति यदि हि वयं वास्तविकं दुःखादिसम्बन्धं जीवस्या-भ्युपागमिष्याम तदा समाक्रमिष्यन्त एवेमानि दुःखानीश्वरमपि तदभिन्नं, नत्वेवमपि तु असङ्गोह्ययं पुरुषः, विमुक्तश्च विमुच्यते, कामः सङ्कल्पोविचिकित्सा श्रद्धाऽश्रद्धा ह्रीर्धी-र्भीरित्येतत्सर्वं मन एवेत्यादिश्रुतिभिः, शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते इत्यादिगीतास्मृतिभिश्च कामाद्युपलक्षितदुःखादेरन्तःकरणस्यैव धर्मत्वेन वस्तुतोऽसङ्गे जीवेऽपि दुःखादिसम्बन्ध आध्यासिक एवेत्युपगच्छामा ऽतो ऽस्माकं मते जीवे दुःखादि-सम्बन्धाभावात्तदभिन्ने ब्रह्मणि कुतस्तरां दुःखादिसम्बन्धसंभवः ।

अपि च जीवब्रह्मणोर्भेदमभेदं चाङ्गीकुर्वतां भवताम्मते सर्वान् जीवानात्मत्वेन ब्रह्म पश्यति नवा, न चेत् तस्य सर्वज्ञत्वहानिः 'पश्यति चेत् स्वाभिन्नत्वेन नानाविधनिरय-दुःखव्रातोपप्लुतान् जीवान् पश्यन्नितान्तदुःखि स्यात्, ननु भेदमपि पश्यति, तर्हि ईश्वरः स्वस्मिन् जीवाभेदमाकलय्य नितान्तदुःखी भवति भेदंपश्यन्नदुःखो भवतीत्य-स्युरीकृतं तदेतदीश्वरेऽप्येककालावच्छेदेनोभयं 'दुःखंतदभावश्च' विरुद्धमापातयता भवता प्रद-र्शितंमहद्बुद्धिवैभवं कःश्रद्दधीत तस्मादत्र पक्षे सर्वसत्यतयैवाभिन्नतयैव च सर्वाधारस्य सर्वज्ञस्य पश्यतोब्रह्मणः सर्वसंसारवन्धः स्यादित्यादीनि विवरणोक्तान्यपि दूषणानि पतन्त्येव ॥

किं च भेदपारमार्थिकत्वस्य 'न चार्थानामपि परस्परं भेदः समीचीनज्ञानपद्धति-ध्यास्ते, इतिपंक्तिव्याख्यायां निराकरिष्यमाणतया न समानसत्ताकभेदाभेदपक्षः प्रमाणपथमव-तरति प्रामाणिकानाम्, तस्मात् पूर्वोक्तदूषणभीषणाच्च नाणुरपितु व्यापक एवात्मेति सिद्धम् ।

अत एव भगवताऽपि ,नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः, इत्यर्जुनं प्रति-बोधयता व्यापकतैवात्मनः प्रत्यपादि । न च ब्रह्मणा जीवस्य तादात्म्यसत्त्वनिबन्धनं तत्र व्यापकत्वाभिधानं, तथासति हि तदुपदेशवैयर्थ्यम् आत्मतत्त्वमविद्वांसं दुःखाम्बुधौ निमग्नमुद्विग्नमानसमर्जुनं प्रति शोकमोहौ परिजिहीर्षता संसारहुतभुजि हूयमाना-न्यांश्च जीवान्तुद्दिधीर्षता निगूढमात्मतत्त्वमुपदिशता भगवता त्वं स्वतः परिच्छिन्नः शोकमोहादिमानेवासि किं तु ब्रह्मतादात्म्येन व्यापकोऽप्यसीत्यभिहिते कथमर्-जुनस्य शोकमोहौ निवर्त्तेयातामिति स्वयमप्यवधारय, परित्यज च दुराग्रहग्रहं विजहीहि चैनमकाण्डताण्डवमणुवादं, स्वीकुरु च 'नावेदविन्मनुते तं बृहन्तम्, इति श्रुतिप्रतिपादितं वेदविदेकगम्यं शोकमोहादिनिवर्त्तनक्षममक्षुण्णं व्यापकत्वपक्षमिति ॥

एतत्पक्षे हि स्वभावत एव व्यापकत्वस्यान्तः करणधर्मेण शोकमोहादिना सर्वथैवा-संस्पृष्टत्वस्य लाभाद्वश्यं शोकमोहादिर्निवर्ततेति सार्थको गीताशास्त्रसमारम्भः, अनुवदति स्म च भगवान् कामः संकल्प इत्यादिश्रुतिप्रतिपादितकामादेरन्तः करणधर्मताम्, 'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतानित्यादि नेत्यलम् ॥

१ कणभक्षाक्षचरणप्रणीतशास्त्राध्ययनपरिशीलनपरिपक्वविचारचातुरीसमुपजातप्रतिपक्षपक्ष लक्ष्यक्षोभक्षमयुक्तिकदम्बसमुद्भावनकुशलतालतासमाश्लिष्टाः 'तार्किकास्तु अणुवादमेनमेवमधि-क्षिपन्ति तथाहि आत्मनोऽणुत्वे सुखदुःखादीनामात्मधर्मत्वेन तेषां तदाश्रयस्याणोरात्मनश्च न प्रत्यक्षं क्षमेत उत्पत्तुम् प्रत्यक्षे महत्त्वस्य कारणत्वात् । न च यथाऽऽलोकस्य चाक्षुषप्र-त्यक्षं प्रति कारणत्वेऽपि न तमः प्रत्यक्षे कारणत्वम् नवा वायावुद्भूतरूपाभावप्रत्यक्षे उद्भूत-रूपस्य नवा परमाणौ महत्त्वाभावप्रत्यक्षे महत्त्वस्य कारणत्वम् एवमात्मतद्गुणप्रत्यक्षेऽपि न महत्त्वस्य कारणत्वमुपेयमिति वाच्यम् द्रव्यनिष्ठविषयतासम्बन्धेन प्रत्यक्षं प्रति सामान्यत एव महत्त्वस्य कारणत्वात् अणोरात्मनः प्रत्यक्षासंभवात् । न च यथा द्रव्यनिष्ठा-भाववृत्तिविषयतासम्बन्धेन प्रत्यक्षे महत्त्वस्य स्वसमवायिविशेषणतासम्बन्धेन कारणत्वे महत्त्वाभावप्रत्यक्षे व्यभिचारं वारयितुं महत्त्वाभावान्यत्वमभावे निवेश्यते कार्यतावच्छेदक-सम्बन्धकोटौ, तथैवोक्तकार्यतावच्छेदककोटौ द्रव्यांशे आत्मान्यत्वं विशेषणीयमतोऽणोरप्यात्मनः प्रत्यक्षं संभवतीति वाच्यम् महत्त्वाभावप्रत्यक्षस्य निश्चितत्वेनोक्तकार्यकारणभावे व्यभि-चारं निवर्तयितुं तदन्यत्वनिवेशोऽर्हत्यौचित्यम् आत्मनोऽणुत्वं तु नाद्यापि निश्चितं येन तदन्यत्वनिवेशोऽप्यौचित्यमासादयेत् प्रत्युत अणुत्वपक्षे उक्तनिवेशस्यावश्यकतया कार्यकारण-भावे गौरवमप्यात्मनोऽणुत्वं नितरां तिरस्करोति ।

अपिच तत्तच्छरीरावयवेषु तत्तद्धस्तपादादिषु अवच्छेदकतासम्बन्धेन ज्ञानसुखाद्यु-त्पत्तये तत्र तत्रात्मनो ऽनन्ता गतयस्तत्तज्जनकाश्च संयोगविभागादयः तत्तज्जन्याश्चानन्ता अप्रामाणिकाः पदार्थाः कल्पनीया इति सुव्यक्तमेवातिगौरवमणुवादिनाम् विभुत्ववादिनां तु नैतानि भवन्ति कल्पनीयानीति महल्लाघवम् ।

ननु नैयायिकस्य यावत्यो मनोगतयस्तावत्य एव मनोऽनभ्युपगच्छतामस्माकमणुवादिना मात्मगतय इति न नैयायिकानां लाघवमितिचेन्न सुखादिसाक्षात्कारकरणतया ,मनसैवेदमाप्तव्यम्, यन्मनसा न मनुते, इत्यादिमनोवोधकश्रुतिभिश्च कर्तृभिन्नस्याणुपरिमाणकस्य हि मनसो भव-ताऽपि स्वीकरणीतया मनोगत्यंशे उभयोः साम्येऽप्यात्मगतयो भवतोऽनन्ता अधिका एव, नचाणोरात्मन एव करणत्वमप्यस्तु किं मनसा यथा हि अहं मां जानामीत्यनुभवादेक-स्यात्मनः कर्मत्वं कर्तृत्वं चाविरुद्धं तथा कर्तृत्वकरणत्वे अप्यविरुद्धे स्यातां रूपभेदेनोभयो रुपपादनस्य समानत्वादिति न मनोऽभ्युपेयमिति वाच्यम् यतो यथाऽनुभवमेव हि पदार्थानां भवत्युपगन्तव्यत्वम् ,यथाऽऽहुः, सम्विदेव हि भगवती वस्तूपगमे नः शरणमिति, एवंच तत्तदनुभवोपपादनायानेकस्थलदृष्टविरुद्धतोपशमनाय च एकस्मिन् रूपभेदेनावच्छेदकभेदेना वा विरुद्धोऽपि धर्मो भवत्युपपादनार्हः अतो मां जानामीत्यादौ अन्तः करण-

शरीरादिरूपभेदेनैकस्य कर्तृत्वं कर्मत्वं च कल्प्यते, यत्र तु न तादृशो ऽनुभवस्तत्र न तथा चैत्रः स्वमारोहतीत्याद्यनुभवस्यासत्त्वान्न तत्र रूपभेदेनाप्येकस्य कर्तृत्वकर्मत्वे कल्पनामर्हतः तद्वदिहात्मनः कर्तृत्वकरणत्वानुभवासिद्धेर्न कर्तृत्वकरणत्वे संभवतः नहि मनसा मया जानामीत्याद्यनुभवः दृष्टविरुद्धकल्पनं चातिप्रसङ्गावहं दुःशकमेव तस्मादहं मनसा संदेहाद्यनुभवाच्च मनोऽपि स्वीकार्यमेवेत्यनन्ता मनोगतयोऽनन्ताश्चात्मगतयोऽनन्ताश्च तत्तज्जन्याः पदार्थाः अनन्ताश्च तत्तज्जन्या अभ्युपेतव्या इति पुनरपि महद्गौरवमापतितमणुवादिनाम् ।

नतु वाह्यपदार्थानामनन्तत्वेन तैः सहैकस्य विभोरात्मनः संयोगविभागचिन्तने ऽस्मत्स्वपक्ष एवातिगौरवमावहतीति चेन्न विभोरीश्वरस्याकाशादेश्च भवताऽभ्युपगतैः तैः सह वाह्यपदार्थस्य यः संयोगोविभागश्च तदतिरिक्तस्यात्मनि संयोगस्य विभागस्य चास्वीकारेण गौरवविरहात् । न च संयोगादेरुभयमात्रनिष्ठत्वात् आकाशेन घटस्य यः संयोगः स घटाकाशोभयनिष्ठ एव नासावात्मनिष्ठः किंतु तदतिरिक्त एवतथेति वाच्यम् संयोगादेरुभयमात्रनिष्ठत्वाभावेन त्रितयनिष्ठत्वाविरोधात्, यया हि क्रियया पूर्वं देशात्तदवच्छिन्नाकाशदेशच्च विभज्योत्तरदेशेन संयुज्यते मूर्तो घटादिस्तयैव क्रिययाऽऽकाशादिभिरात्मभिः संयुज्यतेऽतोन तदतिरिक्तं कारणान्तरमुपलभ्यते कल्प्यते वा सामग्र्यभेदे च कुतः कार्यभेदः स्यात्, नचात्र समवायिकारणभेदात्सामग्रीभेद एवास्तीति वाच्यम् तथा सति उभयनिष्ठताऽप्येकस्य संयोगस्य न स्यात् समवायिकारणयोर्भेदादतः सामग्रीभेदो नास्त्येव, नहि भवतः समवायिकारणद्वयघटितैका सामग्री तथा मम वहुतरसमवायिकारणघटिताऽप्येका सामग्रीति न संयोगादिभेदः ।

न चैवमेकस्यैव संयोगस्य कालाकाशादिसाधारण्ये इन्द्रियलक्षणे ज्ञानकारणे विशेषणोपादानं न्यायमुक्तावल्यादिप्रदर्शितमफलं तदुपादानेऽप्येकस्यैवात्ममनः संयोगस्य कालादौ वृत्त्याऽतिव्याप्तेरवारणात् तस्मान्न त्रितयनिष्ठत्वमेकस्य संयोगस्य पूर्वपूर्वग्रन्थकारसम्मतमिति वाच्यम् तेषामननुमतत्वेऽपि प्रदर्शितयुक्त्या तत्सिद्धौ वाधकाभावात् तदुक्तं गदाधरभट्टाचार्यैः व्युत्पत्तिवादे 'नहि कस्य चिद्ग्रन्थकृतो विपरीतलेखनं युक्तिवलाद्वस्तुसिद्धौ वाधकम्' इति । इन्द्रियलक्षणवाक्यघटकज्ञानकारणपदस्य कार्यवृत्तितवार्थकत्वात् एवमन्यत्रापि यथा सम्भवमूहनीयम्, उभयमात्रनिष्ठत्वे संयोगादेरभ्युपगम्यमानेऽणुवादिभिः प्रदर्शितस्य गौरवस्य दुर्पारहरत्वापत्त्या नैयायिका एव पराजिता भवेयुः तस्मात्सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डित इति न्यायमनुसृत्य पूर्वग्रन्थकारैरविचारितं यदिदं संयोगादेर्बहुनिष्ठत्वं तार्किकचूडामणिभिः कल्पनाधिनायकैरस्मद्गुरुभिः परिकल्पितम् पूदन्या गूढार्थतत्त्वालोके उपनिवद्धं तदवश्यं तार्किकैरङ्गीकार्यमिति ॥

नतु सन्तूक्तरीत्याऽऽकाशनिष्ठसंयोगविभागव्यक्तय एवात्मनिष्ठाः नतु ततोऽतिरिक्ताः परंतु तासां व्यक्तीनां तन्मतसिद्धैरनन्तैर्व्यापकैरात्मभिः सम्बन्धा अनन्ताः कल्पनीया एवं पुनर्गौरवमापतितं तार्किकाणामिति चेन्न तन्मते एकस्यैव समवायस्य तत्सम्बन्धतया गौरवविरहात्, यथा च तन्मते संयोगादिव्यक्तीनां सम्बन्धकल्पनं तथा भवन्मतेऽणावात्मनि तासां

संयोगादिव्यक्तीनां येऽभावास्तेषामनन्तानामनन्तसम्बन्धकल्पयनं गौरवग्रस्तमेव पूर्वोक्तदूषणं पुनरधिकमेवेति न्यायमतमेव ततो ज्यायः ।

इदमपि च विचारमर्हति वेदान्तिमते मनसो मध्यमपरिमाणाभ्युपगमेन न्यायमतादप्यधिकं लाघवमणुवादनिराकरणे वेदान्तिनोऽर्हन्त्युद्भावयितुम् यतोऽमी शरीरं व्याप्यावतिष्ठमानस्यान्तः करणस्य प्रहरपर्यन्तं पादे शिरसि च विद्यमानाया वेदनाया वेदने एकामेव मनसो गतिं कल्पयन्ति, अणुवादिनस्तु अणुनो मनसोऽनन्ताः गतीः कल्पयन्तीति व्यक्ते एव लाघवगौरवे इति ॥

नन्वेवमपि शरीरादन्तःकरणस्य निर्गमनमुपगच्छतां वेदान्तिनामनन्तैर्बाह्यैः पदार्थैः सूर्यचन्द्रादिभिः सह संयोगविभागकल्पनेनाधिकं गौरवमिति चेन्न उक्तप्रक्रियया मनसैवानुद्रष्टव्यमित्यादिश्रुत्या च मनसोऽभ्युपगमस्यावश्यकतया श्रुतियुक्तिविरुद्धानन्तजीवभेदकल्पनमपेक्ष्य कतिपयसंयोगादिकल्पनस्य गौरवानापादकत्वात् । वस्तुत उपदर्शितयुक्त्या एकस्यैव संयोगस्य त्रितयनिष्ठतया सूर्यचन्द्रादिप्रदेशे चक्षुषा सहैव मनसो गमनात् तत्र जायमाने उभयमतसिद्धे चक्षुः संयोगे एव मनो निष्ठत्वस्यापि स्वीकरणीयतया तदतिरिक्तस्य संयोगस्य तत्र तत्राकल्पनाच्चेति महल्लाघवं वेदान्तिनाम् ॥

अपिच योगिनः कायव्यूहस्थले योगवलोत्पादितयावच्छरीरावच्छेदेन भोगोऽप्यात्मनस्तत्तच्छरीरेष्ववस्थानं सम्पादयन्नात्मनोऽणुत्वं तिरस्करोति, तत्तदन्तः करणस्य तत्तदेकैकशरीरमात्रनिष्ठत्वेऽपि संकोचविकासशालिनो वहिर्गमनकौशल्यमाश्रयतोऽभिभूतरजस्तमोंऽशस्य तस्य योगविशेषोपार्जितयावद्देहेषु यौगपद्येनावस्थानमर्हत्यौचित्यम्, नत्वणुवादे आत्मनो मनसश्चाणोरनेकस्मिन् शरीरे युगपदवस्थानासंभवात् । मनसोऽनुपगमे चाणावात्मन्येव सुखदुःखादयो धर्मास्तत्परिणामरूपाः भवद्भिरुपेतव्यास्तेषामुत्पत्तिविनाशाभ्यामात्मनोऽप्युत्पत्तिविनाशौ प्रतिक्षणं प्रसज्यमानौ को निवारयितुमुत्सहेत ॥

इत्थं चाणुत्वपक्षे न प्रत्यक्षं प्रमाणमपितु प्रदर्शितः प्रत्यक्षविरोध एव नाप्यागमः किंतु प्रदर्शितागमविरोध एव, नापि परुपन्यस्यमानमनुमानं मनागप्यस्ति मानम् आत्मत्वमणुवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदिति हि परैरुद्भाव्यतेऽनुमानम् भवति तत्र व्यापकावृत्तित्वमुपाधिः, अस्मन्मते आत्मन एकत्वेनात्मत्वस्य जातित्वाभावेन स्वरूपासिद्धिश्च जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतयाऽप्रामाणिकत्वात् घटोऽयमित्याद्यनुभवो हि घटत्वादिसद्भावे मानं नतु तस्य जातित्वेऽपीत्यतः साधनाप्रसिद्धिश्च । एवं जीवोऽणुः ज्ञानासमवायिकारणसंयोगाश्रयत्वात् मनोवदित्यनुमानं निरसनीयम् अस्मत्सिद्धान्तेऽसमवायिकारणत्वानभ्युपगमेन साधनाप्रसिद्धेः मनसो मध्यमपरिमाणाभ्युपगमेन दृष्टान्तासिद्धेश्च व्यवस्थापयिष्यते च मनसो मध्यमपरिमाणमग्रेऽग्रे तस्मात्सर्वप्रमाणविरोधादुपेक्ष्योऽयमणुवाद इति ।

यदपि तत्त्वमस्यादिवाक्यानामुपासनापरत्वमुक्तं तदपि प्रत्युक्तं चित्सुखाचार्यादिभिः तथाहि किं प्रमाणान्तरविरोधादुपासनापरत्वमुत स्वार्थे तात्पर्यावगमोपायाभावात् नाद्यः

जीवब्रह्मणोः प्रमाणान्तरागोचरत्वात् अभेदेऽपि विम्बप्रतिविम्बयोरिव घटाकाशमहाका-योरिव वा भेदाभेदावभासोपपत्तेश्च प्रमाणान्तराविरोधात्, नापि द्वितीयः छान्दोग्यषष्ठे तत्त्वमसीति नवकृत्वोऽभ्यासात्, अनेन जीवेनेत्यर्थवादोपादानात्, अथ योऽन्यथाऽतोनिन्दुः भेददर्शननिन्दनात् ऐतदात्म्यमिति चोपक्रमोपसंहारयोरैकरूप्यात्, जीवब्रह्मणोरैक्ये प्रमाणान्तरागोचरतयाऽपूर्वत्वात्, मृदादिदृष्टान्तैश्चोपपादनात् जीवब्रह्मणोरैक्ये तात्पर्य-सत्त्वात्, अन्यत्रापि ,स एष इह प्रविष्ट आ नखाग्रेभ्यः, योऽन्यां देवतामुपास्तेऽन्योऽसावन्यो-ऽहमस्मि न स वेद यथा पशुः, सइदं सर्वं भवतीत्यादिश्रवणात् एकत्वे तात्पर्यावगमात् तद्धास्य विजज्ञौ, तरतिशोकमात्मवित्, तमसः पारं दर्शयति, भिद्यते हृदयग्रन्थिः, ब्रह्म ब्रह्मैव भवति, ब्रह्मैव सन् ब्रह्माप्येति, विमुक्तश्च विमुच्यते, इत्यादिभिः श्रुतिभि-विद्याया अविद्यानिवृत्तिब्रह्मभावफलकत्वश्रवणात्, उपासनोजनितज्ञानस्याप्रामाणिकत्वेन निवर्त्तकत्वायोगादिति ।

यत्तु तत्त्वमसीत्यत्रासमस्तयोरपि तत्त्वंपदयोः तस्य त्वमितिविग्रहप्रदर्शनेन समासं परिकल्प्य विश्वं व्याकुलयति द्वैतवादी तदपि—

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥

इति कैवल्योपनिषदम्, अहं ब्रह्मास्मीत्यादिमहावाक्यम् उत्तरगीतायामर्जुनं प्रति वदुपदिष्टायां महाभारते उपनिबद्धायाम्—

अहंब्रह्मेति मां ध्यायेदेकाग्रमनसा सकृत् ।
सर्वं तरति पाप्मानं कल्पकोटिशतैः कृतम् ॥
हन्यान्मुष्टिभिराकाशं क्षुधार्तः कण्डयेत्तुषम् ।
नाहं ब्रह्मेति जानाति तस्य मुक्तिर्न जायते ॥

इत्यादिवचनचयं चानालोचयन्तं प्रत्येव शोभते त्वमेव तदित्यादिषु समासा-सत्त्वादिति ॥

नन्वेवं द्वा सुपर्णा सयुजा सखायौ, ऋतं पिबन्तौ सुकृतस्य लोके, इत्यादिश्रुतिः

नत्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः ।
नचैव न भविष्यामः सर्वे वयमतः परम् ॥

इत्यादिस्मृतिश्च जीवेशयोर्जीवानां च परस्परं भेदं दर्शयन्ती न सामञ्जस्यमञ्चे-चेत् को ब्रूते जीवेशयोर्जीवानामन्येषां च परस्परं भेदो नास्तीति किंत्वसौ न पारमार्थिक-स्तु काल्पनिक इतिब्रूमः, नहि भेदः पारमार्थिक इतिश्रुत्या प्रतिपाद्यतेऽपितु अपारमार्थिकोऽपि भेदो जनयत्येव स्वव्यवहारमतात्त्विकं यक्षानुरूपो बलिरिति तादृशमेव च भेदमादाय सर्वे लौकिकाः वैदिकाः स्मार्त्ताश्च व्यवहाराः प्रवृत्ताः विधिप्रतिषेध-पराणि शास्त्राणि पुराणेतिहासादीनि च, तदुक्तं भेदं खण्डयद्भिरद्वैतं मण्डयद्भिः खण्डने 'स्यादप्येष पर्यनुयोगो यद्यविद्याविद्यमानभावं भेदं पारमार्थिकमभेदमिच्छन्तोऽपि ,प्रत्यक्षादि-

इति एवं सति जीवब्रह्मणोः पारमार्थिकमभेदं व्यावहारिकं भेदमङ्गीकुर्वतामुपास्योपासकभावादिव्यवस्थां सम्पादयतामस्माकं न शक्यते काचित्केनचिदनुपपत्तिः प्रदर्शयितुमिति वारं वारं विभावय ।

इत्थंच द्वासुपर्णेत्यादिश्रुतिः लोकसिद्धमेव भेदमादाय स्वार्थाभिधानचातुर्यमश्नुवन्ती अभेदश्रुतिस्मृतिपुराणादिभिर्दौर्बल्यमासादयन्ती अज्ञातज्ञापकत्वेन प्रमाणतामाश्रयन्त्या अद्वैतश्रुतेः समकक्षतामनाप्नुवन्ती कथं तस्याः स्वार्थात्प्रच्युतिं कर्तुमुत्सहेत ॥

एवं च ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वंवेद, योऽन्यां देवतामुपास्ते, इत्यादिभेदनिन्दाप्रतिपादिकाः ,द्वितीयाद्वै भयं भवति, एकोवशी सर्वभूतान्तरात्मा, रूपं रूपं प्रतिरूपो बभूव, तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्, एकं सद्विप्रा बहुधा वदन्ति अग्निंयमं मातरिश्वानमाहुः ( ऋक्संहिता अष्टक ३ अनुवाक, २३ मण्डल ४६ ऋचा ) स आत्मानमेवावेददहंब्रह्मास्मीति, एक एव तुभूतात्मा भूते भूते व्यवस्थितः एकधाबहुधाचैव दृश्यते जलचन्द्रवत्, उपाधिना क्रियते भेदरूपः, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्, यस्मात्परं नापरमस्ति किंचित्, जाग्रत्स्वप्नसुषुप्तादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्मात्माहमिति ज्ञात्वा सर्वबन्धात्प्रमुच्यते ॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ( कैवल्योपनिषद् ) नान्योऽस्ति द्रष्टा, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्यादयोऽभेदप्रतिपादिकाः अन्यार्थत्वेन परिणेतुमशक्याः भूयस्यः श्रुतयः, नित्यः सर्वगतः स्थाणुरित्यादिभगवद्गीतास्मृतयः, दूरस्थोऽपि न दूरस्थः पिण्डस्थः पिण्डवर्जितः । विमलः सर्वदा देही सर्वव्यापी निरञ्जनः ॥ इत्याद्युत्तरगीतास्मृतयश्च, विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यतीत्यादिविष्णुपुराणादिवचांसि चोपपद्यन्तेतमाम् तस्मादेक एव सन्नयमात्माऽविद्याऽन्तः करणाद्युपाधिभेदादभिन्नोऽपि भिन्न इवापरिच्छिन्नोऽपि परिच्छिन्न इवाकर्ताऽपि कर्तेवावभासते गगनमिव घटकटाहकोटरकुटीकीटिभिरिति सर्वमुपपन्नं व्यापकत्वपक्षे नाणुत्वपक्षे इतिबोध्यम् ॥

अतएव श्रीमद्भागवते वेदस्तुत्यादौ प्रपञ्चमिथ्यात्वोपवर्णनपुरस्सरमद्वैतमतमेव व्यवास्थापि तदिह किंचित्प्रदर्श्यते ।

सत इदमुत्थितं सदितिचेन्ननु तर्कहतं व्यभिचरति क्वच क्वचन मृषा न तथोभययुक् । व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ इति अयमभिप्रायोऽस्य वर्णितः श्रीधरस्वमिना इदमिति पक्षनिर्देशः सदिति साध्यम् सदुत्पन्नत्वादिति हेतुः यत् यत उत्पद्यते तत् तदात्मकम् यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं तद्वदिति, तदेतन्निराकरोति तर्कहतमिति नन्विति प्रश्नार्थकमादयोजनीयं यत इति शेषः सदुत्पन्नत्वमस्तु सत्त्वंमास्त्विति व्यभिचारशंकानिवर्त्तकतर्कशून्यमेतदनुमानमित्यर्थः तर्कहतत्वमेव दृढीकरोति व्यभिचरति क्वचेति यत् यजन्यं तत् तदात्मकमितिव्याप्तिर्नास्ति कुलालादिजन्येषु घटादिषु व्यभिचरात्, ननु तदुत्पन्नत्वं न तत्का-

रणकत्वमात्रमपि तु तदुपादानकत्वमतो न व्यभिचार इत्याशंकायामाह क्वचन मृषेति क्वचि न्मृषाभूते रज्जुसर्पादौ, व्यभिचरतीति पूर्वेणाभिसम्बन्धः रज्जूपादानकस्यापि सर्पस्य न रज्जुत्व मन्यथा रज्जुवदेवाबाधापत्तेः, ननु तत्र न केवला रज्जुरेवोपादानं किं तु तदज्ञानमपीति मृ तत्कार्यस्य सर्पस्य मिथ्यात्वमिति चेदत्रापि तत्समानमित्याह न तथोभययुगिति रज्जु सर्पादिकं यथोभययुक् अविद्याधिष्ठानाभ्यां युक्तमुभाभ्यां जायमानं न सत्यं तथे विश्वमपि अविद्याब्रह्मस्वरूपाधिष्ठानाभ्यां जायमानमुभययुगेव अतोनेदमपि सत् किंत्वारोपितमेवेत्यर्थः । नन्वेकत्र सतोऽन्यत्रारोपः प्रसिद्धोऽत्यन्तासत्त्वे कथं प्रपञ्च विभ्रमः स्यादित्याशंक्याह अन्धपरम्परयेति अन्धपरम्परया यो विकल्प इत्यन्वयः । अ माशयः भ्रमेऽपेक्षितस्य संस्कारस्य सिद्धये पूर्वपूर्वप्रतीतिमात्रमुपयुज्यते न तु वस्तुसत्त्व मतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्य उत्तरोत्तर आरोपोभविष्यति इत्यन्धपरम्परान्यायेन विकल्प प्रपञ्चो व्यवहृतये इषितः व्यवहारसाधको भवतीत्यर्थः ननु अक्षय्यं ह वै चातुर्मास्ययाजिन सुकृतं भवतीत्यादिश्रुतिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते नहि नित्यं वस्तु असद्भवितुमर्हतीत्याशंक्याह भ्रमयतीति हे भगवन् ते भारती वेदलक्षणा वाणी उरुवृत्तिभिः बह्वीभिः गौणलक्षणादिवृत्तिभिः उक्थजडान् कर्मश्रद्धाभराक्रान्तमन्दमतीन् भ्रमयति मोह यति, अयंभावः न हि वेदः कर्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यं चिरतरकालस्थायित्वं वा तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, इतिन्यायोपबृंहित श्रुत्यन्तरविरोधादिति ॥

एवं श्रीमद्भागवते एकादशस्कन्धे एकादशाध्याये। भगवद्वाक्यम् —

बद्धोमुक्त इतिव्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥
शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ।
स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी ॥

इत्युक्त्वा पुनस्तत्रैव 'बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः' इत्युक्तम् एवं तत्रै त्रयोदशाध्याये सनकादिकं प्रति भगवतो वाक्यम्—

जाग्रत्स्वप्नः सुषुप्तश्च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ इत्यादिनोपक्रम्य
यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥
असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ इत्युक्तं पुनस्तत्रै

ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति मायास्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ इत्युक्तम् एवम्

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोयम् ॥

इत्यादिरूं च तत्र तत्रोक्तम् तदिसद्धमेतत् भागवतेऽद्वैतमतमेव व्यवस्थापितमिति

चतमे आगमे नारदपञ्चरात्रे प्रथमपटले ।

अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम् ।
तत्र प्रमाणं वेदान्ताः गुरुः स्वानुभवस्तथा ॥ इत्यनेनाद्वैतमतमेव स्पष्टीकृतम्

एवम् सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन्नात्मयायी स्वाराज्यमधिगच्छति ॥

इत्यभिधायिना मनुनाऽप्यैकात्म्यवाद एवामानि ।

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ॥
तथाऽऽत्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमान् ।

इतिप्रतिपादयता याज्ञवल्क्येनाप्यद्वैतमेवावधारि ॥

वहवः पुरुषा राजन्नुताहो एक एव तु । इत्युपक्रम्य
ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ॥

सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केन चित्क्वचित् ॥ इत्यैकात्म्यवादएव महाभारतेऽपि निरणायि ॥

यथा नदी नदो लोके सागरेणैकतामियात् ।
तद्वदात्माक्षरेणासौ निःकलेनैकतामियात् ॥ इतिकूर्मपुराणे

यदस्थूलमनण्वाख्यमप्रमेयमवर्णकम् ।
तद्ब्रह्माहमितिज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ इतिविश्वामित्रस्मृतौ

अत्रात्मव्यतिरेकेण द्वितीयं योन पश्यति ।
ब्रह्मभूतः स एवेह दक्षपक्ष उदाहृतः ॥ इतिदक्षस्मृतौ

सर्वभूतान्तरस्थाय नित्यशुद्धचिदात्मने ।
प्रत्यक् चैतन्यरूपाय मह्यमेव नमोनमः ॥ इतिवासिष्ठे

चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत् ॥ दुर्गासप्तशत्याम्

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
सर्वभूतस्थितं योमां भजत्येकत्वमास्थितः ॥ इत्यादि भगवद्गीतायाम्

तस्यैव नित्यशुद्धस्य सदानन्दमयात्मनः ।
अवच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधैः ॥ इतियोगवासिष्ठेचाभिहितम्

सर्वेषां चैषां वचनचयानां पर्यालोचनया एकमेव निरस्तसमस्तधर्मकमपरिच्छिन्नमानन्दैकरसमात्मतत्त्वमन्यत्सर्वं मिथ्येति सिध्यदात्मनोऽणुत्वं तिरस्करोतीत्यलमतिप्रपंचेनेति ॥

यदपि तार्किकाः सुखदुःखाद्यसंकराय विभुत्वेऽप्यात्मनो नानात्वमुपयन्ति तदपि न शोभनम् सर्वात्मनां सर्वत्र सत्त्वाविशेषेण सर्वमेव शरीरं सर्वस्य स्यादिति सुखदुःख सांकर्यस्यानिवार्यत्वात्, न च यदीयादृष्टोत्पादितं यच्छरीरं तत्तदीयमेव नान्यदीयम् चैत्रशरीरोत्पत्तिसमये सर्वेषामात्मनां सत्त्वेऽपि यच्चैत्रादृष्टोत्पादितं तच्चैत्रीयमेव स्यादतश्चैत्रशरीरेऽवच्छेदकतासम्बन्धेनोत्पद्यमानं सुखदुःखादिकं चैत्रेणैवानुभूयते न मैत्रेण न भोगसांकर्यमिति वाच्यम् चैत्रीयादृष्टोत्पादनसमये सर्वेषामात्मनां सत्त्वाविशेषात्तत् तदीयमेवेति नियन्तुमशक्यत्वात् ?

यदाऽपि संसारप्रवाहस्यानादितया पूर्वपूर्वादृष्टस्योत्तरोत्तरादृष्टनियामकत्वमुच्यते तदापि पूर्वप्रदर्शितरीत्या वीणोपाधिके मृदङ्गोपाधिके चैकस्मिन्नेव वियति परस्परव्यावृत्त विलक्षणशब्दव्यवहारवत् एकेनैव सता चेतनेन परस्परव्यावृत्तसकलचेतनव्यवहारवत्तदन्तः करणभेदेनोपपत्तौ एकमेवाद्वितीयमित्याद्युप्रदर्शितप्रपंचमिथ्यात्वोपवर्णनैकप्रतिपादकश्रुतियुक्त्यादिविरुद्धातिगौरवग्रस्तासंख्यात्मकल्पना निर्युक्तिकैव । अपिचैतन्मते व्यूहस्थले एकस्य योगिनोऽनेकशरीरेषु भोगानुपपत्तिः मनसः प्रत्यात्मनियतत्वेनैकस्य एकस्यैव मनसः सत्त्वेन योगिनोऽप्येकस्यैव शरीरस्य समनस्कतया शेषाणां मनसोऽभावेन तदवच्छेदेन भोगानुपपत्तेः अणुनो मनसो युगपत्तत्तच्छरीरासम्भवात् सिद्धान्ते च मध्यमपरिमाणिनो मनसः संकोचविकासशालिनो बहिर्गमनशक्तिमतो योगव्यसर्वशरीरसम्बन्धोपपत्तिरिति भवति सर्वमनवद्यम् ।

किं चैतदपि विदांकुर्वन्तु भवन्तः कणभक्षाक्षिचरणचरणशरणमवलम्बमानाः परप्रतिक्षेपणैकमतयस्तार्किकं मन्यमानाः दुस्तर्कोद्भावनचातुरीचर्यं चिन्तानाः ! अदृष्टसुखादीनां वस्तुत आत्मधर्मत्वे तन्निवृत्तावात्मनोऽपि निवृत्तिरापतति स्वाभाविकधर्मनिवृत्तिनान्तरीयकत्वात् समवायस्य निरूपयितुमशक्यतया धर्मधर्मिणोस्तादात्म्यस्यैव गन्तव्यतया धर्मनाशे धर्मिनाशस्यानिवार्यत्वात् ॥ तदुक्तम्

आत्मा कर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः ॥ इति

सुखदुःखादीनामात्मन्यौपाधिकत्वे च क्वचिदन्यत्रैव ते धर्मा आस्थेयाः स्फटिके प्रतीयमानो जपाकुसुमस्येवारुणिमा, न चान्तः करणमपहायान्यत्र शक्नुन्ति तेऽस्थातुमतोवेदान्तिनामेव सिद्धान्तोऽवलम्बितो भवद्भिर्द्राविडप्राणायामानुकरणकारिभिरतो न तत्पक्षोऽपि श्रेयानिति ॥

अथ सुखदुःखादीनामन्तः करणस्य धर्मत्वे तस्यैवात्मत्वमप्यस्तु किं ततोऽतिरिक्त आत्माऽऽस्थीयते इति चेन्मैवम् तस्य हि व्यापकत्वं मध्यमपरिमाणत्वमणुपरिमाणत्वं वा स्यात् आद्ये न्यायमताद्य विशेषः तस्य च व्यापकस्य सर्वदा सर्वेन्द्रियसम्बन्धाविशेषाद सर्वेन्द्रियजन्यज्ञानप्रसङ्गः सुखदुःखादिसांकर्यप्रसङ्गश्च तद्वारणाय मनोऽपि स्वीकार्यमेव तथासति तद्भेदेनैव सकलसुखदुःखादिभेदव्यवस्थोपपत्तावात्मभेदकल्पना निर्युक्तिकैव

सुखदुःखादेरात्मनि स्वाभाविकत्वेऽनिर्मोक्षप्रसङ्गश्चोपदर्शितः समापतति । द्वितीये त्वार्हत मतान्न विशेषः तच्चातुपदमग्रे द्वितीयाध्याये, च दूषयिष्यति । तृतीये त्वणुवादोक्तान्येव प्राज्यानि दूषणानि भृशमुद्घोषितान्यापतन्ति तस्मादौपनिषदोऽखण्डसच्चिदानन्दाद्वितीय एवात्माऽन्यत्सर्वं तदविद्याकल्पितम् कल्पिते चाविद्यके जगति सम्भाव्यमानोऽपि दूषणगणो भूषणमेवेत्येष एव श्रुतिस्मृतिपुराणेतिहासादिप्रसिद्धो निःकण्टकः पन्थाः श्रेयानिति ॥

शिष्टपरिगृहीतोऽप्ययमेव मार्गः अत एव परमार्थसारे पतञ्जलिरपि ,रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन, इत्यादिनाऽद्वैतमतमेव दृढीचकार । भर्तृहरिरपि वाक्यपदीये ब्रह्मवादमेवैनं समर्थयाम्बभूवेति नाविदितं तद्ग्रन्थावलोकिनाम्, मीमांसाभाष्यकारोऽपि औत्पत्तिकसूत्रे स एष नेति नेत्यात्मेति होवाच, इत्यादिनिर्विशेषप्रतिपदकान्येव श्रुतिवाक्यान्यात्मस्वरूपनिरूपणावसरे उदाहरन् औपनिषदमतमेव पारमार्थिकतयाऽभ्युपजगाम । तद्व्याख्याता कुमारिलभट्टोऽपि ॥

इत्याह नास्तिक्यनिराकरिष्णुरात्माऽस्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ इत्युपसंजहार

नैयायिकेषु च येऽप्रतिमप्रतिभावन्तो विभाव्यन्ते ते मन्दाधिकारिणां कृते न्यायग्रन्थान् विरचयन्तो ऽन्तेवासिनां नास्तिकतां परिहरन्तोऽतिश्रद्धां स्वशास्त्रे समुत्पादयन्तो वेदान्तमतं तेषु तेषु ग्रन्थेषु तिरस्कुर्वन्तो ब्रह्मज्ञानानाधिकारिणां तेषां कृते ,नबुद्धिभेदं जनयेदज्ञानां कर्मसंज्ञिनाम्, इतिगीतावचनम् ॥

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानिरयजालेषु स तेन विनियोजितः ॥

इति वासिष्ठवचनं चालोचयन्तो वेदान्तसिद्धान्तं तावद् गोपयन्तोऽसत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति न्यायमनुसरन्तो वेदान्त एव स्वीयं परमादरमभिव्यञ्जयन्तो बहुष्वेव ग्रन्थेषु वेदान्तमतानुसारेणैव मङ्गलमाचरन्तो भूयांसोऽनुभूयन्ते तद्यथा ।

विद्यासंध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै हरये विश्वसाक्षिणे ॥

इत्युदयनाचार्यो लक्षणावल्यां प्रतिपादयामास बौद्धाधिकारे च विज्ञानवादिमतमपाकुर्वन्नद्वैतमतमेव व्यवस्थापयाम्बभूव । मैथिलकुलललामो गङ्गेशोपाध्यायोऽपि तत्त्वचिन्तामणौ, गुणातीतोऽपीशस्त्रिगुणसचिव इत्यादिकं मङ्गलमाचरन् वेदान्तमतमेव हृदयेऽवस्थापयामास, नहि नैयायिकैः ईश्वरस्य गुणातीतत्वं कदापि स्वीक्रियते ज्ञानेच्छाप्रयत्नैकत्वैकपृथक्त्वपरिमाणानां नित्यानामनित्यानां च गुणानां संयोगादीनां तस्मिन्नुपगमात् तट्टीकाकारो रघुनाथशिरोमणिरपि वङ्गदेशीयः मैथिलालङ्कारपक्षधरमिश्रशिष्यः अखण्डानन्दबोधाय पूर्णाय परमात्मने, इति मङ्गलं कुर्वन् वेदान्तमत एव श्रद्धां स्वकीयामाविश्चकार अतएव चायम् खण्डनखण्डखाद्यस्यापि टीकां प्रणिनायेति न तिरोहितम्, मैथिलकुलावतंसो गोकुलनाथोपाध्यायोऽपि गृहीतशरयंत्रः

तत्त्वचिन्तामण्यालोकस्य पक्षधरमिश्रप्रणीतस्य टीकाकारो वेदान्ते मिथ्यात्वनि...
मानं ग्रन्थं विरचयांचकारेति किमधिकलेखनेन, अद्यत्वेऽपि अस्मद्गुरवः जगदीश...
रचितबहुतरग्रन्थानामुपरि गूढार्थतत्त्वालोकं नामकं ग्रन्थरत्नं न्यायवार्तिकतात्पर्य...
न्यायभाष्यस्य चादितो द्वितीयाध्यायस्य कियदंशपर्यन्तस्य टीकां प्रणयन्तोऽन्येषां कुसुमा...
तत्त्वप्रकाशादीनां च टिप्पणीं रचितवन्तोऽपि वेदान्तदर्शने एव श्रद्धाभारं वहन्तोऽस्म...
वासिनो वेदान्तस्यैव परमसिद्धान्तत्वं भृशमुपदिशन्तो गीतामधुसूदन्या गूढार्थतत्त्व...
न्यायादिमतं सम्यगुपपाद्य खण्डयन्तोऽद्वैतमतमेव व्यवस्थापयामासुरित्यलमन...
नल्पजल्पनेनेति ॥

## भामती

स्थूलोऽहं दीर्घ इति च न स्यात् । देहपरिमाणत्वे तु सावय...
देहवद्—

### प्रकाशः

निरस्याणुपरिमाणवादं देहात्मवादिचार्वाकादिमतस्यातिस्थवीय...
त्पूर्वमपि निराकृतत्वात्, व्यतिरेकस्तद्भावाभावित्वात्, (५४।३।३) इति सूत्रे...
विस्तरेण निराकरिष्यमाणत्वात् सम्प्रत्यभिधास्यमानां क्षपणकपक्षो...
क्षमाणां वहूनां दूषणानां तत्साधारण्याच्च तन्निराकरणमुपेक्ष्य देह...
देहसमानपरिमाण आत्मेत्यार्हतमतं तिरस्कर्तुमायतते—देहपरिमाणत्वे ति...

### विकाशः

देहपरिमाणत्वे त्विति इह खलु जिज्ञासूनां कृते संक्षेपेणार्हतमतं प्रदर्श्यते अ...
विस्तरेण सप्त पदार्थान् जीवाजीवास्रवसम्बरनिर्जरबन्धमोक्षाख्यानभ्युपगच्छन्ति संक्षे...
द्वावेव पदार्थौ जीवाजीवाविति एतौ च पंचास्तिकायत्वेन व्यवहरन्ति तथाहि १ जीवा...
कायः २ पुद्गलास्तिकायः ३ धर्मास्तिकायः ४ अधर्मास्तिकायः ५ आकाशास्तिकायश्चे...
अस्तिकायशब्दः पदार्थमात्रे पारिभाषिकः तथाच जीवास्तिकाय इत्यस्य जीव...
इत्यर्थः एवमग्रेऽपि एतन्मतेऽपि परमाणव एवावयव्यारम्भक्रमेण वैशेषिकादि...
गदारम्भन्ते ।

तत्र देहमात्रपरिमाणकः चैतन्यमात्रस्वरूपः सततोर्ध्वगमनस्वभावः सावयवो ...
स पुनस्त्रिविधो बद्धो मुक्तो नित्यसिद्धश्चेति तत्रार्हन्मुनिर्नित्यसिद्धः नित्यसाधनैर्मुक्तत्वात्...
केचन साधनैर्मुक्ताः अन्ये तु बद्धा इति भेदः ।

पुद्गलास्तिकायः षोढा पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । त...
लारोहणकेशोल्लुञ्चनादिशास्त्रप्रभवया बाह्यचेष्टारूपया सम्यक् प्रवृत्त्या हि आन्तरो...
क्योऽनुमीयमानो धर्मो धर्मास्तिकायः, सततोर्ध्वगमनं जीवस्य स्वभावः देहे स्थि...
तत्प्रतिबन्धककर्माधीना तस्माज्जीवस्य देहावस्थानेनानुमीयमानोऽधर्मोऽधर्मास्ति...

आकाशास्तिकायश्च द्विविधः लोकाकाशोऽलोकाकाशश्चेति तत्रोपर्युपरि चतुर्दशभुवनेषु स्थितानां लोकानामन्तर्वर्ती आकाशः लोकाकाशः तस्योपरि मोक्षस्थानमलोकाकाशः तदेवं जीवाजीवपदार्थौ निरूपितौ ।

आस्रवसम्वरनिर्जराख्यः प्रवृत्तिलक्षणाः निरूप्यन्ते तत्र प्रवृत्तिर्द्विविधा समीचीनाऽसमीचीना च तत्रासमीचीना प्रवृत्तिरास्रवः संवरनिर्जरौ च सम्यक्प्रवृत्ती तत्र सम्वरः शमदमगुप्तिसम्मितिरूपः तत्र वाह्येन्द्रियनिग्रहः शमः, अन्तरिन्द्रियनिग्रहो दमः, कायवाङ्मनोनिग्रहो दृढतरो गुप्तिः, भूमिगतजीवहिंसापरिहाराय प्रहते मार्गे सम्यगादित्यप्रकाशे सति निरीक्ष्य संचरणं नियताहारनिषेवणादिः सम्मितिः ।

वन्धोऽष्टविधं कर्म तत्र चतुर्विधं घातिकर्म ज्ञानावरणीयम् दर्शनावरणीयम् मोहनीयम् अन्तरीयकं चेति तत्र तत्त्वज्ञानान्न मोक्ष इतिज्ञानमाद्यम् आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं द्वितीयम् वहुषु तीर्थकरप्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं तृतीयम् मोक्षमार्गप्रवृत्तानां तद्विघ्नकरमैश्वर्यादिकमस्त्विति ज्ञानं चतुर्थम् तान्येतानि श्रेयो ,मोक्ष, हन्तृत्वाद्घातिकर्माण्युच्यन्ते ॥

चतुर्विधं चाघातिकर्म आयुष्कम् गोत्रिकम्, नामिकम्, वेदनीयं चेति तत्र शरीरस्थित्यर्थं कर्म आयुष्कम्, अहमत्रभवतो देशिकस्यार्हतः शिष्यवंशे प्रविष्टोऽस्मीत्यभिमानो गोत्रिकम्, एतन्नामा ऽहमस्मीत्यभिमानो नामिकम्, ममेदं ज्ञातव्यमस्तीत्यभिमानो वेदनीयम्, तदेतत्कर्माष्टकं पुरुषं वध्नातीति वन्ध इत्युच्यते ।

मोक्षस्तु अर्हन्मुनिप्राप्तिरिति केचित्, विगलितसमस्तक्लेशतद्वा..स्यानावरणज्ञानस्य सुखैकतानस्यात्मनः उपरिदेशावस्थानं मोक्ष इत्यपरे, अन्ये तु अनादिकालप्रवृत्तशरीरात्रस्थितियुक्तवन्धमुक्तौ सत्यां सततोर्ध्वंगमनं मोक्षं मन्यन्ते, दृष्टं चोर्ध्वगमनं वद्धमुक्तस्य पञ्जरमुक्तस्य शुकस्य यथा वा दृढपङ्कलिप्तस्य जलनिमज्जने प्रक्षीणपंकलेपस्य शुष्कालावुफलस्य निश्छिद्रस्येति ।

सथ चामी सप्तभङ्गीन्यायेनानियताः सिध्यन्ति सप्तानां भङ्गानां ,प्रकाराणाम्, समाहारः सप्तभङ्गीत्युच्यते तेच भङ्गाः १ स्यादस्ति २ स्यान्नास्ति ३ स्यादस्ति च स्यान्नास्ति ४ स्यादवक्तव्यः ५ स्यादस्ति चावक्तव्यश्च ६ स्यान्नास्ति चावक्तव्यश्च ७ स्यादस्ति नास्ति चा वक्तव्यश्चेत्येवंरूपाः 'स्यादिति तिङन्तप्रतिरूपकमव्ययं कथंचिदर्थकं तथाच स्यादस्तीत्यस्य कथंचिदस्तीत्यर्थः एवमग्रेऽपि घटादेर्हि सर्वात्मना सदेकरूपत्वे प्राप्यत्वात्मनाप्यस्तीति स इति तत्प्राप्तये यत्नो न स्यात् अतो घटत्वादिरूपेण कथं चिदस्ति प्राप्यत्वादिरूपेण कथं चिन्नास्तीत्येवमनेकरूपत्वं वस्तुमात्रस्यास्थेयम् एवं च घटादेरस्तित्ववाञ्छायां प्रथमो भङ्गः प्रवर्तनाऽस्तित्ववाञ्छायां द्वितीयो भङ्गः क्रमेणोभयवाञ्छायां तृतीयः युगपदुभयवाञ्छायामस्ति नास्तीति शब्दद्वयस्य सकृद्वक्तमशक्यत्वात् चतुर्थः आद्यचतुर्थभङ्गयोर्वाञ्छायां पञ्चमः द्वित ·चतु[illegible]ङ्गयोरिच्छायां षष्ठः तृतीयचतुर्थयोर्भङ्गयोरिच्छायां सप्तमोभङ्गः इति, एवमेकत्वमनेकत्वं चेति द्वयमादाय स्यादेकः, स्यादनेकः स्यादेकोऽनेकश्च, स्यादवक्तव्यः,

स्यादेकोवक्तव्यः स्यादनेकोऽवक्तव्यः स्यादेकोऽनेकश्चावक्तव्यश्चेति भङ्गोऽवगन्त
एतन्मतखण्डनं द्वितीयाध्यायद्वितीयपादे भाष्यभामत्योर्विस्तरेणावलोकनीयमिति ।

## भामती

नित्यत्वप्रसङ्गः किं चास्मिन् पक्षेऽवयवसमुदायो वा चेतके वाऽवयवाः प्रत्येकं चेतनत्वपक्षे बहूनां चेतनानां स्वतन्त्राणामेकना ऽभावादपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत, अक्रियं वा प्रा समुदायस्य तु चैतन्ययोगे वृक्ण एकस्मिन्नवयवे चिदात्मनोऽप् वृक्ण इहि न चेतयेत् । न च बहूनामवयवानामविनाभावनियमो ह एवावयवो विशीर्णस्तदा तदभावे न चेतयेत्—

## प्रकाशः

अस्मिन् पक्षे किमात्माऽऽरब्ध उतावयवसमुदाय इति विकल्पाद्यं निरा अनित्यत्वप्रसङ्ग इति जन्यभावस्यानित्यत्वनियमात्, इष्टापत्तौ च मुः यानुपपत्तिः तैरप्यात्मनो नित्यत्वस्य मोक्षस्य च स्वीकृतत्वात् । निराकर्तुं किमात्मनोऽवयवाः संघीभूताश्चैतन्यमापद्यन्ते उत प्रत्येकं एवावयवाश्चेतना इति विकल्पयति किंचेति । अपर्यायम् अक्रम त्खल्वात्मावयवाः पूर्वां दिशं जिगमिषन्तो नान्यां दिशं गन्तुमुत्सहन्ते के पश्चिमां दिशं केचिच्चोत्तरां दिशं केचिच्च दक्षिणां दिशं केचिच्च ग च्छन्तीत्येवं विरुद्धदिक्क्रियावत्त्वे शरीरस्यैवोन्मथनं स्यादित्यर्थः । नन वयवानां निर्गमनेऽपि न शरीरस्योन्मथनं संभवति शरीरस्य ततोभिन्न आह—अक्रियंवेति परस्परप्रतिबन्धादिति शेषः । आत्मनोऽवयवा स्थिता अपि शरीरमनुप्रविशन्तः परस्परं समाश्लिष्टाः सन्तस्त्र लभन्ते इति वा स्वत एव संघीभूताः लब्धचैतन्याः शरीरमनुप्रविशन्त उत काकतालीयम्, यादृच्छिकम्, कादाचित्कं तेषां संश्लेषणं ततश्चैतन्य विकल्प्य प्रथमं दूषयति समुदायस्य त्विति । वृक्णे छिन्ने । द्वितीयं द नचेति । अविनाभाव नियमोदृष्टः सर्वदा संश्लेषोदृष्टः तथाच यस्य चिदप्यवयवस्य विश्लेषे चैतन्यास्याभावः प्रसज्येतेति । तृतीयं द य एवेति, कादाचित्कं तेषां संश्लेषणमिव कादाचित्कं तेषां विश्लेष स्यादतः पक्षत्रयेऽप्यनित्यत्वं चैतन्याभावापत्तिश्च दोष आपतति ॥

इदमपिचार्हतमते विचारमर्हति आत्मनोदेहपरिमाणत्वेऽभ्युपगम

कायव्यूहस्थले योगिनः कथमेकदाऽनेकं शरीरं प्रविशेयुः, कथं च मनुष्यदेह-निवृत्तौ तत्समानपरिमाणस्यात्मनः कर्मवशाद्गजादिशरीरं प्रविशतः पुच्छशुण्डादिस्तत्तदवयवावच्छेदेन सुखदुःखाद्युपभोग एवं मशकादिशरीरं प्रविशतोऽपि । न चात्मनः संकोचविकासशालित्वमुपगन्तुं शक्यं सावयवतया गतिमत्तयोत्पत्तिमत्तया च विनाशित्वप्रसङ्गात् तत्तदवयसंयोजकस्येश्वरस्य भवतोपगमप्रसङ्गात् मोक्षाभावप्रसङ्गाच्चेति विस्तरेण त्वार्हतमतनिराकरणं द्वितीयाध्यायस्य द्वितीयपादे भविष्यतीत्यभिसंधायात्र संक्षेपेणोपचिक्षेप ॥

## विकासः

क्षणिकविज्ञानवादिपक्षमक्षममाणस्तमप्यभिलक्ष्य दूषयति विज्ञानालम्बनत्वेऽपीति । इहाध्येतॄणां सौकर्यायातिसंक्षेपतश्चतुर्णां बौद्धानां मतं प्रदर्श्यते बौद्धाः किल सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति भगवद्बुद्धोपदिष्टचतुर्विधभावनयैव परमपुमर्थमुपगच्छन्तो माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धिं नयन्तो यथाक्रमं सर्वशून्यत्वं बाह्यार्थशून्यत्वं बाह्यार्थानुमेयत्वं बाह्यार्थप्रत्यक्षत्वं चाचक्षिरे यद्यपि भगवान् बुद्ध एक एवोपदेष्टा तथापि शिष्यबुद्धिभेदाच्चातुर्विध्यं मतानाम् यथा गतोऽस्तमर्क इत्युक्ते जारैरभिसरणस्य चौरैः परधनहरणस्य अनूचानैः सदाचरणस्य च समयोऽवगम्यते तद्वत्, तत्र क्षणिकत्वं द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वं तच्च घटादौ सत्त्वेन हेतुनाऽनुमिमतेस्म तथाहि ।

घटादयः क्षणिकाः सत्त्वात् मेघमालावत् प्रदीपज्वालावद्वा सत्त्वं हि अर्थक्रियाकारित्वं तच्च किंचित्कार्यजनकत्वं तदेतत् क्रमाक्रमाभ्यां व्याप्तम् तौ च क्रमाक्रमौ स्थायिनः सकाशाद्व्यावर्त्तमानौ स्थायिनोऽर्थक्रियां व्यावर्त्तयन्तौ स्थायित्वमपि व्यावर्त्तयतः, यतो वर्त्तमानार्थक्रियाकरणसमयेऽनागतार्थक्रियाजननसामर्थ्यं स्थायिनोऽस्ति नवा आद्ये क्रमेणाक्रमेण वा तत्र न तावदक्रमेणेति द्वितीयः पक्षः तदानीमेवानागतस्य तत्कार्यस्य सर्वस्योत्पत्तिप्रसंगात् समर्थस्य क्षेपायोगात् यद्यदा यत्करणसमर्थं तत्तदा तत्करोत्येव यथा सामग्री स्वकार्यम् समर्थश्चायं भाव इत्यनुमानात् ।

ननु क्रमवत्सहकारिलाभात्स्थिरादपि भावात्क्रमेण कार्योत्पत्तौ विरोधाभावादस्तु क्रमेणेत्याद्यः पक्ष इति चेत् कथमेकस्मिन् धर्मिणि कदाचित्कार्यजननसामर्थ्यं कदाचिन्नेति विरुद्धौ धर्मावतिष्ठेयाताम् भिद्यन्ते हि भावाः विरुद्धधर्माध्यासेन यथा गौरश्वादिति सार्वजनीनम् । नन्वेकस्मिन् घटे श्यामरक्तरूपयोरिव एकस्मिन्नेव च वृक्षे संयोगतदभावयोः कालशाखामूलादितत्तदवयवरूपावच्छेदकभेदेन सत्त्वमिव एकस्मिन्नेव धर्मिणि कालभेदेन सामर्थ्यासामर्थ्ययोर्द्वयोरपि सत्त्वमास्तामिति चेत् स्यात्सफलोऽयं मनोरथो यद्यवयवसमुदायातिरिक्तोऽवयवी भवेत् स एव तु नाद्यापि सिद्धो यतोऽवयवेभ्यो भिन्नोऽवयवी समस्तेष्ववयवेषु वर्त्तेत प्रत्यवयवं वा आद्येऽन्ययविनोऽनुपलब्धिः प्रसज्येत समस्तावयवसन्निकर्षस्याशक्यत्वात्, न च यावदाश्रयग्रहं विना व्यासज्यवृत्तिः पदार्थो गृह्यते नहि

समस्तेष्वाश्रयेषु वर्तमानं बहुत्वं व्यस्ताश्रयग्रहणे गृह्यते, द्वितीये एकस्मिन्नेव निःपन्ने पटः सिध्यत्येवेत्यन्यतन्तुसिद्धये न कश्चिद्व्याप्रियेत अतो नावयवसमुदा भिद्यते ततश्च यः संयोगवान् प्रदेशः शाखादिर्यश्च तदादिभाववान् प्रदेशो मूलादि परस्परं भिन्नावेव वृक्षादिस्तु न तदतिरिक्तोऽस्ति कश्चिदवयवीत्यतो न कश्चिद्धर्मी धर्मोऽवतिष्ठते योऽत्र दृष्टान्तभावं भजेतेति ।

किंचैतदपि भवान् पृष्टो व्याचष्टाम् सहकारिणः कारणान्तरमुपकुर्वन्ति, नचेन्नापेक्षणीयास्ते, उपकुर्वन्तीति चेत् सोऽयमुपकारः कारणाद् भिद्यते नवा आगन्तुकस्यैवोपकारस्य कारणत्वं न स्थिरस्य तदाश्रयस्य, आगन्तुकोपकारान्वय विधायित्वात् कार्याणाम् ।

अपि च योऽयं सहकारिभिः सलिलानलानिलादिभिर्बीजे उपकाराख्योऽतिशय तत्र बीजमुत्पादकं वाच्यं बीजं च सहकारिणापेक्षमेव स्वस्मिन्नतिशयमादधीत अपर कारिणामसमधाने कुसूलस्थादपि बीजादङ्कुरं प्रसज्येत सहकारिभिश्च बीजेऽतिशयोत्पा शयान्तरमाधीयते नवा नचेद्वृथाऽकिंचित्कुर्वतां सहकारिणां समवधानेन तथा च केव बीजादङ्कुरोत्पत्तिः प्रसज्येत इति पूर्वोक्त एव दोषः, आधीयते चेत् तदा बीजगतोपका सहकारिभिरुपकारः कृत इति तावत्स्थितम् एवमपि योऽयमुपकारोत्पत्तये द्वितीय उ जनयितव्यस्तदर्थं च सहकारिभिरुपकारोऽपेक्ष्यते बीजेन नव न चेद्वृथा सह वधानेन तद्विनापि केवलमेव बीजं स्वस्मिन्नुपकारोत्पत्त्यनुकूलमुपकारमु अपेक्ष्यते चेत् पुनस्तैः सहकारिभिरुपकारो जनयितव्य इत्युपकारपरम्परायामनवस्था एवमुपकाराख्यातिशयार्थमपेक्ष्यमाणैस्तैस्तैः सहकारिभिः प्रत्येकं बीजेऽङ्कुरोपधायक जनयितव्याः तैरप्युपकारैः परस्परं सहकृत्यैव कार्यं जननीयमितरथैकसहकारिजन्येनैव कारेणाङ्कुरोत्पत्तिं को निवारयितुं क्षमेत, अतस्तत्रापि पूर्वोक्तरीत्याऽपेक्षितायामुपका रायामनवस्थाप्रवाहः पतन् केन निवार्येत ॥

यदि च सहकारिभिराधीयमानो भावादभिन्न एवायमतिशय इति द्वितीयः पक्ष तदा पूर्वं प्रतीयमानोऽनतिशयात्मा साम्प्रतिकश्चायमतिशयात्मा इत्युपगच्छता ऽपि क्षणभङ्गवाद एव समर्थितो विरुद्धधर्माध्यासेन भावानां भेदात् । नन्वस्तु कणभ चरणादिपक्षमवलम्ब्य सत्तासामान्यमेव सत्त्वं न त्वर्थक्रियाजनकत्वमिति चेन्न त सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात्, नच तत्र स्वरूपसत्तानिबन्धनस्तद्व्यवहारः, गौरवापत्तेः । नापि सामानाधिकरण्यनिबन्धनोऽभावेऽपि तदापत्तेः, किंचात्र विद्यमाने वर्त्तमानं सत्त्वघटत्वादिसामान्यमन्यत्रोत्पद्यमानेन घटादिना गच्छत्सम्बध्नाति आ आद्ये क्रियावत्त्वेन द्रव्यत्वापत्तिः द्वितीये विप्रकृष्टतया सम्बन्धानुपपत्तिः ।

यद्युच्येत सर्वत्रैव देशे सत्त्वघटत्वादिसामान्यं व्यापकतयाऽवतिष्ठत एवेति न गमनस्या वश्यकतेति तदा मनुष्यादिष्वपि गोत्वादेः सत्त्वापत्त्या सर्वव्यवहारविप्लवापत्तिः । एवं घटे सामान्यमवतिष्ठते विनश्यति स्थानान्तरं वा गच्छति आद्ये निराश्रयस्य धर्मत्वानु

द्वितीये नित्यत्वानुपपत्तिः तृतीये द्रव्यत्वापत्तिः तस्मादर्थक्रियाकारित्वमेव सत्त्वम् अनुगतव्यवहारस्तु अतद्व्यावृत्तिरूपापोहनिबन्धन इति सिद्धं सर्वेषां क्षणिकत्वमिति ॥

नाप्यनागतार्थक्रियासामर्थ्यं तदानीं स्थायिनो नास्तीति द्वितीयः पक्षः तथा सति विरुद्धस्वभावत्वापत्त्या क्षणिकत्वे एव पर्यवसानात्। तस्मात् सर्वं क्षणिकं क्षणिकमिति भावनीयम्।

संसारस्य दुःखात्मकत्वं च न तिरोहितं विवेकिनाम् अन्यथा तन्निवृत्त्युपायपर्येषणानुपपत्तिः, तस्मात् सर्वं दुःखं दुःखमित्यपि भावनीयम्।

ननु कोऽत्र दृष्टान्त इति चेन्न सर्वेषां पदार्थानां क्षणिकतया स्थिरस्यैकस्य कस्यचिद्धर्मस्य धर्मिणश्चाभावेन सर्वे स्वलक्षणा एव पदार्थाः अतस्तद्व्यक्तिनिष्ठो धर्मो नान्यस्यां व्यक्तौ वर्त्ततेऽतो न केन चित्कस्य चिदस्ति सादृश्यम् स्वेन च न स्वसादृश्यम्, तस्मात् सर्वं स्वलक्षणं स्वलक्षणमित्यपि भावनीयम् ॥

सर्वं शून्यं शून्यमित्यपि भावनीयम् भवति हि मया दृष्टमिदं रजतमिति निषेधधीः सार्वजनीना तत्र रजतस्यासत्त्वे तद्विशिष्टस्य दर्शनस्य द्रष्टुरिदन्ताया अधिष्ठानस्य रजतत्वस्य तत्सम्बन्धस्य च समवायादेरखिलस्यैवासत्त्वमापतितं सर्वस्यैव निषेधधीविषयत्वेन निषिध्यमानत्वात् नच तत्र किंचिन्निषेध्यं किंचिच्च। नेत्यर्धजरतीयत्वमुचितम्, नहि कुक्कुट्या एको भागः पकायापरश्च भागः प्रसवाय कल्प्यते तस्मादध्यस्ताधिष्ठानतत्सम्बन्धदर्शनद्रष्टृणामध्ये एकस्याप्यसत्त्वे सर्वस्यासत्त्वं बलादापतेत् नहि गगनकमलिन्या असत्त्वे तन्मालावली सती भवतीति ॥

किंच घटादेर्यदि सत्स्वभावस्तदा कारकव्यापारवैयर्थ्यम् यदिचासत्स्वभावस्तदापि स एव दोषः असत्स्वभावस्य कारकव्यापारशतेनाऽपि सत्स्वभावताप्राप्त्यसंभवात् यदि उभयस्वभावस्तदा विरोध एव यदा न सत्स्वभावो नाप्यसत्स्वभावस्तदाऽपि विरोध एव तदुक्तं लङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥ इति।

व्यवहारश्च स्वप्नव्यवहारवत्सम्वृत्या सम्पद्यते, अतएवोक्तम्—

परिव्राट्कामुकशुनामेकस्याम्प्रमदातनौ।
कुणपः कामिनीभक्ष्य इति तिस्रो विकल्पनाः ॥ इति ॥

तस्माद्यथा सुषुप्त्यवस्थायां न किंचित्प्रतिभाति किं तु शून्यमस्ति अनन्तरं च जगत् प्रतीयतेऽतः शून्य एवात्मा अविद्यावशात् शून्ये एवात्मनि सर्वमिदमसज्जगत् प्रतिभातीति, देवमुक्तभावनाचतुष्टयान्निखिलवासनानिवृत्तौ परमनिर्वाणरूपं शून्यस्वरूपमधिगम्यते इत्येवं सर्वशून्यत्वपक्षं समर्थयन्तस्तथाभावयन्तश्च माध्यमिकसंज्ञया व्यपदिष्टाः ॥

ये च शिष्याः गुरूक्तभावनाचतुष्टयं बाह्यार्थशून्यतां चाङ्गीकृत्यान्तरस्य ज्ञानस्य न शून्यत्वमित्युरीकृतवन्तस्ते योगाचारशब्देन व्यवह्रियमाणाः प्रक्रियामिमां प्राचीकटन् ज्ञानं

तावत्स्वसम्वेद्यमस्तीत्यवश्यमङ्गीकार्यमितरथा जगदान्ध्यप्रसङ्गात् वाह्यं तु ग्राह्यं नोपप... पूर्वोक्तक्षणिकत्वसाधकयुक्तिभिर्वस्तुनोऽस्थिरत्वसिद्धौ वर्तमानोऽर्थो गृह्यतेऽतीतो वा... वर्तमानेन सह चक्षुः संयोगाभावात् येन सह चक्षुः संयोगो जनितः स हि तदै... एव नष्टः यश्च प्रत्यक्षेण गृह्यते नासाविन्द्रियसंयुक्तः तथा चान्येन सह चक्षुः संयो... प्रत्यक्ष इति व्याहतम् । अथास्तु द्वितीयः पक्षोऽतीतार्थोऽवभासते इति तदपि ... मानताऽवभासविरोधात् । किं च ग्राह्योऽवयविरूपः परमाणुरूपो वा नाद्यः कार्त्स्न्य... विकल्पानुपपत्तेः तथाहि प्रत्येकस्मिन्नवयवेऽवयवी कार्त्स्न्येन वर्तते एकदेशेन वा... एक एवावयवोऽवयविना सम्बध्येत नावयवान्तरम् द्वितीये स एकदेश आश्रयीभूतादव... भिन्नः स एव वा आद्ये व्याहृतिः नहि कपाले कपालान्तरेण घट उपलभ्यते द्वितीये ... श्रयः इत्युक्त प्रायम् । नवा परमाणुरूप इति द्वितीयः पक्षः अतीन्द्रियत्वेन परमाणूनां ... सम्भवात् तस्मात् स्वव्यतिरिक्तग्राह्यस्यविरहात् तदात्मिका बुद्धिः स्वयमेव स्वात्मप्रकाशिका ... प्रदीपवदिति, तदेतदुक्तम् ।

नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सा प्रकाशते इति ॥

यथायंग्राह्यग्राहकयोः पृथगवभासः स एकस्मिन् चन्द्रमसि द्वित्वावभास इव ... तत्र चानादिरविच्छिन्नप्रवाहभेदवासनैव निमित्तम्, तदुक्तम् ॥

सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये । तस्माद्विज्ञानमवश्यमुपेयमिति ॥

तदिदं विज्ञानं द्विविधमालयविज्ञानं प्रवृत्तिविज्ञानं चेति तत्राहमितिविज्ञानं... नीलपीताद्युल्लेखि च द्वितीयम् तत्रैकसन्तानवर्तिनामालयविज्ञानानां या वास... प्रवृत्तिविज्ञानजननशक्तयस्तासां च स्व स्वकारणं प्रत्याभिमुख्यं परिपाकः तस्य च ... शब्दाभिलप्यकारणं स्वाश्रयसन्तानवर्ती पूर्वक्षणः तथा च बुद्धिरेवानादिवासनावशादा... कारतयाऽवभासमाना प्रागुक्तचतुर्विधभावनाप्रचयसन्तानसंजातनिखिलवासनोच्छेदन... निमृष्टविविधविषयाकारोपप्लवविशुद्धविज्ञानसन्ततिस्वरूपतामापद्यमाना मोक्ष ... ख्यायते इति ॥

**सौत्रान्तिकास्तु** विज्ञानवादिनाम्मतमिदमननुमन्यमाना अन्यथैव ... तथाहि वाह्यं ग्राह्यं नास्तीति न युक्तं मानाभावात् न च ज्ञानं न ज्ञेयभिन्नं सहैव... मानत्वात् यथा नीलो घटान्न भिद्यते तद्वदित्यनुमानं मानम् ज्ञानज्ञेययोर्भेदोऽस्तु ... लभ्यमानत्वमप्यस्तु इति व्यभिचारशंकानिवर्त्तकानुकूलतर्कशून्यत्वात् ज्ञानस्य ... घटादेश्च वहिष्ट्वेन प्रतिभासमानतया एकदेशस्थत्वलक्षणसहत्वनियमाभावाच्च नीलं ... ज्ञानत्वेऽहं नील इति प्रसङ्गाच्च ॥

यदि च ज्ञानस्वरूपोऽपि नीलो भ्रान्त्या वहिर्वद्भासतेऽतो न तत्राहमुल्लेख इत्युच्यते ... वाह्यार्थमनभ्युपगच्छतां वहिर्वदिति दृष्टान्तानुपपत्तिः न हि मैत्रोवन्ध्यापुत्र इव भाति ...

द्विपश्चिद्व्यवहरति ततश्च भवदीय एव बाणो भवन्तं प्रहरेत्, भेदप्रतिभासस्य भ्रान्तत्वेऽभेदप्रतिभासस्य प्रामाण्यं तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गात्, बहिर्घटादिकं प्रत्यक्षीकृत्य बहिरेव प्रवर्तते न त्वन्तरात्मनीति व्यवस्थादर्शनाच्च उक्ताभेदसाधको हेत्वाभास एव तस्मादिन्द्रियसन्निकृष्टोविषय उत्पाद्ये ज्ञाने स्वाकारं समर्पयति समर्पितेन चाकारेण तत्तदर्थोऽनुमीयते यथा पुष्ट्यादिना भोजनादिकं तद्वदतो न बाह्या आन्तराश्च पदार्थाः कथमप्यपह्नोतुं शक्यन्ते ॥

एवं च शब्दस्पर्शरूपरसगन्धात्मकबाह्यविषयकाः सुखदुःखाद्यान्तरविषयकाश्च षड्विधा अप्यवभासाश्चतुरः प्रत्ययान्, कारणानि, प्रतीत्योत्पद्यन्ते ते च चत्वारः प्रत्यया आलम्बनसमनन्तरसहकार्यधिपतिरूपा उच्यन्ते तत्र नीलादिज्ञानस्य नीलाद्यालम्बनप्रत्ययान्नीलाकारता भवति आलम्बनप्रत्ययो हि विषयरूपः, समनन्तरप्रत्ययात् अव्यवहितपूर्ववर्तिज्ञानात् ज्ञानरूपता, सहकारिप्रत्ययादालोकादेरधिपतिप्रत्ययाच्चक्षुरादीन्द्रियाच्च विषयग्रहणनियमः, जायमानस्य हि तस्य ज्ञानस्य रसादिसाधरण्याप्राप्तिनियामकं चक्षुरादीन्द्रियमधिपतिरित्युच्यते। एवं भूतं भौतिकं चित्तं चैत्तं चेति चतुर्धा विभागः, तत्र पृथिव्यादिकं भूतं रूपादयश्चक्षुरादयश्च भौतिकम्, चित्तचैत्तात्मकश्च स्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः तत्र रूप्यन्ते एभिर्विषयाः रूप्यन्ते इति च व्युत्पत्त्या विषयसहितानीन्द्रियाणि रूपस्कन्धः, आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः, उक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः, घट इत्यादि शब्दोल्लेखिविज्ञानप्रवाहः संज्ञास्कन्धः, वेदनास्कंधनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्ध इति, तदेतत्सर्वं दुःखं दुःखसाधनं चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत् तत्त्वज्ञानानन्तरं च जायमानोविमलविज्ञानप्रवाह एव मुक्तिरित्याख्यायते इति प्रतिपेदिरे॥

वैभाषिकास्तु विषयाणां सर्वेषामनुमेयत्वमेवेत्यसहमानाः यथायोग्यं प्रत्यक्षमनुमेयं च पदार्थं मेनिरे, धूमादेर्हि प्रत्यक्षेणाग्रहणे व्याप्तिसम्वेदनासम्भवेनानुमानप्रवृत्त्यनुपपत्तिः साक्षात्करोमीत्यादिसकललोकानुभवविरोधश्च, तस्मादर्थो द्विविधो ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्परूपं प्रमा कल्पनापोढत्वात् सविकल्परूपमप्रमा कल्पनाज्ञानत्वात्, नच सविकल्पकस्याप्रामाण्ये ततः प्रवृत्तस्यार्थप्राप्तिः सम्वादश्च कथमुपपद्येयातामिति वाच्यम् मणिप्रभायां मणिविकल्पेन भ्रान्त्यात्मकेन प्रवर्त्तमानस्येव पारम्पर्येण प्रतिलम्भसम्भवादिति चोचिरे॥

## भामती

विज्ञानालम्बनत्वेऽप्यहंप्रत्ययस्य भ्रान्तत्वं तदवस्थमेव, तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम्—

## प्रकाशः

तस्य अहंप्रत्ययस्य । स्थिरवस्तुनिर्भासत्वादिति योऽहं बाल्ये माता... वन्वभूवं स एवेदानीं प्रणप्तॄननुभवामीत्यनुभवरूपस्य प्रत्यभिज्ञानस्य... वस्तुविषयकत्वादित्यर्थः । अस्थिरत्वादिति बौद्धैर्ज्ञानानां क्षणिकत्वा... मादित्यर्थः । तथाच बौद्धमतेऽप्यहंप्रत्ययस्य भ्रान्तत्वमेवेति सिद्धम् ।

## विकाशः ।

स्थिरवस्तुनिर्भासत्वादिति यदपि सजातीयविषयकत्वेन प्रत्यभिज्ञासमर्थनं क्रियते तदपि न युक्तं साजात्यं हि तद्वृत्तिधर्मवत्त्वम् तच्च न क्षणैकवर्त्तिषु वस्तुषु संभवति तन्मते सर्वस्यैव क्षणिकत्वेन कस्य चिदपि धर्मस्य पूर्वोत्तरकालवर्त्तित्वाभावात्

एवं सर्वेषामेव बौद्धानां मते प्रवृत्त्याद्यनुपपत्तिः योहि पाकादीनां कर्त्ता स क्षणा... न्नतिकष्टं स हमानो भोजनं समीहमानोभाविनं भोक्तारमुद्दिश्य कथं पाकादिकं कु... कथं वा मोक्षमभिलक्ष्य प्रवर्तेत ।

ननु सत्यपि भेदे एकप्रवाहपतितानामात्मनामन्येषां चाविद्यया न भेदः ... प्रत्यभिज्ञायाः प्रवृत्त्यादेश्च काचिदनुपपत्तिरिति चेदत्रेदं विदाङ्कुर्वन्तु भवन्तो ... प्रतिक्षणं जगतो निरन्वयध्वंसमुपगच्छन्तोऽतिगौरवग्रहं पश्यन्तोऽपि तमुपेक्षयन्तः ... श्रद्धाभारं वहन्तो नितान्तस्वसिद्धान्ताभ्यसनव्यसनव्यामोहापस्मारदूषितान्तः करणा ... भगवन्तं भवमपि तिरस्कुर्वन्तोऽनधिगतशास्त्रतत्त्वान्मन्दमतीन् वञ्चयन्तो बौद्धा ... रयन्तोऽपौरुषेयंवेदमप्याक्षिपन्तोऽखिलवैदिककर्माण्यपलपन्तो लौकिकमपि कर्म ... यन्तोऽनुल्बणमभिनवं प्रपञ्चमुरीकुर्वन्तः, यः खलु बाल्ये मातापितरावन्वभूत् स यदि न स्वरूपेण नापि सूक्ष्मेण रूपेणानुवर्त्तेत कथं तदा तदानींतनेन बालेनेदानीं गण्य... मानेनाभेदं सर्वप्रमाणातिवर्त्तिनं स्थविरस्याघटितघटनापटीयसी स्वयं तदानीमविद्य... तदानींतनैकक्षणस्थायिनी घटयितुं क्षमेतेति ।

नन्वविद्याया अविद्यमानेनापि पदार्थेन समं सम्बन्धो भवन्मत इवास्मन्मतेऽपि चेन्न विशेषात् न खल्वस्माभिरलीकेन सममविद्यायाः सम्बन्ध उपेयते यतो भावी भूतश्च स्वोपादाने सूक्ष्मेण रूपेणानुवर्तत एव सत्कार्यवादाभ्युपगमात् ध्वस्तोपि कारणे सूक्ष्म... वस्थित एवेति नालीकोऽतोयुक्तस्तेन सह सम्बन्धः, भवन्मते तु नैवमसत्कार्यवादोपग... न्वयध्वंसोपगमाच्चालीक एव भावी भूतश्च, अविद्यायास्तत्सम्बन्धस्य च स्थायित्वोपगमे... आत्मन आत्मनश्चासत्त्वे कं विषयीकृत्याविद्याऽवतिष्ठेत तस्याः सविषयकत्वात यं ... साऽवतिष्ठते स एव नास्तीति वचनं कः श्रद्दधीतेति स्वयमपि मुहुरवलोकयन्तु ।

याऽपि उपकारपरम्परायामनवस्थापत्त्या सहकारिनियमानुपपत्तिः प्रदर्शिता ... युक्ता सहकारिसमवधानेन कार्यस्योत्पत्तिरेव हि उपकारो न तु ततोऽतिरिक्तः कश्चि... त्माश्रयादयो दोषाः प्रसज्येरन्, तथाच निःकृके सहकारिनियमेऽङ्कुरादिजननसाम...

४ अहमिदं अहंशरीरं ऐसा वास्तविकरूपसे प्रयोग होना चाहिये था किन्तु ... मगर ऐसा होता नहीं है।



बीजादेः सहकारिसमधानासमवधानाभ्यां व्यवस्थोपपत्तावतिगौरवग्रस्तस्य सर्वव्यवहारोच्छेदकस्य क्षणभङ्गवादस्य निर्युक्तिकस्यात्यनादरणीयत्वादिति अग्रेऽपि स्थाने स्थाने एतन्मतखण्डनं भविष्यतीतीदानीं संतोष्टव्यम् ।

### शांकरभाष्यम्

## तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेना

### भामती

एतेन 'स्थूलोऽहमन्धोऽहं गच्छामीत्यादयोऽप्यध्यासतया व्याख्याताः। तदेवमुक्तक्रमेणाहं प्रत्यये पूतिकूष्माण्डीकृते भगवतीश्रुतिरप्रत्यूहं कर्तृत्वभोक्तृत्वसुखदुःखशोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति।

### प्रकाशः

यदवादि प्रतिवादिना द्वैतवादिना तार्किकादिना कृशोऽहमन्धोऽहमित्यादिप्रत्ययानां गौणत्वं तदप्युपदर्शितरीत्या गौणमुख्ययोर्भेदग्रहस्य तत्कारणस्याभावादेव निरस्तमित्याह—एतेनेति । अध्यासतया भ्रमतया ! अहंप्रत्ययस्य भ्रमत्वे प्रसाधिते तद्विषयदेहान्तःकरणादिगतस्थूलत्वकर्तृत्वादेरपि स्वाश्रयदेहान्तःकरणाद्यध्यासेनात्मन्याध्यासिकत्वसिद्धौ कर्तृत्वभोक्तृत्वादिशून्यस्याशनायाद्यतीताद्वितीयस्य त्रिकालाबाध्यस्य सच्चिदानन्दात्मतत्त्वस्य निःप्रत्यूहमेव निश्चयो भगवत्या श्रुत्या सम्पाद्यते इति प्रयोजनसिद्धिरित्यभिदधाति तदेवमिति । पूतिकूष्माण्डीकृते दुर्गन्धकूष्माण्डफलमिव कृतस्तस्मिन्। नहि अहंकारोऽप्यात्मा भवितुमर्हति आत्मनः सद्रूपत्वेन घटः सन्नित्यादिप्रतीतावपि भासमानतया सर्वत्रानुवर्त्तमानत्वात् अहं घट इत्यादिप्रत्ययाभावादहं·

### भामती

तदेवं सर्वप्रवादिश्रुतिस्मृतीतिहासपुराणप्रथितमिथ्याभावस्याहं प्रत्ययस्य स्वरूपनिमित्तफलैरुपव्याख्यानम् अन्योन्यस्मिन्नित्यादि ।

अत्र चान्योन्यस्मिन् धर्मिणि आत्मशरीरादौ अन्योन्यात्मकताध्यस्य अहमिदं शरीरादीति । इदमिति च वस्तुतो न प्रतीतितः । लोकव्यवहारः लोकानां व्यवहारः, स चायमहमिति व्यपदेशः। इतिशब्द-सूचितश्चशरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाणेन प्रमाय तदुपादानपरिवर्जनादिः। अन्योन्यधर्मांश्चाध्यस्य अन्योन्यस्मिन् धर्मिणि देहादिधर्मान् जन्ममरणजराव्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहात्मभावे समारोप्य, तथा चैतन्यादीनात्मधर्मान् देहादावध्यस्तात्मभावे समारोप्य ममेदं जरा

कारस्य व्यावर्तमानत्वात्, नहि सत्ताजातिस्तत्र भासते तत्साधकप्रमा-
दित्युपरिष्टादपि व्यक्तीभविष्यति । तात्पर्यमुपवर्ण्य भाष्यं योजयति
सर्वप्रवादीति । स्वरूपनिमित्तफलैरिति स्वरूपमन्योऽन्यतादात्म्याध्यासः
न्यधर्माध्यासश्च, निमित्तम् इतरेतराविवेकः, फलम् व्यवहारः । अहं
तिभाष्यघटकमिदं पदं व्याचष्टे—शरीरादीति आदिनाऽन्तः करण
नन्वहमिदम्, अहं शरीरमित्याकारा प्रतीतिर्न जायतेऽपितु अहंस्थूलः
इत्यादिरत आह इदमितिचेति भवतु नाम अहं स्थूल इत्यादिरेव प्रतीति
स्थूलत्वादिरूपेण शरीरादिकमेव वस्तुगत्या गोचरी भवतीतिभावः
प्रत्यपादि प्रतिवादिना धर्म्यध्यासासम्भवाद्धर्माध्यासोऽपि न सं
तत्परिहरति—अन्योन्यस्मिन्नित्यादिना । चैतन्यादीनात्मधर्मानि
त्मनो निर्धर्मकत्वेनेयमुक्तिरयुक्तिरिति चेन्न वस्तुतो निर्धर्मकत्वेऽप्यविद्य
तस्य धर्मधर्मिभावस्य तत्र सत्त्वात् ॥ धर्मिणोस्तादात्म्याध्यासकार्य
मितिव्यवहारं ज्ञापयित्वा धर्माध्यासकार्यमभिदधाति ममेदमिति

## विकाशः

ममेदमिति नन्वस्तूक्तरीत्या परस्परं धर्माध्यासः धर्मिणोस्तु परस्परा
कर्तुमुचितो मानाभावात्, विजयन्ते च तदुपगमे शून्यवादिनो माध्यमिकाः परस्
अध्यस्तत्वाविशेषेणानात्मवदात्मापि बाध्येतेति निरधिष्ठानकमेव जगत्स्यात् इदं
मानमुन्मिषति आत्मा बाध्यः अध्यस्तत्वात् शुक्तिरूप्यवदिति. तस्मान्नोपगन्तु
त्तिकः परस्पराध्यास इति चेदत्राहुः इयं शुक्तिरित्यादिबाधनिश्चयोत्तरं कदाचित् इदं
यज्ज्ञानं तन्मिथ्येत्याकारकः कदाचिच्च रजतमिदमितियज्ज्ञानं तन्मिथ्येत्याकारकश्च द्विवि
उदयमानो विषयविशिष्टभ्रमस्य मिथ्यात्वमवगाहतेऽतो भ्रमस्यैव तत्तद्विषयाया
बाध्यत्वं सर्वैरभ्युपेयम् उक्तबाधकधीकालेऽपीदमर्थस्य तादृशभ्रमवता पुरुषेणानु
नस्य स्वरूपतः सत्यत्वानुभवात् तस्य व्यावहारिकस्वरूपसत्त्वनिश्चयेन तदानीं
ध्यात्वानिश्चयेऽपि मिथ्यात्वेन निश्चीयमानरजतादितादात्म्योपहितरूपेण मिथ्या
रजतादितत्तादात्म्ययोस्तु तदानीमेव बाधात् स्वरूपतोऽपि मिथ्यात्वनिश्चय
च्छेदेन रजतादिकं तत्तादात्म्यं रजतत्वादेः संसर्गश्चाविषयोत्पाद्यते इतिप्रथमप्रत्य
यत्वे । एवं रजताद्यवच्छेदेनेदमादेस्तादात्म्यमिदंत्वादेः संसर्गस्तदानीमविषयोत्पाद्य
यप्रत्ययानुरोधादुपेयते भ्रमविषये बाध्यस्य भ्रमकाले उत्पत्तिस्वीकारात् तस्य
पूर्वमविद्यमानत्वात्. तस्मादुपपन्नः परस्पराध्यासः, तत्रेदं रजतयोः परस्परा
नत्वं शुक्तेरेव तदज्ञानप्रयुक्तस्यैवोभयविधस्य भ्रमस्य जायमानत्वात् ॥ एवं
रजतमिदमित्याकारभेदोपपादनायापि प्रथमे प्रत्यये इदमि रजततादात्म्यस्य,
इदंतादात्म्यस्य च विषयत्वमिति स्वीकार्यमतोऽपि परस्पराध्यासः सिध्यति

न्तरेण हि आकारभेदानुपपत्तिः आकारो हि ज्ञानानां मिथो वैलक्षण्यम् तच्च विभिन्नविषयकत्वरूपम् । नचैतयोरिदं रजतम् रजतमिदमिति ज्ञानयोर्विषयकृतवैलक्षण्यं विनापि प्रकारित्वविशेष्यित्वस्वरूपविषयितावैलक्षण्यादेव वैलक्षण्यं सिध्यतीति वाच्यम् तथासति हि बाह्यविषयमात्रविलोपापत्त्या विज्ञानवाद्यभिमतसाकारवादापत्तिरतो विषयकृतमेव वैलक्षण्यमुपेयम् तदुक्तं मैथिलकुलालंकारैरुदयनाचार्यवर्यैः अर्थेनैव विशेषो हि निराकारतया धियाम्, इति अर्थेन, ज्ञानादत्यन्तभिन्नेनघटादिरूपेण विषयेणाभिन्नो धियां विशेषः, विषय एव हि ज्ञानवैलक्षण्यसम्पादक इत्यर्थः कथमेवमत आह निराकारतयेति बौद्धपरिकल्पिताकारशून्यतया, ज्ञानधर्मो हि घटादिर्विषयितास्थानीयो यो बौद्धैरुपेयते स न ज्ञानवैलक्षण्यसम्पादकोऽपि तु ज्ञानादत्यन्तभिन्नो घटादिर्विषय एव तथा तथैवानुभवानुभवादिति तदर्थः अभिहितं चैतत् गौडब्रह्मानन्द सरस्वतीभिरद्वैतसिद्धिव्याख्याम् ।

तस्मादाकारभेदोपपत्त्यर्थमपि रजतप्रतियोगिकतादात्म्यस्येदमि इदं प्रतियोगिकतादात्म्यस्य च रजते उत्पत्तिरावश्यकीति सिद्धम्, एवं सन्घटः घटः सन्नित्याकारद्वयानुभावत् सद्रूपे ब्रह्मणि स्वरूपेण प्रपञ्चस्तत्तादात्म्यं चाध्यस्यते प्रपञ्चे तु सतो ब्रह्मणस्तदात्म्यमात्रमध्यस्यते नतु स्वरूपतो ब्रह्मापीति तत्तादात्म्यमात्रं काल्पनिकं बाध्यते बाधकज्ञानेन ब्रह्मसाक्षात्कारेण, नतु पारमार्थिकं ब्रह्मापीति न शून्यवादापत्तिः तथा च शून्यवादिनामध्यस्तत्वहेतुः स्वरूपासिद्धः, इममेव च भाष्यटीकाभिप्रायमाकल्याद्वैतसिद्धौ मधुसूदनसरस्वतीभिः बाधेन हि किंचिद्धिरुद्धं तत्त्वमुपदिशताऽऽरोपितमतत्त्वं बाधनीयम् उभयाध्यासे तु किं केन बाध्येतअतएव भगवता भाष्यकारेण सत्यानृते मिथुनीकृत्ये त्युक्तम्, इति प्रत्यपादि

## शाङ्करभाष्यम्

त्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य, अहमिदम्, ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ।

## भामती

मरणपुत्रपशुस्वाम्यादीति व्यवहारो व्यपदेशः, इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः। अत्र चाध्यासव्यवहारक्रियाभ्यां यः कर्तोन्नीतः स समान इति समानकर्तृकत्वेनाऽध्यस्य व्यवहार इत्युपपन्नम्। पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति—मिथ्याज्ञान निमित्तो व्यवहारः। मिथ्याज्ञानमध्यासस्तन्निमित्तस्तद्भावाभावानुविधानाद्व्यवहारभावाभावयोरित्यर्थः। तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह—इतरेतराविवेकेन, विवेकाग्रहेणेत्यर्थः। अथाविवेक एव कस्मान्न भवति, तथा च नाध्यास इत्यत आह—अत्यन्तविविक्तयोर्धर्मधर्मिणोः। परमार्थतो धर्मिणोरतादात्म्यं विवेको धर्माणां चासंकीर्णता विवेकः।

स्यादेतत्। विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यवि युज्यते शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः, इह तु परमा शिचदात्मनो न भिन्नं देहाद्यस्ति वस्तुसत्कुतश्चिदात्मनो भेदाग्रहे तादात्म्यविभ्रम इत्यत आह—सत्यानृते मिथुनीकृत्य विवेकाग्र स्येति योजना सत्यं चिदात्मा, अनृतं बुद्धीन्द्रियदेहादि ते द्वे धर्मिणी मि कृत्य युगलीकृत्येत्यर्थः। नच सम्वृतिपरमार्थसतोः पारमार्थिकं मिथुनम भूततद्भावार्थस्य च्वेः प्रयोगः।

प्रकाशः

ननु भाष्येऽध्यस्य व्यवहार इति यदुक्तं तदनुपपन्नं नहि व्रजतीत्यत्रेवात्रैकस्य कस्य चित्क्रियाद्वयकर्तृत्वमुपलभ्यते इत्य निराचिकीर्षुराह—अत्र चेति व्यवहारक्रियया आक्षिप्तस्य कर्तुर क्रियायामपि कर्तृत्वमतो युक्तः क्त्वाप्रत्यय इत्यर्थः। ननु कस्योक्त द्वयकर्तृत्वं न तावत् शुद्धस्य, अपसिद्धान्तापत्तेः नापि बुद्धितादात्म्या सृष्ट्यादौ बुद्धेरेवाभावादितिचेन्न संसारप्रवाहस्यानादितया पूर्वपूर्व भ्रमजन्यसंस्कारविशिष्टानां हि बुद्धीनां सूक्ष्मरूपेण प्रलयेऽविद्याय स्थितानां सृष्ट्यादौ तत्तत्कर्मसहकृताविद्ययाऽऽविर्भवन्तीनां ता मविद्यया जायमानमवाप्नोति चैतन्यं ततस्तत्तादात्म्यापन्ने तस्मिन् कर्ताऽहमित्यध्यासस्ततो भवति व्यवहारः अतएव वक्ष्यति, अ हि सर्वानर्थं बीजम्, इति॥ नन्वेवमपि व्यवहारोऽप्यध्यास एवेत्य व्यवहार इत्युक्तिरनुपपन्नेति चेन्न अध्यासो भ्रमस्तत्कार्यस्तु शब्दप्रयोगा व्यवहार इति तयोर्भेदात्॥ ननु तथापि अध्यस्य व्यवहार इत्यत्र पौर्व सूचकेन क्त्वाप्रत्ययेनैवाध्यासस्य व्यवहारहेतुत्वं द्योत्यतेऽतो मिथ्या निमित्त इति भाष्यं पौनरुक्त्यमावहतीति चेन्न भुक्त्वा व्रजतीत्यादाविवा

भामती

एतदुक्तं भवति। अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुप न वस्तुसतेति। स्यादेतत् आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य सम समारोपनिबन्धना च प्रतीतिरिति दुर्वारं परस्पराश्रयत्वमित्यत नैसर्गिक इति। स्वाभाविकोऽनादिरयं व्यवहारः। व्यवहारानादि तत्कारणस्याप्यध्यासस्यानादितोक्ता। ततश्च पूर्वपूर्वमिथ्याज्ञानोपदर्शि बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद्बीजाङ्कु परस्पराश्रयत्वमित्यर्थः।

क्रिययोः पौर्वोपर्यमात्रमप्यवगन्तुं शक्नोति मन्दधीरिति तन्नावगच्छतु अतो मिथ्याज्ञाननिमित्त इत्यभाषि भाष्यकृतेत्याह—पूर्वकालत्वेति क्त्वाप्रत्ययेनेति शेषः । सूचयति स्फुटमवगमयति, एषा हि भाष्यकारीया रीतिः प्रथमं सामान्यशब्देनाभिधाय विशेषशब्देनान्वाख्यानमिति । भाष्यं योजयति मिथ्याज्ञाननिमित्तः व्यवहार इति अत्र मिथ्या च तदज्ञानं च मिथ्याऽज्ञानम् मिथ्येत्यनिर्वचनीयेत्युच्यतेऽज्ञानमिति च जडात्मिकाऽविद्याशक्तिर्ज्ञानपर्युदासेनोच्यते इति भाष्यस्थं मिथ्याज्ञानशब्दं विवृणोतिस्म पद्मपादाचार्यः, भामतीकारस्तु मिथ्याज्ञानमितिकर्मधारया च तत् भ्रमात्मकज्ञानार्थकं व्याचष्टे—मिथ्याज्ञानमध्यास इति अज्ञानविवक्षायां प्रकृतानुपयोग इतीदानीमेव व्यक्तीभविष्यति । तस्य अध्यासस्य । ननु शुक्तिरजतादिभ्रमेऽन्यत्र चाधिष्ठानाध्यस्यमानयोर्वस्तुत इतरेतरविवेकः 'भेदः' एवास्ति नत्वविवेकस्तथा सति भ्रममात्रमुच्छिद्येतेत्यतस्तदर्थं स्फोरयति—विवेकाग्रहणेनेत्यर्थ इति भेदाग्रहेण, तथा चाधिष्ठानाध्यस्यमानयोर्वस्तुतो भेदसत्त्वेऽपि तदग्रहान्नाध्यासानुपपत्तिरिति । नन्वात्मानात्मनोरितरेतरतादात्म्यं जातिव्यक्त्योरिव वस्तुभूतमेवोपेयतां तथा च तज्ज्ञानं प्रमैव नाध्यास इत्याशंकानिरासपरं भाष्यमवतारयति—अर्थेति । अविवेकः तादात्म्यं वस्तुभूतमिति शेषः । विवेक इति तथाचोक्तस्य विवेकस्यैव बुद्ध्यात्मनोस्तद्धर्मयोर्नित्यत्वानित्यत्वाद्योः सत्त्वान्न तत्तादात्म्यज्ञानं प्रमेति भावः । नन्ववगतयोरात्मानात्मनोर्विवेकाग्रहोऽध्यासहेतुर्वाच्यो नानवगतयोः नहीदंत्वादिना शुक्तिं रजतत्वेन रजतञ्चाविदुषो भवति इदं रजतमिति विभ्रमः अवगते चात्मनि सर्वानर्थनिवृत्तौ कुतोऽध्यासः संभवतीति चेन्न अपरोक्षभ्रमस्यापरोक्षेणैवाधिष्ठानज्ञानेन निवृत्तिदर्शनात् शब्दानुमानादिनाऽऽत्मनः परोक्षग्रहे जातेऽपि तस्य संसारभ्रमानिवर्त्तकत्वात् परोक्षग्रहविषयीभूतेनात्मनाऽनात्मनो विवेकाग्रहस्येतरेतराध्यासहेतुत्वे वाधकाभावादिति । नन्वदृष्टरजतस्य पुंसोरजतमिदमिति भ्रमाभावात् भ्रमे पूर्वगृहीतो वस्तुभूत एव पदार्थोभातीत्यभ्युपेयम् नचान्तः करणादयोऽन्यत्र वास्तविकाः दृष्टाः येनात्मन्यध्यस्येरन् तस्मादनुपपद्यमानमेनध्यासवादं को विश्वसेदित्यभिमन्यमानः प्रत्यवतिष्ठते-स्यादेतदिति मिथुनीकरणस्याध्यासहेतुत्वमेत्रानन्तर्येण भाष्यात् प्रतीयते नतु तस्य विवेकाग्रहहेतुत्वमतो भाष्यं योजयति—सत्यानृते इति तथा च सत्यानृते मिथुनीकृत्यात्यन्तविविक्तयोर्धर्मधर्मिणोरितिरेतराविवेकेन अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मां-

श्चाध्यस्य मिथ्याज्ञाननिमित्तो नैसर्गिकोऽहमिदं ममेदमिति लोकव्यवहार योजनया मिथुनीकरणाद्विवेकाग्रहस्ततोऽध्यासस्ततो व्यवहार इति लभ्य भाष्ये मिथुनीकृत्येति मिथुनीकरणं नाम येन रूपेणाधिष्ठानारोप्ययोभ्र तत्तत्प्रकारकज्ञानयोः स्मृत्यनुभूतिरूपयोः क्वचिदनुभूतिरूपयोश्च एकस्मि करणे समाविष्टयोर्विषयत्वम्. भवति हि यस्य पुंसः पूर्वमिदमाकारकमधि ज्ञानं ततस्तस्य चाकचक्यदर्शनसमुद्भूता रजतस्मृतिः ततश्चानुभूयमान माणयोस्तयोः पदार्थयोर्विवेकाग्रहस्तत इदं रजतमित्यध्यासस्ततः प्रवृत्ति लक्षणो व्यवहारः। यद्यपि स्मर्यमाणरजतादिभ्यः प्रातिभासिकं रजता मन्यदेव भ्रमे भासते इति सिद्धान्तयिष्यति तथापि अगृहीतरजतादेः पुरुष रजतमित्यादिभ्रमानुत्पत्त्यो भवति रजतत्वप्रकारकस्मृत्यपेक्षेति ।

इदं त्ववधातव्यम् सर्वत्र नानुभूयमानस्मर्यमाणयोरेव भेदाग्रहोऽध्या हेतुः स्फटिकलौहित्यादिभ्रमे दर्पणे मुखादिभ्रमे च तदभावात् अपि क्वचिदनुभूयमानयोरपि भेदाग्रहस्तथा, अतएव पीतः शंख इत्यादिः पित्तद्र वर्त्तिन्याः पीततायाः अनुभूयमानायाः शंखे भ्रमः, वक्ष्यति च पित्तद्रव्यवर्ति पीततां पित्तरहितामनुभवन्, इति । 'ननु तत्तज्ज्ञानविषयत्वरूपस्योक्तमिथुनी करणस्य कथं पूर्वसिद्धं भेदग्रहाभावं प्रति हेतुत्वमभावस्याविद्याजन्यत्व आदावेव जननादिति चेन्नैवम् नहि केवलो भेदग्रहाभावोऽध्यासहेतु त्कोऽपि तु अनुभूयमानस्मर्यमाणयोरतत्तादृशभेदग्रहाभावप्रतियोगितावच्छे कीभूतभेदस्य प्रतियोगितावच्छेदकं यदनुभूयमानत्वं स्मर्यमाणत्वं च तदात्मक मिथुनीकरणस्य भवति भेदग्रहाभावं प्रति प्रयोजकत्वं नहि प्रतियोगितावच्छे दकासम्प्रतिपत्तावभावस्वरूपं सम्पद्यते, हेतुत्वं चात्र प्रयोजकत्वरूपमुपेयम् अ चान्योऽपि दण्डाभावाद् घटाभाव इत्यादौ तत्सत्त्वे तत्सत्त्वरूपां क्षमि प्रयोजकतामिति । युगलीकृत्य एकान्तःकरणनिष्ठतत्तद्वृत्तिविषयतां सम्पा नन्वत्र मिथुनं कृत्वेति कुतोनोक्तमत आह नचेति सम्वृतीति अविद्या तत्का र्य च सम्वृतिः भवति हि एताभ्यामात्मतत्त्वस्य 'आच्छादनम्' संवरणमिति च्चिप्रयोगान्मिथुनभावमप्राप्तयोरेव सत्यानृतयोर्मिथुनभावस्य लाभान्मिथुन भावोऽवास्तव इति सूचितमित्यर्थः । स्यादेतदित्यादिना वस्तुसतोर तादात्म्यविभ्रम इति यदवादि प्रतिवादिना तत् भाष्याशयं स्फुटीकुर्वन् परि हरति—एतदुक्तं भवतीति । न वस्तुसत्त्वेति न वस्तुनः पारमार्थिकत्व त्यर्थः उपयुज्यते इति पूर्वेणान्वयः आरोप्यजातीयस्य पूर्वप्रतीतिविषयत्व मात्रमपेक्ष्यते भ्रमेण नतु तस्य पारमार्थिकताऽपि कथमन्यथा मृत्तिकादिविनि र्मितसर्पाकारे सर्पज्ञानवतोऽगृहीतवास्तविकसर्पस्य पुंसो रज्ज्वाद्युरगविभ्रम इ

भावः। अन्योन्याश्रयदोषेण प्रतीतेरेवाभावान्न प्रातीतिकीमपि सत्तामादाय संभवत्युपपादनमिति शंकते स्यादेतदिति। स्वाभाविक इति अनादिपारम्पर्येणागत- इत्यर्थः। नन्वत्र भाष्यकृत् नैसर्गिकोऽयं लोकव्यवहार इति ब्रवीति उपसंहारे च वक्ष्यति एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूप इति तदेतयोर्भाष्यवाक्ययोः पौर्वापर्यपर्यालोचनया उभयत्र नैसर्गिकत्वोक्त्याऽध्यासव्यवहारयोरैक्यमेव प्रतीयते इति चेन्न कार्यभूतव्यवहारस्य नैसर्गिकत्वे हि कारणस्याध्यासस्य नैसर्गिकत्वं सुतरामुचितमित्यालोच्य उभयत्र नैसर्गिकत्वमुक्तं नच तावता तयोरैक्यमिति बोध्यम्। अनादिश्चायं व्यवहार इति यद्यप्यात्मानात्मनोर्न तादात्म्याध्यासो युक्तो नवा तदीयधर्माणां परस्परसंसर्गाध्यासो युक्तो विरुद्धस्वभावत्वादन्योन्याश्रयग्रस्तत्वाच्च तथापि नैसर्गिकोऽनादिरेवायमध्यासः तन्मूलश्च सर्वो व्यवहारो न शक्यते केन चिदपह्नोतुम्, नहि नैसर्गिके वस्तुनि युक्तिविरुद्धत्वादस्वीकार्यता नाम नह्यन्यत्र स्थूलपृथिव्यां दृश्यमानस्य लोहलेख्यत्वस्य हीरके व्यभिचारात् हीरकं नोपैति कश्चित्, नवा स्वप्नावस्थायां क्षणेन देवः क्षणेन मनुष्यः क्षणेन सिंहः क्षणेन मार्जारादिः प्रतीयमानो युक्तिविरुद्धोऽपि तदानीं नोपैति, नहि दृष्टेऽनुपपत्तिर्दृष्टमेव विघटयति अपितूपपादकं कल्पयति युक्तिविरुद्धत्वं तु मायिकानां भूषणमेव न दूषणम्, यदि ह्ययं संसारोऽनेकविधदुःखमयो युक्तियुक्तोऽभविष्यत् पारमार्थिकमेव कुतोनैनमभ्युपागमिष्यामः नहि वयमस्य संसारस्यापारमार्थिकत्वं व्यसनितया रोचयामहे तस्मादस्माभिरन्योन्याश्रयो दोषोऽत्र सोढव्य एवेति भावः। ननु समारोपप्रतीत्योरितरेतराश्रयत्वमत्राशंकितं तत्र व्यवहारस्यानादितोक्तिरप्रस्तुताभिधानमसंगतं भाष्यकृतामित्याशंकामनुपनुदति व्यवहारस्यानादितयेति। पूर्वपूर्वमिथ्याज्ञानेति अत्र मिथ्याज्ञानपदेन भ्रमजन्यः संस्कारोऽभिमतः यो मङ्गलश्लोकेऽनिर्वाच्याविद्याद्वितयेत्यत्र द्वितीयत्वेन प्रतिपादितः पूर्वपूर्वमिथ्याज्ञानस्य पूर्वसर्गीयमिथ्याज्ञानस्य च नष्टस्य उत्तरोत्तराध्यासात्पूर्वमविद्यमानतया हेतुत्वासंभवात् तस्मात् तज्जन्यसंस्कारस्य स्वजन्यसंस्कारद्वारा तस्यैव वा हेतुत्वमभिमतम् भवति च यथा रजतानुभवजन्यः संस्कारः स्वजन्यसंस्कारद्वारा रजतानुभवो वा रजतभ्रमहेतुः तथा पूर्वपूर्वशरीरेन्द्रियान्तःकरणाद्यनुभवजन्यः संस्कारः तद्द्वारा तत्तदनुभव एव वोत्तरोत्तरशरीरेन्द्रियाद्यध्यासहेतुरिति। अनादित्वादिति बीजत्वाङ्कुरत्वजात्यवच्छिन्नयोरिव भ्रमत्वसंस्कारत्वविशिष्टयोरपि प्रवाहानाद्योर्भवति कार्यकारणभाव इत्याशयः। नन्वध्यासव्यवहारयोरेव किमित्यनादित्वमुक्तं निखिलजगदुपादानस्य मूलाज्ञानस्यापि हि अनादित्वं वक्तव्यम् अत एव मिथ्याज्ञाननिमित्त इतिभा-

ष्येऽकारं प्रश्लिष्यन्तिस्म पद्मपादाचार्याः तथा च निमित्तपदस्योपादानार्थ-मुपगम्य मिथ्याऽज्ञानं निमित्तम् 'उपादानं, यस्येति विग्रहोऽपि सम्भवति तथा च कार्यस्य 'व्यवहारस्यानादेः कारणं मिथ्याऽज्ञानमपि भवत्यनादि चेन्मैवम् शंकाभाष्ये विवेकाग्रहविरहेणाध्यासाक्षेपाद्विवेकाग्रहस्य एवाध्यासोपयोगितया समर्थनीय विवेकाग्रहोपयोगितया च मिथुनीकरण-तत्रान्योन्याश्रयदोषपरिहाराय निमित्तनैमित्तिकयोरध्यासव्यवहारयो-नादित्वं वक्तुमुचितं न तु निखिलप्रपञ्चोपादानस्य मूलाज्ञानस्य प्रकृतोप-पयोगात् तस्मात् मिथ्याज्ञाननिमित्त इति भाष्ये नाकारप्रश्लेषो निमित्तशब्दविरोधाच्च मूलाज्ञानस्योपादानतया निमित्तकारणत्वाभावात् तदनादित्वं तु देवताधिकरण एवोपयोगितया वक्ष्यते तस्माद् भामतीप्रस्थान-मेव सम्यक् न पञ्चपादिकाप्रस्थानमिति प्रतीमः अतएवोक्तं कल्पतरौ 'तस्माद्भाष्यार्थतत्त्वज्ञो वाचस्पतिरगाधधीः, इति ।

न परस्पराश्रयत्वमिति येन हि बीजेन यदङ्कुरं जन्यते तेनैवाङ्कुरेण तद्बीजं जन्येत चेद्भवेत्तदाऽन्योन्याश्रयो दोषो न चैवमस्तीति भावः ।

विकासः

नपरस्पराश्रयत्वमिति ननूक्तरीत्या पूर्वपूर्वमिथ्याज्ञानजन्यसंस्कारणामुत्तरोत्तर-करणाद्यध्यासहेतुत्वस्य सम्पत्तावपि संस्कारस्येव दोषसादृश्ययोरप्यध्यासकारणतया तं विरहेण कथमन्तः करणादेरात्मन्यध्यासः कारणत्रयासम्पत्तेरितिचेत् सन्तु नाम स्थलविशेषे दोषसंस्कारसादृश्यज्ञानानि त्रीण्यपि कारणानि, सार्वत्रिकी तु नेयं स्थितिः नहि शरीरस्य धर्मस्य च ब्राह्मणत्वादेरात्मनि सादृश्यज्ञानविरहेऽप्यध्यासं नाभ्युपैति कश्चिद्बुद्धिपरिकल्पित्, तस्मान्न सादृश्यज्ञानस्याध्याससामान्यं प्रति हेतुत्वं कल्पयितुमुचितं नन्वस्त्येव प्रमेयत्वादिना सादृश्यमत्रापीतिचेत् तस्याकिंचित्करत्वात् प्रकृतेऽन्तः करणाध्यासेऽपि तस्य तुल्यत्वाच्च, नन्वात्मनि वास्तविकः कश्चिद्धर्मोनास्तीतिचेन्मास्तु वास्तविकोऽपि धर्मः काल्पनिकस्त्वस्ति प्रमेयत्वादिः तेनैव धर्मेण सादृश्ये को विरोधः, नहि वास्तविकेनैव धर्मेण सादृश्यं न काल्पनिकेनेति क्वचिदावयोः सम्प्रतिपन्नमिति ॥ दोषसंस्कारयोर्भ्रमसामान्यहेतुत्वेऽवि तयोरस्त्येव प्रकृतेऽपि सम्पत्तिः अविद्यायाः परिणामितयोपादानत्वेऽपि दोषतया निमित्तत्वस्यापि स्वीकृतत्वात्, पूर्वपूर्वभ्रमजन्यसंस्कारस्यात्राप्यवैकल्याच्च ।

नन्वेवमपि कल्पादौ पूर्वपूर्वविभ्रमजन्यसंस्काराभावात् कथं तदानींतनोऽध्यास उत्पद्यते तद्धर्मिणः पूर्वसर्गीयान्तः करणस्य प्रलये विनाशादिति चेन्न प्रलयेऽपि सूक्ष्मरूपेणान्तः करणस्य संस्कारवतः सत्त्वात्, 'वक्ष्यति चाचार्यः समाननामरूपत्वादिति (१।३।३०) भामत्याम्, यद्यपि महाप्रलये नान्तः करणादयः समुदाचरद्वृत्तयः सन्ति तथापि स्वकारणेऽनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपिकाविद्यावासनाभिः सहावतिष्ठन्त एव, इति तत्र महाप्रलयपदेन निखिलजगन्निवृत्तिलक्षणः सर्वमोक्ष

न विवक्षितः तदुत्तरं सृष्टेरेवानुदयात् अपितु प्राकृतः प्रलयो बोध्यः तस्यापि खण्डप्रलयापेक्षया महत्त्वात्, समुदाचरद्भूतयः भेदेनावभासमानाः वृत्तयो येषां ते तथा ॥

अथैवमप्यधिष्ठानविरहान्नाध्यासः संभवति गृहीतसामान्यांशस्याऽगृहीतविशेषांशस्यैवाधिष्ठानत्वात् भवति च शुक्तिः स्वनिष्ठस्य सामान्यांशस्येदंत्वादेर्ग्रहणे शुक्तित्वादेर्विशेषांशस्य चाग्रहणे ऽधिष्ठानम् न ह्येते ग्रहणाग्रहणे निरंशे ब्रह्मणि संभवत इतिचेन्न यतस्तस्मिन्नप्यविद्याकल्पितोऽस्ति सामान्यं विशेषश्चांशः सदंशो हि सामान्यम् आनन्दांशो विशेषः सम्प्रति सदंशस्य प्रकाशेऽपि पूर्णानन्दांशस्याप्रकाशनात् तस्मादुपपन्नं ब्रह्मणोऽधिष्ठानत्वमतो नाध्यासासंभवः भ्रमोपादानाज्ञानविषयत्वस्याधिष्ठानलक्षणत्वे तु नोक्तचोद्यावसर इति ।

नन्वेवमपि अधिष्ठानतिरोधानं विनाऽध्यासासंभवः नहि रज्जावतिरोहितायां तत्र सर्पादयः प्रतिभासन्ते प्रकाशस्य स्वधिष्ठानस्य तिरोधाने तदध्यस्ताविद्यादिनिखिलप्रपञ्चस्य प्रकाशनासम्भव इति चेन्न अविद्यया एकस्यैव ब्रह्मणः परिपूर्णानन्दात्मना तिरोधानस्य सदात्मना चैतन्यात्मना च प्रकाशमानत्वस्योररीकरणात् किं नैवाविद्यया सम्पाद्यते तदुक्तं वार्त्तिककृद्भिः—

यत्प्रसादादविद्यादि सिध्यतीव दिवाऽनिशम् ।
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुःकरम्, ॥इति॥

## भामती

स्यादेतत् । अद्धा पूर्वप्रतीतिमात्रमुपयुज्यते आरोपे, न तु प्रतीयमानस्य परमार्थसत्ता । प्रतीतिरेव त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नोपपद्यते । प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्त्वं, न तु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वा, द्वैतापत्तेः । सत्तायाश्चार्थक्रियाकारितायाश्च

## प्रकाशः

वस्तुसत्तामनपेक्ष्यारोप्यस्य प्रतीतिमात्रमारोपे उपयुज्यते इति निर्णीतम् तत्र सम्प्रति प्रतीतिरेवानृतस्य न सम्भवतीत्याक्षेपसमाधानपरत्वेनाग्रिमं भाष्यं वर्णयितुं भूमिकामारचयति—स्यादेतदित्यादिना । अद्धेति अर्थाङ्गीकारे आरोप्यमाणस्य पूर्वप्रतीतिमात्रमुपयुज्यते न तु तस्य पारमार्थिकतेति यद्भवताऽभ्यधायि तदद्धा तन्मात्रमिदानीमगत्याऽङ्गीकुर्म इत्यर्थः। प्रतीतिरेवेति अपरोक्षप्रतीतिरेवेत्यर्थः तेनासत्पदादितः योगशास्त्रोपगतायाः शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, इति सूत्रोक्तायाः विकल्पवृत्तेः सिद्धान्ते स्वीकृतत्वेपि नक्षतिः, नचासत्पदादितः प्रतीतिरेव न भवतीति युक्तं तथा सति

वन्ध्यापुत्रो गच्छतीत्यादिवाक्यं प्रयुञ्जानं पुमांसं नोपहसेत् तदर्थं कश्चिन्नानुवदेत्, उक्तं हि खण्डनकृद्भिः 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि,' इति ॥ ननु युष्मदस्मत्प्रत्ययगोचरयोरित्यादिनाऽऽदावेवाध्यासे आक्षेपसमाधानयोः कृतत्वात्पुनस्तत्करणे पौनरुक्त्यमितिचेन्न तत्र विवेकाग्रहाद्यसंभवप्रयुक्त आक्षेप इह तु प्रतीयमानस्यानृतत्वमेव न युक्तमित्याक्षेप इत्युभयोर्भेदात् ॥ ननु देहेन्द्रियादिनिखिलप्रपञ्चस्य बाध्यरूपमनिर्वचनीयत्वमेवास्माभिरुपेयते न तु गगनकमलवदत्यन्तासत्त्वमिति कुतः प्रतीत्यसंभवोऽत आह—प्रतीयमानत्वमिति तथा चात्र प्रपञ्चः यदि प्रकाशमानः स्यात् ब्रह्मवदेवाबाध्यः स्यान्नत्वनिर्वचनीयः स्यात्, अप्रकाशमानः स्यात् गगनकमलिनीकल्पः स्यादिति तर्कौ भवतः । स्वाभिमतसिद्धौ सिद्धान्तिमतानुसारेणातिरिक्तां सत्तां दूषयन् प्रकाशमानतैव सत्तेत्यभ्युपगमयितुं प्रयतते पूर्ववादी नन्विति । द्वैताभ्युपगमेऽप्याह—सत्तायाश्चेति ।

## विकासः

नन्विति किमियं सत्ता सती उतासती आद्ये सत्ताया स्वात्मकसत्तोपगमे आत्माश्रयः अन्यस्याः सत्ताया उपगमे तस्यां च सत्त्वव्यवस्थायाः पूर्वसत्तया चेदुपपादनं तदाऽन्योन्याश्रयः अन्यया चेत्तत्रापि सत्त्वव्यवस्थायाः पूर्वसत्तयोपपादने चक्रकम् अतिरिक्तया चेदुपपादनं तदाऽनवस्था, द्वितीये तु पक्षे प्रपञ्चस्य सत्ताऽसतीत्यायातम् सा चेयं स्वयमसती सत्ता कथं सद्व्यवहारमुपपादयेत्, किंच सत्ता जातिः समवायेन स्वाश्रये वर्त्तते इत्यभावरूकः सिद्धान्तो न साधीयान् समवायो हि स्वयमसम्बद्ध एव विशिष्टव्यवहारं जनयेत् सम्बद्धो वा आद्ये रूपेण यथाऽयं घटं विशिनष्टि तथा सर्वं सर्वेण विशिंष्यात् नियामकस्य कस्य चिदभावात् द्वितीये सम्बन्धान्तरेण स्वात्मकेन वा सम्बन्धेन सम्बद्धः आद्ये तदपि सम्बन्धान्तरं सम्बन्धान्तरेण सम्बध्यमानमनवस्थामापादयति असम्बद्धमेव तत् सम्बद्धव्यवहारं जनयेत् तदा पूर्वोक्त एव दोषः स्वात्मकेनैव सम्बन्धेन तत् सम्बध्येत चेत् तदा कोऽपराधः प्रथमस्य समवायस्य स एव हि कुतो न स्वात्मकेन सम्बन्धेन सम्बध्येत, अस्त्वेवमिति चेत् एवं सत्युक्तयुक्त्या सत्तैव कुतो न स्वात्मकेन सम्बन्धेन तादात्म्येन विशिष्टव्यवहारमुत्पादयेदिति गतं समवायेनापि ।

अपि च समवायस्यातिरिक्तस्योपगमे समवायेन घटवत्ताबुद्धिं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वमेवं समवायेन पटवत्ताबुद्धिं प्रति समवायेन पटाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वमेवं क्रमेणानन्ताः प्रतिबन्ध्यप्रतिबन्धकभावाः अनन्तानि च प्रतिबध्यज्ञानानि अनन्ताश्च प्रतिबन्धकनिश्चयाः अनन्ताश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावादयः कल्पनीयाः एवं समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रकारताकज्ञानं प्रति समवायसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववत्ता-निश्चयस्य प्रतिबन्धकत्वमेवमन्यान्यपि प्रतिबन्धकत्वान्यूहनीयानि एवं तादात्म्येन घटवत्ता

बुद्धिं प्रति तादात्म्येन घटाभाववत्तानिश्चयत्वेनाप्यवश्यं प्रतिबन्धकत्वं कल्पनीयमिति सुव्यक्तं महद्गौरवं समवायवादिनाम् ।

अस्माकं तु समवायस्थाने तादात्म्यस्यैव स्वीकारात्समवायस्यालीकत्वेन तस्य तद्घटितस्य च पदार्थस्यासत्त्वेनोपदर्शितप्रतिबध्यप्रतिबन्धकभावादिकल्पनानवकाश एव केवलमुभयत्रादिसिद्धि तादात्म्येन घटादिमत्ताबुद्धिं प्रति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वमितिरीत्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति महल्लाघवम् । न च समवायानुपगमे रूपघटयोस्तादात्म्यैवोपगन्तव्यत्वे घटस्येव रूपस्यापि त्वगिन्द्रियग्राह्यत्वापत्तिः स्पर्शादेश्चक्षुर्ग्राह्यत्वापत्तिश्चेति वाच्यम् यतो रूपादीनां घटादिभिर्न सर्वथैक्यमुपेयतेऽपितु तादात्म्यं तच्च भेदसमानाधिकरणाभेदरूपम् नहि भवति घटोघट इत्यादिः प्रतीतिः किं तु नीलोघटः द्रव्यं घट इत्यादिरेव स्पष्टं चेदं तादात्म्यं चतुर्थसूत्रे भामत्याम्, एवं च समवायासिद्धया ब्रह्मातिरिक्तस्याखिलस्यैव प्रपंचस्य, अतोऽन्यदार्त्तम्, इत्यादिश्रुतिभिः प्रपंचमिथ्यात्वसाधकयुक्तिभिश्च नित्यत्वासिद्धया नित्यत्वे सत्यनेकसमवेतत्वरूपजातिलक्षणासिद्धया न सत्ताजातिर्नवा काचिदन्या जातिः सिध्यति ॥

अपि च द्रव्यगुणकर्मसु त्रिष्वेव सत्ताजातिः समवैति न सामान्यादिष्विवतीयमपि तर्किकाणां प्रक्रिया न समीचीनज्ञानपद्धतिमध्यास्ते सामान्यादिषु सद्व्यवहारानुदयप्रसङ्गात् नच तेषु सामानाधिकरण्यनिबन्धनः सद्व्यवहार इतिवाच्यम् एवं हि सति द्रव्यमात्रे सत्तोपगमेऽपि गुणकर्मणोः सामानाधिकरण्यनिबन्धनस्यैव सद्व्यवहारस्योपपत्तौ गुणकर्मणोः सत्ताजात्युपगमोऽपि निर्युक्तिकस्तार्किकाणाम्, नच द्रव्यमात्रे सत्तोपगमे द्रव्यत्वेन तुल्यव्यक्तिकत्वादुभयोर्जातित्वं न स्यादपितु कस्य चिदेकस्यैवेत्यतो गुणकर्मणोरपि सत्ताऽभ्युपेयेति वाच्यम् घटत्वकलशत्वयोरुभयोर्जातित्वाभावेऽप्येकस्यैवोभयपदवेदनीयत्ववत् एकस्यैव द्रव्यत्वसत्तोभयपदवेद्यत्वसंभवेन त्रिषु द्रव्यगुणकर्मसु सत्तास्वीकारस्य निर्युक्तिकत्वादिति ।

## शाङ्करभाष्यम्

# आह कोऽयमध्यासो नाम स्मृतिरूपः परत्रपूर्वदृष्टावभासः

## भामती

सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थापातात्, प्रकाशमानतैव सत्ताऽभ्युपेतव्या । तथा च देहादयोऽप्रकाशमानत्वान्नासन्तश्चिदात्मवद्, असत्त्वे वा न प्रकाशमानास्तत् कथं सत्यानृतयोर्मिथुनीभावस्तदभावे वा कस्य कुतो भेदाग्रहस्तदसम्भवे कुतोऽध्यास इत्याशयवानाह—आह आक्षेप्ता कोयऽमध्यासो नाम । क इत्याक्षेपे । समाधाता लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभासः । अवसन्नोऽवमतो वा भासोऽवभासः । प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा । एतावता मिथ्याज्ञानमित्युक्तं भवति

प्रकाशः

अनवस्थापातादिति अर्थक्रियाकारितायां बौद्धाभिमतायामपि स...
हारस्य स्वयैवोपगमे आत्माश्रयः अन्यया चेत् तत्र सद्व्यवहारस्य प्रथ...
तयोपगमेऽन्योन्याश्रयः ततोऽतिरिक्तयोपगमे तत्र सद्व्यव...
पूर्वयैवंक्रमेण त्रिभिरेव परस्परमुपगमे चक्रकम् ततोऽप्यतिरिक्तया चेद...
स्थानमतः सत्ताजातिवदेवार्थक्रियाकारितापि न सत्तेत्यभिदधानैर्वैदान्ति...
सत्त्वव्यवस्थामास्थातुं किमपि वक्तव्यमेव सत्त्वं, नच प्रकाशमानत्वादे...
त्किमपि शक्यते निर्णेतुम् तस्मात्प्रपञ्चस्य प्रकाशमानत्वे ब्रह्मवदेवावा...
मप्रकाशमानत्वे च गगनकमलिनीकल्पत्वमतो नाध्यासवादः समीचीन...
महतीति पूर्वपक्षिणामभिप्रायः, समाधानं तु भामत्यां शीघ्रमेव भविष्य...
वादकथेयं प्रवर्त्तते इति बुबोधयिषया भाष्ये आहेति परोक्तिवचनमित्या...
आह आक्षेप्तेति नन्वध्यासे आक्षिप्ते आक्षेप एव प्रथममुपक्षेपणीयोऽतो ल...
णाभिधानं भाष्यकृतामनुपपन्नमित्याशंकामपनुदति—लोकसिद्धमिति ए...
बाध्यविषयकज्ञानत्वादेर्लघोर्लक्षणत्वसंभवे गुरुलक्षणाभिधानं भाष्यकृ...
युक्तमित्याक्षेपोऽपि पर्यहारि, तस्य सिद्धान्तानुसारित्वेऽपि लोकसिद्धत्वात...
दिति । आक्षेपं प्रतिक्षिपतीति लक्षणघटकविशेषणेनेति शेषः लक्षणमे...
मीदृशं येनाक्षेपोऽपि प्रतिक्षिप्यते नतु तदर्थं व्यापारान्तरमपेक्ष्यत इति भाव...
अवसन्न इति नन्ववसादावमानयोरैक्याद्द्वयोरुपादाने पौनरुक्त्यमिति चे...
अधिष्ठानतत्त्वसाक्षात्कारेण निवृत्तिरवसादः यौक्तिकज्ञानेनाप्रामाणिक...
मवमान इत्युभयोर्भेदात् ॥

निःकृष्टार्थमाह मिथ्याज्ञानमिति तदभाववति तत्प्रकारताकज्ञानमित्यर्थ...
तथाविधज्ञानीयप्रकारताश्रयत्वं चार्थाध्यासस्य लक्षणमध्यासशब्दो हि ज्ञाने...
च प्रयुज्यते । नन्वेवमेकेनैवावभासपदेन लक्षणलाभात्पदान्तरवैयर्थ्यमि...
चेन्न संक्षिप्तविस्तृतलक्षणद्वयमेव हि अत्राभिमतं तत्र संक्षिप्तलक्षणे यौगि...
नावभासपदेन लभ्यमाने विशेषणान्तरस्य विरहेण तत्कैमर्थ्यशंकैव नोन्मिष...
तदेतल्लघुलक्षणमभिसंधायाभिधास्यति भाष्यकारोऽतस्मिंस्तद्बुद्धिरित्यवोचा...
इति लघुत्वं चास्यावभासेत्येकपदलभ्यत्वेन, ज्ञानमात्रे रूढेनावभासपदे...
घटितादुक्तवाक्याच्च विस्तृतं लक्षणं लभ्यते, अत्र च सकृच्छ्रुतस्यावभास...
पदस्य वृत्तिद्वयकल्पनेऽपि न क्षतिः लक्षणद्वयबोधकत्वेन वाक्यस्य भिन्नत...
तत्तद्वाक्यघटकस्यावभासपदस्य भिन्नवृत्तिकत्वेऽविरोधात्, अतएवोक्तं...
कल्पतरुकारैः

सकृच्छ्रुतपदस्यार्थद्वयक्लृप्तिर्न दुष्यति ।
संक्षिप्तविस्तृताध्यासलक्षणद्वययोगतः ॥ इति

नानार्थकशब्दसंन्निवेशश्चालंकार एव विदुषामन्यथा श्लेषानुपपत्तिरिति । एतेन मिथ्याज्ञानमवभास इत्यवभासपदं व्युत्पाद्य प्रत्यभिज्ञायामतिव्याप्त्यभिधानमसङ्गतं भामतीकृतामिति परास्तम् विस्तृतलक्षणाभिप्रायेणावभासपदे ज्ञानमात्रपरत्वस्य तैरुक्तत्वादिति । यद्यपि लक्षणप्रयोजनयोरितरव्यावृत्तिव्यवहारयोः संक्षिप्तलक्षणेनैव सिद्धिस्तथाप्यध्यासाक्षेपप्रतिक्षेपकत्वेन परपक्षोपक्षेपकत्वेन च विस्तृतस्यापि लक्षणस्य भवत्यावश्यकतेति बोध्यम् ॥

विकाशः

मिथ्याज्ञानमिति प्रकारताविशिष्टविशेष्यताकज्ञानत्वं भ्रमत्वमिति पर्यवसितम् वैशिष्ट्यं च स्वविशिष्टनिरूपकतानिरूपिताधिकरणतावद्भिन्नवृत्तित्व स्वनिरूपितत्वोभयसम्बन्धेन स्ववैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन तेन संयोगवान् वृक्ष इत्यादिप्रमायां वृक्षादेः संयोगाभाववत्त्वेऽपि निरुक्ताधिकरणतावद्भिन्नत्वविरहान्नातिव्याप्तिः वह्न्यभावत्वावच्छिन्नप्रकारतावैशिष्ट्यस्य वह्नित्वावच्छिन्नप्रकारतानिरूपितायामपि पर्वतत्वावच्छिन्नविशेष्यतायां सत्त्वात्पर्वतो वह्निमानित्यादिप्रमायामतिव्याप्तिवारणार्थं स्वनिरूपितत्वोपादानमिति ॥

भामती

तस्येदमुपव्याख्यानं **पूर्वदृष्टेत्यादि** । पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः । मिथ्याप्रत्ययश्चारोपविषयारोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति, तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्तेति दृष्टग्रहणम् । तथापि वर्त्तमानं दृष्टं 'दर्शनं' नारोपोपयोगीति पूर्वेत्युक्तम् । तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयाऽनिर्वाच्यमित्यनृतम्, । आरोपविषयं सत्यमाह—**परत्रेति** । परत्र शुक्तिकादौ परमार्थसति, तदनेन सत्यानृतमिथुनमुक्तम् । स्यादेतत्, परत्र पूर्वदृष्टावभास इत्यलक्षणमतिव्यापकत्वात् । अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासः । अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासः समीचीनः ।

प्रकाशः

लघुलक्षणमभिधायानेकपदलभ्यत्वेनोपपादकसापेक्षत्वेन च विस्तृतं लक्षणं भाष्यवाक्यलभ्यमभिधित्सति तस्येदमिति । उपव्याख्यानमिति परत्रे-

त्यादिपदादसत्ख्यातिनिरासेन प्रपञ्चनम्, भवति हि अधिष्ठानारोप्योभ
यकोऽध्यासः तत्र परत्रेत्येनेनाधिष्ठानं शुक्त्यादिकं; पूर्वदृष्टपदेनाध्य
रजतादिकमुपस्थाप्यते इत्याह—मिथ्याप्रत्ययश्चेति । आरोपविषयेति
विषयशब्दो विशेष्यार्थकतया अधिष्ठानपर्यवसायी आरोपविषये आरो
मिति सप्तम्या समासः तस्याश्च वृत्तित्वमर्थः तथाचाधिष्ठाननिष्ठं यदारो
तस्याधिष्ठानेन समं मिथुनीभावं विनाऽऽरोपो न संभवतीति वाक्यार्थः,
दारोपविषये इत्यसमस्त एव पाठोऽर्थस्तु तुल्यः । मिथुनमन्तरेणेति ते
मेव मिथुनीकरणस्याध्यासोपपादकत्वं निरूपितम् । पूर्वदृष्टग्रहणेनेति
पदं तत्सजातीयपरं तेन भ्रमे भासमानस्य रजतादेः प्रातीतिकस्य पूर्वदृष्टत्वा
पि न क्षतिः साजात्यं च स्वनिष्ठप्रकारतावच्छेदकधर्मेण बो
उपस्थापयतीति भाष्यकृदिति शेषः नन्वेवमनृतविषयकोऽवभासोऽध्या
लब्धं तथाच पुनर्विशेषणान्तरवैयर्थ्यशंका समुदेतीति चेन्न परत्रपद
व्याहारे हि तद्बलात्पूर्वदृष्टपदेनानृपमारोपणीयमुपस्थाप्यत इति वस्तुस्थि
रुध्योक्तं नतु केवलेन तेन पदेन, सम्प्रति तत्पदासमभिव्याहारे पूर्वदृ
कज्ञानत्वमात्रमध्यासस्य लक्षणं प्रतीयते तत्र चातिव्याप्तिवारणार्थं वि
न्तरमपेक्ष्यत एवेति न वैयर्थ्यमिति । दृष्टग्रहणमिति एवं च स्यादेतद्द्विवि
स्तुसतोरित्यादिना प्रदर्शिता शंका परिहृता भवतीति बोध्यम । वर्त्तमा
नमिति यद्यपि प्रतिविम्बविभ्रमस्थले वर्त्तमानस्यापि मुखदर्शनस्
वक्ष्यति मुखसंयुक्तं मुखं ग्राहयदित्यनेन, तथापि प्रसिद्धे रजतादि
वर्त्तमानस्य दर्शनस्योपयोग इति । वस्तुतस्तत्रापि मुखप्रत्यक्षोत्पत्तिक्षणे
तेजसि क्रिया ततो मुखेन सह विभागस्ततः पूर्वसंयोगनाशस्ततो दर्प
त्तरदेशेन संयोगस्ततो दर्पणादिरूपाधिष्ठानस्य ज्ञानं ततोमुखस्
प्रतिविम्बविभ्रमः एवं च सति प्रतिविम्बभ्रमाव्यवहितपूर्वक्षणे मुखा
नास्ति किन्तु स्मृतिरेवेत्यभिप्रायक एवाग्रिमोऽपि ग्रन्थस्तस्मात्सुष्ठूक्तं व
दर्शनं नारोपोपयोगीति । सदपीति नन्वेतदसङ्गतं नहि भ्रमे भासमानं
तादिकं स्वरूपेण सदिति चेन्नैवम् एतदभिप्रायेणैवात्र, अपि शब्दोपा
अपिना हि तस्य स्वरूपेणासत्त्वं मरुमरीचिकोदकानिर्वचनीयत्वविचा
वक्ष्यमाणे सूचितम् । आरोपविषयम् भ्रमविशेष्यम् अधिष्ठानमिति
परमार्थसति आरोप्यसत्ताधिकसत्ताके ब्रह्मज्ञानेतराबाध्ये, नन्वेवं पर
क्तसत्यार्थकत्वे सम्प्रति स्मृतिरूपपदासमभिव्याहृतोक्तवाक्याल्लब्धस्य
तराबाध्यनिष्ठविशेष्यताकपूर्वदृष्टनिष्ठप्रकारताकज्ञानत्वस्य यस्यां

पूर्वं दृष्ट गोत्वं तस्यामेव पुनर्जायमाने गोत्वज्ञानेऽतिव्याप्तिः स्यादेवेति कालाक्ष्यां व्यक्त्यन्तरे प्रत्यभिज्ञान्वेषणमनुपपन्नमिति चेन्न आरोप्यानृतत्वबोधक स्मृतिरूपपदसमभिव्याहारे हि तद्बलेन परशब्दस्य तत्प्रतिद्वन्द्वयुक्तसत्यार्थकत्वं लभ्यते तत्पदासत्वे तु पूर्वदृष्टपदसमभिव्याहृतः परशब्दः पूर्वदृष्टदेशादन्य देशमात्रं बोधयेत् तथा सति पूर्वदृष्टदेशान्यदेशनिष्ठविशेष्यताकपूर्वदृष्टनिष्ठ-प्रकारताकज्ञानत्वमात्रे सम्प्रति सम्पद्यमाने लक्षणवाक्यार्थे व्यक्त्यन्तरे एव पुनर्गोत्वज्ञानेऽतिव्याप्तिरायातीत्याकलय्य व्यक्त्यन्तरे प्रत्यभिज्ञान्वेषणं कृतं भामतीकृद्भिरिति व्यक्तं परिमले। लक्षणे सत्यानृतत्वयोरिदानीमप्रवेशेऽपि वस्तुस्थितिमनुरुध्याह तदेनेनेति यस्मात्कारणात्पूर्वदृष्टपदमनृतस्योपस्थापकं परत्रेतिपदं चाधिष्ठानस्य 'तत्' तस्मात्कारणात् 'अनेन' परत्रपदसमभिव्याहृतेन पूर्वदृष्टपदेन अधिष्ठानारोप्ययोरुभयोरुपस्थापनात् सत्यानृतमिथुनीकरणसुकरमित्यर्थः अधिष्ठानं च भ्रमेऽभासमानोऽविद्याविषयीकृतो विशेषांशः यथा इदं रजतमित्यादिभ्रमेऽभासमानः शुक्त्याद्यंशः यस्तु भ्रमे भासमानः सामान्यांश इदमादिः स आधार इत्युभयोराधाराधिष्ठानयोर्भेदः तदुक्तं संक्षेपशारीरके।

अधिष्ठानमाधारमात्रं यदि स्यात्प्रसज्येत सत्यं तदा चोद्यमेतत्।
न चैतत्सकार्यस्य मोहस्य वस्तुन्यधिष्ठानगीः केवले लोकसिद्धा॥ इति

अत्र एतच्चोद्यं भ्रमविषयत्वेनाधिष्ठानस्य ब्रह्मणोऽपि बाध्यत्वापत्त्या सर्वशून्यत्वापादनम् 'मोहस्य' अज्ञानस्य 'वस्तुनि' विषये आधारांशस्य बाध्यत्वेऽप्यधिष्ठानांशस्य भ्रमाविषयत्वेन बाध्यत्वासंभव इति तदाशयः। वस्तुत आधारांशस्यापीदमादेरङ्गुल्या प्रदर्श्यमानस्य स्वरूपतो न बाधः किन्त्वविद्याकल्पितस्य रजतादिना तादात्म्यस्यैवेत्यवधेयम्। स्मृतिरूपपदसमभिव्याहारमन्तरेणैतद्वाक्यात्प्रतीयमानं लक्षणमतिव्याप्त्या दूषयति—स्यादेतदित्यादिना। अतिव्यापकत्वादिति ननु प्रत्यभिज्ञाया अपि विषयाणां ब्रह्मज्ञानबाध्यत्वेन सापि लक्ष्यैवेति तस्यामतिव्याप्त्यभिधानमसङ्गतं नचैतस्य विस्तृतलक्षणस्य प्रातिभासिकरजतादिभ्रमा एव लक्ष्याः नतु प्रमात्वेन लोकप्रसिद्धा अपीति वाच्यम् तस्येदमुपव्याख्यानमिति लेखस्वारस्येन संक्षिप्तलक्षणाक्रान्तानां सर्वेषामेव विभ्रमाणामेतल्लक्षणलक्ष्यत्वावगमात् तस्मादतिव्याप्त्यभिधानमसङ्गतमेवेति चेन्मैवम् संसारकालेऽबाध्यमाना हि गोत्वाद्युच्चावचप्रपञ्चाः व्यावहारिकत्वेन सम्प्रतिपद्यमानाः समानसत्ताकाः विशेष्यविशेषणभावमाश्रिताः ब्रह्मण्येवाध्यस्यन्ते नतु स्वाश्रये व्यावहारिके गवादौ भूतलादौ घटपटादयश्चेत्यतः समानसत्ताकजातिव्यक्त्यादीनां यथायोग्यमाश्र-

याश्रयिभावमापन्नानां यत्संसर्गावगाहिज्ञानमयं गौः घटवद्भूतलमित्यादि सदंशे ब्रह्मणि गवादेस्तादात्म्यभानप्रयुक्तमेव भ्रमत्वं नतु गवादौ गोत्वादि प्रयुक्तं भूतलादौ घटादिभानप्रयुक्तं च तदंशे तु प्रमात्वमेवातो युक्तमेवा प्त्यभिधानमिति। स्वस्तिमत्याम् स्वस्तिकचिह्नवत्याम् । कालाक्ष्याम् क्षीत्यभिधानायाम् । सिद्धान्तिनोपगतं यज्जातिव्यक्त्योस्तादात्म्यं तद्बु बुद्धावतिव्याप्तिमुक्त्वा तदतिरिक्तसंसर्गावगाहिबुद्धावपि तामाह पा इति पाटलिपुत्राभिधे नगरे सम्प्रति पटनेति प्रसिद्धे। माहिष्मत्याम् महिसीति प्रसिद्धायां नगर्याम्, अस्ति चेयं मिथिलायामतिप्राचीना नगरी भगवती उग्रतारेति नाम्नाऽऽम्नायमानाऽद्याप्युपासकानां तूर्णमेव पूर्ण भीष्टं यस्यां च मण्डनमिश्रादयो दार्शनिकाग्रगण्याः समभवन् चेदानीमपि तस्यां नगर्यां किञ्चिदुच्चतरं स्थानं यत् मण्डनमिश्राणां स्थानत्वेन व्यवहरन्ति लोकाः यस्यां च धर्मसूला धेमडेत्युदीर्यमाणा नदी मपि विराजते सैवेहाभिप्सिता न तु शंकरदिग्विजयोक्ता काचित् नर्मदा माहिष्मती, साऽस्तिनवेत्यत्रापि संदेह एव भवतु सा वा न साऽत्र वि कथं हि पाटलिपुत्रादतिसमीपस्थां काशीं प्रयागं च परित्यज्यातिदूरस्थ सिद्धां तामभिदध्यात् तस्मात्स्वदेशमिथिलायां प्रधानतीर्थत्वेन प्रसि माहिष्मती विवक्षिता मिश्राणाम्, प्रसिद्धिरपि वस्तुनिर्णये महत्त्वं सम्पादयति अयं ब्राह्मणः अयं मिथिलादेश इत्यादिनिर्णयोऽपि लोक मन्तरेण भवितुमशक्य एव, शंकरदिग्विजयस्तु काव्यरूपो वस्तुतत्त्वनि नैतद्विषये प्रमाणतामासादयति कर्तृभेदेन तस्यानेकविधत्वात्परस्पर नाच्च भगवच्छंकराचार्याणां समयं बहुतरकालव्यवहितं कथमयं माधव यथातथ्येन तद्वृत्तान्तं च विना प्रमाणं ग्रहीतुं शक्नुयात् कथं हि शंकरदिग्विजये पञ्चदशसर्गोक्तः—

यमिनामृषभेण नीलकण्ठं जितमाकर्ण्य मनीषिधुर्यवर्यम्।
सहसोदयनादयः कवीन्द्राः परमद्वैतमुपश्च कम्पिरेस्म ॥ इत्य

शंकराचार्येण नीलकण्ठस्य विदुषः पराजयं श्रुत्वैव उदयन कम्पिताः बभूवुरित्यर्थकः श्लोकः प्रामाणिकतां लभते, आसतीकृताऽ वाचस्पतिमिश्रेण कृताया न्यायवार्तिकतात्पर्यटीकायाष्टीकाकार उदयन लक्षणावल्याम् ।

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्दतः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥ इति

स्वकीयं समयं (शाके ९०६) समुदङ्कितवानतोनैतयोः समकालत्वं समयदेशादिनिर्णये शंकरदिग्विजयो न प्रामाण्यमर्हतीति, जानन्ति च प्रायो

विद्वांसोमण्डनमिश्रस्य मैथिलत्वम्, अद्यावधि भगवता शंकराचार्येण पराजितस्य मण्डनमिश्रस्य, नान्यः कश्चिदस्मद्देशीयः संन्यासं गृह्णीयात्, इत्याज्ञापयितुर्वाक्यपरम्परां प्रचलन्तीमवलम्ब्य न कश्चिद्विपश्चित्कदाचित्कुत्रचिन्सन्मैथिलः संन्यासं गृह्णातीत्यस्मद्देशमर्यादाऽप्यस्तीत्येवालम् ।

समीचीन इति तथाचालक्ष्यतया भवति तत्रातिव्याप्तिरितिभावः, नन्वियं प्रत्यभिज्ञायामतिव्याप्तिर्न युक्ता पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयतीत्यभिधानेनारोपणीयविषयकत्वघटितलक्षणस्यात्र विरहात् तद्विषयस्य गोत्वादेर्गवादावनारोपादिति चेन्न असन्निहितविषयकत्वाभिधायकेन स्मृतिरूपपदेन समभिव्याहारबलात्पूर्वदृष्टपदेन पूर्वदृष्टसजातीयानृतविषयकत्वं प्रत्याय्यते नत्वनृतविषयकत्वं लक्षणे निवेश्यते तदपीदानीं स्मृतिरूपपदासत्त्वे न शक्यते प्रत्याययितुमतो युज्यतेतमामियमतिव्याप्तिरिति । नन्वेवमप्यवभासपदार्थासमीचीनज्ञानस्य विषयत्वं तत्र नास्तीति नातिव्याप्तिरत आह—अवभा-

भामती

अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धं, यथा नीलस्यावभासः पीतस्यावभास इत्यत आह **स्मृतिरूप इति** स्मृतेरूपमिव रूपमस्येति स्मृतिरूपः । असन्निहितविषयत्वं च स्मृतिरूपत्वं सन्निहितविषयं प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः ।

प्रकाशः

सपदं चेति ननु प्रत्ययत्वेन संस्कारजत्वेन वा स्मृतिसारूप्यमुक्तस्थलद्वयेऽप्यस्त्येति नोक्तस्थलद्वयातिव्याप्तिनिरासोऽत आह—असन्निहितेति एवं चासन्निहितविषयकज्ञानमध्यास इत्युक्तौ स्मृतावतिव्याप्तिरतः परत्र पूर्वदृष्टेत्युक्तं था च पूर्वदृष्टान्यदेशनिष्ठविशेष्यताकासन्निहितपूर्वदृष्टनिष्ठप्रकारताकज्ञानत्वे म्प्रति सम्पद्यमाने लक्षणे न स्मृतावतिव्याप्तिः तत्र पूर्वदेशान्यनिष्ठविशेष्यतात्वविरहात् । यद्यपीदं रजतमित्यादिभ्रमे भासमानस्य प्रातिभासिकस्य जतस्य तदानीं सन्निहितत्वमेवास्तीत्यव्याप्तिरतिव्याप्तिश्चानुमितौ तथाऽप्यन्निहितत्वमत्राधिष्ठाने परमार्थतोऽसत्त्वम् तदपि अधिष्ठानासमसत्ताकत्वपं,प्रातीतिकस्य च रजतस्य शुक्तिसमानसत्ताकत्वविरहात्,अनुमेयस्य वह्न्यादेः र्वतादिसमसत्ताकत्वात् गोत्वादेश्च गवादिसमसत्ताकत्वान्नाव्याप्त्यव्याप्ती इति बोध्यम् ।

विकासः

नातिव्याप्तिरिति नन्वत्र कीदृशमध्यासलक्षणं भाष्यकारटीकाकारयोरभिमतं न वत् यथाश्रुतम् अनिर्वचनीयरजतस्यापूर्वतया पूर्वदृष्टत्वाभावेनाव्याप्तेः पूर्वदृष्टसजातीयत्व-

विवक्षणेन वारणेऽपि प्रत्यभिज्ञायामनुमितौ चातिव्याप्तेः स्मृतिरूपपदस्य विशेष्यास थंकत्वेन निरासेऽपि परस्पराध्यासेऽन्तःकरणादावध्यस्यमाने विशेष्येणान्तःकर ताके आत्मनि तत्समानसत्ताकत्वविरहेणात्माध्यासेऽव्याप्तिविरहेपि च यस्मिन्नेव महंकारोऽध्यस्तस्तस्मिन्नेव पश्चादपीति परत्र पूर्वदृष्टत्वाभावादहंकाराध्यासेऽव्याप्तिः क्तेरध्यासस्थले तत्सजातीयस्यापि पूर्वदृष्टत्वाभावादव्याप्तिश्च त्रिविधसत्त्वस्य वेदा द्धत्वेन लोकसिद्धमध्यासलक्षणमाचक्षाण एवेति भामतीसन्दर्भविरोधश्च तस्माद दमध्यासलक्षणं तदुपपादिका टीका चेति चेदत्राभिदध्महे ।

सत्येऽनृतावभास इत्येवानुगतं विस्तृतं लक्षणमभिमतं भाष्यकृतष्टीका यदज्ञानप्रयुक्तं यदवभासते तत् तदपेक्षया सत्यमभिधीयते लोकेऽपि यथा शुक्तिः, अधिष्ठानासमसत्ताकत्वं स्मृतिरूपपदप्रतिपाद्यं तु न लक्षणघटकमपितूपलक्ष लक्षणस्योपपादकमतोऽस्य लक्षणस्य न वेदान्तिमात्रसिद्धत्वमतश्च न लोकसिद्धम माचक्षाण एवेति टीकाविरोधः, सत्ये शुक्तिस्वरूपेऽनृतस्य रजतस्यावगाहनादिदं सर्वत्र लक्षणसमन्वयः, प्रत्यभिज्ञादिस्थले च विशेष्यविशेषणयोरुभयोरपि व्यावहारि नातिव्याप्तिः ब्रह्मापेक्षया सर्वस्यैवानृतत्वेन च सर्वेष्वेव प्रापञ्चिकज्ञानेषु 'सत्ये, 'अनृतस्य, प्रपञ्चस्य, अवगाहनाल्लक्षणमिदं समन्वेति, परस्पराध्यासेऽहंकारा ध्यासोऽप्यात्माज्ञानप्रयुक्त एव नत्वहंकाराज्ञानप्रयुक्तः तस्यच स्वरूपेण सत्यस मेवान्तःकरणादावध्यस्यते तयोश्च तादात्म्यान्तःकरणयोरुभयोर्व्यवहारदशायाम समसत्ताकत्वेनाध्यासलक्षणायोग इष्ट एव आत्मनि च सत्ये जायमानस्याहं सत्येऽनृतावभासरूपत्वान्नाव्याप्तिरिति तस्मात्सर्वथोपपन्नमिदं लक्षणमभिमतं भाष्य कृतश्च अतएव पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति, आरोपविषयं परत्रेति, वाक्यद्वयेनाधिष्ठानारोप्ययोः सत्यत्वानृतत्वभिधानं संगच्छतेऽन्यथ वैफल्यादिति ।

अत्रचेदं बोध्यम् ये प्रतिवादिनो रजतादेर्मिथ्यात्वमन्तरेणैव सत्येऽनृताव लोकसिद्धं लक्षणमुपपादयन्ति तत्तन्मतनिराकरणमन्तरेण नानिर्वचनीयख्यातिः व्यवस्थापयितुमतस्तत्तन्मतनिराचिकीर्षया स्मृतिरूप इत्यादिपदैः सत्येऽनृताव प्रत्यपादि भाष्यकृताऽतो लक्षणवाक्याघटकानामपि तत्तत्पदानामुक्तलक्ष न नैरर्थक्यम् ।

तथाहि[1] स्मृतिरूपपदेन स्मर्यमाणसदृशत्वं विवक्षितं तच्च साद परमार्थतोऽसत्त्वेनेत्युक्तमेव अधिष्ठानं च बाधावधित्वेन प्रतीयमानमज्ञा शुक्त्यादिकमध्यस्तापेक्षया सत्यं, तस्मिन् प्रतीयमानं रजतादिकं परमार्थ वगम्यमाने सति परत्रपूर्वदृष्टावभास इत्यस्य सत्येऽनृतावभास इत्यर्थोऽवगन्तुं भवति तदर्थस्कोरकतयोपपादकत्वं स्मृतिरूप इत्यादिपदानाम्, तत्र विद्य स्मृत्या साम्यविरहेऽपि यत्र देवदत्तादेर्गृहादौ पूर्वदृष्टस्याविद्यमानतादशायां

तत्राधिष्ठाने गृहादौ स्मर्यमाणस्याविद्यमानस्य देवदत्तादेः परमार्थतः सत्त्वं यथा नास्ति तथा शुक्त्यादौ रजतादेरपि सत्त्वं नास्तीत्युभयोः साम्यम् । एवं च स्मृतिरूपपदेनाधिष्ठानस्य सत्यत्वलाभात् शून्यवादिनो मतनिरासः ।

ते हि नाधिष्ठानमपि सत्यमुपयन्ति किंतु भ्रमविषयत्वेन हेतुनाऽधिष्ठानस्यात्मनोऽपि बाध्यत्वमनुमिमते तदन्ये नानुमन्यन्ते उक्तहेतौ भ्रमीयत्वविशेषणस्य वैयर्थ्यात् तन्मते सर्वस्येव बाध्यत्वेन व्यभिचारावारकत्वात्, निरधिष्ठानकभ्रमासंभवात् निरवधिबाधासंभवात्, अधिष्ठानस्य कल्पितत्वे तज्ज्ञानस्य भ्रमाबाधकत्वप्रसंगात्, भ्रमबाधव्यवस्थाऽनुपपत्तेश्च, बाधेन हि किंचिद्रूढं तत्त्वमुपदिशताऽऽरोपितमतत्त्वं बाध्यते उभयाध्यासे तु किं केन बाध्येताविशेषात् तस्मादस्माभिरधिष्ठानस्य सत्यत्वमुपेयते, आरोप्यस्यानृतत्वलाभाच्च-आत्मख्यात्यसख्यात्यसत्ख्यात्यन्यथाख्यातयो निरस्यन्ते, ख्यातिर्हि पंचविधाऽस्ति प्रसिद्धा तदुक्तम्

> आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
> तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपंचकम् ॥
> योगाचारो माध्यमिकस्तथा मीमांसकोऽपि च ।
> नैयायिकोऽद्वैतिनश्च ख्यातीरेताः क्रमाज्जगुः ॥ इति

तत्र प्रथमार्धोक्तानां चतुर्णां मतानामिहैवाध्यासनिरूपणे खण्डनं भवतीति ।

यत्तु परिमलकारेण अधिष्ठानासमसत्ताकस्यावभासोऽध्यास इत्येव पर्यवसितमनुगतं विस्तृतं लक्षणं स्मृतिरूप इत्यादिभाष्यटीकाभिमतम् यद्गतमवभास्यं तदेवाधिष्ठानमेवं च गोत्वादिषु गोरूपाधिष्ठानसमसत्ताकत्वसद्भावेऽपि ब्रह्मरूपाधिष्ठानासमसत्ताकत्वसद्भावान्न क्वाप्यध्यासे लक्षणस्याननुगतिरित्युक्तं तन्न युक्तं स्वप्नावस्थायां यत्रेदं रजतमिति भ्रमानन्तरं नेदं रजतं किंतु शुक्तिरिति बाधनिश्चयस्तत्र तेन प्रदर्शितस्याधिष्ठानत्वस्य स्वाप्निकेऽपि शुक्तिकादौ सत्त्वात्तत्समसत्ताकत्वमेव तदानींतनस्य रजतस्येत्यव्याप्तेः, एवमेव गोत्वादिषु गोरूपाधिष्ठानसमसत्ताकत्वस्य सद्भावे तत्सामान्याभावस्योक्तस्यात्यन्तमसंभावितत्वात् पारमार्थिक व्यावहारिक प्रातिभासिकसत्तात्रैविध्यस्य वेदान्तिमात्रसिद्धत्वेन लोकसिद्धमध्यासलक्षणमाचक्षाण एवेति भामतीसंदर्भविरोधाच्चेति ।

मदुक्ते च सत्येऽनृतावभास इति लक्षणे प्रदर्शितस्वाप्नबाधनिश्चये नाव्याप्तिः नहि तत्र शुक्तिः सत्या किंतु रजतवदेव मिथ्या तस्याश्च स्वाप्निकायाः शुक्तेरधिष्ठानमज्ञानविषयीभूतोऽहंकारोपहितः केवलो वाऽऽत्मैव सत्योऽतः सत्येऽनृतावभासत्वसत्त्वान्न कश्चिद्दोषलेशोऽपीति ॥

नन्वस्तु लक्षणं यथातथा न तत्र विवदामः परंतु परस्पराध्यासोपगमेऽहंकारादावात्माध्यासो घटादौ सत्तादात्म्याध्यासश्चोपगन्तव्यः घटाहंकारादेश्चाज्ञानविषयत्वाभावात् नाधिष्ठानत्वं संभवति न वाऽऽत्मनोऽसत्त्वं तथाचाधिष्ठाने परमार्थतोऽसद्विषयकत्वाभावान्न लक्षणोपपादकत्वं स्मृतिरूपपदस्येति चेदत्र ब्रूमः यस्मिन् बाध्यमानेऽपि यदवशिष्यते

तदेवहि तस्याधिष्ठानम्; यद्वा यदीयाज्ञानेन यज्जन्यते तदेव हि तस्याधिष्ठानमुक्तं; च शुक्त्यवच्छिन्नचैतन्याज्ञानेन क्त रजतस्य रजततादात्म्यस्य रजते शुक्तितादा चोत्पत्तिरतःशुक्त्यवच्छिन्नचैतन्यमेव तेषां सर्वेषामधिष्ठानं न तु रजतमपि तत्र कस्य चित् घट इत्यादौ घटादौ सत्तातादात्म्याध्यासेऽपि ब्रह्मैवाधिष्ठानं न घटादिः, ब्रह्माज्ञानेनैव हि घटादितादात्म्यस्य च सति सत्तादात्म्यस्य च घटादावुत्पत्तिः, एवमहंकारादावात्मतादात्म्या सेऽप्यात्मैवाधिष्ठानं नत्वहंकारादिकं तथा च तेषु तेषु भ्रमविषयेष्वधिष्ठानासमवा नानुपन्नमिति भवति सर्वं शोभनम् ॥

प्रकाशः

ननु स्वाप्निकस्यापि पदार्थसार्थस्य प्रातिभासिकतया किंचिदधि वक्तव्यं तच्च नात्मा पारमार्थिकाधिष्ठानत्वे वियदादिवद्व्यावहारिकत्व नापि शुक्त्यादिवद्व्यावहारिकं किञ्चिदधिष्ठानमुपलभामहे इत्या

भामती

नाप्यव्याप्तिः स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवंरूपत्वात् न हि स्मर्यमाणे पित्रादौ निद्रोपप्लववशादसन्निधानापरामर्शे तत्र पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोपः ।)

प्रकाशः

रित्याशंकामपाकुरुते नापीति स्मृतौ विभ्रमः स्मृतिविभ्रमः नत्वत्र क स्यः सिद्धान्ते स्वाप्नज्ञानस्य प्रत्यक्षरूपतया स्मृतित्वाभावात् स्मृतिपदं स्मर्यमाणपरम् विभ्रमशब्दश्च स्मर्यमाणारोपपरः तथा च स्मर्यमाणे स्म णान्तरस्य य आरोपः साक्षिप्रत्यक्षरूपस्तस्येत्यर्थः । एवं रूपत्वात् उक्त लक्षणाक्रान्तत्वात् । ननु क्तिन् प्रत्ययस्य भावे विधानात् कथमत्र कर्मणि इति चेन्न अकर्तरि च कारके संज्ञायामिति सूत्रेण संज्ञायामिवासंज्ञाय कर्तृभिन्ने कारके क्तिनो विधानात् तदेतत्स्मृतिरूपपदव्याख्याने प्रादर्शि पञ्च कायां पद्मपादाचार्यैरपीति । भ्रमे भासमाने प्रकारेऽपेक्षितं पूर्वदृष्टत्वं प्रदर्श तत्रापिहीति तथा च तदानींतनस्मर्यमाणं पित्रादिकं तन्निष्ठं त कालसम्बन्धादिकं च विशेष्यविशेषणभावमापन्नं सर्वमेव साक्षान्माया णामरूपमन्तःकरणपरिणामरूपं वाऽन्तःकरणोपहिते साक्षिण्यध्यस्तं नाव्याप्तिरितिभावः । स्मर्यमाणपदं पूर्वदृष्टपदं च तत्सदृशपरमतः स्व भूयमानस्य पित्रादेरपूर्वस्य स्मर्यमाणत्वाभावेऽपि पूर्वदृष्टत्वाभावेऽपि क्षतिरिति । निद्रोपप्लववशात् निद्रादोषात् । तत्रतत्रेति जाग्रत्कालीने घट दावित्यर्थः । नन्वेवमपि स्वाप्निकानां मायापरिणामत्वेऽन्तःकरणपरिणा वाऽभ्युपगम्यमाने प्रातिभासिकत्वप्रयोजकस्याभावेन व्यावहारिकत्वा

अहं गजो मयि गज इत्यादि प्रतिभासापत्तिश्चेतिचेन्न प्रातिभासिकत्वेऽविद्यातिरिक्तदोषजन्यत्वस्यैव प्रयोजकतया तस्य निद्रारूपदोषजन्ये स्वाप्निके सत्त्वेन व्यावहारिकत्वासंभवात्, यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्यत्वं तस्य तदाकारानुभवविषयत्वमित्युपगमेन अयंगज इत्यनुभवाहितसंस्कारसहकृताविद्याकार्यस्य गजादेरहंत्वादिनाऽनुभवविषयत्वाभावात्।

केचित्त्वत्र -जाग्रद्भोगप्रदकर्मोपरमे सति जाग्रत्प्रपंचद्रष्टारं विश्वाभिधं जीवमावृत्य जायमाना निद्रा मूलाज्ञानस्यावस्थाविशेषरूपैव स्वाप्निकप्रपंचोपादानम्, 'यदा च पुनर्जाग्रद्भोगप्रदं कर्म फलोन्मुखतामञ्चति तदा व्यावहारिकजीवत्वरूपस्याधिष्ठानस्य ज्ञानान्निद्रारूपोपादानाज्ञाननिवृत्तौ स्वाप्नः प्रपंचो बाध्यतेऽतो न स्वाप्निकानां व्यावहारिकत्वापत्तिरिति समादधिरे।

लक्षणस्योपपादकं भ्रमत्वव्यापकं पूर्वदृष्टसजातीयविषयकत्वं पीतः शंख इत्यादिभ्रमे नास्ति नहि नायनरश्मिसम्पृक्तपित्तद्रव्यनिष्ठं पीतत्वं पूर्वदृष्टमस्ति येन तज्जातीयं तत्रावभासेतेत्यतो व्यापकाभावाद् व्याप्यस्योक्तलक्षणस्याप्यभावस्तत्र वाच्य इत्यव्याप्तिमाकलय्याभिदधाति—एवमित्यादिना

भामती

एवं पीतः शंखस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं योजनीयम् तथाहि वहिर्निर्गच्छदत्यच्छनयनरश्मिसम्पृक्तपित्तद्रव्यवर्तिनीं पीततां पित्तरहितामनुभवन् शंखं च दोषाच्छादितशुक्लिमानमनुभवन् पीततायाश्च शंखासम्बन्धमननुभवन्नसम्बन्धाग्रहसारूप्येण पीतं तपनीयपिण्डं पीतं बिल्वफलमित्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशंखयोरारोप्याह पीतः शंख इति।

प्रकाशः

अत्र पूर्वदृष्टसजातीयविषयताया लक्षणाघटकतया तद्विरहस्याकिंचित्करतया लक्षणमिदं यावल्लक्ष्येष्ववतिष्ठमानं नाव्याप्तिशंका शक्नोत्यास्कन्दितुमित्याक्षेपः परेषां पराकृतः, 'यतः प्रतीयमानजातीयस्य पूर्वदर्शनमात्रमुपयुज्यते न पारमार्थिकतेति सूचयता पूर्वदृष्टपदेनोपस्थापिता पूर्वदृष्टसजातीयविषयता लक्षणांघटिकापि भ्रमत्वव्यापिकैवेति तद्विरहमसहमानस्तद्व्याप्यीभूतो निरुक्तभ्रमलक्षणात्मको धर्मः कथं स्थातुमुत्सहेतेति।

विकासः

वहिर्निर्गच्छदत्यच्छेत्यादि एतेनेन्द्रियाणां भौतिकतया प्राप्यकारित्वमिति पक्षं समर्थयता मतान्तरेऽनभिमतत्वं द्योत्यते तत्र तावत् गोलकमात्राणीन्द्रियाणीति सौगताः तच्छक्तय इति मीमांसकाः आहंकारिकाणीति सांख्याः मन्यन्ते तत्र गोलके चिकित्सादिप्रयोगात् विषयोपलब्धेः गोलकगुणदोषानुवर्त्तित्वाच्च कृष्णसारगोलकमेव चक्षुः ननु तेजः, अनुपलभ्यमानं हि तेजः कथमिन्द्रियं स्यात्, कथं च वेगवतापि तेजसा सहसैव विस्फारिते

चक्षुषि योजनशतसहस्रव्यवहितसितकरतरणितारकादिकं ग्रहीतुं शक्येत, कथं वा नायनं तेजः समन्ततः प्रसरता महीयसामिहिरमहसा न प्रतिहतगति भवेत्, स्फटिकाभ्रकान्तरितपदार्थोपलब्धिः समर्थ्येत, तस्माद् गोलकमेव चक्षुः एवमिन्द्रियान्तराणि गोलकान्येवेति यदाऽऽहुः सौगताः तदेतन्न विचारपदवीमधिरोहति प्राप्यकारि हि कुठारादिकं दृष्टं कृष्णसारपक्षे च कुतः प्राप्यकारित्वं भवति च कर्णशष्कुली रहितस्यापि शब्दोपलम्भः, वृक्षाणां च चक्षुरादिगोलकरहितानां विषयोपलम्भस्य चैतन्यस्य सद्भावः तस्मात्पश्यन्ति पादपाः, इत्यादिशास्त्रात् अशुष्कवृक्षस्य छेदनप्रतिषेधेन च प्राणित्वावगमात्

यदुक्तं चिकित्सादिप्रयोगात्कृष्णसारगोलकस्य चक्षुष्ट्वं तदपि न तस्याधेयमात्रे कत्वात् तदाऽऽहुर्न्यायमञ्जरीकाराः ।

चिकित्सादि प्रयोगस्तु गोलके यः प्रवर्तते ।

सोऽस्माधारसंस्कार आधेयस्योपकारकः ॥ इति

कृष्णसारस्य चक्षुष्ट्वे तस्य विषयैः सम्बन्धाभावान्न तेषां प्रत्यक्षं स्यात् चक्षुरिन्द्रियस्य तैजसस्याधिष्ठानं कृष्णसारः स्वोपघातानुपघाताभ्यां चक्षुषो तानुपघातौ प्रसूते छेदनोपसेचनाभ्यां लतेव, तस्मान्न गोलकानीन्द्रियाणि ।

अत एव न गोलकंशक्तिरिन्द्रियाणीत्यपि पक्षः समीचीनः सर्पादीनां तत्त्व भावेन तच्छेक्तेरप्यभावेन विषयानुपलम्भप्रसङ्गात् कारकत्वेन सिद्धस्य प्राप्यका व्याघाताच्च नहि करणं कुठारादिकमप्राप्यकारि भवतीति, तस्मात्तृतीयः पक्षः परि तमिमं पक्षमवलम्बमानाः आहंकारिकत्वं व्यापकत्वं चेन्द्रियाणाम्मन्यमानाः सांख्याः प्राप्यकारित्वमुपगन्तुमुत्सहन्ते इन्द्रियाणि न भौतिकानि अप्रतिहतस्वभावत्वात्, भवं काचादिव्यवहितस्य विप्रकृष्टस्य च वस्तुनोऽविलम्बेन ग्रहणम् भौतिकत्वे तु कथं काचादिव्यवहिताः विप्रकृष्टाश्च पदार्थाः वीक्ष्येरन् भौतिकस्य प्रतिघातिस्वभावत्वात् तस्मादहंकाराज्जायमानानीन्द्रियाणि न पुरुषभेदेन भवन्ति भिन्नानि गौरवात् व्यापकान्येव तान्यभ्युपेयानि, तत्र व्यापकत्वेऽपि घ्राणस्पर्शनादीनां गन्धस्पर्शादिप्र पयोगिन्यो वृत्तयो घ्राणत्वगाद्यधिष्ठानसम्बन्धे सति घ्राणत्वगाद्यधिष्ठानेष्वेव चक्षुर्ग्राह्यरूपादिप्रत्यक्षोपयोगिनी तु वृत्तिर्यादृशयादृशविषयाणां न्यायमते वा तादृशेष्वेव विषयेषु वस्तुस्वभावात् कल्प्यतेऽतो न कुड्यादिव्यवहितस्य निकट विप्रकृष्टस्य च प्रत्यक्षमित्याचक्षिरे तदेतन्न समीचीनम् इन्द्रियाणामहंकारप्रकृ हि सर्वाण्येवेन्द्रियाणि सर्वविषयप्रकाशनकुशलानि भवेयुरविशेषात् कारणनियमाधी कार्यनियमः अहंकारश्च कारणं तेषां सर्वेषामविशिष्टमेवेति चक्षुषाऽपि शब्द समुपलभ्येरन् भौतिकत्वे तु भूतानां भिन्नानां नियतगुणोत्कर्षयोगिनां नियतविषयग्राह प्रकृतित्वं युज्यतेऽतो नाहंकारकाणीति ।

एवं विषयदेशे एव चाक्षुषवृत्तेरुपगमे उन्मीलिताक्षस्येव निमीलिताक्षस्यापि दुर्वारमेव स्यात् सर्वपुरुषं प्रत्येकस्यैवेन्द्रियस्य भवद्भिरुपगतत्वात्, व्यापकस्य

सम्बन्धार्थं नयनोन्मीलनस्याकिंचित्करतया तदुद्देशस्थोत्पादकेनैव वृत्त्युत्पत्तेर्वाच्यत्वाच्च तस्माद् भौतिकान्यव्यापकानि प्रतिपुरुषं भिन्नानि तत्तद्विषयदेशं प्राप्य भवन्ति तत्तद्ग्राहकाणीन्द्रियाणीति ।

ननु दूरतोऽपि मल्लिकादिसौरभमुपलभते दूरस्थं च शब्दं न च तत्र घ्राणस्य श्रोत्रस्य चास्ति सन्निकर्षोऽतो नैनयोः प्राप्यकारित्वं तत्साधर्म्याच्च चक्षुषोऽपि न तदिति चेन्न घ्राणस्यापि हि अविरलनिस्यन्दिगन्धवाहान्दोलितोत्फुल्लमल्लिकायूथिकाचम्पकादिपरम्परापरिप्रापितपरिमलपरमसूक्ष्मांशसम्बन्धिगन्धग्रहणात्प्राप्यकारितैव, न च सूक्ष्मांशापसर्पणाद् द्रव्यपरिक्षयः भूयस्त्वात्सूक्ष्मांशानाम्, श्रोत्रस्यापि शब्दाभिव्यञ्जकध्वनेरुत्पत्तिमद्देशे गमनात् तादृशस्य ध्वनेः श्रोत्रदेशे आगमनाद्वा सन्निकर्षस्य सत्त्वाच्च प्राप्यकारित्वभङ्गप्रसङ्गः त्वगसनयोस्तु प्राप्यकारित्वे न विवादलेशोपि तस्मात्प्राप्यकारीण्येव सर्वाणीन्द्रियाणि ।

शक्तिपक्षेऽपि शक्तेरविशेषात् कुड्यादिव्यवहितमपि वस्तु चक्षुषा समीक्ष्येत, तत्र कार्यानुपलम्भान्न शक्तिः कल्प्यते इति चेन्न किं शक्तिः कल्प्यताम् नायनं तेजो वेति विमर्शे तेजसो मूर्त्तत्वाद् व्यवधानं युज्यतेऽमूर्त्तायास्तु शक्तेर्व्यवधानमबाधकं स्यात्तस्मात्तेज एवेन्द्रियं कल्पनीयं न शक्तिः शक्तिमद्गोलकं वेति ॥ स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यंजकत्वेनानुमानेनाऽपि चक्षुषस्तैजसत्वं निराबाधमेव, तार्किकाः साधयन्ति ।

ननु चक्षुषस्तैजसत्वे प्रत्यक्षेण कुतो न चक्षुरुपलभ्यते इति चेदत्राहुः विचित्रा हि द्रव्यगुणानामुद्भवानुद्भववशेन व्यवस्था तद्यथा सर्वतः प्रसृत्वरेण शीतस्पर्शाश्रयेण द्रव्येण व्याप्तौ हेमन्तशिशिरौ ऋतू भवतः निराधारस्य शीतस्पर्शगुणस्यानुपपत्तेः तत्र सत्यपि सलिलद्रव्ये तद्गुणस्य शीतस्पर्शस्यैवोपलब्धिर्न शुक्लरूपस्येति, तेजोद्रव्येण निःप्रत्यूहं विजृम्भमाणेन भूयसा ग्रीष्मो भवति तत्र यथा सत्यपि तेजोद्रव्ये उष्णस्पर्श एव तद्गुणो गृह्यते नतु भास्वरंरूपम् यथाचा तप्तीकृतजलान्तर्गते तेजसि उष्णस्पर्श एव गृह्यते नतु भास्वरं रूपम् एवमिह नयनरश्मौ तेजसि द्वावपि रूपस्पर्शौ न गृह्येते इति कमुपालभेमहि नहि आकाशमदहन् दहनः पर्यनुयुज्यते, न च सर्वत्र नयनरश्मेरनुलब्धिः क्वचिद्धि मार्जारप्रभृतीनां नक्तंचराणां निशि निविडतमतमःपटलावृते वेश्मनि संचरतां चाक्षुषस्य तेजसो दूरं प्रसरतो भास्वरं रूपमुपलभ्यत एव अस्मदादिनयनरश्मेरूपं त्वनुद्भूतत्वान्नोपलभ्यत इति न काचिच्चक्षुषस्तैजसत्वेऽनुपपत्तिरिति ।

एवंचोक्तरीत्या चक्षुषस्तैजसत्वे प्राप्यकारित्वे च सिद्धे कुड्यादिव्यवधाने तस्य गतिप्रतिरोधेन प्राप्त्यभावादग्रहणम्, अव्यवधाने च गतिप्रतिरोधविरहात्प्राप्त्या ग्रहणकौशल्यमपि तस्य चक्षुषो भवति, न च काचादिव्यवहितस्य ग्रहणं न स्यात् भूतं हि तृणादिकं न काचादिमध्यमनुप्रविश्य वहिर्गमनचातुर्यमञ्चति कथंचित्, एवं भूतं चक्षुरपि प्रतिहतं सन्न वहिर्गमनकौशल्यलेशमप्याप्नुयादिति वाच्यम् काचादेः पार्थिवादिव्यवधायकत्वेऽपि तेजसो

व्यवधायकत्वाभावात् कथमन्यथा काचादिव्यवहितप्रदीपादेरौष्ण्यप्रकाशौ बहिरुपलभ्येते यदा च प्रदीपादेः स्थवीयसोपि तेजस ईदृशी गतिस्तदा किमु वक्तव्यं ततोऽप्यणीयसस्तेजसोऽपञ्चीकृतस्य नायनस्य तस्य काचादिव्यवधानमनादृत्य बहिर्गन्तुमुद्यतस्य प्र... पराहतौ, तस्मात्काचादिव्यवहितमप्यर्थं संयुज्यावभासयति नायनोरश्मिरिति सर्वमनवद्यम् ।

न चाग्नेरधः सत्त्वे मृत्पित्तलादिपात्रान्तःस्थतण्डुलादेः पाकदर्शनेनाग्न... मनवत् तेजस्त्वाविशेषादतिलघीयस्त्वाच्च चक्षुरपि निर्गत्य मृत्पित्तलाद्यन्तरितान् ... गृह्णीयादिति वाच्यम् यतो वहिर्वह्नेरौष्ण्यप्रकाशौ गृह्येते अतस्तदुपपत्तये ... तिरस्कृत्य वह्निज्वालादेर्बहिर्गमनं कल्प्यते मृत्पित्तलादिव्यवहितस्य तु वस्तुनः प्रत्य... चाक्षुषं तेजोऽतिस्वच्छकाचादिव्यवधानमेव तिरस्करोतीति स्वच्छकाचादिव्यवहि... पदार्थान् गृह्णाति न मृत्पित्तलाद्यन्तरितान् गतिप्रतिरोधादिति दृष्टानुरोधात्कल्प्यते ।

अथैवमणीयसा चक्षुषा नेदीयसोऽपि महीयसोमहीधरादेर्द्राघीयसः प्राप्त्यभावा... ग्रहणं स्यादिति चेन्न यथा हि लघीयसोऽपि प्रदीपान्निर्गता क्रमेण प्रसृता प्रभा ... दोदरं व्याप्नोति तथा सूक्ष्मादपि गोलकान्निर्गत्य क्रमेण प्रसृतश्चाक्षुषोरश्मिः ... पर्वतावयवान् व्याप्नोति ग्राहयति च पर्वतं पर्वतं पश्यामीत्यनुभवात् येन चावयवेन ... यान्न संयुनक्ति न तमवयवं ग्राहयतो त काऽनुपपत्तिः ।

ननु कुतो नयनरश्मेरीदृशीगतिः गगनमाक्रम्य यन्मार्त्तण्डमण्डलं स्पृशति ... हन्यते च सावित्रेणोग्रेणातिवेगवता तेजसेति तत्र वदामः कार्येण तथाविधं ... कल्प्यते यद्दूरमपि प्रसरति प्रसरदपि परेण न निरुध्यते इति, दृष्टश्चानिरोधः स्वाल... काचादौ चाक्षुषस्य च तेजस इति ।

न च तुल्यकालं नेदीयसः शाखादेरिव दवीयसश्चन्द्रमसो ग्रहणमनुपपन्नमिति ... अणीयसस्तेजसो वेगातिशयेन द्रुततमगमने तदुभयोरतिझटितिप्राप्त्या तदुपपत्तेः ... भेदनवत् यौगपद्यप्रतीतेर्भ्रान्तित्वादिति ।

अपि चान्याऽपि कल्पनाऽत्रास्मद्गुरुचरणैरकारि प्रादर्शि च गीतामधुसूदनी ... गूढार्थतत्त्वालोकाभिधे सापीह प्रदर्श्यते तथाहि नयनगोलकात्प्रचलितानां ... चन्द्रादिनोत्तरदेशेन संयोगे जनयितव्ये क्रियातज्जन्यविभागतज्जन्यपूर्वसंयोगनाश... त्रयाणामेव क्रमिकाणां क्षणानां भवति मध्ये आवश्यकता, दृश्यते तावत् प्रतिरोध... यमुत्तरदेशं मन्दमन्दतरमन्दतमगतिमन्तः प्राणिनः प्राप्नुवन्ति तमेव देशं शीघ्र... शीघ्रतमगतिमन्तोऽल्पाल्पतराल्पतमैरेव क्षणैः प्राप्नुवन्तीति अयं हि वेगातिशयस्य ... यदन्तरालस्थिता अन्तरायत्वेन सम्भविता अपि पार्थिवादिसूक्ष्मांशा इतस्ततोऽस... उपलब्धुमयोग्यास्ते गतिनाशकसंयोगवन्तो न भवन्ति ये चोपलब्धुमर्हाः स्थूलास्ते... दयस्तेऽत्यधिकयोजनस्था अपि चतुर्थक्षणे एव तादृशसंयोगवन्तो भवन्तीति चतुर्थे... शाखाचन्द्रमसोर्ग्रहणमुपपद्यत इति ।

अथ यदि विषयं प्राप्यैव चक्षुर्गृह्णीयात् तदा घ्राणादिगृहीतार्थ इव चक्षुर्गृहीतेऽप्यर्थे चक्षुषा विषयस्य व्यवधानाभावादयं दूरस्थोऽयं समीपस्थ इति सान्तरप्रत्ययो न स्यात् भवति च तथाप्रत्यय इति चेन्न उक्तप्रतीतिर्हि शरीरापेक्षया सान्तरत्वं विषयीकरोति नत्विन्द्रियापेक्षया इन्द्रियस्यातीन्द्रियत्वेन तदपेक्षया सान्तरत्वस्य चक्षुषो वोद्धुमक्षमत्वात् ।

अथ यदि वहिर्निर्गत्य विषयदेशंगतेन चक्षुषा विषयो वीक्ष्येत तदा नेत्रपिधानेऽपि प्रत्यक्षं स्यात् चक्षूरश्मेर्वहिर्विद्यमानतया तत्सन्निकर्षस्य तदानीमपि सत्त्वात् अतः कृष्णसारगोलकमेव चक्षुरिति सौगतमतमेव पुनः समुत्तिष्ठति तत्पक्षे निमीलनेन व्यवधानादग्रहणमुपपद्यते इति चेन्न नयनगोलकादारभ्य विषयपर्यन्तं वद्धरेखस्यैव मनः संयुक्तस्य चक्षुषो विषयग्राहकत्वात्, निमीलने च विषयसंयुक्तोऽपि चक्षूरश्मिर्मनसा वियुक्तोऽवद्धरेखः कथं विषयवीक्षणपटुतामाश्लिष्येत् अतो न न्यायमते दोषः, नवा वेदान्तसिद्धान्तेऽपि एतत्पक्षे हि विस्फारिताक्षस्य हृदयादारभ्य विषयदेशं यावद्दण्डायमानस्यैवान्तःकरणस्य तत्तद्विषयाकार वृत्त्युत्पादकत्वादिति ।

यदपि वाह्याः खल्वमी विषयाः छायाद्वारा नयनदेशमागत्य भवन्ति गृह्यमाणा इति केषांचिन्मतं तदपि न सम्यक् छाया हि नैकदा चतुर्दिक्ष्वापतति किंतु तेजः पराङ्मुखे एव देशे इति सर्वेषां नः प्रत्यक्षम् सतिचैवं कथं चतुर्दिक्ष्ववस्थिताः पुमांसो मध्ये स्थितं पदार्थं गृह्णीयुः ।

ननु छायातः प्रतिविम्बस्य भेदात्तस्य चतुर्दिग्गमनं न विरुध्यतेऽतस्तस्यैव प्रतिविम्बस्य नेत्रे समावेशः कल्पनीय इति चेदेवमपि नीरूपस्य गगनस्य प्रतिविम्बाभावेन वृक्षयोर्व्यवधानस्य गगनात्मकस्य ग्रहणानुपपत्तिः वृक्षयोः प्रतिविम्बसम्भवेऽपि व्यवधानस्य गगनस्व रूपस्य प्रतिविम्बासम्भवात् । सिद्धान्ते तु वहिर्गतेन चक्षुषा गृहीतस्यालोकरूपस्याकाशेऽपि आकाशोधवल इत्यादि प्रतीत्या भ्रमात्मक ग्रहणोपगमान्नानुपपत्तिः ।

यदि तु अन्यदीयरूपेणापि धर्मिणो ग्रहणस्य पीतः शंख इत्यादौ दृष्टत्वेनालोकादिरूपोपधानेन गगनस्यास्माभिश्चाक्षुषत्वमुपेयं तदेव च विम्बत्वप्रयोजकत्वमतो गगनस्यापि प्रतिविम्बसम्भव इत्युच्यते तदपि एकस्य वस्तुनः पश्चाद्भागेऽसन्निहितः पदार्थः सान्तरत्वेन चक्षुषा समीक्ष्यते तथाविधस्य प्रतिविम्बस्तु दर्पणादौ न सान्तरत्वेनोपलभ्यतेऽपितु नैरन्तर्येणैवेत्यनुभवसिद्धम् तत्र यदि वाह्याः पदार्थाः चक्षुषि प्रतिविम्वेरन् तदा न सान्तरत्वेन गृह्येरन् सान्तरत्वेन ग्रहणे तु प्रतिविम्वस्वरूपातिवृत्तिः स्यादतो मार्जारनेत्ररश्मिगमनस्य प्रत्यक्षदर्शनाच्च चक्षुष एव गमनं युक्तमिति । एकेन च प्रतिविम्बेनावृते कृष्णसारेऽत्यणीयसि वस्त्वन्तरप्रतिविम्बासम्भवेन युगपदनेकपदार्थग्रहणानुपपत्त्याऽपि न नयने प्रतिविम्बोयुक्त इति ।

अपिचोपनेत्रेणावृते चक्षुषि उपनेत्रे ( चश्माभिधे काचे ) यः प्रतिविम्बः स एव चैतन्मते ग्रहीतुं शक्यते उपनेत्रे चावस्थितानां प्रतिविम्बानां न कोशादिव्यवहितत्वमव-

वारयितुं शक्यते उपनेत्रस्याल्पशरीरत्वात् दृश्यन्ते चोपनेत्रेणावृतेनापि नेत्रेण दूरसमीपभावमाश्रिताः पदार्थसार्थाः, तस्मादपि चक्षुषो वहिर्गमनपक्ष एव युक्तः

किंच नेत्रे प्रतिविम्वग्रहणोपपत्त्यर्थमतिसामीप्यस्य प्रतिविन्धकतां न भवान् कर्तुमर्हतीति नेत्रस्थकज्जलादेग्रहणप्रसक्तिं कथं भवान्निवारयितुं शक्नुयात्, वयं तु कपस्थस्य कस्य चिदपि चाक्षुषप्रत्यक्षासंभवेनातिसामीप्यस्य प्रतिवन्धकतां कल्पयितुमतोन नेत्रस्थकज्जलादेरस्मन्मते ग्रहणप्रसङ्गः ।

अपि च पित्तरोगवतां वहिः सर्वं पीतं भातीति निर्विवादम् तदेतद्वहिर्दत्यच्छनयनरश्मिसम्पृक्तपित्तद्रव्यगमनमन्तरेणानुपपद्यमानं चक्षुषो विषयदेशं प्राप्य कार्यं व्यवस्थापयतीति । एवं च चक्षुः प्राप्यकारि इन्द्रियत्वात् घ्राणादिवदित्यनुमानविलम्बतः सिद्धं चक्षुषः प्राप्यकारित्वमिति ॥

चक्षुरिव श्रोत्रमपि परिच्छिन्नं विषयदेशंगत्वैव विषयसम्वद्धं विषयग्राहकं हि सत्त्वप्रधानापञ्चीकृताकाशकार्यतया गतिमत् अधिष्ठानं च तस्य कर्णशष्कुली मानं च प्राच्यां गृहे वीणाशब्दः श्रुत इत्यादिप्रतीतिरेव न्यायमतमाश्रित्य श्रोत्रदेशे वीचीतरङ्गन्यायेन कदम्वगोलकन्यायेन वा शब्दात्क्रमेणोत्पद्यमानस्य शब्दस्य ग्रहे तस्मिन् शब्दे वीणादिजन्यत्वस्य गृहाद्यवच्छिन्नत्वस्य प्राच्यादिदिगवच्छिन्नत्वाभावात्प्रतीतिवाधः प्रसज्येत । अपिच वीणादिजन्येषु स्त्रीपुंसादिजन्येषु पञ्चमादिषु शब्देषु वैजात्यमानुभविकम् न च तत् कर्णप्रदेशोत्पद्यमानेषु शब्देषु सम्भवति तत्र वीणादेरजनकत्वात् यान् प्रति वीणादेर्जनकत्वं तेषां शब्दानां कर्णप्रदेशेऽसत्वात् शब्दविशेषेण पुरुषादिविशेषज्ञानासम्भवः स्यात्, तस्मात् श्रोत्रस्यापि विषयदेशगमनं युक्तमित्याहुर्वेदान्तपरिभाषाकारादयः ॥

वयम्पुनरेतदालोचयामः अतिप्राचीनैः कैश्चिदपि वेदान्तिभिः श्रोत्रगमनस्य अनुल्लेखनात् मोमांसकैः वर्णाभिव्यञ्जकस्य ध्वनेर्गतिमद्द्रव्यस्य श्रोत्रप्रदेशगमनेनैव तदभिव्यक्तवर्णस्य प्रत्यक्षमुपेयते नतु श्रोत्रस्य गमनमङ्गीक्रियते तद्वत् वेदान्तिभिरप्यविरुद्धांशेपगतोपगमात् ध्वनेरेव व्यापकवर्णाभिव्यञ्जकस्य श्रोत्रादिदेशगमनमुपगन्तुं कथमन्यथा शब्दग्राहक (फोनोग्राफ) यन्त्रेण ध्वन्यात्मकः शब्दो धार्येत, उपपद्यिष्यति चाचार्योभामत्यां तृतीयसूत्रे व्यवस्थापितवांश्च तत्त्वविन्दौ स शब्दस्य अमूर्तस्य श्रोत्रस्याकाशात्मकस्य गमनासंभवश्च तस्माद् ध्वनेरेव श्रोत्रप्रदेशे आगमः अतएव यदा पूर्वस्यादिशः सकाशात् झंझवातादयः समागच्छन्ति तदा पश्चिमदिशि पुंभिरुच्चारितान् ध्वनीन् न पुमांसो मध्यस्थिताः ग्रहीतुं शक्नुवन्ति तैर्वातादिभिः पश्चिमदिशि जायमानस्य ध्वनेरागमनप्रतिरोधात् अतएव च ध्वन्यभिघातेन कम्पनमप्यनुभूयमानमुपपद्यत इति ॥

**प्रकाशः**

**पित्तद्रव्यवर्त्तिनीं पीततामिति ननु नयनरश्मिसंपृक्तस्य पित्त**

पीतताऽनुभूयते इति यद्युपेयते तदा तस्याः परैरपि प्रत्यक्षापत्तिरविशेषादिति चेन्न द्वित्वादिवद् व्यक्तिविशेषग्राह्यत्वोपपत्तेः यथा यदीयापेक्षाबुद्ध्या यद् द्वित्वादिकं जायते तत्तेनैवाध्यक्षीक्रियते नान्येन केन चित् तथा तत्पुरुषीयनयनरश्मिसंपृक्तं यत्पित्तद्रव्यं बहिर्निःसरति तत् तन्निष्ठं पीतत्वादिकं च तेनैव पुरुषेण गृह्यते नान्येनेति नानुपपत्तिरनुभूयमानस्यारोपेष्विति । पित्तरहितामिति यदि हि तत्र पित्तद्रव्यं पार्थक्येनावभासेत तदाऽयं निरुपाधिको भ्रमो नोदीयादत एतदुक्तम् । यथा पीतत्वतपनीययोः सतः संसर्गस्य ग्रहेणासंसर्गग्रहो न भवति एवं पीतत्वशंखयोर्विद्यमानस्याप्यसंसर्गस्य ग्रहो न भवतीत्युभयत्रासंसर्गाग्रहसारूप्यमित्याह—असम्बन्धाग्रहेति अयं चासंसर्गाग्रहसद्भावः प्रायिकतयोक्तः शंखो न पीतः शंखत्वादितरशंखवदित्यानुमानिकपीतिमासंसर्गग्रहे सत्यपि पित्तदोषात्पीतःशंख इत्यादिभ्रमस्योदयात् अथवा असंसर्गस्य प्रत्यक्षाभावोऽसंसर्गाग्रह इत्यनेन विवक्षितोऽतो नानुपपत्तिरिति । नन्वस्त्वसंसर्गाग्रहः प्रकृते पित्तद्रव्यनिष्ठस्य पीतत्वस्य तदानीमनुभूयमानस्य नारोपोऽपितु पीततादात्म्यस्यैव संसर्गस्य तस्य च पूर्वदृष्टत्वं नास्तीत्यनुपपत्तिमाशंक्य परिहरति पीतमिति । तपनीयपिण्डम् सुवर्णपिण्डम् । सामानाधिकरण्यम् तादात्म्यम्, यदि तु रोगवियोगे पीतत्वस्य बाधात्तस्यापि प्रातीतिकत्वमेवोपगम्यते तदाऽऽरोप्याहेत्यतः पूर्वं पीतत्वं चेत्यपि पूरणीयम् । पीतः शंख इत्यादिप्रत्ययसमानोऽन्योऽपि प्रत्ययो लक्षणवत्तया व्याख्यात इत्यतिदिशति-एतेनेति नन्वादर्शादिष्वारोप्यं

भामती

एतेन तिक्तोगुड इत्यादि प्रत्ययो व्याख्यातः एवं विज्ञातपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्त्तितं मुखसंयुक्तं मुखं ग्राहयद्दोषवशात्तद्देशतामनभिमुखतां च मुखस्याग्राहयत्पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति । एतेन द्विचन्द्रदिङ्मोहालातचक्रगन्धर्वनगरवंशोरगादिविभ्रमेष्वपि यथासंभवं लक्षणं योजनीयम् ।

प्रकाशः

स्वमुखं न पूर्वदृष्टसजातीयं स्वमुखस्य पूर्वमदर्शनात् मुखान्तरस्य पूर्वदृष्टत्वेऽपि आरोपात्मकप्रतीतौ येन रूपेणारोप्यमवभासते तेनैव रूपेण विवक्षितस्य साजात्यस्याभावात् दर्पणे मे मुखमित्यत्र स्वीयमुखत्वेनैव

मुखस्य भानादतो लक्षणाघटकस्यापि भ्रमत्वव्यापकस्य पूर्वदृष्ट
भावाद् व्याप्यस्योक्तलक्षणस्याभावः सेत्स्यतीत्याशंक्याह—एवमि
प्रतिस्रोतः प्रवर्त्तितम् प्रातिलोम्येन प्रवर्त्तितम् परावृत्तमिति यावत्।
संयुक्तम् स्वमुखसंयुक्तं सत्, एतच्च चाक्षुषं तेज इति पूर्वोक्तस्य कर्तुर्निर्दे
मुखम् कर्म। ग्राहयदिति एतावता आरोप्यस्य मुखस्य पू
सजातीयत्वं समर्थितम् स्वमुखस्याधिकपूर्वसमये दर्शनाभावेऽपि
तनमपि तद्दर्शनमारोपात्पूर्वकालिकमेवेत्युपपन्नं पूर्वदृष्टत्वम्। न च
दर्शनं नारोपोपयोगीति पूर्वेत्युक्तमितिपूर्वग्रन्थविरोधः तस्यारोपात्मकं
स्वात्मकारोपं प्रत्युपयोगि न भवतीत्यर्थकत्वात् । नन्वेवं ग्रीवायामेव
गृह्येतेत्यत आह—दोषवशादिति । तद्देशताम् ग्रीवास्थताम्, इ
प्रकृताभिप्रायेण तेन जपाकुसुमादेर्भि देशसम्बन्धग्रहणेऽपि प्रति
विभ्रमस्योत्पत्त्या विभिन्नदेशवृत्तित्वादिरूपस्य विरोधिनो ज्ञाने
सोपाधिकभ्रमं प्रति प्रतिबन्धकत्वविरहेऽपि न क्षतिरिति ॥ पूर्वदृष्ट
पूर्वदृष्टेअभिमुखे आदर्शोदके देशौ यस्य स तथा तस्य भावस्तत्ता
मुखस्य मुखनिष्ठम् आदर्शादावधिष्ठाने आदर्शादिवृत्तित्वविशिष्टं मुखम
तीति यावत्, इदं रजतमित्यादिभ्रमस्थले शुक्तौ रजतमितिभ्रमानु
प्रतिबिम्बविभ्रमस्येदमपि वैलक्षण्यं यत् दर्पणाद्यधिष्ठानवृत्तित्व
मुखादौ भासत इति दर्पणे मे मुखमिति प्रतीतेराकारात्, यत्र सम्ब
प्याधाराधेयभावादिरध्यस्यते यथा प्रकृते मुखदर्पणयोः, तत्र सम्बन्धि
पूर्वदृष्टत्वमपेक्ष्यत एवेत्यतउक्तं पूर्वदृष्टाभिमुखेति अधिष्ठानसामान्य
भ्रममात्रेऽपेक्ष्यते इत्यभिप्रायेण वा ।

## विकासः

पूर्वदृष्टेत्यादि यदत्र परिमलकारः ग्रीवास्थे वस्तुभूते मुखे वस्तुभूतस्य पूर्वदृष्टस्य
सम्बन्धमात्रमध्यस्यते ननु दर्पणादौ प्रातीतिकं मुखमुत्पद्यते तत्र चात्रादर्शादिकम
मिति पूर्वपक्षिणः शंका, ग्रीवास्थं मुखमेवाधिष्ठानं तत्र दर्पणादिवृत्तित्वम
इति सिद्धान्तिनः समाधानम्, नच येनादर्शादिकमपि न कदाचित्पूर्वमनुभूतं तस्य
प्रतिबिम्बविभ्रमेऽव्याप्तिरारोप्यस्य पूर्वदृष्टत्वाभावाद्दिति वाच्यं तस्यापि हि पुंसः प्रथम
मादर्शादिग्रहणे जाते सत्येव प्रतिबिम्बविभ्रमो जायतेऽतो नाव्याप्तिः, नचैवमपि प्रातिभासि
कस्य चिदनुत्पत्त्या नान्यथाख्यातितोऽस्य वैलक्षण्यमिति वाच्यम् आदर्शसम्बन्धस्याप
भावरूपस्य प्रातीतिकस्योत्पत्त्या ततो वैलक्षण्यात् अत एव चूर्णलिप्तघटादिषु शु
इत्यादि प्रतीतिरनुभूयमानचूर्णशुक्लिमाद्यारोप एव तत्र शुक्लघटयोर्व्यवहारिक

संसर्गस्य प्रातीकस्योत्पत्त्याऽन्यथाख्यातितो वैलक्षण्योपपत्तिः नहि अन्यथाख्यातिवादिभिः कैश्चित्प्रातीतिकस्य कस्य चिदुत्पत्तिरुपेयत इति भामत्यास्तात्पर्यमवर्णयत् ।

तन्न युक्तं यतोऽयं संदर्भः पौर्वापर्येणालोच्यमानो न ग्रीवास्थे मुखे आदर्शादि वृत्तित्वमात्राध्यासपरः प्रतीयतेऽपितु प्रतिबिम्बरूपस्य मुखस्य तन्निष्ठस्यादर्शादिवृत्तित्व-स्याभिमुखत्वस्य चाध्यासपरः, कथमन्यथाऽऽदर्शादौ मुखादेरनुत्पत्तौ 'फोटो, यन्त्रादिनाऽऽदर्शादि वर्त्तिनो मुखादेर्ग्रहणमुपपद्येत, तस्मादादर्शादिप्रतिहतैर्नायनैरश्मिभिर्मुखादिसंयुक्तैः प्रथमं मुखादिकं स्वरूपमात्रेणावलोक्यते पुनर्झटितिपरावर्त्तमानेन नायनेन रश्मिना सम्बद्ध आदर्शादावधिष्ठाने आधाराधेयभावमापन्नं मुखादिकं प्रतिबिम्बात्मकं प्रातीतिक-मुत्पद्यते इति, अतएव चाध्यस्यमानसजातीयेऽपेक्षितस्य पूर्वदृष्टत्वस्योपपत्तयेऽत्र मुखं ग्राहयदित्युक्तम् न चाननुभूतारुण्यस्य पुंसः कथमरुणः स्फटिक इत्यादिप्रतीतिरिति वाच्यम् तस्यापि जन्मान्तरीणानुभवजन्यसंस्कारेण तत्स्मरणात्, कथं च प्रतिबिम्बग्राहकयन्त्रादिना गृह्यमाणं प्रतिबिम्बात्मकं मुखादिकं दार्शनिकशिरोऽलंकारो वाचस्पतिमिश्रोऽपलपेत्, ननु पूर्वदृष्टादर्शैकदेशतामित्युक्त्या परत्रपूर्वदृष्टावभास इति लक्षणांशं संगमयतीति प्रतीयते-ऽतोदर्पणादिदेशताया अध्यासो युक्त इति चेत् को ब्रूते उक्तदेशता नाध्यस्यते इति अपितु तन्मात्रं नाध्यस्यते इति ब्रूमः दर्पणादावधिष्ठाने दर्पणादिसम्बद्धं हि मुखमध्यस्यते सम्बन्धाध्यासे च सम्बन्धिनोर्ज्ञानमावश्यकमतस्तत्सम्पिपादयिषताऽऽचार्येणैनेन मिश्रेण तथाऽभिहितम्

अतएवात्र कल्पतरुकारेण आदर्शादिष्वारोप्यस्य मुखस्य स्वचक्षुषा पूर्वदृष्टत्वा-भावादव्याप्तिमाशंक्याह एवमिति, इत्यवतारितम् मुखस्यानारोपे तु तस्य पूर्वदृष्टत्वाभावोक्ति-रकिंचित्करी एव स्यात् आरोप्यस्य मुखस्येन्युक्तिश्चैतदीया न संगच्छेत तस्मान्नाध्यासिकस्य संसर्गमात्रस्य प्रतिभासकाले दर्पणादावुत्पादोऽपि तु तदानीं मुखादेरपीत्यभिमतमाचार्याणा-मिति सिद्धम् ॥

एवमन्येऽपि बहवः ग्रीवास्थे मुखे दर्पणादिसंसर्गमात्राध्यासमुपेत्य प्रतिबिम्बस्य बिम्बरूपत्वमेवेरीचक्रुः तेऽपि प्रदर्शितप्रतिबिम्बग्रहणानुपपत्त्या दर्पणादौ मुखादेराध्यासिकस्यो-त्पत्तेरावश्यकत्वेन निराकृता वेदितव्याः ॥

न च दर्पणे मे मुखं नास्तीतिवाधकप्रत्ययेन संसर्गमात्रस्य बाधे लाघवमिति वा-च्यम् उक्तयुक्त्याऽऽध्यासिकस्य मुखादेरुत्पत्तेरावश्यकत्वे उक्तबाधकप्रत्ययेन मुख तत्संसर्गयोरुभयोरेव निषेधस्य विषयीकरणात् लाघवमात्रेण पदार्थव्यवस्थितौ प्रतिबिम्ब-विभ्रम एव कुतो नापलप्यते, तस्माद्बिम्बातिरिक्तस्यैव प्रतिबिम्बस्य ग्रन्थाक्षरेण स्पष्टं प्रतिपाद्यमानस्य मुखादेरुत्पत्तिरेवयुक्तेति ॥

अतएव यत्र स्फटिकादिः संनिकृष्टो जपाकुसुमं तु तत्पश्चाद्भागादिस्थितमसन्निकृष्टं तत्र जायमाने स्फटिकादिलौहित्यप्रतिबिम्बविभ्रमे नायनेन रश्मिना स्फटिकात्परावर्त्तमानेन जपाकुसुमगतं वस्तुभूतमेव लौहित्यं प्रत्याय्यते इति न शक्यते केन चिद् व्यवस्थापयितुम्

तस्मादसमञ्जसोऽयं संसर्गमात्राध्यासपक्ष इति कथं च परिमलकारेणारोप्यस्य स-
न्नदृष्टिर्दत्तेति महच्चित्रम्, एतेन वेदान्तपरिभाषाकृतां जपाकुसुमसन्निहितस्फटिके आ-
रन्यथाख्यातिरेवेति स्वीकारोनितरामयुक्तः स्फटिके आरुण्यानुत्पत्तौ तद्ग्राहिणा
ऽऽरुण्यविशिष्टस्य स्फटिकादेरग्रहणापत्तेरिति, अभिहितं च मधुसूदनसरस्वतीभिः
सिद्धावज्ञानवादे 'अध्यस्तस्य स्फटिकलौहित्यस्य दर्पणे प्रतिबिम्बदर्शनात्' इति।

इत्थं च यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात्
सन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवान्न स्फटिके लौ-
हित्योत्पत्तिः इति तदीयो ग्रन्थोऽसंगत एव नह्यन्यथाख्यातिवादः सिद्धान्तिना
दनार्हः रक्तः पट इत्यादावनुभूयमानारोपस्थलेऽपि रक्तरूपवच्चूर्णद्रव्यपटयोः
ऽपि सिद्धान्तिभिरुपगतस्यान्यथाख्यातिवादिभिरनभ्युपगतत्वादिति ।

ननु शुक्तिरजतादिस्थल इव कारणस्याज्ञानस्य तन्निवर्तकज्ञानस्य चानिरू-
प्रतिबिम्बज्ञानस्याध्यासत्वमिति चेदत्र केचित् अधिष्ठानस्य दर्पणादेः सर्वथा
नायने ज्ञाने दर्पणाद्यज्ञानस्य तूलाज्ञानपदव्यपदेश्यस्यावरणशक्त्यंशेन
विक्षेपशक्त्यंशेनानुवर्तनात्तदेवोपादनम् 'तूलं यथाऽग्निसंयोगादतिशीघ्रं' विन-
शीघ्रविनाशित्वेन विशिष्टचैतन्यावरकमिदमज्ञानं तूलाज्ञानमिति व्यवह्रियते, बिम्बोपा-
निवृत्तिसहितं चाधिष्ठानज्ञानं सविलासमेव तदज्ञानं निवर्तयतीत्याहुः ॥

केचित्तु विक्षेपशक्त्यंशमपहायावरणशक्त्यंशमात्रनिवर्तकत्वं न ज्ञानस्य क्वचि-
मूलाज्ञानमेव प्रतिबिम्बाध्यासस्योपादानम् नचैवं प्रतिबिम्बस्य व्यावहारि-
बिम्बोपाधिसान्निध्यरूपागन्तुकदोषजन्यत्वेन तदसंभवात् सांनिध्यनि-
दर्पणादिरूपाधिष्ठानज्ञानमेव तन्निवर्त्तकम् अतएव स्वाप्निकानां मूला-
त्वेऽप्यागन्तुकनिद्रादोषतया प्रतिभासिकत्वमनुमन्यन्ते सिद्धान्तिन इत्युप-

वयं तु प्रथमोऽपि पक्षः साधीयानेवेति प्रतीमः अतएव जीवन्मुक्तस्य ब्रह्म-
विद्याया आवरणशक्तिनाशेऽपि विक्षेपशक्त्यंशस्याप्रारब्धकर्मभोगमनुवृत्तिर्निरुध्यते

## प्रकाशः

**लक्षितो भवति** उक्तलक्षणेनान्वितो भवति, **द्विचन्द्रादिभ्रमो**
दृष्टस्य द्वित्वस्य चन्द्रे समारोपरूपः, **दिङ्मोहः** दिग्भ्रमः सच प्रा-
पूर्वदृष्टस्य प्रतीच्यादौ समारोपः, एवं पूर्वदृष्टायाश्चक्राकारतायाः शीघ्र-
लातज्वालासु, पूर्वदृष्टस्य गृहादेर्मेघेषु, पूर्वदृष्टोरगादेः मण्डूकवसा-
लोचनग्राह्यवंशेषु य आरोपस्तत्र सर्वत्र दृष्टत्वमनेन पूर्वोक्तप्रकारेण
मित्यभिसम्बन्धः ।

इदं त्ववधेयम् यद्वस्तु नैतज्जन्मनि पूर्वदृष्टं तज्जन्मान्तरा-
स्मर्यमाणमुपयुज्यते समारोपे अतएव गुडं थूत्कृत्य त्यक्तुरेतज्जन्मनि
समननुभवितुर्बालकस्य जन्मान्तरीणमेव स्मरणमुपयुज्यते इति,
चैतत्पञ्चपादिकायामिति ॥

## भामती

एतदुक्तं भवति न प्रकाशमानतामात्रं सत्त्वं येन देहेन्द्रियादेः प्रकाशमानतया सद्भावो भवेत्, नहि सर्पादिभावेन रज्ज्वादयो वा स्फटिकादयो वा रक्तादिगुणयोगिनो न प्रतिभासन्ते. प्रतिभासमाना वा भवन्ति तदात्मानस्तद्धर्माणोवा। तथा सति मरुषु मरीचिचयमुच्चावच-मुच्चलत्तुङ्गतरङ्गभङ्गमालेयमभ्यर्णमवतीर्णा मन्दाकिनीत्यभिसंधाय प्रवृत्त-स्तत्तोयमापीयापि पिपासामुपशमयेत्. तस्मादकामेनापि आरोपितस्य प्रकाशमानस्यापि न वस्तुतत्त्वमभ्युपगमनीयम्—

## प्रकाश

यदवोचत्सत्ख्यातिवादी प्रकाशमानत्वमेव सत्त्वमिति तद्विघटयति एतदुक्तं भवतीति । सद्भावः सत्त्वम् । न प्रतिभासन्ते अपितु प्रतिभासन्त एवेत्यर्थः। भासमाना वेति सर्पादिभावेन भासमाना रज्ज्वादयो न वस्तुतः सर्पात्मकाः नवा सर्पधर्मवन्तो भवन्तीत्यर्थः। यदि हि भासमानत्वमात्रेण वस्तुनः सत्वं स्यात् तदा यद्यदात्मनाऽवभासते तत्तथाभूतमेव वस्तुतोभवेत् अस्त्वेव मित्यत्क्तावाह तथासतीति । मरुषु मरुभूमिषु । मरीचिचयम् तपनातपपुञ्जम् अभिसंधायेत्यग्रेणाभिसंबधः । उच्चावचम् बहुविधम्। मन्दाकिनीं विशिनष्टि-उच्चलदिति तुङ्गतरङ्गाणां भङ्गाः छेदाः तेषां माला पंक्तिः, उच्चलन्ती तुङ्ग-तरङ्गभङ्गमाला यस्याः सा तथोक्ता। अभ्यर्णमवतीर्णा इयं समीपमागता। उपशमयेदिति नचोपशमयतीति भावः। उपसंहरति तस्मादिति

## विकासः

तस्मादिति इदमपि च विचारमर्हति यदिदं शुक्तावभासमानं रजतं तद्वस्तुभूत-मेवेति विवदिषताऽन्यथाख्यातिमनिर्वचनीयख्यातिं च निराचिकीर्षता सत्ख्यातिमेवोप-जिगमिषताऽखिलस्यैव प्रपञ्चस्य पारमार्थिकता सम्पिपादयिषता 'एकमेवाद्वितीयम्, मृत्योः स मृत्युमाप्नोतीत्यादि श्रुतिं व्याकुलयता भवता यदि प्रतीतिकाले रजतमुत्पद्यते इत्युपेयते तदाऽस्मन्मतप्रवेशः यदि तु पञ्चीकरणप्रक्रियया रजतावयवसंश्लिष्टशुक्तिकोत्पादकसामग्री-बलेन रजतावयवसंश्लिष्टैव शुक्तिरुत्पद्यतेऽतोविद्यन्त एव कियन्तोऽप्यंशाः शुक्तिकादौ प्रतीय-मानस्य रजतादेः, एवं मरुमरीचिकादावपि केचित्तोयांशाः, जलत्वरजतत्वादिजातिश्चावयवा-वयविसाधारणी शुक्तिकादिस्वरूपान्तर्गतरजतादावपि संविशन्ती रजतादिप्रतीतिं प्रमामेव प्रसूते, अल्पीयस्तया च जलरजताद्यंशो बाधप्रतीतिमपि समर्थयति, अतएव व्रीहिविरहे

नीवारेण दर्शपूर्णमासः सम्पाद्यते पञ्चीकरणेनोभयत्रोभयांशस्य सत्त्वात्, तथात्र सर्वे प्रत्ययाः यथार्थाः प्रत्ययत्वात् सम्मतवदित्युच्यते तदा शुक्तिकामुपलभमानः सर्वत्रैव रजतमप्युपलभेत, एवं तत्रैव कदाचिद्रङ्गस्यापि भ्रमोद्भवात् रङ्गोत्पादिकाः शुक्तिकोत्पादकसामग्रीकोटौ निविशेत, एवमेकस्मिन्नेव तस्मिन् धर्मिणि भ्रमजननात्तत्तदुत्पादकावयवादिघटिताऽपि सामग्री शुक्तिकोत्पादकसामग्र्यां अतश्च तत्तदनेकविधपदार्थावयवादिविशिष्टायाः शुक्तेरुत्पत्तिरुपेया, एवं चैत्रे विभ्रमस्थले चैत्रोत्पादकतदीयमातापित्रादिघटितसामग्रीकोटौ मैत्रोत्पादकतदीयमा रजोवीर्यादिघटितसामग्र्यपि संविशेत्, नचैतत्संभवति एवं भ्रमान्तरेऽपीति कः माश्रियेत नह्येषा दृष्टविरुद्धकल्पना केषांचित्परीक्षणक्षमाणां मनागपि मनांसि मुत्सहते। नच कश्चित्कथंचित्कदाचित् शुक्तिकादाहे कमपि रजतांशं रज्जुदाहे दाहप्रयुक्तं दौर्गन्ध्यादिकमुपलभते, रजतादेः शुक्त्यादौ वस्तुतः सत्तोपगमे च नेदं मितिबाधप्रतीतेर्भ्रमत्वं शुक्तित्वेनावधारितायामपि शुक्तौ रजतप्रतीतिश्चापद्येत ।

किं च घटपटादिभिन्नेऽपि घटोऽयं पटोऽयमित्यादिभ्रमः समुदेतुमर्हति स च सत्त्वनिबन्धनेनोपपादयितुं शक्यतेऽवयवे घटत्वपटत्वादिजातेरसत्त्वात् तादृश भ्रमस्य प्रमात्वं कथंकारं वर्णयितुं क्षमेत भवानिति भवतैव स्वसिद्धान्ताभ्यास मपहाय परीक्षकदृष्ट्या विवेचनीयम् ।

यदप्युपेयते पञ्चीकरणप्रक्रियया रजताद्यंशस्य शुक्तिकादाववस्थानमिति तदपि पञ्चीकरणं हि सृष्ट्यादावेव भवमुत्पिपादयिषता भगवता भवेन भूतानां विधीयते तनानां भौतिकानां रज्जुसर्पादीनां चैत्रमैत्रादीनां चातोभूतानामेव परस्परसं भौतिकानाम् नहि चैत्रे अयम्मैत्रइति विभ्रमे चैत्रमैत्रयोः खण्डीकृत्य पञ्चीकरणं वा केन चिदनुभूतमनुभूयते वेति । व्रीह्यादिविरहे नीवारादिना तत्कार्यसम्पा न तत्र तत्र तदंशसत्त्वनिबन्धनमपि तु श्रुतिस्मृत्यादिविनियोगलभ्यमन्यथा त अन्येषामपि बहूनां धान्यादीनां तत्तत्कार्यसम्पादकतापत्तेरतो न रजताद्यंशस्य शुक्ति स्थानम्, सर्वे प्रत्ययाः यथार्था इत्यनुमाने च दुष्टसामग्र्यप्रसूतत्वमुपाधिः ।

किंचायथार्थः प्रत्ययोऽस्तीतिवाक्यजन्यस्य प्रत्ययस्य यथार्थत्वे तस्य सालम्ब थार्थः प्रत्ययः कश्चिदुपेतव्यः तथासति तत्रैव प्रत्ययत्वहेतोरनैकान्त्यम्, यदि चोक्तवाक्यजन्ये ऽयथार्थत्वं, तदाऽत्रैव हेतोरनैकान्त्यम् सेयमुभयतः पाशारज्जुः, नचात्रासत्ख्याति प्रत्ययानां यथार्थत्ववादिनाऽसत्ख्यातेः समर्थयितुमशक्यत्वात् असत्ख्यातेरुपगमे हि यथार्थत्वासंभवात् असत्ख्यातेर्निराकरिष्यमाणत्वाच्च, एवं भवत्पक्षे स्वाप्निकोऽपि वस्तुभूत एव नापारमार्थिकः कश्चित् तथा च स्वप्ने पित्रादेर्मरणेऽनुभूते जाग्रति तस्य दाहादिप्रसङ्गस्तदकरणे प्रत्यवायप्रसङ्गश्च, तस्मात्सार्वजनीनानुभवसिद्धो भ्रमो केन चिदपह्नोतुमिति ।

अपिच मरुमरीचिकायां तोयस्याल्पत्वं विद्यते अनुभूयते वा आद्ये कथं न पीत्वा पिपासोपशमः कथं वा न तत्प्रदेशस्य किंचिदप्यार्द्रीभावः, द्वितीये त्वनुभवबाधः

तृषया व्याकुलीकृत इतस्ततस्तोयमन्वेषमाणो मरुमरीचिकादौ गङ्गादिगतमविरतमतिधवलो चलत्तरलतरतरङ्गमिवाविच्छिन्नं प्रवाहमालोकमानोऽतितरां प्रमोदमानस्तत्पयः पातुं समीहमानोऽतिजवेन पुमान् प्रवर्तमनोवहुशः स्खलन्निवोपलभ्यमानो न तदानीं तोयस्याल्पत्वं प्रत्येति अपितु वाहुल्यमेवेति न तिरोहितं विपश्चितामविपश्चितां च केषांचित् तत्रचासति तोयवाहुल्ये येयं तोयवाहुल्यप्रतीतिः सा भ्रमरूपैवानिच्छतापि कांदिशीकेन भवताभ्युपगन्तुमुचितेति, एनमेवार्थं प्रख्यापयितुमत्र भामत्याम् उच्चलत्तुङ्गतरङ्गेत्यादिकं गद्यं प्रत्यपीपददित्यवगन्तव्यम् ।

अत्र च 'शशस्य शृङ्गमस्ति तच्च वने उपलभ्यते तेन च तपनीयपिण्डमुत्पद्यते इत्यादिवञ्चकवाक्यनिचयार्थमनुसंदधन्नरण्यानीं प्रविशन् यस्य कस्य चित्पशोः शृङ्गमुपलभन् पुमान् इदमेव शशशृङ्गमित्यनुभवति तस्मिश्चानुभवेऽन्यत्र गृहीतं शशशृङ्गं भातीति नाभिधातुं शक्यमन्यत्र तस्यागृहीतत्वात् अतो नायं नायनोऽनुभवो भवेत्सत्ख्यातिः नाप्यन्यथाख्यातिः पूर्वं तस्याग्रहणात् नाप्यसत्ख्यातिस्तस्या उपपादयितुमशक्यत्वात् अतोऽत्र विकल्पप्रत्ययोपनीतं प्रातीतिकमेव शशशृङ्गं भातीत्युपेयमतोऽनिर्वचनीयख्यातिरेव युक्ता ॥ किंच-मनुष्यपशुपक्षिवृक्षात्मकस्यैकस्यैवावयविनो भवति कस्य चित्स्वाप्निकोऽनुभवः सोऽपि न पूर्वोक्तयुक्त्या सत्ख्यात्यादिरूपः शक्यतेऽभिधातुमतोऽप्यनिर्वचनीयख्यातिरेवोपेया, इति परिमलकारविचारोऽपि चारुतर एव ॥

एवं चैतच्चक्षुः एतच्चक्षुर्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकं चक्षुष्ट्वात् चक्षुरन्तरवदिति चित्सुखाचार्योद्भावितं महाविद्यानुमानमपि अयथार्थप्रत्ययसाधकमवदातमेव, अत्र च एतच्चक्षुर्जन्ययथार्थज्ञानातिरिक्तं ज्ञानं पुरुषान्तरस्य यथार्थज्ञानं तज्जनकत्वं तदीयचक्षुष्यस्तीति तस्य दृष्टान्तत्वं पक्षे चायथार्थज्ञानजनकत्वमादायैव साध्यं सेद्धुमर्हतीति, पक्षभिन्नेऽभिमतमसिद्धं साधयदनुमानं महाविद्यानुमानमुच्यते, एवं प्रतिविम्वविभ्रमोऽपि, न सत्ख्यात्यादिभिः शक्यते निर्वोढुमतोऽवश्यं तत्र प्रातिभासिकोत्पत्तिः स्वीकार्यैस्यनिर्वचनीयख्यातिरेवेयं परीक्षकाणां मनांसि समाकर्षन्ती सर्वामप्यन्यां ख्यातिं तिरस्करोति, अवशिष्टमख्यातिखण्डनेऽपि विवेचयिष्यामीतीह्योपरम्यते ।

## प्रकाशः

ननु सलिलादेरन्यत्र दृष्टस्य स्वरूपेण सत्तया मरीच्यादावस्तु विभ्रमः शरीरादिकं तु नात्मनोऽन्यत्र गृहीतमिति स्वरूपसत्तामलभमानं कथमिदमनुभवगोचरः स्यात् तादृशं चेदनुभवगोचरः किमपराद्धं तदा गगनकमलिन्या वराक्येत्यभिप्रायवतः सत्ख्यातिमाचिख्यापयिषोः पुनः प्रत्यवति-

## भामती

नच मरीचिरूपेण सलिलमवस्तुसत् स्वरूपेण तु परमार्थसदेव देहेन्द्रियादयस्तु स्वरूपेणाप्यसन्त इत्यनुभवागोचरत्वात्कथमारोप्यते इति साम्प्रतम् यतो यद्यसन्तो नानुभवगोचराः कथंतर्हि मरीच्यादीनाम

सतां तोयतयाऽनुभवगोचरत्वम् नच स्वरूपसत्त्वेन तोयात्मनाऽपि भवन्ति । यद्युच्येत नाभावो नाम भावादन्यः कश्चिदस्ति अपितु एव भावान्तरात्मनाऽभावः स्वरूपेण तु भावः, यथाऽऽहुः 'भावान्तरम् हि कयाचित्तु व्यपेक्षया, इति । ततश्च भावात्मनोपाख्येयत्वा युज्येतानुभवगोचरता प्रपञ्चस्य पुनरत्यन्तासतो निरस्तसमस्तसामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभवविषयभावः कुतो वा चिदात्मन्यारोपः—

प्रकाशः

ष्ठमानस्याक्षेपमधिक्षिपति—नचेति साम्प्रतमित्यनेनेदमन्वेति । सलिलरूपेण । वैषम्यं स्फुटयति देहेन्द्रियादयस्त्विति । इतीति हेतौ स्वरूपेणाप्यसन्तोऽत इत्यर्थः । असतामनुभवगोचरत्वानङ्गीकारे तोयाद्य ऽसतां मरीच्यादीनां तोयाद्यात्मनाऽनुभवगोचरत्वं न स्यादित्याहयदी मरीच्यादीनां स्वरूपेण सत्त्वान्नासत्त्वमित्याशंकायामाह नचेति भवतीत भिसम्बन्धः । ननु मरीच्यादेस्तोयात्मनाऽसत्त्वं नाम तोयात्मनाऽभा नासत्त्वं यतो भाव एव भावान्तरात्मनाऽभावः स्वरूपेण तु भाव इत्यु रूप उपेयते स्वरूपद्वयं च व ास्तविकत्वादनुभवगोचरोयुज्यतेऽद्वैतमते तु यादिः प्रातीतिकस्वरूपादन्यत्स्वरूपमलभमानोऽसन्नेवेति कथमयम् गोचरो भवेदित्यभिमानः भूयोऽन्यैरनादृतामपि सत्ख्या मुहुःकामयमानः पुनः प्रत्यवतिष्ठते यद्युच्येतेति । अस्य भवात्मकस्य तो प्रपञ्चस्य देहेन्द्रियादेरखिलस्य । निरस्तसमस्तसामर्थ्यस्येति अनेनार्थ सामर्थ्यविरहोऽभिधीयते निस्तत्वस्येत्यनेन च स्वरूपसत्ताविरहः ए त्यन्तासत्त्वे हेतुः, अन्यत्राप्रतीतस्य शरीरादेर्न चिदात्मन्यारोपः सम्भव कुतोवेति अनिर्वचनीयवादिमतं तिरस्कृत्य शून्यवादिमतं निराचि सद्वादी नचेति ।

विकासः

नचेति शून्यवादिनः खल्वेवं विवेचयन्ति शून्ये एव सम्वृतिबलाद्जगदा ऽन्यान्यपि सर्वाणि घटपटादिज्ञानानि भ्रमरूपाण्येव यतो विचार्यमाणाः घटपटा सत्त्वेन व्यवतिष्ठन्ते, 'तत्र तदुक्तयुक्तयः पूर्वप्रदर्शिताः, आत्माप्यसन्, वस्तुशून्य एव, हि शून्ये एवात्मत्वविभ्रमो भवति, यथाच वेदान्तिनः स्वप्नावस्थामधिकृत्य जगतो व्यवस्थापयन्ति तथा सुषुप्त्यवस्थामधिकृत्य जगतः शून्यत्वमेव सम्भवते, सुषुप्तौ हि आत्मनोऽसत्त्वाच्छून्यत्वं तस्मिन्नेव शून्ये आत्मनि अविद्यया जाग्रदा प्रपञ्चविभ्रमो जायते, दृश्यते च शून्ये एवाकाशे नेत्रे उपमृद्यालोचिते नीलं

रेखोपरेखादिकं च, वीजविनाशे एव चाङ्कुरादिकं जन्यतेऽतोऽसदेव कारणमास्थेयम्, कारणस्यासत्त्वे च कार्यस्य सत्त्वासम्भवस्तस्मादखिलमेव विश्वमसत् शून्योपादानकत्वाच्च शून्यं सिध्यति ।

नच ात्मनोऽसत्त्वे कथं निरधिष्ठानको भ्रमः स्यादिति वाच्यम् शून्ये एव हि नभसि नीलिमादिभ्रमस्य गन्धर्वनगरादिभ्रमस्य चान्यैरपि वादिभिर्निरधिष्ठानकस्यैवा नोयत्वाऽभ्युपेयत्वात्, नच शून्यत्वभावनया जायमानस्य प्रपञ्चबाधस्य निरवधित्वासंभवाद्बाधा वधिरात्माऽभ्युपेयः रजतादिविभ्रमोत्तरं जायमाने बाधनिश्चये शुक्त्यादेरवधेः सत्त्वादिति वाच्यम् नासौ सर्प इत्याप्तवाक्यजन्येन ज्ञानेन बाधकेन जनिते बाधे निरवधित्वदर्शनादिति ॥

तदेतन्न विचारपदवीमधिरोहति तथा हि यद्यविद्यायाः कश्चिद्विषयो नोपेयेत तदा निर्विषयिकायास्तस्या निःस्वरूपत्वमेव, अविद्या हि सनिरूपकः सविषयकः, पदार्थः ईश्वरं न जानामीत्याद्यनुभवात् निःस्वरूपा च सा कथं जगन्मण्डलं रचयेत्, यदिचात्मा तस्या विषय उपगम्येत तदा तद्विषयतया सिद्ध एवायमात्मेति कुतो नैरात्म्यवादः शून्यवादापरनामा सिध्यतीति, आकाशस्य च नासत्त्वमसतः शब्दाश्रयत्वानुपपत्तेरतः सन्नेवाकाशो गृहाद्याकारतामापन्नस्य मेघस्य गन्धर्वनगरपदव्यपदिश्यमानस्याश्रयोऽतो न नभोभवति दृष्टान्तो भवतः । एवं वीजस्य विनाशेनैवाङ्कुरोत्पत्तिरित्यपि न, तत्राप्यङ्कुरोत्पादकस्य वीजावयवस्याङ्कुरेऽनुवर्त्तमानस्य विद्यमानत्वात् योहि तदंशोऽङ्कुरे नानुवर्तते तस्यैव विनाशः स च न कामपि क्षतिमासादयति, सर्वथैव विनाशे तु नाङ्कुरमुत्पादयति, प्रादर्शि चैतद्भगवता भाष्यकृता तर्कपादे छान्दोग्योपनिषदः षष्ठाध्यायभाष्ये च । एवं सुषुप्त्यवस्थायामसत एवात्मनः सकाशाज्जाग्रदवस्थाकालिकाः पदार्थाः जायन्ते इत्यपि न, सुषुप्त्यवस्थायामपि स्वयम्प्रकाशस्याविद्योपाधिकस्यात्मनो विद्यमानत्वात् कथमन्यथा सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थितोऽनुसंदधीतात्मानम् कथं वा पूर्वदिनारब्धकार्यमपूर्णं पूर्णकर्तुं तूर्णमेव प्रयतेत, तस्मादविद्याया एवायं महिमा न भवतोदोषः । किं चेदमसत्त्वम्भवताऽऽपाद्यमानं प्रमाणसिद्धमसिद्धस्वभावं वा स्वतःसिद्धं वाऽऽद्येऽसत्त्वस्याभावरूपस्य सप्रतियोगिकतया तद्ग्राहकप्रमाणस्य सप्रतियोगिविषयकत्वनियमेनात्मनोऽसत्त्वानुपपत्तिः, न द्वितीयः असिद्धस्यापादकाप्रसिद्धयाऽऽपत्तिरशक्यैव, तृतीये तु आत्मन एव स्वतःसिद्धत्वमस्तु किमसत्त्वस्य स्वतःसिद्धत्वेन, आत्मन एव वा नामान्तरकरणे भवति पर्यवसानम् यदेव हि स्वतः सिद्धं तदेवात्मा । किंचेदमात्मनोऽसत्त्वमात्मना ज्ञायतेऽनात्मना वा नान्त्यः अनात्मनो ज्ञातृत्वाभावात्, नाद्यः व्याघातात् आत्मा हि स्वसत्ताकाले स्वासत्त्वं जानाति स्वासत्ताकाले वा आद्ये स्वसत्ताकाले स्वासत्तां कथं जानीयात् विषयस्यैव स्वासत्तारूपस्याभावात्, द्वितीये कथं जानीयात् स्वस्यैवाभावात्, स्वसत्ताकाले आत्मैव कालान्तर भाविनीं स्वासत्तां जानातीतिचेन्न एवमपि आत्मनः सत्त्वमधिगतमेव केवलं विनाशित्वमवशिष्टं तत्र कृतहान्यादयोदोषाः, प्रसज्यन्त एवेति न शून्यवादिमतं सिध्यति ॥

इदमपि विचारमर्हति आत्मनोऽसत्त्ववादी स्वात्मानं निराकरोति परात्मानं वा आद्ये

निराकर्त्ता स्वयं विद्यमान एवात्मानं निराकुर्यात् तथाच व्याघातः पर्यवस्यति, द्वितीये
स्वयंपरमार्थ एव स्थित इति कथं तस्यात्मनोऽसत्त्वम् तदेतदाह श्रुतिः आसन्नेव स
असद्ब्रह्मेति चेद्वेद अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः, इति ।

आत्मनोऽसत्त्वे च सर्वोलोको नाहमस्मीति प्रतीयात्, एवमहं देहः
नवेत्यादिप्रत्यया अपि आत्मनः सत्त्वं साधयन्ति, एतेषां देहादिरूपे प्रकारांशे
धर्म्यंशे आत्मांशे, ऽभ्रान्तत्वात् सर्वमेव हि ज्ञानं धर्म्यंशेऽभ्रान्तं
तदुक्तं धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः, इति तस्माद्देहादिरूपतया बाध
आत्मनो धर्मिणोऽबाधनान्न शून्यत्वम् अतएवोक्तं वार्तिककृद्भिः ।

प्रमाणमप्रमाणं च प्रमाऽऽभासस्तथैव च ।
कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः । इति

अत्र प्रमाणं लौकिकं प्रमात्मकं ज्ञानम् अहं स्थूल इत्यादिः. अप्रमाणम्
पुंसो नाहं स्थूल इत्यादि लौकिकं भ्रमात्मकं ज्ञानम् प्रमाऽऽभासः संशयः अहं
नवेत्यादिः, एते च प्रत्ययाः धर्मांशे भ्रान्ता अप्यात्मनि धर्मिणि प्रमैवेति तदाशयः।
निरवधिर्बाधः नासौ सर्पं इत्युदाहृतासवाक्यस्याऽपि किन्तु रज्जुरित्येतत्पर्यव
सावधिकत्वात् तस्मान्न निरधिष्ठानको भ्रमः नवा निरवधिश्च कश्चिद्बाधोऽतो न
जगदुपादानं किंतु सद्ब्रह्मैवेति सिद्धम् । सदुपादानकत्वे एव सन्पटः सन्घट
प्रत्यया अप्युपपद्यन्तेतमाम् शून्योपादानकत्वे तु शून्यः पट इत्यादय एव प्रत्ययाः
स्युरन्, यदि च सदिति प्रतीयमानं शून्यमेवेत्युच्यते तदा नाममात्रे विवादः, तस्मात्
नागमनिरपेक्षेण तर्केण न शक्यते आत्मनः स्वरूपं निर्णेतुं तदुक्तं नैष्कर्म्यसिद्धौ

अनादृत्य श्रुतिं मोहादनुमानैकचक्षुषः ।
आपेदिरे निरात्मत्वं हता बौद्धास्तपस्विनः ॥

वक्ष्यत्याचार्यः तर्काप्रतिष्ठानादिति सूत्रभामत्यां मू—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते । इति
तस्मान्न शून्यवादः श्रेयोऽर्थिभिरादर्त्तव्य इति ॥

## भामती

नच विषयस्य समस्तसामर्थ्यस्य विरहेऽपि ज्ञानमेव त
स्वप्रत्ययसामर्थ्यासादितादृष्टान्तसिद्धस्वभावभेदमुपजातमसतः प्र
तस्मादसत्प्रकाशनशक्तिरेवाविद्येति साम्प्रतम्, यतो येयमसत्प्रकाशन
विज्ञानस्य किं पुनरस्याः शक्यम् असदितिचेत् किं तत् कार्यमाहोस्वित्
ज्ञाप्यम् न तावत्कार्यमसतस्तत्त्वानुपपत्तेः, नापि ज्ञाप्यं ज्ञानान्तरानुप
अनवस्थापाताच्च, विज्ञानस्वरूपमेवासतः प्रकाश इति चेत्, कः

सदसतोः सम्बन्धः, असदधीननिरूपणत्वं सतो ज्ञानस्यासता सम्बन्ध इति चेत्; अहोवतायमतिनिर्वृतः प्रत्ययतपस्वी यस्यासत्यपि निरूपणमायतते, नच प्रत्ययस्तत्राधत्ते किंचित्; असत आधारत्वायोगात्। असदन्तरेण प्रत्ययो न प्रथते इति प्रत्ययस्यैवैष स्वभावो नत्वसदधीनमस्य किंचिदिति चेत् अहोवतास्यासत्पक्षपातो यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः प्रत्यय इति तस्मादत्यन्तासन्तः शरीरेन्द्रियादयो निस्तत्त्वा नानुभवविषया भवितुमर्हन्तीति—

प्रकाशः

संप्रति कण्टकेनैव कण्टकनिवृत्तिरिति न्यायमनुसरन् सत्ख्यातिवादिनैवासत्ख्यातिवादं निरासयति नचेति। स्वप्रत्ययेति स्वसमानाकारः पूर्वप्रत्ययः कारणरूपः, बौद्धानां मते हि प्रत्ययशब्दः हेतूनां समुदाये प्रसिद्धः हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति व्युत्पत्तेः दर्शयिष्यति चेमामेव व्युत्पत्तिं द्वितीयाध्याये इतरेतरप्रत्ययत्वादिति सूत्रभामत्याम्। अन्यस्यैतादृशसामर्थ्यवैधुर्यादाह—अदृष्टान्तसिद्धस्वभावभेदमिति स्वभावभेदः स्वभावविशेषोऽसाधारणोधर्मः स्वकारणशक्त्या प्राप्तोऽसाधारणस्वभावविशेषो न क्वचिदन्यत्रास्तीत्यत उक्तमदृष्टान्तसिद्धेति, 'ज्ञानस्यापि हि पूर्वज्ञानात्मककारणाधीनमेव सत्त्वं नान्यत्किंचित् अविद्ययैव चासत्प्रकाशनरूपं तच्छक्तिमद्धा ज्ञानं जन्यते इति सर्वासत्त्वं महावैनाशिकाः माध्यमिकाः मेनिरे। नन्वविद्ययाऽसत्प्रकाशनमिति बौद्धमतं तत्कथमत्र विज्ञानमसत्प्रकाशनमित्युच्यतेऽत आह—तस्मादिति। एवं च शक्तिमज्ज्ञानमसत्प्रकाशनमित्युच्यते। शक्तिः शक्यनिरूपिता भवति न हि शक्येऽनिरूपिते शक्तिः सिध्यतीत्याशयेनाह—यतइति। तत्त्वानुपपत्तेः कार्यत्वानुपपत्तेः। किं शक्त्याश्रयाज्ज्ञानादतिरिक्तेन ज्ञाप्यं तेनैव वेति विकल्प्याद्यं दूषयति—ज्ञानान्तरेति शक्त्याश्रयत्वेनाभिमताज् ज्ञानादतिरिक्तस्य ज्ञानस्य तदानीमनुपलब्धेः, उपलब्धौ तु तस्मिन् ज्ञानेऽसत्प्रकाशनशक्तिरस्ति न वा आद्ये तस्या अपि शक्तेर्ज्ञाप्यमसदिति वक्तव्यम् तत्रापि पुनर्ज्ञानान्तरं नोपलभ्यते उपलब्धौ तु पुनरेतं विकल्पमापद्यमानं को निवारयितुं क्षमेतेत्यनवस्थापातः, द्वितीये तथैव प्रथमस्यापि ज्ञानस्यासत्प्रकाशनशक्त्यभाव एव स्यादिति भावः। तेनैवेति द्वितीयपक्षमोक्षिपति—विज्ञानस्वरूपमेवेति असत्प्रकाशनमित्युक्तेऽसत्प्रकाशयोः कश्चित्सम्बन्धो वाच्यः स च न संभवतीत्याह—कः पुनरिति सम्पद्यतां नाम असता

प्रत्ययस्य निरूपणरूप उपकारः प्रत्ययस्तु न स्वोपकारिणमसन्तं क-
चिदुपकारं कर्तुं समीहेत विद्यमाने हि कस्मिंश्चित्कश्चित्कि-
आदधातीत्यतोऽयमतिसुखी प्रत्ययतपस्वीत्युपहसति—अहोवताः
अतिनिर्वृतः अतिसुखी। असत्यपि निरूपणमाययते असदधीनसत्तो
भवतीति भावः। अनाधाने हेतुमाह—असत इति। असतः
सद्वाविनाभावात्मिकां व्याप्तिमाशंकते—असदन्तरेणेति इममपि पक्ष-
मेवापनुदति अहोवतेति आश्चर्यम्। यत् यस्मात्, अयम्
अतदुत्पत्तिः तस्मादुत्पत्तिस्तदुत्पत्तिर्न तदुत्पत्तिर्यस्य सोऽतदुत्पत्तिः। अ-
च असत्तादात्म्यरहितश्च। तदविनाभावनियतः असदविनाभूतः क-
इति यावत् बौद्धमते हि ययोः कार्यकारणभावो ययोर्वा तादात्म्यं
व्याप्तिः यथा धूमधूमध्वजयोः यथा वा वृक्षशिंशपयोः, साचेयं व्याप्तिः
सतोरेव भवितुमर्हति नासतोः नापि सदसतोः तयोः कार्यकारण-
तादात्म्यस्य चासंभवादिति भावः। सत्ख्यातिवादी असत्ख्या-
निराकृत्य स्वपक्षमुपसंहरति—तस्मादिति तथाच प्रयोगः देहादिप्र-
भासमानत्वात् आत्मवदिति। इदानीमसत्ख्यातौ निरस्तायां :
निराकरिष्णवो लब्धावसराः सिद्धोन्तिनोऽनिर्वचनीयख्यातिमाख्या-

## भामती

अत्रब्रूमः निस्तत्त्वं चेन्नानुभवगोचरस्तत्किमिदानीं मरीचयः
यात्मना सतत्त्वाः यदनुभवगोचराः स्युः, न सतत्त्वाः तदात्मना स-
मसत्त्वात्, द्विविधं च वस्तूनां तत्त्वं सत्त्वमसत्त्वं च तत्र पूर्वं स्व-
परतः। यथाहुः 'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके। वस्तुनि
किंचिद्रूपं कैश्चित्कदाचन' इति। तत्किं मरीचिषु तोयनिर्भा-
स्तत्त्वगोचरः, तथा च समीचीन इति न भ्रान्तो नापि बाध्येत
न बाध्येत यदि मरीचीनतोयात्मतत्त्वानतोयात्मना गृह्णीयात् तो-
तु गृह्णन् कथमभ्रान्तः कथं वाऽबाध्यः। हन्त तोयाभावात्मनां
नां तोयभावात्मत्वं तावन्न सत् तेषां तोयाभावादभेदेन तोयभा-
नुपपत्तेः। नाप्यसत् व स्त्वन्तरमेव हि वस्त्वन्तरस्याऽसत्त्वमास्थीयते
न्तरमभावोऽन्यो न कश्चिदनिरूपणात्' इति वदद्भिः नाचारोपि-
वस्त्वन्तरं तद्धि मरीचयो वा भवेत् गङ्गादिगतं तोयं वा पूर्वसि-

मरीचय इति प्रत्ययः स्यान्न तोयमिति । उत्तरस्मिंस्तु गङ्गायां तोयमिति स्यान्न पुनरिहेति । देशभेदास्मरणे तोयमिति स्यान्न पुनरिहेति । न च इदमत्यन्तमसन्निरस्तसमस्तस्वरूपमलीकमेवेति साम्प्रतम् तस्यानुभव गोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मान्न सत्, नापि सदसत् परस्पर विरोधादित्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयम् । तदनेन क्रमेणा न्यस्तं तोयं परमार्थतोयमिव अतएव पूर्वंदृष्टमिव तत्त्वतस्तु न तोयं न च

प्रकाशः ।

प्रक्रमन्ते-अत्रभ्रम इति सत्ख्यातिवादी ब्रूते-न सतत्त्वा इति तोयात्मनेति पूर्वेणानुषङ्गः। तत्र हेतुमाह—तदात्मनेति नचैवंरीत्या मरीचयः तोयात्मना सत्त्वाभाववन्तः तोयात्मनाऽसत्त्वादित्यनुमानस्य विवक्षितत्वे हेतोः साध्या-विशिष्टत्वमिति वाच्यम् तदात्मनाऽसत्त्वस्य ममापीष्टत्वादित्यस्य विवक्षितत्वा-दिति। तत्किं भवता सत्ख्यातिमिच्छताऽसत्ख्यातिरप्युपगम्यते नेत्याह—द्विविधं चेति चोहेत्वर्थे तोयात्मना ज्ञातं मरीचिस्वरूपमेव तोयरूपेणास-दित्युच्यते स्वरूपेण तु भावरूपमेवेति नासत्ख्यातिरित्यर्थः। पूर्वम् सत्त्वम्, स्वतः स्वस्वरूपेण, परंतु असत्वं तु, परतः अन्यस्वरुपेण। अत्र तद्ग्रन्थकृत्सम्मतिमाह—यथाऽऽहुरिति । सिद्धान्त्याह—तत्किमिति। तोयनिर्भास प्रत्ययः तोयतादात्म्यविभ्रमात्मकः प्रत्ययः तत्किं तत्त्वगोचरः स्यात् मरीचीनां तोयात्मनाऽसत्त्वस्य त्वया मरीचिस्वरूपत्वाभ्युपगमादित्यर्थः। किमतोऽत आह—तथाचेति तोयस्वरूपेणासत्त्वं मरीचिस्वरूपतयाऽबाध्यमेवं भ्रमे भासेत-चेन्नैव बाध्येत मरीचिस्वरूपस्य वास्तविकत्वादिति सिद्धान्तिनोक्ते सत्ख्यातिवाद्याह—अद्धेति बाढम् मरीचीनामतोयात्मत्वं स्वरूपं तद्यदि तथैव गृह्येत न बाध्येत नत्वेवं गृह्यतेऽपितु भावान्तरतोयात्मनाऽतोऽत्र युक्तैव भ्रमबाधप्रसिद्धिरित्यर्थः। एतावता तोयाभावात्मकेषु मरीचिषु तोयात्मकत्वं भ्रमेण विषयीक्रियते इत्युक्तं तत्तोयात्मकत्वं सत् असद्वा सदसदात्मकं वा तत्राद्यं निरस्यति—हन्तेति तथाऽपि च तोयात्मकत्वं यन्मरीचिष्ववभासते तद्यदि वस्तुभूतं मरीचिस्वरूपमेव भवेत् तदा तोयात्मकतामेवापजह्यात् विरुद्धत्वात् मरीचितोययोरैक्ये तदवगाहिन्याः प्रतीतेः प्रमात्वापाताच्चेति भावः। द्वितीये तु तत्किं तुच्छं सदन्तरं वा नाद्योऽपसिद्धान्तात् तस्य प्रतीयमानत्वा-संभवस्याभ्यर्णमेव प्रदर्शितत्वाच्च, न द्वितीय इत्याह—वस्त्वन्तरमेवेति इदं तोयमित्यस्मिन् प्रत्यये मरीचयस्तोयं च द्वे वस्तुनी प्रकारविशेष्यभाव-मापन्ने अवभासेते तत्र मरीचितोयतादात्म्यं सदन्तरं भवद्वस्तुभूतमेव

मरीच्यात्मकं गङ्गादिगतं तोयात्मकं वा भवेत् अन्यस्यास्मिन् अभे... नात् तदुभयं न संभवतीत्याह—पूर्वस्मिन्निति । ननु तदानीं देशवि... स्मर्यतेऽतोन गङ्गायां तोयमिति प्रत्यय इत्यत आह—देशभेदेति । न... तथा च इह तोयमिदं तोयमित्यादिप्रत्ययो न सत्ख्यात्युपगमेनोपपन्न... भावः । सत्ख्यातिवादं निरस्य पूर्ववृत्तमसत्ख्यातिवादनिरासं स्मा... नचेति । इदम् मरीचितोयतादात्म्यम् । अधस्तात् येयमसत्प्रका... विज्ञानस्येत्यादिनेत्यर्थः । सत्ख्यात्यसत्ख्यातिपक्षाक्षेपमुपसंहरन् साङ्ख्याभिमतं सदसत्ख्यातिपक्षं प्रतिक्षिपन् वेदान्तसिद्धान्तमनिर्व... ख्यातिपक्षं व्यवस्थापयति—तस्मादिति । अनिर्वाच्यमेवेति अनिर्वा... सदसद्विलक्षणत्वं नचैतद्विरुद्धं परस्परविरहरूपत्वाभावात् सद्वि... हि बाध्यत्वम्, असद्विलक्षणत्वं च सस्वरूपत्वं तथाच बाध्यत्वे सति... रूपत्वं पर्यवसितम् अस्तिचैतत् शुक्तिरजतादेः, बाध्यमानस्यापि सस्वरूपत्वात् अन्यथा ,खपुष्पवदेवापरोक्षत्वानुपपत्तेरिति, बाध... ऽनिर्वाच्यत्वमिति ।

विकासः

अनिर्वाच्यमेवेति एनेनान्यथाख्यातिवादिनां तार्किकाणामपि सिद्धान्तो भवति हि रजतं साक्षात्करोमीति प्रत्ययः सच न देशान्तरस्थरजतभानोपगमेन शक्योदेशान्तरस्थेन रजतादिना चक्षुरादेरसन्निकर्षात् विशेष्यविशेषणोभयसन्निकर्षस्य प्रत्यक्षं प्रति हेतुत्वात्, नच तत्प्रकारकजन्यप्रमात्मकसाक्षात्कारं प्रत्येव विशेषणं हेतुः तत्प्रकारकभ्रमात्मकसाक्षात्कारं प्रति तु दोषविशेषो हेतुः उक्तस्थले च चाकचिक्यादेः सत्त्वेन भवति तस्य साक्षात्काररूपता, साक्षात्कारित्वव्यञ्जकविषयतां लौकिकसन्निकर्षस्येव दोषस्यापि प्रयोजकतया दोषप्रयोज्यायास्तादृशविषयतायाः ... पयत एव रजतं साक्षात्करोमीत्याद्यनुभव इति वाच्यम् लाघवेन तद्विषयकचाक्षुषं सह चक्षुः संनिकर्षस्य हेतुत्वात्, उक्तस्थले देशान्तरस्थरजतस्यासन्निकृष्टस्य प्रत्यक्ष... दोषस्य च भ्रमात्मकानुमित्यादिकं प्रत्यपि जनकत्वेन तस्योपदर्शितविषयताप्रयो... संभवात् अन्यथा भ्रमानुमित्यादावपि साक्षात्कारत्वप्रसङ्गात्, नच दोषविशेषस्यैव ... रित्वव्यञ्जकविषयताप्रयोजकत्वमतो न काचिदनुपपत्तिरिति वाच्यम् दोषत्वस्यानु... प्रसक्तस्य दुर्वचत्वेन दोषविशेषत्वस्य सुतरां दुर्वचत्वात्, नच सन्निकर्षभिन्नसाक्षात्कारि... विषयताप्रयोजकत्वमेव दोषविशेषत्वमिति वाच्यम् उक्तविषयतायाः प्रयोजकत्वं... मानत्वेनात्माश्रयात्, सिद्धान्ते तु रजतादेः प्रत्यक्षत्वेऽपि तस्य चाक्षुषत्वाभ्यु... रजताकारवृत्तेश्चक्षुरजन्यत्वस्य वक्ष्यमाणतया तदुद्धारकचाक्षुषत्वस्य तत्प्रत्यक्षे ... भवति चाक्षुषे चक्षुः संयोगस्य व्यभिचारः, भवता तु रजतांशेऽपि चाक्षुषत्व...

गतत्वेन भवन्मते संनिकर्षं विना तदुत्पत्तेरसंभव एव, नच सिद्धान्ते चक्षुषा रजतं पश्यामीतिकथमनुभवोपपत्तिरिति वाच्यम् इदमाकाराया चाक्षुषवृत्तेस्तादात्म्यस्य रजताकाराविद्यावृत्तावविद्ययोत्पत्तिस्वीकारेणोपपादनादिति ।

ननु सन्निकर्षस्य लौकिकालौकिकभेदेन द्वैविध्यात् लौकिकस्य सन्निकर्षस्य विरहेऽप्यलौकिकस्य तस्य ज्ञानलक्षणस्य रजतादिना सत्त्वेन रजतादेश्चाक्षुषत्वमेव कुतो नोपेयते इति चेन्न योगजातिरिक्तेऽलौकिकसंनिकर्षे मानाभावात्, नच तदसत्त्वे सुरभिचन्दनमित्यादौ सौरभभानं कथं स्यादिति वाच्यम् उद्बुद्धसंस्कारेण तद्भानात्, नचैवं तज्ज्ञानस्य सौरभांशे स्मृतित्वापत्तिरिष्टत्वात् । नचैवं प्रत्यक्षत्वस्मृतित्वयोः सांकर्यस्यापत्तिः द्रव्यगतजातौ तस्य दोषत्वेऽपि गुणगतजातौ तस्यादोषत्वात् ।

किंच सांकर्यमनुगतत्वस्य वाधकमुत जातित्वस्य नाद्यः लौकिकत्वालौकिकत्वादेर्जातिभिन्नस्य संकीर्णस्यानुगतस्य भवतैवाभ्युपगतत्वात् द्वितीये त्विष्टापत्तिः जातिमात्रे प्रमाणाभावात्, गौर्गौरित्याद्यनुगताकारप्रत्ययस्य गन्धसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्याद्यनुमानादेश्च गोत्वपृथिवीत्वाद्यनुगतानतिप्रसक्तधर्ममात्रे प्रमाणत्वात् ननु नित्यत्वे सत्यनेकसमवेतत्वरूपजातित्वेऽपि, ब्रह्मभिन्नस्याखिलस्यैव प्रपञ्चस्य अतोऽन्यदार्तमित्यादिश्रुत्या युक्त्या च नित्यत्वासिद्धेः समवायस्य खण्डितत्वाच्च, तस्माद्यत्र चन्दने सौरभं प्राग्गृहीतं तद्विषयिण्याः सुरभिचन्दनमिति प्रतीतेः स्मृतित्वम्, यत्र न सौरभं प्राग्गृहीतं तद्विषयिण्याःसुरभिचन्दनमित्यादिप्रतीतेश्चन्दनत्वलिङ्गकानुमितित्वमेवास्थयेमिति न ज्ञानलक्षणसंनिकर्षस्यावश्यकतेति ।

यत्तु घटं जानामीत्याद्यनुव्यवसाये घटादेर्भानानुरोधेन न्यायमत इव सिद्धान्तेऽपि ज्ञानलक्षणप्रत्यासत्युपगम आवश्यक इत्याहुस्तन्न सिद्धान्ते हि घटाद्याकारवृत्तिमतोऽन्तःकरणस्य साक्षिप्रत्यक्षरूपे घटं जानामीत्याद्यनुव्यवसाये घटादिविशिष्टाया एव वृत्तेर्भानं ननु पार्थक्येन घटादेरतो नास्त्येव सिद्धान्ते ज्ञानलक्षणसंनिकर्षस्यावश्यकतेति ॥

अपिच ज्ञानस्य प्रत्यासत्तित्वे वह्न्यादेरनुमितिस्थले परामर्शादिरूपस्य वह्निज्ञानस्य सत्त्वात् तेन च ज्ञानलक्षणसंनिकर्षेण बलीयसा प्रत्यक्षानुभवोत्पादनदक्षेण घटितया प्रत्यक्षसामग्रीपिशाच्या विपक्षपक्षक्षोभक्षमां कामपि कमनीयां युक्तिमलभमानात् भक्षणोद्यतादसमकक्षात्प्रचण्डपाखण्डमण्डलाखण्डलचार्वाकात्संरक्षिता विलक्षणविचक्षणकणभक्षाक्षिचरणोदयनगङ्गेशवर्द्धमानपक्षधरादिसमीक्षणसमर्द्धितान्वीक्षिकीसमवेक्ष्यमाणापीदानीं यं कमपि रक्षकमनीक्षमाणा क्षणमप्यात्मानं त्रातुमशक्नुवाना भक्षिष्यत एवानुमितिसंततिर्भवताम्, समानविषयेऽनुमितिसामग्रीतः प्रत्यक्षसामग्र्या बलवत्त्वात् ।

नन्वस्तु समानेऽपि विषयेऽलौकिकप्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या एव प्राबल्यमिति चेन्न स्थाणौ स्थाणुर्वा पुरुषोवेति संशयोत्तरं सत्यपि पुरुषत्वव्याप्यकरादिमानयमिति प्रमात्मके विशेषदर्शने तदानीं प्रतिरुद्धपुरुषत्वप्रत्यक्षसामग्रीकस्य पुरुषस्य पुरुषत्वानुमितिरापतेत् तदनुमितिसामग्र्या विरोधिन्याः प्रबलायाः सत्त्वात्, नचेष्टापत्तिः पुरुषं साक्षात्करोमीत्यनुभवापलापापत्तेः तस्मात् ज्ञानलक्षणसंनिकर्षस्याभ्युपगमासंभवात् प्रतिबिम्बविभ्रमस्थले

दर्पणादौ मुखादेः स्फटिकादौ लौहित्यादेश्च प्रातिभासिकस्योत्पत्तेरावश्यकत्वात् ख्यातिवादो भवत्युपपादनार्ह इति ॥

ननु सिद्धान्ते कथय कथमिदं रजतमित्यादिप्रत्यय उपपद्यते इतिचेदित्थं चापलेन मनसाऽवधारय चक्षुःसन्निकृष्टे पुरोवर्त्तिनि चक्षुर्द्वाराऽतिलघीयस्तैजसमन्तःकरणं द्रुतं गच्छति तस्मिंश्च विषयदेशं गतेऽन्तःकरणे इदमाकारा चाकचिक्याकारा च ... काचादिदोषदूषितलोचनस्य पुरुषस्य वृत्तिरुद्भवति ततश्चेदमवच्छिन्नचैतन्यस्येदं ... वच्छिन्नचैतन्यस्य चैक्यादिदमिति ज्ञानं भवति प्रत्यक्षम्, सिद्धान्ते यद्वृत्त्यवच्छि... यद्विषयावच्छिन्नचैतन्येन भवत्यैक्यं तद्विषयांशे तज्ज्ञानस्य प्रत्यक्षत्वम् विभाजको... विषययोरुपाध्योरेकदेशस्थत्वेनोपधेयस्य चैतन्यस्य भेदाजनकत्वात्, यथा गृहावच्छि... गृहान्तर्वर्तिघटावच्छिन्नस्य चाकाशस्य न भेदः, ततश्चेदमवच्छिन्नचैतन्यसम्बन्धिचि... त्वप्रकारिकाऽविद्या तूलाविद्यापदाभिधेया मूलाविद्यायाः शक्तिरूपा वा उत्पद्यमानाऽऽ... गन्तुककाचादिदोषविशेषसहकृता रजताकारेण रजतगोचरवृत्त्याकारेण च परिणमते वृत्त... विद्यापरिणामरूपं रजतमिदमवच्छिन्नचैतन्येऽविद्याधिष्ठाने तदानीमवतिष्ठते ... कार्यं स्वोपादानाविद्याधिष्ठानाधिष्ठितं भवति, चैतन्यनिष्ठस्यापि तद्रजतस्य ... मधिष्ठानं किन्तु इदमवच्छिन्नं तत्, अत इदमि तादात्म्येन रजतस्य सत्त्वात् इदं ... तादात्म्यप्रत्यय उपपद्यते, यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपल... सुखाद्यधिकरणतावच्छेदकत्वात् तद्वत् । तत्र चक्षुर्द्वारा पुरोवर्त्तिनि अन्तःकरणस्य... दन्तःकरणोपहितमनावृतचैतन्यरूपः साक्ष्यपि तत्रास्तीति विषयावच्छिन्न... चैतन्ययोरेतयोश्चैकदेशस्थत्वेनैक्याद्विषयचैतन्येऽध्यस्तं रजतं साक्षिण्यप्यध्यस्तं ... साक्षिस्वरूपं प्रत्यक्षमुच्यते, रजतादेः पूर्वमविद्यमानस्य चक्षुरादिनाऽसंनिकर्षात् ... वृत्तेरसंभवात् रजततादात्म्यापन्ने पुरोवर्त्तिनि चक्षुः संनिकर्षादेव चक्षुषा रजतं ... भवति व्यवहारः, एवमेवाविद्याऽन्तःकरणतद्धर्मसुखदुःखादीनां केवलं साक्षिप्रत्यक्षं ... अविद्याद्यवच्छिन्नचैतन्यस्य साक्षिणश्चैकदेशस्थत्वेनैक्यात् तत्र वृत्त्यनपेक्षणात् ... भवार्थो चिदुपरागार्थो वा वृत्तिरपेक्ष्यतेऽविद्यादीनां चानावृतत्वान्न वृत्त्यपेक्षेति ।'

यत्तु वेदान्तपरिभाषाकृताऽविद्यादीनां सर्वेषां वृत्तिमुपेत्य स्वाकारवृत्त्युपहितप्रमा... त्रातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वं प्रत्यक्षलक्षणमत एव घटादेरूपप्रत्यक्षकाले परिमा... णाप्रत्यक्षं तदानीं परिमाणाकारवृत्तेरभावादिति प्रतिपादितं, तन्न सुखदुःखादीनां साक्षिभा... सादेवोपपत्तौ तद्गोचरवृत्तेरनावश्यकत्वात् रूपप्रत्यक्षकाले परिमाणप्रत्यक्षस्य ... सामग्र्याः प्रतिबन्धकत्वेनैव वारणात् अन्यथा परिमाणाकारवृत्तिवारणमप्यशक्यं ...

यदपि तेन स्वोक्तलक्षणोपपत्तये वृत्तेः प्रत्यक्षत्वसम्पत्तये वृत्तेः स्वगोचरत्वम्... तदपि न युक्तम् एकत्र कर्तृकर्मभावविरोधात् अतएव बौद्धप्रभाकरयोः स्वविषयकत्वेन स्व... प्रकाशत्वमनादृत्य स्वस्य परस्य चाविषयत्वमेव स्वप्रकाशत्वं सिद्धान्तिभिरुपपादितम्... केवलसाक्षिभास्येषु मध्ये रजतादेः प्रातिभासिकस्यैवाविद्यावृत्तिर्भवतीति सिद्धम्

नन्वेवमिदमाकारान्तः करणस्य वृत्तिरेका रजताकाराऽविद्यायाश्च वृत्तिरपराऽतो त्तिभेदात्तत्तदभिव्यक्तं चैतन्यमपि भिन्नमेवेति ज्ञानद्वयमापत्तिनमतः प्रभाकरमतप्रवेश तिचेदत्राहुर्वेदान्तपरिभाषाकारादयः उभाभ्यामपि वृत्तिभ्यामेकमेव विशिष्टं चैतन्यमभिव्य-यतेऽतो न प्रभाकरमतप्रवेश इति । तदेतन्नास्मभ्यं रोचते अभिव्यञ्जिकाया वृत्तेर्भेदे तदभिव्य--स्य ज्ञानस्यैक्यासंभवादन्यथाऽतिप्रसंगात् ।

वयंतु ब्रूमः वृत्तिद्वयविषयतयोरपि निरूप्यनिरूपकभावो वृत्त्योस्तादात्म्यं च शुक्त्या-द्यायां प्रसूयतेऽत इदं रजतमिति प्रमावदेवेदंत्वावच्छिन्नविशेष्यतानिरूपिततादात्म्यसम्बन्धा-च्छिन्नरजतत्वावच्छिन्नप्रकारतानिरूपकवृत्त्या एकमेव चैतन्यमभिव्यज्यतेऽतो न काचिदनुपपत्तिः अतएव रजतादिप्रातिभासिकगोचराविद्यावृत्तिरङ्गीक्रियतेऽन्यथा इदमाकारवृत्त्य-भिव्यङ्ग्यमेकंचैतन्यं स्यादपरं च वृत्त्यनभिव्यङ्ग्यं केवलंसाक्षिचैतन्यमतो विशिष्टज्ञानाभावात् वृत्त्या ह्यनुपपत्तिः प्रभाकरमतप्रवेशश्च स्यादिति । नच रजतस्य साक्षिभास्यतया तत्प्रत्यक्षोपपत्ते तद्गोचरवृत्तेरनावश्यकत्वेऽपि तद्गोचरसंस्कारोत्पत्त्यर्थमेव तद्वृत्तेरावश्यकत्वं नतु विशिष्टज्ञान-बोधपपत्त्यर्थमत एव सुखादेरपि साक्षिभास्यस्य वृत्तिरङ्गीकार्येति वाच्यम्, रजतादिबाधस्य सुखादिध्वंसस्य च संस्कारजनकत्वोपगमेनैव निर्वाहात्तदर्थं वृत्तेरनपेक्षणादिति ॥

अथ रजतावयवादिरूपकारणविरहेण पुरोवर्त्तिनि कथं रजतोत्पत्तिरितिचेन्न प्रातीतिक-पदार्थोत्पत्तौ लोकसिद्धसामग्र्या अनपेक्षणात् अघटितघटनापटीयसी मायैव अविद्यैव, हे साक्षात्तत्तदात्मना परिणमते नतु कार्यपरम्परया, व्यावहारिकभौतिकोत्पत्तावेव कार्यद्वारा तत्परिणामोपगमात् व्यावहारिकस्यापि पदार्थस्याविद्यकतया सृष्टिदृष्टिपक्षेऽपि कस्य चित्साक्षादेव मायापरिणामत्वं कस्य चिच्च कार्यद्वारेति विशेषः समाश्रीयत एव, भवति हि अल्पीयसाऽनेहसा द्राघीयस्या नभोमण्डलव्यापिन्या मेघमालायाः सौदामिन्याः आखण्डलधनुः खण्डस्य रजन्यां जगद्व्यापिनः सावयवद्रव्यस्य तमसः प्रभाते प्रभायाः अन्येषां चैवं जातीय-कानां समुदयः, न चामी पदार्थास्तत्तदवयवादिसंश्लेषणविश्लेषणक्रमेणाल्पीयसा समयेनारम्भ-वादमनुसरन्तोऽर्हन्त्याविर्भवितुम् तस्मादघटितघटनापटीयस्या मयायाः विविधानेकश-क्तिशालिन्याः साक्षात्परिणामा एवैते पदार्था इति मन्तव्यम् ।

अतएव योगिनां कायव्यूहरचनाऽप्युपपद्यते नहि लघीयसाऽनेहसा महीयसा समयेन सम्पाद्यं मातापितृरजोवीर्यादिसम्बन्धसमुपजातगर्भवासादिक्रममादाय तानि तानि शरीराणि मायिकत्वमन्तरेण शक्यन्ते प्रादुर्भवितुम् मायिकत्वे तु दृष्टसामर्थ्यातिक्तंनात् प्रभवन्ति तानि तानि शरीराणि झटित्युत्पत्तुम ॥

एवमीश्वरस्यापि शरीरं शिवविष्ण्वादिरूपं मायिकमेव तथाहि यदि तच्छरीरं स्थूलभूतकार्यं तदाऽस्मदादिरिव परिच्छिन्नोपाधिकतया सर्वकारणत्व सर्वनियन्तृत्वसर्वज्ञत्वा-दिरहित एवेश्वरोऽपि स्यात् स्थूलभूतकार्यस्थूलशरीराभिमानि जाग्रद्दशावस्थजीवकोटावेवान्त-र्भावात्, यदि च सूक्ष्मभूतकार्यं तदीयं शरीरं तदाऽपि सूक्ष्मभूतकार्यलिङ्गशरीरमात्राभिमानि स्वप्नावस्थजीवकोटावेवेशोऽन्तर्भवति, यदि च स्थूलभूतकार्यस्थूलशरीरसमष्ट्यभिमानवानीश्वरः

तदाऽपि विराट्स्वरूपतामापन्नो जीव एव, विराजोऽपि हि जीवकोटावेवान्त-
च विराजः स्वोपाधिशरीरोत्पत्तेः प्राक्कालीनपदार्थानां पूर्वं ज्ञानस्याप्यभावेन तदु-
नितरामसम्भावितत्वेन निरङ्कुशमीश्वरत्वं सर्वज्ञत्वं च न स्यात्, यदि च सू-
लिङ्गशरीरसमष्ट्यभिमानी स्यात् तदाऽपि तस्य हिरण्यगर्भरूपतया जीवकोटि-
तच्छरीरोत्पत्तेः पूर्वकालीनपदार्थानां ज्ञानाभावेन तदुत्पादकत्वासंभवेन च सर्वज्ञ-
च न स्यादित्यनुपदोक्त एव दोषः समापतति धर्माधर्माभावात्तस्य भौतिक-
त्वानुपपत्तिश्च तस्माद्भौतिकं शरीरं जीवानाविष्टमीशस्य न संभवतीति यावत्स्थित-

अथास्तु जीवाविष्टे एव शरीरे भूतावेशवदीशस्य प्रवेश इति चेन्न तच्छरी-
तज्जीवस्य भोगोपगमेऽन्तर्यामिरूपेण सर्वेष्वेव शरीरेष्ववस्थानसत्त्वेन तदतिरिक्त-
त्वादिभावेनासत्त्वप्रसङ्गात् तच्छरीरावच्छेदेन जीवस्य भोगानुपगमे तस्य
रत्वानुपपत्तेः अतोऽपि न भौतिकमीशस्य शरीरम्, तस्माद्विचित्रानेकशक्तिमत्त्वा-
पटीयस्या अनादेः स्वोपाधिभूतमायायाः शक्तेः स्वेच्छया साक्षात्परिणामभेदा एव
द्विभुजचतुर्भुजादयो देहभेदाः तैश्च देहैर्देहवानिव जात इव च संकीर्त्यते भगवान्
देहान् भक्तानामनुजिघृक्षयाऽऽविर्भावयति तिरोभावयति चेति न तिरोहितं
पुराणेतिहाससमालोचनकुशलानां कोविदानां केषां चित्, अतएवोक्तं मोक्षधर्मे

माया ह्येषामया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नतु मां ज्ञातुमर्हसि ॥ इति

सर्वभूतगुणैर्युक्तं कारणोपाधिकं मां चर्मचक्षुषा द्रष्टुं नार्हसीत्यर्थः, तदेतदभाणि भ-
गीताभाष्ये स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां
स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावो
स्वमायया देहवानिव जातइव लोकानुग्रहं कुर्वन् लक्ष्यते स्वप्रयोजनाभावेपि भूतानु-
इति । तदेतत्संगृहीतं मधुसूदनसरस्वतीभिः गीतागूढार्थदीपिकायाम्—

नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान् ।
स एव भगवद्देह इति भाष्यकृतां मतम् ॥ इति ।

नन्वस्त्वन्येषां यथातथा तमसस्तु न सावयवद्रव्यत्वं सोढुं शक्नुमः क्लृप्तेनैवालोकाभावेनो-
पपत्तेरितिचेन्न उपचयापचयावस्थाभेदवत्त्वेनोपलक्ष्यमाणस्य तमसोऽभावत्वासंभवात् न
घटाभावादयः क्वचिदाधिक्येन क्वचिच्चाल्पत्वेन प्रतिभासन्ते, तमो न
स्पर्शशून्यत्वात् व्योमवदित्यनुमानं तु वायुर्न स्पर्शवान् रूपशून्यत्वात् व्योमवदित्य-
प्रत्यक्षबाधापहृतविषयं, तस्मान्नाभावस्तमः ।

किंचान्धकारे घटादिप्रत्यक्षवारणाय विषयतासम्बन्धेन द्रव्यचाक्षुषं प्र-
संयोगेन हेतुत्वं कल्पनीयमेवमप्यालोकप्रत्यक्षे व्यभिचारस्तद्वारणाय चालोकातिरि-
क्तविषयतायाः कार्यतावच्छेदकसम्बन्धत्वं तमसोऽभावत्ववादिना भवतोपग-
गौरवम्, एवमालोकातिरिक्तत्वद्रव्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरु-

त्वायाः द्विविधसंसर्गतायाः कार्यतावच्छेदकसंसर्गतात्वमुपेयमिति पुनर्गौरवम्, तमसो भावत्वे तु द्रव्यचाक्षुषत्वावच्छिन्नं प्रति संयोगेन तमस्त्वेन प्रतिबन्धकतयैवोपपत्तौ द्रव्यचाक्षुषं प्रति नालोकस्य हेतुत्वं नेवाऽऽलोकप्रत्यक्षानुपपत्तिपरिहारायोक्तविषयतायाः कार्यतावच्छेदकसंसर्गतात्वं कल्प्यतेऽतोभावत्वपक्षे लाघवान्नाभावस्तम इति ।

नन्वेवमपि द्रव्यचाक्षुषत्वावच्छिन्नं प्रति तमोऽभावस्य प्रतिबन्धकाभावविधया कारणत्वं भवताऽपि वक्तव्यमेव तत्र तमः प्रतियोगिकत्वाभावत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकारणताद्वयं कल्पनीयमिति न लाघवमितिवाच्यम् तमोऽभावनिष्ठतद्व्यक्तित्वस्य, स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तमस्त्वस्यैव वा कारणतावच्छेदकतयोक्तगौरवासंभवात् ।

यदि तु प्रतिबन्धकाभावो न क्वचिदपि हेतुः किंतु कार्यप्रागभावं प्रति तत्सत्त्वे तत्सत्त्वरूपां क्षेमिकीं प्रयोजकतामेवाश्रयति प्रतिबन्धकः, तथाच प्रतिबन्धकसत्त्वे कार्यप्रागभावस्यैव कार्यविरोधिनो वर्तमानतया न भवति कार्योत्पत्तिः, नच कारणकूटाश्रयक्षणोत्तरक्षणत्वस्य कार्योत्पत्तिव्याप्यतया प्रतिबन्धककालेऽपि निखिलकारणसत्त्वे कार्योत्पत्तिः स्यादिति वाच्यम् प्रतिबन्धकाभावसहितस्यैव सकलकारणाश्रयत्वस्योक्तव्याप्यतावच्छेदके प्रवेशादिति मतमाश्रीयते तदात्यन्तमेव लाघवं तमसोरूपवद्भावत्वे ।

ननु भावत्वपक्षेऽपि प्रौढालोकेन तमसो विनाशस्यावश्यं वाच्यतया प्रौढालोकवति देशे निमीलितनयनपटलाः पुमांसः कथं तमः प्रतीयुः अभावत्वपक्षे तु निमीलने आलोकप्रत्यक्षाभावात् तत्र स्थितं नित्यमालोकाभावं साक्षात्कर्तुमर्हन्तीतिचेन्न पिहितकर्णपुटस्यान्तरशब्दग्रहणवत् गोलकान्तर्वर्तिन एव तत्र तमसश्चक्षुषा ग्रहणात्, नचैवं नेत्रस्थकज्जलादेरपि ग्रहणप्रसङ्गः, अतिसामीप्यस्य सर्ववादिसिद्धप्रतिबन्धकतयैव तदग्रहणोपपत्तेः नेत्रस्थकज्जलादेस्तद्देशस्थतमोऽपेक्षया समीप्यात्, तदुक्तं सांख्यकारिकायाम्

आतिदूरात्सामीप्यादिन्द्रियदोषान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ इति

ननु तमसो रूपवद्भावत्वे आलोकनिरपेक्षचक्षुर्ग्राह्यत्वाभावो बाधक इतिचेन्न आलोकविरोधिनस्तमस आलोकाभावव्यङ्ग्यतयाऽऽलोकनिरपेक्षचक्षुर्ग्राह्यत्वोपपत्तेः अन्यथा तस्यालोकाभावत्वोपगमेऽपि रूपवत्प्रतियोगिकाभावतया घटाभावादेरिवालोकसापेक्षचक्षुर्ग्राह्यतैव स्यात् तमस आलोकविरोधितया तत्प्रत्यक्षे आलोकानपेक्षत्वं तु भावत्वपक्षेऽपि समानम् तस्मान्नाभावस्तमः किंत्वालोकाभावव्यङ्ग्योभाव एवेतिसिद्धम् । तदुक्तम्

नाभावो भाववैधर्म्यान्नारोपो बाधहानितः ।
द्रव्यादिषट्कवैधर्म्याज्ज्ञेयं मेयान्तरं तमः ॥इति

नीलंतमश्चलतीत्यादिप्रत्ययात् घटादिष्विव तमस्यपि रूपादिमत्त्वे बाधकाभावेनारोपासंभवात् गन्धाद्यभावेन पृथिव्यां नीलरूपादिमत्त्वेन जलादिष्वनन्तर्भावाच्च भवति तमो द्रव्यान्तरमित्येतस्य पद्यस्यार्थः । तदिदं तमो नावयवसंयोगादिद्वारेण द्व्यणुकादिक्रमेणोत्पद्य झटिति सकलदेशं व्याप्तुमर्हतीत्यतः साक्षान्मायापरिणामोऽभ्युपेयत इति ।

इत्थमेव च लोकसिद्धसामग्रीमनपेक्षमाणया माययैव शुक्तौ रजतमुत्पाद्यते, नो व्यावहारिकरजतत्वस्यारोप एवास्तु तावतैव इदंरजतमितिप्रत्ययोपपत्तेः प्रातीतिक त्तिस्वीकारो व्यर्थं इति वाच्यम् व्यावहारिकरजतत्वेन सन्निकर्षाभावात् तदारोप ज्ञानलक्षणसन्निकर्षस्य निराकृतत्वात्

नचैवमपि शुक्तौ प्रातीतिकस्य रजतत्वस्यैवोत्पत्तिरस्तु नतु धर्मिणो रजतस्य नातो धर्मकल्पनाया लघुत्वात् तावतापीदं रजतमिति प्रत्ययोपपत्ते रिति वाच्यम् तस्य रजतत्वस्य पूर्वमिष्टसाधनतावच्छेदकत्वेनाग्रहेण रजतार्थिनः पुरोवर्तिनि प्रवृ व्यावहारिकप्रातिभासिकोभयसाधारणेन रजतत्वत्वेन तद्ग्रहस्वीकारेऽपि तत्र धनतावच्छेदकत्वस्य रजतत्वेऽग्रहात्प्रवृत्त्यनुपपत्तेस्तादवस्थ्यात् रजतत्वस्य स्वरूपत धनतावक्च्छेदकत्वात् रजतत्वत्वस्याज्ञानेऽपि इदंरजतमितिप्रतिभासनाच्च, तस्माद धर्मैरजतत्वादिभिः संसृष्टस्य प्रातिभासिकस्य रजतस्य धर्मिण उत्पत्तिरुपेय चेष्टसाधनतावच्छेदकरजतत्वादेर्व्यावहारिकत्वप्रातिभासिकत्वोदासीनेन केवलं तादात्म्यमात्रं प्रयोजकं तच्चास्त्येव प्रातिभासिकेऽपीति नानुपपत्तिः ॥

अथास्तु शुक्तेरेव दोषनिमित्तोरजतरूपः परिणाम इतिचेन्न पयः परिणामे नेदंदधीतिबाधादर्शनात् तादृशस्य रजतस्यापि व्यवहारदशायां बाधो न स्यात्, 'दोष तादृशप्रत्ययप्रसङ्गः, 'तदज्ञानशून्यैरपि दृश्यत्वप्रसङ्गश्च, नच सावित्रेण किरणेन कमलमुकु तदपगमे पुनर्मुकुलीभावश्च दृश्यते तद्वदिहापि स्यादितिचेन्न तद्वदेव पूर्वावस्थापत्ति स्यान्न तु मिथ्यैवरजतमभादित्यादिसार्वजनीनबाधबुद्धिरिति, शुक्त्यादे रजताद्यात्मना स्वरूपप्रच्युतिश्च स्यात् तस्मात्प्रतिभासिकमेव रजतमुपेयमिति ॥

ननु शुक्तौ प्रातिभासिके रजतेऽभ्युपगम्यमाने नेदं रजतं नात्ररजतमिति प्रत्ययस्याकारो न स्यात् किंत्विदानीमिदं न रजतमित्यादिः इदानीं घटो न श्याम तिचेदुच्यते अधिष्ठानसाक्षात्कारस्यायं महिमा यत्स्वविषये समारोपितं पदार्थं स्वरू यतीति कालमनन्तर्भाव्यैव भवति निषेधप्रतीतिः घटेश्यामत्वं तु नारोपितं समान भयोरतः कालमन्तर्भाव्यैव भवति तत्र तथा प्रतीतिरिति।

यत्तु वेदान्तपरिभाषाकृता पारमार्थिकत्वेन व्यधिकरणधर्मेण रजतस्य शुक्तौ रजतं नास्तीति प्रतीतेविषय इति प्रत्यपादि तदसमञ्जसं घटत्वेन पटोनास्तीत्यादि धर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतीतौ हि व्यधिकरणधर्मोऽपि स्वावच्छिन्नप्रति कत्वसम्बन्धेनाभवांशेऽवभासतेऽन्यथोक्ताभावस्योपगमपक्षे घटवत्यपि घटोनास्ती प्रामाण्यं को निवारयितुं क्षमेत तत्र घटस्य पटत्वादिनाऽभावसत्त्वात् तस्मात्, रजतं प्रतीतौ व्यधिकरणधर्मस्यानुल्लेखान्न व्यधिकरणधर्मावच्छिन्नप्रतियोगिता भासत इति।

यदप्युक्तं तेन तत्रैव 'ननु प्रतिभासिके रजते पारमार्थिकत्वमवगतं नवा योगितावच्छेदकावच्छिन्नज्ञानाभावादभावप्रत्यक्षानुपपत्तिः, इति तदप्यसमञ्जसं धर्मावच्छिन्नप्रतियोगिताकाभाववादिभिः अभावज्ञानसामान्ये प्रतियोगितावच्छे

प्रतियोगिज्ञानस्य कारणत्वानुपगमात् तदुपगमे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका भाव एवास्तं गच्छेदिति ।

यदपि तत्र तेन शुक्तिनिष्ठस्य लौकिकपारमार्थिकत्वस्य सन्निकृष्टस्य भानमङ्गीकृत्य यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरङ्गीकारात् अतएवेन्द्रियसंनिकृष्टतया जपाकुसुमलौहित्यस्य स्फटिके भानसंभवान्न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिरित्युक्तं तदपि न समीचीनम्, स्फटिके लौहित्यस्य तदानीमनुत्पत्तौ दर्पणादिना प्रतिबिम्बग्राहक 'फोटो' यन्त्रादिना च लौहित्यविशिष्टस्य स्फटिकस्य ग्रहणानुपपत्तेरतःस्फटिके लौहित्यस्य प्रातिभासिकस्योत्पत्तिरवश्यमभ्युपयेति नान्यथाख्यातिवादः क्वचिदपि सिद्धान्तिना भवत्यनुमोदनार्हः । नच पटादौ कौसुम्भारुण्यप्रतीत्यर्थमन्यथाख्यातिरादरणीया, पटे कौसुम्भावयवानामाध्यासिकतादात्म्यस्योत्पत्त्या प्रतीतिनिर्वाहादन्यथाख्यातेस्तत्राप्यनादरणात् अन्यथासंसर्गस्यापि वास्तविकत्वे भ्रमत्वानुपपत्तेः तस्मात्सिद्धमेतत् नेदं रजतमित्यादिप्रतीतौ स्वरूपेणैव रजताभावो विषयो भवति न तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव इति ।

इत्थञ्च निष्कण्टकतया सिद्धे प्रातिभासिके रजतादौ स्वाप्निके च गजादावुत्पत्तिमत्वेन विनाशित्वस्यावश्यंभावितया प्रतीतिनाशे बाधदर्शने च तददर्शनात् प्रतीतिनाशकनाश्यत्वमेव तस्य रजतादेरुपेयतेऽतो यावत्कालं तत्प्रतीतिस्तावत्कालमेव तस्यावस्थानं भवतीत्यतः प्रातिभासिकं तदुच्यते । 'नेदं रजतम् इयं शुक्तिः' इत्यादि बाधे जाते नष्टे चाज्ञाने मिथ्यैव रजतमभादिति जीवन्मुक्तानां प्रपञ्चावभास इव बाधितानुवृत्तिरेवेति ।

युगपदनेकपुरुषाणाम् 'इदं रजतम्' इति विभ्रमे जातेऽपि इदमवच्छिन्नचैतन्ये नैकस्य रजतस्योत्पत्तिः किन्तु प्रतिपुरुषं भिन्नस्यैव, उपादानस्याज्ञानस्य भेदात् । भवति हि एकस्य शुक्तित्वज्ञाने जातेऽपि अपरस्य तदभावे रजतप्रत्ययानुवृत्तिरतः सृष्टिदृष्टिपक्षेऽपि प्रातीतिके दृष्टिसृष्टिरेवोपेयते । दृष्टिसृष्टिपक्षे च वक्ष्यमाणानाद्यदृष्टसंस्कारादिभिन्ने घटादौ व्यावहारिकत्वेन प्रसिद्धेऽपि दृष्टिसृष्टिरेवेति विशेषः ।

अस्मिन् हि वेदान्तदर्शने सृष्टिदृष्टिवादो दृष्टिसृष्टिवादश्चाधिकारिभेदेन प्रदर्शितोऽस्ति ताविह संक्षेपेण प्रदर्श्येते । तत्र **सृष्टिदृष्टिवादो** मन्दाधिकारिणां कृते ज्ञापितोऽस्ति । भवति हि स सुबोधो मन्दप्रज्ञानाम् । तथा हि प्रथमं तावत् 'तदैक्षत बहु स्यां प्रजायेय' इत्यादि श्रुतिप्रतिपादितः संकल्पो मायावृत्तिरूपो मायोपाधिकस्येश्वरस्य भवति । तत आकाशादीन्यपञ्चीकृतानि पञ्चभूतानि तन्मात्रपदप्रतिपाद्यानि प्रादुर्भवन्ति । तत्राकाशस्य गुणः शब्दो वायोः शब्दस्पर्शौ तेजसस्तु शब्दस्पर्शरूपाणि अपां तु शब्दस्पर्शरूपरसाः पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः । शब्दस्य हि नाकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात् । नचासौ भ्रमः? बाधकाभावात् । एवमेव तेजः प्रभृतिष्वपि पूर्वपूर्वगुणस्योत्तरोत्तरत्र सद्भावोऽवधेयः, वर्णितं चेदं **पञ्चदश्यां** विद्यारण्यस्वामिभिः ।

यद्यपि शब्दो द्रव्यं न तु गुणः, तथापि गुणपदेन न नैयायिकसंकेतितो गुणो गृह्यते किंतु धर्मः; शब्दो द्रव्यमप्याकाशादौ वर्तते यथा भूतलादौ घटादिरिति न किञ्चिदनुपपन्नम् । दृश्यते च मीमांसायां द्रव्यदेवतयोर्गुणशब्देनाभिधानम् ।

इमानि च भूतानि सत्त्वरजस्तमोगुणत्रयात्मकमायाकार्याणि परिणामपरिणामिनोरनन्यत्वा-स्यादाकाशादिष्वप्यनुवर्त्तन्त एवामी सत्त्वादयो गुणाः । सत्त्वगुणप्रधानैश्चाकाशादिभिर्व्यस्तैः यथाक्रमं श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि प्रादुर्भवन्ति, तैरेव चाकाशादिभिः पञ्चभिर्भूतैर्मिलितैः सत्त्वगुणप्रधानैरन्तःकरणम्, रजोगुणप्रधानैश्च तैराकाशादिभिः पञ्चभि-र्भूतैरेकैकशो यथाक्रमं वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि चोत्पद्यन्ते । मिलितैः पञ्चभिर्भूतै रजोगुणप्रधानैः प्राणापानव्यानोदानसमानाभिधाः पञ्च वायवः समुदयन्ते । तैः पञ्चभिर्भूतैरपञ्चीकृतैः लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्यन्तस्थायि मनोबुद्धिभ्यां ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चक-प्राणपञ्चक संयुक्तं जायते, अत्र चित्ताहङ्कारयोरपि बुद्धावेवान्त-र्भावो बोध्यः, तदेतल्लिङ्गशरीरं परापरभेदेन द्विविधम् । परं हिरण्यगर्भलिङ्गशरीरं तच्च महदिति व्यपदिश्यते ,अपरमस्मदादेः यदहङ्कार इत्याख्यायते । तैश्च तमोगुणप्रधानैरपञ्चीकृतैः पञ्चभिर्भूतैः पञ्चीकरणप्रक्रियया पञ्चीकृतानि भूतानि जायन्ते । तमोगुणप्रधानेभ्य एभ्यो भूतेभ्यः पञ्चीकृतेभ्यो भूरन्तरिक्षस्वर्महर्जनस्तपःसत्याभिधस्योर्ध्वलोकसप्तकस्यातलपातालवितल-सुतलातलरसातलमहातलाख्यस्याधोलोकसप्तकस्य च ब्रह्माण्डाभिधस्य जरायुजाण्डजस्वेदजोद्भि-ज्जाख्यस्य स्थूलभूतचतुष्कस्य चोत्पत्तिः । तत्र पञ्चतन्मात्रादेरुक्तद्विविधलिङ्गशरीरस्य हिरण्यग-र्भस्थूलशरीरस्य चोत्पत्तौ ईश्वरस्य साक्षात्कर्तृत्वमितरप्रपञ्चोत्पत्तौ च हिरण्यगर्भद्वारा 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेः ।

इत्थञ्चाकाशादीनां भूतानां घटपटादीनां भौतिकानाञ्च यथायोग्यं कार्यकारणभावमाप-न्नानां प्रात्यक्षिकाणामानुमानिकानाञ्च ब्रह्मज्ञानमनुभूयमानानां परमार्थसच्छुद्धब्रह्मविषयस्य जीवाश्रितब्रह्मगोचरस्य वा विविधशक्तिशालिन एकस्यानेकस्य वा प्रवाहानादिविविध-दृष्टपरमेश्वरेक्षणादिसहकृतस्य कल्पितस्य सदसद्विलक्षणस्य त्रिगुणस्याज्ञानस्य समानसत्ताक-कार्यतया परिणामत्वम्, परमार्थसदधिष्ठानस्य ब्रह्मणो विषमसत्ताकतया तद्विवर्त्तत्वं च भवति । सति चैवं यदा यत्पुरुषीयेन्द्रियसंप्रयोगजन्या यद्विषयिणी या वृत्तिरुदेति तया वृत्त्या तद्विषया-वच्छिन्नचैतन्यावरणभङ्गो विषयचैतन्ययोः सम्बन्धाभिव्यक्तिर्वा भवतीत्यतस्तदा स विषयः स्तदीयतज्ज्ञानस्य कर्म भवति नान्यदा नान्यस्य नान्य इति प्रतिकर्मव्यवस्थाप्युपपद्यते, ज्ञानात्पूर्वमिन्द्रियसंप्रयोगकाले विषयस्य सत्त्वात् ।

एवमेकैकस्य घटपटादेरनेककालस्थायितया प्रत्यभिज्ञायमानत्वमनेकद्रष्टृदृश्यत्वं च भवतीति बौद्धाभिमतक्षणिकवादनिराकरणहेतुप्रत्यभिज्ञामूलकस्थायित्वप्रतिपादकसूत्रवार्ति-तिकटीकादिग्रन्था अपि नितरां सामञ्जस्यमर्हन्ति । एवं व्यवहारकाले कार्यस्य प्रपञ्चस्य सत्त्वेऽपि स्वसम्बन्धितया प्रतिपन्ने पारमार्थिकत्वेन सरूपतो वा निषेधाभिधानात् मिथ्यात्वं प्रपञ्चस्य सिद्ध्यति । तदेतन्मिथ्यात्वमपि घटत्वादिसमकक्षमेव घटादावतो न काऽपि काचिदनुपपत्तिः ।

एतेन मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वं सत्यत्वे चाद्वैतहानिरित्याद्यनल्पज-ल्पास्तोऽन्ये निराकृताः । यतः स्वविषयसाक्षात्कारानिवर्त्यो यस्य यो धर्मः स तत्र स्वविरोधिनं प्रतिक्षिपतीति सार्वजनीनो नियमः । यथा शुक्तिविषयसाक्षात्कारानिवर्त्यः शुक्तित्वजातिः

दयो धर्माः स्वविरोधिनं शुक्तित्वाभावरजतत्वादिधर्मं शुक्तौ निवर्त्तयन्ति । एवं मिथ्याभूतमपि मिथ्यात्वं घटादिसाक्षात्कारेणानिवर्त्तमानं स्वविरोधिनं सत्यत्वादिधर्मं घटादौ निवर्त्तयतीति मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य न सत्यत्वमापततीति न काचिदनुपपत्तिः ।

तथा चानुमानम्——'विमतं मिथ्या दृश्यत्वात् शुक्तिरूप्यवत्' इति निष्प्रत्यूहमेव प्रसरति । श्रुतयोऽपि च 'नेह नानाऽस्ति किञ्चन' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्याद्याः मीमांसापरिशोधिताद्वैततात्पर्यवत्योऽपौरुषेयतया स्वतः प्रमाणभूताः सन्त्यनुग्राहिकाः । अत एव निर्मूलैरप्रतिष्ठितैरनुमानैस्त्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वाग्राहकैः सार्वजनीनचन्द्रादिवितस्तिपरिमाणग्राहकप्रत्यक्षसाजात्यगृहीताप्रामाण्यैर्व्यावहारिकसत्त्वग्राहितयोपपद्यमानैर्घटादिसत्त्वग्राहकैः प्रत्यक्षैः, यागस्वर्गादिस्वरूपप्रतिपादनपरैः तत्पारमार्थिकत्वाभिधानतात्पर्यशून्यैः 'स्वर्गकामो यजेत' इत्यादिवाक्यैश्च न बाध्यत्वमस्य मिथ्यात्वानुमानस्येति ।

दृग्दृश्यसम्बन्धानुपपत्तिश्चास्मिन् मिथ्यात्वानुमानेऽनुकूलस्तर्कः । तथा हि लाघवानुगृहीतया श्रुत्या चैतन्यैकरसस्यात्मन एकत्वसिद्धौ चक्षुरादिसंयोगादिना जायमानस्य ज्ञानस्य 'कामः संकल्पः' इत्यादिश्रुतिसिद्धान्तःकरणवृत्तिरूपत्वस्यैव, तदनुपगमे नित्यस्यात्मरूपस्य चैतन्यस्योत्पत्त्यादिशून्यतया घटज्ञानमुत्पन्नं विनष्टमित्यादिप्रतीत्यनुपपत्तिः, तस्माज्ज्ञानाद्भिन्नोत्पादविनाशशालिनी तदभिव्यञ्जिका वृत्तिरुपेतव्या । नचेन्द्रियसन्निकर्षेणैव चैतन्याभिव्यक्तिरस्तु किं वृत्त्येति वाच्यम्, शाब्दादिपरोक्षस्थले वृत्तिमन्तरेण चैतन्यस्यासत्त्वापादकावरणभङ्गाभावेन तत्र तत्र वृत्तिस्वीकारस्यावश्यकता प्रत्यक्षस्थलेऽपि वृत्तेरेवावरणाभिभावकत्वस्य स्वीकर्त्तुमुचितत्वात्, अतीन्द्रियेऽन्धकारावृते च चक्षुःसन्निकर्षसत्त्वेऽप्यावरणानभिभवेन व्यभिचाराच्च । संनिकर्षस्यावरणाभिभावकत्वे तस्य घटादाविन्द्रिये च सत्त्वेन घटो जानाति, घटं चक्षुर्जानातीत्यादिप्रत्ययापत्तेः, अहं घटं जानामीत्यादिप्रत्ययानुपपत्तेश्च अन्तःकरणस्य घटादिनाऽसन्निकर्षात् । किंचावरणस्याज्ञानरूपतया केवलज्ञानस्याज्ञानाविरोधतया वृत्त्यभिव्यक्तस्यैव हि तस्यावरणाभिभावकत्वेनभवति वृत्तेरावश्यकत्वम् । एवं वृत्तेरनुपगमे तन्नाशजन्यस्तन्नाशरूपो वा तज्जन्यस्तत्समानविषयको वा संस्कारो न स्यादतोऽपि वृत्तिरुपेया । अपि च ज्ञानसुखादेस्तृतीयक्षणनाश्यस्य प्रथमक्षणे प्रत्यक्षकारणं ज्ञानसुखादिर्विषयोऽपीष्यतस्तस्य कारणत्वोपपत्तये प्रथमक्षणेऽप्रत्यक्षमनन्तरं क्षणैकमात्रं ज्ञातसत्त्वमभ्युपेयं भवता तद्वरं वृत्त्यनपेक्षेण नित्येन साक्षिणैव तद्ग्रहणम्, तथासति प्रथमक्षणेऽपि ज्ञाततयाऽज्ञातसत्ताकत्वस्य सर्वानुभवविरुद्धस्य न भवति तत्र प्रसङ्गोऽतोऽपि वृत्तिज्ञानयोर्भेद उपेतव्यः ।

अन्यच्च स्वप्नावस्थामधिकृत्य 'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यात्मनः स्वप्रकाशत्वं ख्यापयन्ती श्रुतिरपि वृत्तिं ज्ञानाद्भिनत्ति । अयं ह्येतस्याः श्रुतेरभिप्रायः—आत्मनः स्वयम्प्रकाशतानुपगमे स्वप्नावस्थायामन्तःकरणपरिणामस्य गजादेर्ग्रहणासम्भवः, न हि तदानीमन्तःकरणस्य गजादिगोचरा वृत्तिः संभवति यया गजादयो गृह्येरन्, अन्तःकरणमेव गजादिभावमापन्नमिति तस्य दधिरूपेणपरिणतस्य पयस इव स्वरूपान्तरात्मनाऽवस्थानाभावेन

गजादिगोचरवृत्तेरसंभवात्तद्धानानुपपत्तिरतस्तद्भासकं जीवसाक्षिचैतन्यं स्वयंप्रकाशस्व-कार्यमिति वृत्तिज्ञानयोर्भेदोऽवश्यं वाच्यः। एवं सुषुप्तिकालीनाज्ञानानुभवानुरोधेनापि वृत्ति-ज्ञानमभ्युपेयम्, तदानीमन्तःकरणस्याज्ञाने विलीनतया तद्वृत्तेरसंभवात्। यथा चै-व्यक्तीभविष्यत्यग्रेऽपि, व्यवस्थापयिष्यते च ज्ञानस्य स्वप्रकाशत्वमात्मरूपत्वं च तेन वृत्तिज्ञानयोर्भेदः।

व्यस्थिते चैवं कूटस्थनित्ये परमात्मस्वरूपेऽसंगे सकलबाधावसानतयाऽबाधितेः विषयावभासके चैतन्येऽज्ञानस्य साधके स्वतोऽज्ञानाविरोधिनि अज्ञाननिवृत्तये वृत्तिपरि-णेऽपि, ज्ञेयेन सह तस्य संबन्धो ज्ञेयमिथ्यात्वं विना न संभवतीति ज्ञेयस्य यदि मि-न स्यात्तदा ज्ञानसम्बन्धरूपं ज्ञेयत्वमपि न स्यादिति मिथ्यात्वानुमाने भवत्यनुकूलतर्कः हि ज्ञानस्येव ज्ञेयस्यापि पारमार्थिकत्वे ज्ञानेन संबन्धो घटते। तथा हि संबन्धस्य देशक-प्रकर्षाभावेन समं समव्याप्तत्वस्य संयोगादिषु गृहीतत्वात्, प्रतियोग्यभावादीनां त-सम्बन्धस्यावयोरसम्प्रतिपन्नतया तेषु व्यभिचारनिश्चयासम्भवात्; व्यभिचारसंशयस्य स्थलेऽविरोधात् तेषां पक्षसमत्वाच्च देशकालाविप्रकर्षे सम्बन्धः तदभावे सम्बन्धः हिमवद्विन्ध्ययोरित्यन्वयव्यतिरेकाभ्यां निर्णीतस्य सम्बन्धं प्रति देशकालविप्रकर्षा-प्रयोजकस्याभावात्, प्रयोज्यस्य सम्बन्धस्यानुपपत्तेस्तर्कस्य विद्यमानत्वात्।

नच घटीयरूपरसयोर्देशकालाविप्रकर्षोऽपि न सम्बन्ध इति न तस्य तत्प्रयोजकत्वं वाच्यम्, समवायासिद्धया उभयोरपि घटात्मकत्वेन भवति हि सम्बद्धत्वम्। अत-यत्र सम्बन्धस्तत्र तत्र देशकालविप्रकर्षाभाव इति सम्बन्धस्य व्याप्यतया विप्रकर्षा-व्यापकतया भवति निर्णयोऽतो न रूपरसयोर्व्यभिचारः। एवञ्च सम्बन्धव्यापकस्य देश-विप्रकर्षाभावस्य सत्त्वेन ज्ञानज्ञेययोः सम्बन्धाभाव इति सिद्धयति।

नचैवं सति यस्य देशकालविप्रकर्षाभावस्तस्य सिद्धयन् संयोगादिः संबन्धस्त-भवेदिति वाच्यम्, देशकालविप्रर्षाभावस्य हि सम्बन्धत्वेनैव सम्बन्धव्याप्यता-तात्त्विकसम्बन्धत्वेन मन्मतेऽप्रसिद्धेः परमते वैयर्थ्याद्व्यावर्तकत्वादतः सम्बन्धमात्र देश-विप्रकर्षाभावात्सिद्धयति। यदि हि न स्याद्बाधकं स्यादेव संयोगादीनां तात्त्विक-अस्ति चाद्वैतागमस्य सदसद्भयामनर्वाच्यत्वादेश्च बाधकस्य सद्भावः।

ननु यथा संयोगबाधाद् गुणक्रियादिविशिष्टबुद्धिः समवायमालम्बते तथैव घटो न-घटं जानामि, घटमिच्छामीत्यादिविशिष्टबुद्धिरपि संयोगादिबाधात् तदतिरिक्तं प्रतियोगि-षयत्वादिसम्बन्धं साधयिष्यति, तथाचानुमानम्—प्रतियोग्यभावविषयज्ञानादिविषयिणी-ष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषयां विशिष्टबुद्धित्वात् दण्डीतिविशिष्टबुद्धिवदिति-उक्तरीत्याऽनुमित्या सिद्धयन्नपि प्रतियोगित्वविषयत्वादिः सम्बन्धो नाद्वैतवादिनां क्षतिमासादयति। न हि वयमभावादीनां पारमर्थिकं सम्बन्धं प्रत्यादिशन्तोऽपि पारमार्थिकमपि कमपि संबधमपाकुर्मो येनैवं पर्यनुयुञ्जेमहि, किंतु देशकालविप्रकर्षा-व्यापकस्याभावेन प्रतियोग्यभावादेः सम्बन्धः प्रतीयमानोऽप्यसंभवदुक्तिकतया न पारमार्थिकोऽपि त्वाविद्यकस्तादृशश्च संबधो नाद्वैतनिश्चयं विरुणद्धीत्यभिदध्महे।

एवं च दृश्यानां घटादीनां, 'दृशा' ज्ञानेन सह देशकालविप्रकर्षसत्त्वेन वास्तविकसम्बन्धाभावात् । 'सन् घटः' इत्यादिज्ञानस्वरूपसद्विशेष्यिकायास्तादात्म्येन घटप्रकारकप्रतीतेर्ज्ञानेन सहाध्यासिकस्तादात्म्यसम्बन्धः सिद्ध्यतीति । अयमेव संबधो विषयत्वम्, अनेनैव हि घटं जानामीत्यादिप्रत्ययोपपत्तौ तदतिरिक्तस्य प्रतियोगित्वादिसमकक्षस्य व्यावहरिकस्यापि विषयत्वादिसम्बन्धस्य कल्पने गौरवम् । यथा चैतत्तथाग्रेऽपि स्वयं प्रकाशत्वनिरूपणे व्यक्तीभविष्यति । एवञ्च 'ऐतदात्म्यमिदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' 'इदं सर्वं यदयमात्मा' इत्यादयः श्रुतयोऽप्युपपद्यन्तेतमाम् । सतिचैवं सृष्टिदृष्टिपक्षे पारमार्थिकं व्यावहारिकं प्रातिभासिकं चेति सत्तात्रयं व्यवतिष्ठते

**दृष्टिसृष्टिवादस्तु**—अविशुद्धान्तःकरणैर्दुर्बोधः । स चेत्थं व्यवतिष्ठते—प्रातीतिकानां रजतादीनां स्वाप्निकानां च रथादीनां वाधात्पूर्वं सत्तया प्रतीयमानानां यथा तुच्छविलक्षणत्वं यथा च शुक्तित्वादिप्रकारकाज्ञानात् रजतादिकं तदाकारा वृत्तिश्च सहैव जायते, पूर्वं पश्चाद्वा रजतादेरग्रहणात् अज्ञाततादशायामवस्थानाभावात् दृष्टिसमसमयैव रजतादीनां सृष्टिरुपेयते, दृष्टिनाशेन सहैव च नाशः, न तु रजतावयवादितस्तदुत्पत्तिस्तन्नाशान्नाशश्च; तथा व्यावहारिकत्वेन सम्प्रतिपद्यमानानां घटपटाद्यखिलप्रपञ्चानां स्वस्वकारणादुत्पद्यमानानां प्रत्यक्षादिकारणसमवधानदशायां प्रत्यक्षादिकम्, अन्यदा तु विद्यमानानामपि तेषां न प्रत्यक्षादिकमित्येवाब्रह्मसाक्षात्कारं स्थूलसूक्ष्मान्यतररूपेण विद्यमानत्वेनाधिगतानामपि ब्रह्माज्ञानसमुद्भूततत्तद्घटाद्याकारवृत्तिसमकालीनैव सृष्टिः, कल्पितस्याज्ञाततादशायां स्थितौ मानाभावात् साक्षादेवाविद्याजन्यत्वमुपेयं न स्वावयवादिकारणक्रमेण गौरवात् । एवं च स्वज्ञानव्याप्यत्वं द्रष्ट्रन्तरावेद्यत्वे सति ज्ञातैकसत्त्वं वा दृष्टिसृष्टिः, दोषप्रयुक्तस्वनिबन्धनज्ञातैकसत्त्वं वा । तेन च सुखादौ सिद्धसाधनम्, सुखादेर्ज्ञातैकसत्त्वस्य परैरुपेतत्वेऽपि तस्य दोषप्रयुक्तत्वानङ्गीकारात् । अस्मिंस्तु पक्षे ज्ञातैकसत्त्वं प्रति दोषतयाऽप्यविद्यायाः कारणत्वेन ततो वैलक्षण्यात् । प्रथमलक्षणे व्याप्यत्वव्यापकत्वयोरवच्छेदकः संबन्धः कालिकोबोध्यः । पूर्वप्रतिपादितप्रतिकर्मव्यवस्थायाः सृष्टिदृष्टिपक्षाभिप्रायकतया दृष्टिसृष्टिपक्षे च प्रतिपुरुषं संसारभेदस्याभ्युपगततया भवति घटपटादेर्द्रष्ट्रन्तरावेद्यत्वम् ।

अथ 'सोऽयं घट' इति प्रत्यभिज्ञा पूर्वापरदर्शनगोचरस्य घटस्यैकत्वे प्रमाणीभवन्ती मध्ये दर्शनाभावेऽपि घटस्य स्थितिं साधयति । एवमेव पटादिप्रत्यभिज्ञाऽपीत्यनुपपन्नोऽयं दृष्टिसृष्टिवाद इति चेन्मैवम्, घटादेः प्रत्यक्षकाल एव सृष्टिमुपगच्छद्भिः सूक्ष्मदर्शिभिर्दृष्टिसृष्टिवादिभिः प्रत्यभिज्ञाकाले पूर्वदृष्टघटादिना सहैतस्मिन् प्रत्यभिज्ञाविषयीभूते घटे ऐक्यस्योत्पत्तिस्वीकारेणानुपपत्तिविरहात् । किञ्च प्रत्यभिज्ञा न पूर्वदृष्टपदार्थेनैक्यं साधयितुं क्षमते, तथा हि यत्र यं घटादिकं साक्षात्कृत्य यः कश्चिन्निमीलिताक्षोऽवस्थितः तदा केनचित्तं घटमपनीय तत्स्थाने तत्सदृशं घटान्तरमवस्थापितमनन्तरमुन्मीलिताक्षस्य तस्य भवति प्रत्यभिज्ञा 'सोऽयं घट' इति । नचैतया भ्रमरूपया प्रत्यभिज्ञया तयोर्घटयोर्भवत्यैक्यम्, एवमन्यापि प्रत्यभिज्ञा नैकत्वं साधयितुमुत्सहतेऽपि तु तत्समकालं पूर्वापरपदार्थयोरैक्यम-

विषयोत्पद्यमानं गोचरयतीत्यकामेनापि प्रतिवादिनोपेयमिति न प्रत्यभिज्ञानुरोधे स्थैर्यं सिध्यतीति ।

ननु यत्रास्ति बाधकं तत्रास्तु प्रत्यभिज्ञाया भ्रमत्वेनैक्यासाधकत्वं सर्वत्र तु भ्रमत्वमतोऽन्येषां स्थिरत्वे न बाधकमिति चेन्न, 'नेह नानाऽस्ति किञ्चन' इत्यादि मिथ्यात्वानुमानैश्च प्रपञ्चस्य मिथ्यात्वे निश्चिते रज्जुसर्पादिवत्प्रतिभाससमान प्रतिभासकालातिरिक्तकालसत्त्वे बाधकस्य सत्त्वान्न प्रतिभासकालभिन्नकाले प्र वर्त्तमानत्वम् ।

अथ कुलालेन निर्मितो मयाक्रीतो दृष्टश्च चैत्रेण यो दृष्टो मयाऽपि स एवेत्या स्थैर्यसाधको न दृष्टिसृष्टिवादे कथञ्चिदुपपत्तुमर्हतीति चेन्न, उक्तप्रतीतेर्भ्रमत्वेन कत्वात्; यथा हि मन्दालोके युगपदनेकपुरुषाणां रज्जौ सर्पभ्रमेण पलायमानानां सर्पस्त्वया दृष्टः स एव मयाऽपीति परस्परं संवादेऽपि तत्तत्पुरुषीयभ्रम प्रातिभासिकत्वेन व्यवस्थितो नैको भवति प्रतीतेः प्रातिभासिकस्य च प्रतिपुरुषं भवति च तत्रैकत्वप्रत्ययो भ्रमरूप एव, तथा प्रकृतेऽपि समानः, चैत्रदृष्टमैत्रदृष्टयो हि तदानीमवियोत्पद्यमानो गृह्यत इति न काचिदनुपपत्तिः, इत्थं चैतत्पक्षे संसारभेद एव भवतीति व्यवतिष्ठते। अत एव चैतस्य दृष्टिसृष्टिवादस्याचार्य वाचस मतानुवर्त्तित्वमाचक्षते, तन्मते हि प्रतिपुरुषमज्ञानभेदेन संसारभेदः शक्यते सम एकाज्ञानैकजीववादे तु न प्रतिपुरुषं संसारभेदः शक्यते वर्णयितुं येन तन्मतानुव भवेत् ।

नन्वेवं सर्वत्रैवाप्रामाण्यशंकासौलभ्यान्न कश्चिदपि पदार्थः सिद्ध्येदिति चेत्! सिद्धे नित्ये स्वयं प्रकाशे निर्गुणे ब्रह्मणि अप्रामाण्यशङ्कापिशाची नार्हत्येव किमि अन्यस्मिंश्च सर्वस्मिन् यथा यथाऽनुपपत्तिस्तथा तथाऽघटितघटनापटीयस्या मायया विचित्रेऽस्मिन् प्रपञ्चेऽनिर्वाच्यत्वं सुदृढं भवतीति का नो हानिः ? ।

एतेन यदिदं कुलालगेहे दण्डचक्रादिव्यपारसहितया मृदा घटो जायते ता तु नेति सार्वजनीनम्, तदिदं न मृदादीनां स्थायित्वं विना संभवति । एवं विस्फा घटोपलब्धिर्न निमीलिताक्षस्येति घटचक्षुःसंनिकर्षजन्यत्वं घटप्रत्यक्षस्य प्रत्यक्षात्पूर्वसत्त्वं घटस्य विना नोपपद्यते इत्यतो न प्रातीतिकत्वं दण्डचक्रमृद तद्गृहादीनामित्यपि प्रत्युक्तम् । कुलालगृहमुपलब्धमित्युपलब्धिकाले कुलालगृहमु गेहे कुलालोपलब्धौ सोऽप्युत्पन्नस्तदनन्तरं दण्डाद्युपलब्धौ दण्डादिमृदुपलब्धौ लब्धौ घटः, कार्यकारणभावग्रहे कार्यत्वं कारणत्वं च तद्विशिष्टं घटादिकं सर्वं तत्तज्ज्ञानसमकालमज्ञानादेव जायत इति न ज्ञानशून्यतादशायां घटादेः सत्त्वे न कारणत्वादिज्ञानं प्रातीतिकत्वविरोधीति ।

एवं चक्षुः संनिकर्षस्याज्ञानकाले तस्य स्वरूपमेवासिद्धम् तज्ज्ञानकाले च सोऽपि उपेयते, एवं तन्निष्ठस्य कारणत्वस्य ज्ञानशून्यकाले स्वरूपमेवासिद्धम् तज्ज्ञान तदपि प्रातीतिकमुपेयम् । एवं प्राथमिकघटादिप्रत्यक्षानन्तरं घटादिनाशप्रत्यक्ष

यावन्ति घटादिप्रत्यक्षाणि तावन्ति स्वसमानकालोत्पत्तिकभिन्नघटादिविषयकाण्येव, अप्रतीतिकाले घटादेः सत्त्वे मानाभावात् नाशोऽपि न प्रातीतिकत्वविरोधी नाशप्रत्ययकाले हि नाशोऽपि प्रातीतिक उपेयत एवेति न काचिदनुपपत्तिः । निदर्शनं चात्र स्वप्नः यथा हि स्वप्ने दण्डचक्रादिभिर्घटादीनामुत्पत्तावनुभूयमानायामपि तदानीं स्थायिना दण्डादिना न स्थायिनो घटादयः प्रादुर्भवन्ति, अपि तु तत्तज्ज्ञानानि तत्समानकालीनास्तुच्छविलक्षणाः घटादयो दण्डादयश्च । यथा वा स्वप्ने एक एव पदार्थः क्षणेन मनुष्यः क्षणेन सिंहः क्षणेन मार्जारादिश्च प्रतीयमानो न कमपि विरोधलेशमासादयति । यथा वा स्वप्ने कश्चित्पदार्थस्तदानीमेवोत्पद्यमानतया कश्चिच्च चिरकालोत्पत्तिमत्तया कश्चिच्चानादितया कश्चिच्चानाद्यन्ततया कल्प्यते न तु वस्तुवस्तस्य स्वाप्निकस्य चिरकालादिस्थायित्वं संभवति प्रातिभासिकत्वात् । एवं जागरेऽपि कश्चित्पदार्थस्तदानीमेवोत्पद्यमानतया कश्चित्स्थिरतया कश्चिच्चानादितया कश्चिच्चानाद्यनन्ततया कल्प्यते न तु वस्तुतोऽनादित्वादिधर्मवन्तो भवन्ति केऽपि गगनादयः पदार्थाः, अपि तु सर्वे प्रातिभासिका एवाघटितघटनापटीयस्या माययोत्पद्यमाना आत्मभिन्नाः, अतः केवलं मायैव सर्वेषां हेतुर्न दण्डादयो घटादिहेतव इति सर्वानुपपत्तिपरिहारः स्वप्नवदेव भवतीति ।

न च स्वप्ने पूर्वानुभूतवस्तुस्मरणमात्रम्, अपरोक्षावभासताविरोधात् अपरोक्षावभासस्थले विषयावश्यम्भावस्य सर्वैरवश्यमभ्युपेयत्वादिति ।

ननु सर्वस्यैव प्रातिभासिकत्वे प्रवृत्त्यादिः कथमिति चेत् ? बाधात्पूर्वं प्रातीतिकत्वानिश्चयात् स्थायित्वभ्रमादेव तदुपपत्तेः, रजतादिभ्रमादपि प्रवृत्तेर्बहुलं दर्शनात् ।

अथ दण्डादिकं न घटादिकारणं न वा घटादिना चक्षुःसंयोगादिकं घटादिप्रत्यक्षकारणमपि तु मायामात्रं, तदा कुलालगेह एव न कुविंदगेहे घट उत्पद्यते तत्काले चक्षुःसंयोगे एव न कालान्तरे घटप्रत्यक्षमित्यत्र नियामकं दुर्लभं स्यात्, कारणस्याज्ञानस्याविशेषादिति चेन्न ? अविद्यया हि घटादौ दण्डादिजन्यत्वमपि तदानीमुत्पद्यते प्रत्यभिज्ञैक्यवत् । एवं चक्षुःसंयोगाजन्येऽपि प्रत्यक्षेऽविद्यया चक्षुःसंयोगजन्यत्वमप्यध्यवसीयते स्वाप्निकचाक्षुषप्रत्यक्षवत् यथा हि स्वप्ने चक्षुरादेरुपरतावपि चक्षुषेदं कमनीयं कान्तारूपं पश्यामीत्यादिप्रत्ययो भवति तथैव जागरेऽचाक्षुषेऽपि प्रत्यये चक्षुर्जन्यत्वमविद्यया कल्प्यते । यदा तु चक्षुर्जन्यमिदं प्रत्यक्षमिति ज्ञानं नोदेति नोत्पद्यते तदानीं प्रातिभासिकं चक्षुर्जन्यत्वमपीति सर्वोऽयं व्यवहारोऽविद्ययैव सम्पाद्यमानो न कामप्यनुपपत्तिमालिङ्गते । वक्ष्यति चाचार्यः 'अदृश्यत्वादिगुणको धर्मोक्ते'रितिसूत्रभामत्याम्—'अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यतेऽनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हति' इति ।

न चैतत्पक्षे पुरुषभेदेन संसारभेदात् यत्रैकस्य घटस्य मम कल्पनं तत्र भवतः कालपुरुषभेदेनानेकघटकल्पनमिति गौरवमिति वाच्यम्, स्थायित्वपक्षेऽनवरतपरिस्यन्दमानानिलानलाद्यनन्तभूतभौतिकतत्तदारम्भकानन्तसूक्ष्मावयवाद्यसंख्यविभुजीवाकाशादिसंयोगविभागादिकल्पनागौरवचिन्तायां महीयसो लाघवस्यैतत्पक्षे व्यक्तत्वादिति ।

न चैतत्पक्षे मात्रादेरदर्शनकाले तदभावनिश्चयान्मरणज्ञानान्नितान्त दुःखादिप्रसंगः
रोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्युपगमाद्दृष्टिसृष्टिपक्षे
योगानवकाशात् । यदा हि मरणज्ञानं भवति तदा मरणमदर्शनकाले च वस्तुतो
जायते न तु तावता मातृपित्रादेरभावनिश्चयोऽपि किन्त्वौदासीन्यम्, स्वप्ने यथा
पूर्वज्ञानस्योत्तरोत्तरज्ञानेन निवृत्तिर्भवति न तु तत्र कश्चित्पर्यनुयोगो भवति स्वप्ने
चैत्रो दृष्टो मैत्रः कुतो नेति तथैव जागरेऽपीति बोध्यम् ।

न चोक्तसंयोगादिकल्पनागौरवप्रदर्शनं द्रव्येष्वेव संभवति न गुणादिषु तत्र
गाद्यभावादिति वाच्यम्, गुणादीनां द्रव्यभेदे मानाभावात्, द्रव्यगुणपरिभाषायास्ता
न्यैरनङ्गीकारात् । नन्वेतत्पक्षे बौद्धमतात् को विशेष इति चेत् ? अस्ति महान्
तथाहि यदा घटादिप्रत्यक्षमुदेति नोदेति च विरोधिवृत्तिस्तावत्कालं घटादेः स्थितिः
दृष्टिसृष्टिवादे, नचैवमस्ति क्षणभङ्गवादे इति, नचैतत्पक्षे बाह्यत्वस्थूलत्वानुभवविरो
यथाऽनुभवं व्यवस्थितत्वात् । यावन्तः पदार्थाः स्थायित्वपक्षेऽभ्युपेयन्ते तावन्त
क्षेऽप्यभ्युपगम्यन्त एव, केवलमज्ञाततादशायमेव नोपेयन्ते घटपटादयः सर्वे, नाप्ये
निरन्वयो ध्वंसः सूक्ष्मावस्थारूपस्य संस्कारस्योपगमात्, अन्यथा सुषुप्त्यनन्तरं
पूर्ववद्भानं न स्यात् । नच सूक्ष्मावस्थाया उपगमे सांख्यानां मतप्रवेशः तैस्तस्या
कत्वानुपगमेन पारमार्थिकत्वस्योपगमात् अस्माभिस्तदनभ्युपगमात् स्वाभिमतसूक्ष्मा
पपत्त्यर्थमेव बौद्धाभिमतक्षणिकत्ववादस्य तत्र तत्र निराकरणं स्थायित्वोपन्यसनञ्च
चार्यैः । एवमेतत्पक्षे विषयतया सदधिष्ठिताया अविद्यायाः परिणामस्य सद्विवर्त्तत्वोपगमे
निरधिष्ठानकभ्रमाङ्गीकारः, नापि वेदादीनां प्रामाण्यानङ्गीकारः, वेदः प्रमाणमिति
काले ज्ञानमस्ति तदानीं तस्मिन् प्रामाण्याङ्गीकारात्, एवं स्मृतिपुराणादिष्वपि एवं
श्वरादिष्वपीति कुतस्तरां तत्साम्यमिति ।

अत एव ज्ञानस्य चक्षुराद्यजन्यत्वे तस्मिन् चाक्षुषत्वं न स्यात् तज्जन्यत्वे च चक्षु
न्द्रियाणामपि दृष्टिसृष्टेरुपगन्तव्यतया प्रत्यक्षात्पूर्वं चक्षुरादिज्ञानमावश्यकम्, अन्यथा
तादशायां चक्षुरादीनामभावप्रसङ्गेन न तज्जन्यत्वसम्भवः चक्षुरादेश्चातीन्द्रियतया प्रत्य
भवेन तस्यानुमानिकं ज्ञानमास्थेयम् अज्ञातस्यानुमानस्याप्यलीकतया तज्ज्ञानमप्य
मेवेत्येवं तत्तज्ज्ञानमपीत्येवं क्रमेणानवस्थातरङ्गप्रसङ्ग इत्यादि निरस्तम् । दृष्टिसृष्टिसि
ज्ञानरहितानां विषयस्थायित्वज्ञानचक्षुरादिकार्यकारणभावभ्रमजन्यवासनामूलकचाक्षु
दिप्रतीतेः स्वाप्निकवदुपपत्तेः, यथा स्वप्ने कमनीयं कान्तामुखं चक्षुषा समुद्वीक्ष्यमा
न वस्तुतश्चाक्षुषं, तदानीं चक्षुरादेर्लयात् अपि तु चाक्षुषत्वानुभवाभिमानमात्रमित्युक्त
जागरेऽपि घटादिप्रत्यक्षे चक्षुरादेरकारणतया पूर्वसद्भावानपेक्षणेन तदानीं चक्षुरादौ दृष्टि
रुपगन्तव्यताविरहेणापादिताया अनवस्थायाः प्रसङ्गविरहात् ।

ननु समस्तस्यैव जगतः कल्पितत्वोपगमे कस्तस्य कल्पकः ? निरुपाधिरात्मा उपाधि
पहितो वा ? नाद्यः-मुक्तस्यापि कल्पकत्वापत्त्या संसारित्वापत्तेः, नान्त्यः-अविद्याया

पनीयत्वेन ततःकल्पनात्प्रागेव कल्पकस्थितेर्वक्तव्यत्वादितिचेत् ? अत्र केचित् पूर्वपूर्व-
ल्पिताविद्योपहित, उत्तरोत्तराया अविद्यायाः कल्पकः, अनादित्वात्कल्प्यकल्पनाप्रवाहस्येति
नवस्था अत्र दोषत्रम् । नचैवमविद्याया अनादित्वभङ्गः ? स्वप्नवदेवोपपत्तेः । यथा
ने कल्प्यमानं किञ्चित्पूर्वसिद्धत्वेन कल्प्यते किञ्चित्तदानीमुत्पद्यमानत्वेन एवं जागरेऽपि
त्पत्त्यादित्वेन किञ्चिच्चानादित्वेन कल्प्यतेऽतो न दोष इत्याहुः ।

केचित्पुनः सुषुप्त्यादौ जीवब्रह्मविभागस्याप्रतीतत्वेनाविद्यमानतया प्रतिसुषुप्तिमुक्तस्य
रागमनानुपपत्तिवारणाय—

"जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥"

इत्युक्तानां षण्णामनादित्वमुररीकृत्य तेषु दृष्टिसृष्टिं नाभ्युपगच्छन्ति । अविद्यायाश्च
ह्यानाद्यदृष्टभावनादिमदन्तःकरणविषयसूक्ष्मावस्थाविशिष्टाया एवानादित्वमुच्यतेऽतो न
प्तौ मोक्षप्रसङ्गः । भावनाया हि दृष्टिसृष्टौ सुप्तोत्थितस्य पूर्वानुभूतस्मरणं न स्यात् । एव-
दृष्टस्यापि दृष्टिसृष्टौ कृतनाशाकृताभ्यागमौ प्रसज्येयातामतो न तत्र तत्र दृष्टिसृष्टेरुपगमः ।
दृष्टिसृष्टिपक्षे यथाज्ञानं सृष्टिस्वीकारेण भ्रमे भासमानं शुक्त्यादिकमधिष्ठानमन्यदेव
बाध्यदेवेति भ्रमबाधयोरेकविषयत्वानुपपत्तिरिति वाच्यम्, स्वाप्निकवदेवोपपत्तेः ।

नन्वेवम् 'एतस्मादात्मन आकाशः सम्भूत' इत्यादि श्रुतिः किमालम्बनेति चेत् ?
प्रपञ्चब्रह्मात्मैक्यावलम्बनेत्यवधारय । अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मावगतिर्भवतीति
पायतया श्रुतिषु सृष्टिप्रलययोरुपन्यासः न तात्पर्येण, परमतात्पर्यंतु अद्वितीयजीवब्रह्मैक्ये
पक्रमादिभिर्लिङ्गैरिति हि पूर्वमेव प्रदर्शितम् । मन्दाधिकारिणमुद्दिश्य सृष्टिदृष्ट्यभि-
धेया वेति भवति वेदानामप्रामाण्यशङ्काकलङ्कपङ्कप्रक्षालनम् । नच वेदस्यापि दृष्टि-
टेरुपगन्तव्यतया प्रातिभासिकस्य तस्य कथं प्रामाण्यमिति वाच्यम्, प्रामाण्यप्रयोजकं हि
यावाध्यत्वं दोषासंस्पर्शश्च । तदुभयमपि अबाधितब्रह्मतात्पर्यंवत्यपौरुषे वेदेऽस्त्येवेत्यतो न
वेदनुपपत्तिरिति । एवं श्रुतिबोधितज्योतिष्टोमाद्यनुष्ठानात्फलसिद्धिरपि स्वप्नावस्थाप-
ल्पितश्रुतिबोधितानुष्ठानजनितस्वप्नकालीनफलसंवादतुल्या । एवमेव ब्रह्मसाक्षात्कारार्थं
णादिविधिरपि स्वाप्नकार्यकारणभाववदुपपन्नः । नचैवं वेदान्तवाक्यस्य तन्मीमांसायाश्च
प्नवाक्यतन्मीमांसातुल्यत्वम् ? विषयबाधाबाधाभ्यां विशेषात् । नचैवं ध्रुवा द्यौ ध्रुवा
वी' इत्यादिश्रुतिविरोध इति वाच्यम्, मतान्तरेऽपि पृथिव्याः सावयवत्वेनानित्यतया
रन्यथानयनस्यावश्यकतयाऽऽकल्पंस्थितेरेव ध्रुवपदार्थताया वक्तव्यतया तस्याः सृष्टिदृष्टि-
यतया मन्दाधिकारिविषयत्वात् ।

अथाधिष्ठानस्यापि शुक्तीदमंशस्य रजतादिवत् 'इदं रजतम्' इत्यादिज्ञानात्प्राग-
त्वेन संप्रयोगसंस्कारसादृश्यज्ञानात्मकहेतुत्रयजन्यत्वरूपमध्यासस्य तटस्थलक्षणं सत्यस्य
पुनो मिथ्यावस्तुसंभेदावभास इति स्वरूपलक्षणं च न सम्भवतीति चेन्न,
ततटस्थलक्षणस्य सृष्टिदृष्टिपक्षीयतया मन्दाधिकारिविषयत्वात् । इदमंशावच्छिन्न-

चैतन्यस्यैव तदधिष्ठानतया तस्य सत्यत्वेन तेन सह मिथ्याभूतस्य रु[illegible] वभासेनोक्तस्य स्वरूपलक्षणस्य दृष्टिसृष्टिपक्षेऽपि साम्यात् ।

न च रजतादिबाधनिश्चयस्यापि दृष्टिसृष्टौ कथं तेन रजतादेर्बाधः ! करत्वाभावादिति वाच्यम्, बाध्यान्यूनसत्ताकत्वस्यैव विरुद्धस्य बाधकत्वे प्रयोज[illegible] व्यावहारिकेण व्यावहारिकबाधवत् प्रातिभासिकेन प्रातिभासिकबाधसम्भवात् सृष्टेरपि दृष्टिसृष्टित्वेन घटादेर्न दृष्टिसृष्टिरिति वाच्यम्, घटज्ञानस्य ज्ञेयत्वे घट[illegible] घटादिदृष्टिसृष्टेर्दृष्टिसृष्टित्वे घटादेरपि दृष्टिसृष्टित्वोपपत्तेरिति ।

दृष्टिसृष्टौ च 'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेव एत[illegible] प्राणाः सर्वे लोकाः' इत्यादिश्रुतिः सुप्तोत्थिताज्जीवात्प्राणादिसृष्टिं प्रतिपाद[illegible] न हि स्थितस्य सृष्टिर्भवति नापि दृष्टिसृष्ट्यभावे तदानीं स्थित्यभावः प्रा[illegible] न च तदानीं प्राणोपलम्भाच्छ्रुतिरियमुपचरितार्थेति वाच्यम्, 'न तु तद्द्वितीय[illegible] न्यद्विभक्तं यत्पश्येत्' इत्यादिश्रुत्याऽविशेषेण सुषुप्तपुरुषदृष्टस्य सर्व[illegible] तदानीमभावबोधनात्, तद्भोगानुकूलशरीरप्राण(हिताहितसाधनविपर्य[illegible] गजनकादृष्टविरामेऽभावस्योचितत्वात् अन्यपुरुषोपलभ्यमानस्य सुषुप्तपुरु[illegible] तद्दृष्टिसमसमया घटादिसृष्टिवदेव सृष्टिः तस्मात्सुषुप्तपुरुषमालक्ष्य [illegible] प्रतिपादकं श्रुतिवचनं दृष्टिसृष्टिवादाभिप्रायकमेवेति मन्तव्यम् ।

एवं श्रीमद्भागवतेऽपि—

ईक्षेत विभ्रममिदं मनसो विलासं
दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया
स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥
यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥

इत्यादिना दृष्टिसृष्टिवादः समर्थितः । तमिमं दृष्टिसृ[illegible] वसिष्ठेनोक्तम्—

"अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥" इति
"तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥" इति

अतएव
रज्जुसर्पादिवद्विश्वं नाज्ञातसदिति स्थितम् ।
प्रबुद्धदृष्टिसृष्टित्वात्सुषुप्तौ च लयश्रुतेः ।

इति चिरन्तनोक्तिरपि संगच्छते ।

अस्मिंश्च दृष्टिसृष्टिवादे या याऽनुपपत्तिः स्फुरेत् सा सर्वा स्वाप[illegible]

रेहार्थेति । अयं च दृष्टिसृष्टिवादो 'वेदान्तसिद्धान्तमुक्तावल्यां' सिद्धान्तलेशसंग्रहेऽ-द्धान्तसिद्धौ" च संक्षेपेण प्रदर्शितोऽस्मद्गुरुभिः गीतागूढार्थतत्त्वालोके स्पष्टीकृतः ।

## भामती

तदनेन क्रमेणाध्यस्तं तोयं परमार्थतोयमिव अत एव पूर्वदृष्टमिव त्त्वतस्तु न तोयं न च पूर्वदृष्टं किंतु अनृतमनिर्वाच्यम् । एवं च हादिप्रपञ्चोऽप्यनिर्वाच्योऽपूर्वोऽपि पूर्वं मिथ्याप्रत्ययोपदर्शित इव त्र चिदात्मन्यध्यस्यत इत्युपपन्नमध्यासलक्षणयोगात् देहेन्द्रिया-दिप्रपञ्चबाधनं चोपपादयिष्यते । चिदात्मा तु श्रुतिस्मृतीतिहासपु-णगोचरस्तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्योऽबाधिता स्वयम्प्रकाशतैवास्य सत्ता । सा च स्वरूपमेव चिदा-मनो न तु तदतिरिक्तं सत्तासामान्यसमवायोऽर्थक्रियाकारिता वेति र्वमवदातम् ।

## प्रकाशः

शुक्तिरूप्यादेरनिर्वचनीयत्वे मुधैव बुधैस्तस्य देशान्तरस्थत्वं कल्पनीयं किन्तु तद्देशस्थत्वमेवेत्याह—तदनेनेति । तत्त्वतस्तु न तोयमिति किन्तु ातीतिकमेवेत्यर्थः । ननु प्रतीतिकालमात्रोत्पन्नस्यापूर्वस्यैव तोयादेर्भ्रमे ानोपगमे भाष्योक्तं पूर्वदृष्टत्वं विरुध्यत इत्यत आह—अत एवेति । ारोप्यस्य तोयरजतादेरतात्त्विकत्वेऽपि तज्जातीयस्य संस्कारद्वारेण पूर्वद-र्शनमुपयुज्यत इति तदाशयः । अत्रत्यसन्दर्भेणारोप्यस्य स्पष्टमनिर्वचनी-यत्वव्यवस्थापनात् भामतीकृतोऽन्यथाख्यातिपक्षावलम्बिन इति केषाञ्चिद्वि-दुषामसूया निरस्ता वेदितव्या । तदुक्तं कल्पतरुकारैः—

"स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् ।
अन्यथाख्यातिरिष्टाऽस्येत्यन्यथा जगृहुर्जनाः" इति ।

तदनेन क्रमेण देहादिप्रपञ्चः सन् प्रतीयमानत्वात् आत्मवदित्यनुमानस्य मरुमरीचिकोदकादावनैकान्तिकत्वमुपादर्शि सम्प्रत्यबाधितत्वेन सोपाधिक-ताऽभिधीयते—देहेन्द्रियादीति । सत्त्ववति ब्रह्मणि अबाधितत्वमस्तीति साध्यव्यापकत्वं प्रतीयमाने च देहादावबाधितत्वं नास्तीति भवति तस्य ाधनाव्यापकत्वमपीति । ननु देहादेरनादिप्रवाहस्य कुतो बाध इत्यत आह—देहेति । उपपादयिष्यत इति । ब्रह्मज्ञानेन सर्वस्यैव प्रपञ्चस्य भवति बाध इत्यथशब्दार्थनिरूपणे चतुर्थसूत्रे च स्पष्टीभविष्यतीति भावः । ननु देहादेः

कल्पितत्वे शुक्तिरजतादिवत्प्रतिभासकालमात्रावस्थायित्वं स्यात् दृष्टिसृष्टिपक्षे इष्टापत्तेः । सृष्टिदृष्टिपक्षे ब्रह्मज्ञानबाध्यतया ब्रह्म-मन्तरेण निवृत्त्यनुपपत्त्या स्थूलसूक्ष्मान्यतररूपेण सत्त्वे बाधका नतु प्रमाणसिद्धा अपि देहेन्द्रियादयः प्रपञ्चा यदि मिथ्या आत्मनि को विश्वासोऽत आह—चिदात्मा त्विति । तत्स्वा सिद्धत्वात् निरधिष्ठानभ्रमासम्भवात् निरवधिबाधासंभवात् भावाच्च आत्मनः सर्वदा सत्त्वं देहेन्द्रियादिप्रपञ्चस्य तु 'अतोऽन्यदार्त्तम्' इत्यादिश्रुत्या मिथ्यात्वानुमित्या च बाधित पारमार्थिकत्वमिति भावः । यदुक्तमाक्षेप्त्रा प्रकाशमानत्वमेव सत्त्वमिति तत्राह—अबाधिता स्वयम्प्रकाशतैवेति । तथा च प्रकाशमानत्वमेव सत्त्वमपि त्वबाधितत्वविशिष्टं तत्, नचैतद् भावः । नन्वेवमपि सत्तातद्वतोर्भेदादद्वैतहानिरत आह—सा चेति मानत्वमेव सत्त्वमित्यभिधायिना पूर्वपक्षिणा यत्सत्तासमवायाद् पपादकत्वमखण्डि तदंशमनुमोदते—न तु तदतिरिक्तमित्यादि। श्रुतिरेव हि भगवती 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो?' इति सजातीयविजातीयस्वगतभेदत्रयशून्यं सदेवैकं सत्यं ब्रुवती सर्वदाऽनुगमनाभावात् व्यभिचारिणो वाचारम्भणत्वेन, विषयत्वेन अनृतत्वं ख्यापयन्ती 'अन्नेन सोम्यशुङ्गेनापो मूलम सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मू सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सर्वेषामेव विकाराणां सति कल्पितत्वं दर्शयन्ती सत्तां जातिं व्यव न हि पदार्थमात्रसाधारण्या सदिति प्रतीत्या द्रव्यगुणकर्ममात्रे भवदभिमतया सत्तया शक्यते कथञ्चिदुपपादयितुम्; एकाकारप्र षयनिर्बाह्यत्वेन क्वचित्तादात्म्यस्य क्वचित्सामानाधिकरण्यस्य च भेदस्य कल्पयितुमनुचितत्वात्, विषयस्याननुगमेऽपि प्रतीत्यनु भवदभिमतस्य जातिमात्रस्योच्छेदप्रसङ्गात् । कथं वाऽभेदप्रतीते सम्बन्धेन निर्वाहः ? सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति नियामक उपगम्यते, तस्मान्न जातिरूपा सत्ता 'सन् घटः' इति तिविषयः, नाप्यर्थक्रियाकारिता, प्रदर्शितयुक्तेः, तस्मादेकमेव प्रकाशरूपं स्वस्मिन् सर्वेषां तादात्म्याध्यासेन सर्वसद्व्यवहा मित्यभ्युपेयम् । अवदातमिति । तथा च सर्वथैवोपपन्नाऽनिर्व तिरिति ।

## विकासः

अवदातमिति । तथा चानेन सन्दर्भेण ब्रह्मव्यतिरिक्तानां सर्वेषामेव मिथ्यात्वं प्रपादि । भवन्ति च विमतं मिथ्या दृश्यत्वात् इत्यादयोऽनुमानप्रयोगा अद्वैतसिद्धया युक्ताः मिथ्यात्वसाधकाः तत्र विमतपदं सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे ब्रह्मप्रमाति-ाबाध्यं मिथ्या न वेति संशयविशेष्यपरम्, तेन तुच्छे ब्रह्मणि च पक्षतावच्छेदकाक्रान्ते यविरहेऽपि न क्षतिः, सामानाधिकरण्येनानुमितावच्छेदकावच्छेदेनैव बाधनिश्चयस्य ाधित्वात् प्रातिभासिके चोक्ताबाध्यत्वविरहेण तस्य पक्षकोटावनन्तर्भावेण न सिद्धसाध-सक्तिः, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तु सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं मिथ्या नेति संशयविशेष्यपरमेव विमतपदम् । तत्र तुच्छे बाधस्य वारणायाद्यं विशेषणम्, णि तद्वारणाय द्वितीयं विशेषणम् ।

यत्त्वत्र प्रपञ्चसत्यत्ववादिभिः शुक्तिरूप्यस्य मिथ्यात्वानङ्गीकारात् तत्र सिद्धसाधना-ताया तद्वारकं ब्रह्मप्रमातिरिक्ताबाध्यत्वविशेषणं व्यर्थमिति प्रलपन्ति केचित् तन्न, सर्वसत्य-ादिनं प्रति दृष्टान्तोपपत्त्यर्थं प्रथममेव शुक्तिरजते मिथ्यात्वं समर्थ्य तद्भिन्ने उक्तानु-नेन मिथ्यात्वं साधनीयमतः शुक्तिरूप्ये सिद्धसाधनवारणाय तस्य सार्थक्यात् ।

अत्र 'इदं रजतं ब्रह्मप्रमातिरिक्ताबाध्यम्' इत्याकारकभ्रमेऽनिर्वचनीयख्याति-दिभिः ब्रह्मप्रमातिरिक्ताबाध्यत्वविशिष्टस्य प्रातिभासिकस्य रजतस्याभ्युपेयत्वेन तत्र थ्यात्वस्य सिद्धतया सिद्धसाधनमिति न्यायभास्करोक्तं निरस्तम् । वादिमतरीत्या द्धसाधनस्य दूषणत्वे हि परार्थानुमानमात्रोच्छेदापत्त्या प्रतिवादिमते एव तस्य दूषणत्वात्स्य ्यतयोक्तविशिष्टभ्रमस्य तद्विषयानिर्वचनीयस्य चाद्वैतवादिभिन्नेन केन चिदपि प्रतिवादि-नभ्युपगतत्वेन सिद्धसाधनस्याभिधातुमयुक्तत्वादिति ।

अत्र ब्रह्मप्रमाबाध्यत्वस्य पक्षतावच्छेदकत्वे जगति तस्य सत्त्वे सिद्धसाधनमेव त्त्वे च पक्षाप्रसिद्धिरेवेत्यतो ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य पक्षतावच्छेदकत्वमुक्तम् । च ब्रह्मप्रमातिरिक्तया शुक्तित्वादिप्रकारिकया प्रमयाऽबाध्यं जगत्प्रसिद्धमेवेति प्रयासिद्धिः ।

यत्तु ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नम् प्रतिपन्नोपाधौ ालिकनिषेधप्रतियोगि न वेत्यद्वैतसिद्धेस्तदीयगौडब्रह्मानन्दाशयमाच्छादयता यभास्करकृता प्रातिभासिकचिद्भेदस्य ब्रह्मण्यपि संभवेन स्वसमानसत्ताकस्यैव तस्य क्षणीयतया प्रातिभासिके रजतादौ रजतत्वादिरिव चिद्भेदोऽपि व्यावहारिक एव यः तस्य च भेदस्य रजतसमानसत्ताकत्वविरहादेव रजतादीनां व्युदाससंभवात् पक्षेऽन्तर्भावं वारयितुं ब्रह्मप्रमातिरिक्ताबाध्यत्वविशेषणं व्यर्थमित्युक्तं तन्न, ानाधिकरण्येनावच्छेदकावच्छेदेन च साध्यसिद्धेरुद्देश्यत्वभेदेन विभज्य तपदार्थतया प्रदर्शितस्य पक्षतावच्छेदकद्वयस्यैव तद्ग्रन्थतात्पर्यविषयतया ानाधिकरण्येन साध्यसिद्ध्युद्देश्यत्वपक्षीयस्य ब्रह्मप्रमातिरिक्ताबाध्यत्वविशेषणस्य द्भिन्नत्वनिवेशपक्षेऽप्रविष्टत्वेन तद्वैयर्थ्यशङ्काया अनवतारादिति ।

यदप्युक्तरीत्या प्रातिभासिकचिद्भेदमादाय प्रदर्शितस्य ब्रह्मणि स्वसमानसत्ताक एव चिद्भेदोनिवेश्यः स च तुच्छे नास्तीति तद्वारक त्म्यरूपस्य सत्त्वेन प्रतीत्यर्हत्वस्योपादानमफलमिति पुनरपि न्यायभास्कर न युक्तं, प्रातीतिकोपादानं हि शशपल्लवाज्ञानं तूलाज्ञानपदव्यपदेश्यं तत् निरू भ्युपेयते न तु शुद्धचिन्निष्ठमतः शुद्धे निर्धर्मके तदभावात्तत्र तत्कार्यस्य चिद्भेदस्याप्यसत्त्वेन भेदे स्वसमानसत्ताकत्वविशेषणदानप्रयोजनविरहे संभवात्तद्वारकं विशेषणमुपादेयमेवेति ।

ननु जगतो मिथ्यात्वानुमानं 'सन् घट' इत्यादिप्रत्यक्षबाधितमिति तादिकालस्येन्द्रियागोचरत्वेन कालत्रयाबाध्यत्वरूपस्य पारमार्थिकसत्त्वस्य विषयीकरणान् व्यावहारिकसत्त्वस्यैव प्रत्यक्षविषयतायाः दक्षवतया तस्याविरोधात्, मिथ्यात्वस्यापि घटत्वादिसमकक्षत्वात् तस्मान्न मनुमानमिति ।

अपि चात्र वदन्ति 'सन् घट' इत्यादिप्रत्यक्षेऽपि सदित्यधिष्ठानं च घटादिकं विश्वं तादात्म्येनावभासतेऽतोऽधिष्ठानसत्तातादात्म्यरूपोऽधि हि घटादौ न तु काचिदपि सत्ता, न च चाक्षुषे ज्ञाने रूपादिहीन कथं भानमिति वाच्यम्, घटादिप्रत्यक्षदशायां घटो वर्तते न वेतिशंसयवा हीनस्य कालस्येव ब्रह्मणोऽपि भानात् ।

अथैवं 'शुक्लः पट' इत्यादावप्यधिष्ठानानुवेध एवास्तु न तु पटादौ चेन्न, पटादौ सत्त्वस्य बाधितत्वादधिष्ठानानुवेध उपेयते न हि 'सन् दिप्रतीतौ प्रतीयमानसत्त्वं जातिर्वा स्वरूपसत्त्वं कालत्रयाबाध्यत्वं वा आद्ये सत्ता सतीत्यादिव्यवहारानुपपत्तेः समवायस्य खण्डितत्वाच्च, द्विती ननुगतत्वेन तेनानुगतव्यवहारोपपादनासंभवात्, तृतीये कालत्रयस्य न च क्वचित् सत्ताजात्या क्वचित् स्वरूपसत्तया क्वचित् त्रिकालाबाध्यतया पपत्तिरिति शक्यतेऽभिधातुम्, एकेनैव सर्वतादात्म्यापन्नेन सता त्यनुगताकारप्रतीत्युपपत्तौ बहूनां तद्धेतुत्वकल्पने तद्विषयकल्पने च तस्मादधिष्ठानसत्तानुवेध एवोपगन्तव्यः । शुक्लादेस्तु पटादिवृत्तित्वे नास्ति मतो न शुक्लधिष्ठानस्यानुवेधोघटादाविति शक्यते स्वीकर्तुम् । नापि शुक्लं संभवति पटादेः पूर्वं तदीयशुक्लादेरभावात् शुक्लनीलादीनामनन्तानामधिष्ठानत्व विनिगमनाविरहेण घटादेरपि शुक्लाद्यधिष्ठानत्वप्रसंगात् अधिष्ठेयतुल्य अधिष्ठेयाधिकसत्ताकस्यैवाधिष्ठानत्वात् । तस्मादधिष्ठानेन सता तादात्म्य प्रतीयते न तु व्यावहारिकी प्रातीतिकी वा जगतः काचिदस्ति सत्तेति, द्वैतसिद्धौ मधुसूदनसरस्वतीभिः ।

तत्त्वशुद्धिकारास्तु न प्रत्यक्षेण घटपटादिकं तत्सत्त्वं वा गृह्यते किंतु

नष्ट अतः प्रत्यक्षमपि सद्रूपब्रह्माद्वैतसिद्ध्यनुकूलमेव। नन्वेवं सत् सदित्येव स्याकारः स्यान्न तु घटः सन्नित्यादीन्द्रियान्वयव्यतिरेकानुविधायीति चेन्न, यथा हि 'इदं तम्' इत्यादिभ्रमे इदमंशस्याधिष्ठानस्यैव प्रत्यक्षेण ग्रहणम् इन्द्रियान्वयव्यतिरेकानु- ानस्य तत्रैवोपक्षयात् आरोपितस्य रजतांशस्य साक्षिभास्यत्वं तथा सर्वत्र सन्मात्रमेव क्षेण गृह्यते तत्रैवेन्द्रियव्यापारसमाप्तेः घटादिरपि साक्षिभास्य एवेति। ननु रजतादेर्बाध- नात् तत्र तथाभ्युपगम्यतां न त्वेवं घटादेरिति कुतोऽस्य साक्षिभास्यत्वमिन्द्रियाग्राह्यत्वं चेन्न, बाधादर्शनेऽपि देशकालव्यवहितवस्तुवद्घटादेः प्रत्यक्षायोग्यत्वैव हि तथोपगम्यते। हि इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः पटादिभिन्नतयैवावभासते, यत्रापि ण्वादौ पुरुषत्वादिसंशयस्तत्रापि पुरुषादिभिन्नेभ्यो घटादिभ्यो भेदोऽवधर्यत एव। श्च प्रतियोगिग्रहसापेक्षो न प्रत्यक्षेण ग्रहीतुं शक्यः, देशकालव्यवहितानामनन्तानामपि योगिनां सत्त्वात्। न च भेदज्ञानं प्रतियोग्यंशे स्मृतिरेवेति वाच्यम्, एवमपि हि गतप्रतियोगिवैशिष्ट्यांशे तदसंभवात् अननुभूतानामसंख्यानामपि सत्त्वेन तत्स्मरणस्या- वाच्च। नच प्रतियोगिनः कैलासकनकाचलादेरप्रत्यक्षत्वेऽपि तत्प्रतियोगितानिरूप- दस्य पटादौ प्रत्यक्षत्वमस्त्विति वाच्यम्, सम्बन्धसाक्षात्कारे सम्बन्धिद्वयसाक्षात्कारस्य णतायाः सर्ववादिसिद्धतया प्रतियोगितात्मकसम्बन्धस्य प्रतियोग्यनुयोगिसाक्षात्कारं विना त्कारासंभवात्, तस्मात्प्रत्यक्षायोग्यस्य प्रतियोगिनस्तत्तद्भेदस्य च तदेकवित्तिवेद्यस्या गिनो घटपटादेश्च साक्षिणैव प्रातिभासिकरजतादिवद्भवति भानम्, प्रत्यक्षेण च वैशेषसन्मात्रं गृह्यते न तु घटादिकं तद्धर्मश्च घटत्वादिः, तस्मात्प्रत्यक्षमद्वैतनिश्चयानुकू- वेति न प्रत्यक्षविरोधो मिथ्यात्वानुमानस्येत्याहुः।

ननु प्रत्यक्षानुमानाभ्यां बाधविरहेऽपि आगमबाधस्तु मिथ्यात्वानुमानस्य न निवर्त्तते ष्यन्ते हि 'विश्वं सत्यम्, याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः' इत्यादयः यः,

'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।'

इत्याद्याः स्मृतयश्च, 'नाभाव उपलब्धेः, वैधर्म्याच्च स्वप्नादिवत्' इत्यादिसूत्राणि चेदत्राहुः-उक्तश्रुतीनां विश्वस्य त्रिकालाबाध्यत्वरूपसत्यत्वे न तात्पर्यम्, तथा हि श्वं सत्यं मघवाना युवोरिदापश्च न प्रमिणन्ति व्रतं वाम् अच्छेन्द्रा ब्रह्मणस्पती हविर्नो नं युजेव वाजिना जिगातम्' इति हि ऋक्संहिता द्वितीयाष्टकवाक्यम्। तस्यायमर्थः— इन्द्राब्रह्मणस्पती! मघवाना मघवन्तौ (मघं धनं तद्वन्तौ). विश्वं सर्वं सत्यं समुद्भूतत्वात् कर्मफलस्यावश्यं भावित्वात् अन्यथा विगलितनिखिलनिगडाः मदान्धाः सुराः कदलीवनमनुप्रविष्टाः यथेष्टं कदलीकाण्डं प्रकाण्डमुन्मूलयन्त इव यथाकाममाचर- पुमांसः सर्वामेव मर्यादामुन्मूलयन्तो निःश्रेयसात्प्रतिहन्यमानाः अनर्थव्रातमेव लभेरन् शं कर्म युवयोः इत् इत्थं युवामुद्दिश्य विधेयम् आपो व्यापनशीला देवताः, चनेत्येकं , वाम् युवयोः व्रतं संकल्पं न प्रमिणन्ति न हिंसन्ति किं त्वनुमोदन्त इति यावत् नः

अस्माकं हविः दध्यादिकम्, अन्नं पुरोडाशादिकं च अच्छ अभिलक्ष्य वाजि वध्वाविव युजा युक्तौ जिगातं देवयजनमागच्छतमिति । एवं चास्य न ... तात्पर्यम् अपितु कर्मफलावश्यंभावे । एवं 'याथातथ्यतोऽर्थान् ... वाक्यं पूर्वसर्गानुसारेण सर्जनपरमतो न विश्वसत्यत्वेऽस्य तात्पर्यम् । ... इत्यत्रापि सदित्यस्य प्रत्यक्षं त्यदित्यस्य परोक्षमित्यर्थः । एवमन्यस्यापि ... हिमस्य भेषजम्' इत्यादिवाक्यवत् प्रत्यक्षसिद्धानुवादकतया न ... अद्वैतश्रुतिविरोधात् । न च वैपरीत्यमेव किं न स्यादिति वाच्यम्, ... अद्वैतश्रुतिर्निरवकाशा स्यात् भेदश्रुतिस्तु न तथा सा हि प्रत्यक्षसिद्धमे... पपद्यमाना तात्पर्यनिर्णायकषड्विधलिंगवत्त्वेन बलीयस्याऽद्वैतश्रुत्या दुर्बला, ... सामान्यमनेकान् स्वाव्यतिरिक्तान् घटान् स्ववीजानुत्पाद्य तत्र तत्र ... एवमेवैषा स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभा... माया चाविद्या च स्वयमेव भवतीत्यादिश्रुत्या च प्रपञ्चस्याविद्यकत्वं ... सत्यत्वं तिरस्कुर्वन्त्या बाध्यमाना न मिथ्यात्वानुमानमद्वैतश्रुतिं च ... हत इति ।

अपि च 'विश्वं सत्यम्' इत्यादि वाक्यमन्यथाऽप्युपपद्यते । चतुर्धा सामानाधिकरण्यम्—'इदम् रजतम्' इत्यादावध्यासे, 'स्थाणुः पुमान्' इत्यादौ 'नीलमुत्पलम्' इत्यादौ विशेष्यविशेषणभावे, 'तत्त्वमसि' इत्यादावभेदे, 'विश्वं सत्यम्' इत्यादौ बाधायामध्यासे वा सामानाधिकरण्योपपत्तेर्न ता... लिंगोपेताद्वैतागमबाधकत्वम् । यथा च 'यतो वा इमानि भूतानि जायन्ते' इ... निषेध्यसमर्पकत्वेन 'नेह नानास्ति किञ्चन' 'अस्थूलमनण्वदीर्घम्' इत्यादिवा... वाक्यतां प्रतिपद्यमानमध्यारोपापवादन्यायमनुसरन्न तत्प्रतिकूलतामाश्रयते । ... सत्यम्, इत्यादि श्रुतिरपि व्यावहारिकसत्यत्वविषयतयाऽन्यथोपपादितसा... वलम्बितया वा सावकाशा न मिथ्यात्वानुमानमपवदितु' कामयते ।

नापि 'असत्यमप्रतिष्ठन्त' इत्यादिस्मृतिबाधः । तथाहि 'आसुरं पार्थ' इत्युपक्रम्य भगवताऽऽसुरस्वरूपं प्रादर्शि—

'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।<br>
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥<br>
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।'

इत्यादिना, तस्यैतस्य वचनचयस्यायमर्थः—धर्मे प्रवृत्तिमधर्मे निवृत्तिं बोधकं शास्त्रं च आसुरा जना न विदुर्न मन्यन्ते, न केवलमेतावदेव ... माचारः सत्यं च तेषु आसुरेषु न विद्यते । ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्ति... कथं न विदुः कुतो वा धर्माधर्मयोरनङ्गीकारे जगतो व्यवस्था स्यात् कथं ... रविषयामीश्वराज्ञामतिवर्तते । ईश्वरानङ्गीकारे च कथं जगदुत्पद्येतेत्यत्र ...

मिति । नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिन् तादृशं जगदाहुः, वेदादीनां प्रामाण्यं च न मन्यन्त इत्यर्थः । अतएव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत् अप्रतिष्ठं 'स्वाभाविकं, जगद्वैचित्र्यमाहुरित्यर्थः, अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः । तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत उक्तम्— अपरस्परसम्भूतमिति अपरश्च परश्चेत्यपरस्परम् अपरस्परतः अन्योन्यतः स्त्रीपुरुष-मिथुनात् सम्भूतं जगत् किमन्यत्कारणमस्य नान्यत्किञ्चित् किंतु कामहेतुकं स्त्रीपुरुष-योर्मिथुनीभावः कामस्तस्मादेव जगज्जायत इति, एवं च जगतोऽव्यावहारिकसत्यत्व-मीश्वरं वेदादिप्रामाण्यं चोपगच्छतामस्माकं मते नैनया नान्यया कयाचिदपि स्मृत्या विरोधः । भगवद्गीतास्मृतिस्तु—

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ।'
'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।'
'शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते ।'

इत्यादिना स्वयं जीवब्रह्माभेदं प्रतिपादयन्ती समस्तस्य जगतो ब्रह्माभेदं बोधयन्ती वेदान्तार्थमेव संक्षेपतः प्रतिपादयन्ती कथं वेदान्तं निन्दन्ती प्रामाण्यमश्नुवीतेत्यपि विभावनीयम् । नापि 'वैधर्म्याच्च न स्वप्नादिवत्' ( २६-२-२ ) इति सूत्रविरोधः, एतस्य हि सूत्रस्यायमर्थः—स्वाप्नप्रत्ययस्य यथा जागरणदशायां बाधो न तथा जागरे जाग्र-त्प्रपञ्चस्य बाधः, तस्य जागरणावस्थायां सत्त्वादित्युभयोः स्वाप्नजागरिकयोर्भेदादिति । तथा च नाद्वैतवादे काचिदनुपपत्तिः । अत एव 'साक्षी चेता केवलो निर्गुणश्च' 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतिः ब्रह्म णः सर्वधर्मरहितं निर्गुणस्वरूपमभिदधती सर्व-धर्माणां मिथ्यात्वमेव प्रत्याययतीति ।

यत्तु निर्गुणत्वं प्राकृतधर्मराहित्यम्, पङ्गेर..स हि अप्राकृतिकाः गुणास्तत्र चतुर्भुज-त्वादयो बहवोऽतः सगुणवाक्यमेव स्वार्थतात्पर्यकमिति रामानुजादिः प्रललाप तन्न, निर्गुणशब्दस्य हि गुणसामान्याभावबोधकस्य विशेषाभावबोधने लक्षणापत्तिः । अपि च ब्रह्मनिष्ठानां गुणानां ब्रह्मणा परस्परं च भेदोऽभेदो भेदाभेदो वेति विवेचनीयम् । सर्वथाऽभेदे ब्रह्मरूपमेवा वशिष्टमिति न वास्तविको गुणस्तत्र सिद्ध्यति । यदि च भेदस्तदा घटपटादिवद्विभज्यमानत्वेन तेष्वनित्यत्वानुमानं निराबाधमेव प्रसरति । भेदाभेदौ च विरुद्धौ कथमेकत्रावतिष्ठेयाताम्, अस्मत्सिद्धान्ते च सर्वेषां सद्रूपे ब्रह्मणि कल्पितत्वेन न भवति कस्मादपि ब्रह्म विभक्तं, प्रापञ्चिकानां तु सर्वेषां परस्परविभक्तत्वेना-नित्यत्वमिष्टमेव । तस्मान्न ब्रह्मणि वस्तुतः कश्चिद्धर्मोऽस्तीति सिद्धम् । तदेतदाह श्रुतिः— 'एकधैवानुद्रष्टव्यम्' इति । नापि प्राकृतातिरिक्तानां गुणानां 'धर्माणां, केनापि प्रमाणेन सिद्धिः सम्भवति, न हि तत्र प्रत्यक्षं प्रक्रमतेऽसन्निकर्षात्; नाप्यनुमानं लिङ्गाभावात्; नाप्यागमस्तथाविधागमाभावात् 'सर्वकामः सर्वरसः' इत्यादिश्रुतेस्तु मायिककामादिमत्त्वे-नोपपत्तेः । अतएव सर्वथैव रूपादिमत्त्वं निषिध्यते—

'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'
'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्'
'न दृष्टेर्द्रष्टारं पश्येः' येनेदं सर्वं विजानाति तत्केन विजानीयात्
निवर्त्तन्ते अप्राप्य मनसा सह' इत्याद्यनन्तश्रुतिभिः । 'मनसैवानुद्रष्टव्यम्' इति
सगुणब्रह्मविषया, 'यन्मनसा न मनुते' इत्यादिश्रुतिविरोधादुपदर्शितश्रुति
तस्मादध्यारोपापवादन्यायेनैव सृष्ट्यभिधानम्, 'यतो वा इमानि भूतानि'
प्रपञ्चस्य ब्रह्मणः सकाशादुत्पत्तिं प्रदर्श्य नास्तीत्यादिना
तस्य निषेधेऽन्यत्र सत्त्वाभावात् ब्रह्मातिरिक्तं स्वरूपेणैव निषिध्यते एवं च निर्गुण
निर्गुणत्वमेव व्यवतिष्ठते द्वैतवादिनां तु निर्गुणवाक्यमप्रामाणिकमेव सर्वं
यदपि निर्गुणे मानाभाव इति रामानुजादिभिरुद्घोषितं न तदस्माकं
सादयति, स्वतः सिद्धे वस्तुनि प्रमाणानपेक्षणात् । प्रमाणं हि
नाप्रमेये परमात्मनि 'अगृह्यो न हि गृह्यते,' 'न सदृशे तिष्ठति रूपमस्य' न दृष्टे
विज्ञातारमरे केन विजानीयात्, इत्यादिश्रुतिभिस्तत्र तत्र प्रदर्शिताभिर्मानागम
पादनादित्यलमप्रस्तुतानल्पजल्पनेन । तस्मात् दृश्यत्वादिहेतुभिः प्रपञ्चस्य मिथ्या

अयमत्र सारांशः अयमुच्चावचः प्रपञ्चोऽविद्यायाः परिणामो ब्रह्मणो विवर्त
क्रमेणोत्पद्यमानो व्यावहारिक इत्येकं मतम्, अपरं च पूर्वपूर्वानुभव
कर्मणा च सहकृताऽविद्यैव घटपटाद्याकारेण साक्षात्परिणमते न तु मृदादि
च घटादिकारणमिति, अत्र च स्वाप्निकवदेव न किंचिन्नोत्पद्यमवतरतीति,
दृष्टिसृष्टिवादशब्देनाभिधीयमानं विवेचितमभ्यूर्णमेव ।

अथ प्रथममतानुसारेणस्वाश्रयनिष्ठात्यन्ताभावीयपारमार्थिकत्वावच्छिन्नप्रति
मिथ्यात्वम् द्वितीयमतानुसारेण तु स्वाश्रये स्वरूपेणैव निषेधमुपेत्य येन येन
च सम्बन्धेन यत्र यत्र विद्यते घटपटादिस्तत्तन्निष्ठात्यन्ताभावीयतत्तद्रूपावच्छिन्न
वच्छिन्नप्रतियोगित्वं मिथ्यात्वमिति पर्यवसितम् एवं च द्वितीयपक्षे स्वरूपेण
घटपटादयो निषिध्यन्त इति स्थितम् ।

अत्रेदं विचिकित्सन्ति स्वस्वाधिकरणे स्वरूपेणैव निषेधस्य सत्त्वे तस्य मुक्ति
योरविशेषेणैव विद्वान्नामरूपाद्विमुक्तः, ज्ञात्वा देवं मुच्यते सर्वपाशैः, इत्यादिश्रुति
विदुषो मुक्तिकाले सर्वदृश्योच्छेदप्रतिपादनमसमञ्जसं स्यादिति ।

अत्रेदं समादधति सर्वं पदार्थाः स्वस्वाधिकरणे स्वरूपेण निषिध्यमाना अपि
ते ते तत्र तत्र भासन्त एव अविद्यानिवृत्तौ तु भासकाभावान्नैव भासन्तेऽतो
संसारकालयोर्विशेषः अत एव अविद्या हि सर्वानर्थबीजमिति वक्ष्यति ।

एतेन घटादेर्विद्यमानकालेऽपि तस्य स्वरूपेणाभावस्य सत्त्वे कुतो न तद
भावस्य प्रत्यक्षं कुतो वा न घटादौ मिथ्यात्वस्य प्रत्यक्षमित्याशंकाऽपि परि

विद्यमानोऽपि घटाद्यभावोऽविद्यारूपदोषान्नाध्यक्षो नापि घटादौ विद्यमानमपि मिथ्यात्वमध्यक्षं भवति तत एव, अतएव न प्रवृत्तिनिवृत्तिव्याघातोऽपि, यथा हि शुक्तौ निषिध्यमानमपि रजतादिकमविद्यया प्रतीयमानं प्रवर्तयति निवर्त्तयति च तदानीं व्यवहारम् तथैव व्यावहारिकत्वेन प्रतिपद्यमानाः पदार्थाः स्वस्वाधिकरणे निषिध्यमाना अपि तेषु तेषूच्चावचेषु कार्येषु प्रवर्त्तयन्ति निवर्त्तयन्ति चेति भवति सर्वमुपपन्नम् ।

नन्वेवं शुक्तिरजतादीनां घटपटादीनां च निषिद्धस्वरूपत्वं समानमेवेति कस्तेषां विशेष इति चेत् ? नास्त्येव दृष्टिसृष्टिपक्षे कश्चिद्विशेषः सृष्टिदृष्टिपक्षे च व्यवहारकाले बाध्यत्वाबाध्यत्वाभ्यां विशेषः ।

न च निषिद्धस्वरूपत्वे घटादीनां गगनकमलिनीकल्पतया घटादीनामुत्पत्तिर्दण्डादीनां च कारणता न स्यादिति वाच्यम्, सत्त्वेन प्रतीयमानत्वतदभावाभ्यां वैलक्षण्यात् सत्त्वेन प्रतीयमानत्वमेव हि तुच्छव्यावृत्तं कारणत्वोत्पत्त्यादिमत्त्वे प्रयोजकं तच्चास्त्येव दण्डघटादीनाम् नहि अनिषिद्धस्वरूपत्वं तत्र प्रयोजकं परमते तादृशस्य गगनादेरुत्पत्तेस्तादृशस्य पारिमाण्डल्यादेः कारणत्वस्य चाभावात्, न चानिषिद्धस्वरूपत्वं नोत्पत्त्यादेर्व्याप्यं येन तस्य गगनादावुत्पत्त्यादिमत्त्वप्रसञ्जकत्वं स्यात् किंतु व्यापकमेव तच्च दण्डघटादिभ्यो व्यावृत्तं कारणत्वोत्पत्त्यादिकमपि तेषु व्यावर्त्तयेदिति वाच्यम् उभयवादिसम्प्रतिपन्नानिषिद्धस्वरूपस्योत्पत्त्यादिमत्पदार्थस्याभावेन उत्पत्तिमत्त्वानिषिद्धस्वरूपत्वयोः सहचारदर्शनस्यैवाभावेन व्याप्यव्यापकभावस्य दूरनिरस्तत्वात् । यदि हि अनिषिद्धस्वरूपत्वं पारमार्थिकसत्त्वं वा कार्यकारणभावावच्छेदकं स्यान्न स्यान्निषिद्धस्वरूपस्योत्पत्त्यादिमत्त्वम्, न त्वेवमस्ति घटत्वदण्डत्वाभ्यामेव कार्यकारणभावात् न्यायनयेऽव्यावर्त्तकत्वात् अस्मन्मते च जगतोऽनिषिद्धस्वरूपत्वस्यैवासत्त्वात्, न च स्वरूपेणैव दण्डादीनां घटादिकार्यस्याधिकरणेऽभावसत्त्वे नियतपूर्वसत्त्वस्य कारणत्वस्य न सम्भवः दण्डादीनां तत्रासत्त्वात् असत्त्वेऽपि कारणत्वे तन्त्वादीनामपि घटादिकारणत्वं स्यादविशेषादिति वाच्यम् कारणताघटकीभूतं हि सत्त्वं नानिषिद्धस्वरूपत्वादिकं किंतु वर्त्तमानत्वं तच्च निषिद्धस्वरूस्यापि दण्डस्यैवास्ति कारणतावच्छेदकसम्बन्धेन घटदेशे न तु तन्त्वादेरतो दण्डस्य कारणत्वेऽपि तन्त्वादेरकारणत्वम् । नच स्वरूपेण स्वाभाववति स्वस्य स्थितिरेव कथं स्याद्विरोधात् अन्यथा ह्रदपर्वतयोः समानमेव वह्निमत्त्वं स्यादिति वाच्यम्, तादृशाभावस्य स्थित्यविरोधात् स्थितिर्हि पर्वते एव स्वकारणसाम्राज्याद्भवति वह्नेर्न ह्रदे इत्यस्य वक्तुं शक्यत्वात्, नचासत्त्वाविशेषात् कुतः पर्वते एव वह्निकारणं न ह्रदे इति कारणेऽपि तादृशपर्यनुयोगः समान इति वाच्यम्, तादृशपर्यनुयोगस्य सत्त्वाभ्युपगमपक्षेऽपि समानत्वात् पर्वते एव कस्माद्वह्निसामग्री न ह्रदे इत्यस्यास्माभिरपि वक्तुं शक्यत्वात् सामग्र्याः सम्वलनमपि कुतः पर्वते एव न ह्रदे इति पर्यनुयोग परम्परायाः संभवात् । एवं दण्ड एव कारणं कुतो न तन्तुरिति पर्यनुयोगवारणस्याप्यवारणात् ।

अथेश्वरेच्छाया अप्रत्यक्षत्वेन कल्प्यतया तन्तोर्घटादर्शनात् ह्रदे वाह्न्यदर्शनात् घटो भवतु न तन्तोः पर्वतादावेव वह्निरुत्पद्यतां न ह्रदादावित्याकारैव तदिच्छा; एवमदृष्टस्यापि कार्यदर्शनानुकूलत्वेनैव कल्पनान्नदोषः कल्पनाया दृष्टानुसारित्वादिति दर्शनं कल्पनेति वदता परिहृतस्त्वया दुर्वारोऽपि दोषनिवहः परं त्वेवमस्मत्पक्षेऽपि मुदञ्चय ! तथासत्यस्मत्पक्षेऽपि सर्वदोषपरिहारस्य तवावलोकनसंभवात् तथाहि गुणत्वे रूपादेरेकाश्रयमात्रवृत्तित्वं संयोगादेश्चानेकाश्रयवृत्तित्वं दर्शनतदभावाभ्यां भवताऽभ्युपगतं तथाऽसत्त्वाविशेषे ऽपि कचिदभावाश्रये पर्वतादावेव वह्न्यादेरुत्पत्ति न तु सर्वत्रेति न ह्रदादौ वह्नेरुत्पत्तिर्नापि स्थितिरित्यस्यापि दर्शनतदभावाभ्यां नाच्यौ, तस्मात्पर्वते एव वह्नेः स्थितिर्न ह्रदे इत्यत्रावयोर्न विशेषः, एवं व्यवहाराणामदौस्थ्यमस्मत्पक्षेऽपि, विशेषस्त्वयमावयो विषयदर्शनरूपा सिद्धिर्भवतः प्रमैव मम तु भ्रान्तिरेव । द्विविधा हि भ्रान्तिः, आद्या व्यवहारकाले एव बाधात् यां भ्रान्तिरूपामुदीरयन्ति तया नार्थसिद्धिर्भवदभिमता, अद्वैतवादिनां तु साऽप्यर्थसिद्धिः शुक्तिप्रदेशे रजतस्य साक्षात्कारिप्रत्ययात् रजतस्य सिद्धिः तत्र तस्यासिद्धौ देशान्तरस्थ प्रत्यये साक्षात्कारिप्रत्ययानुपपत्तेर्भूयोदर्शितत्वात् तदपि रजतं प्रवृत्त्यादिकं जनयतः स्थरजतवदलंकारादिकार्याक्षमत्वं तु तस्य व्यवहारकाले एव बाधात् ।

अत एव चासत्त्वाविशेषात् उपार्जितमोदकतृप्तानामाशामोदकतृप्तानां च रस पाकादितुल्यतापादनमपि परिहृतम् उपार्जितमोदकस्य व्यवहारकाले बाधा तज्जन्यतृप्त्यादेः व्यवहारकालाबाध्यरसादिजनकत्वम् आशामोदकस्य च व्यवहारकाले तज्जन्यतृप्त्यादेः व्यवहारकालबाध्यरसादिजनकत्वं भवत्येवेति तत्कालेऽपि सुखलेश अथवा सत्तामन्तर्भाव्य कार्यकारणभावो न संभवति सत्तायां हि सत्ता वृत्तावात्माश्रयः अन्यस्याः सत्तायाः वृत्तौ तस्यां सद्व्यवहारस्य प्रथमया सत्तयो न्याश्रयः अन्यया चेदनवस्थानम्, तदुक्तं खण्डनकृद्भिः ।

'अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः इति ।

तथाच व्यवहारिकत्वेन सम्प्रतिपद्यमानानां घटपटादीनां रज्जुसर्पादीनां च सत्त्वमसत्त्वं वाऽतः कार्यं कारणं चासदेवेति स्वोत्तरतृप्त्यादिकं प्रति उपार्जित स्वोत्तरतृप्तादिकार्यं प्रत्याशामोदकस्यापि कारणत्वं भवत्येवेत्यतो भवति आशामोदक ज्ञानवतः अहमिदानीं पुष्टः संजात इति प्रत्ययः कदाचित्, दृश्यते च गुञ्जापुञ्ज मारोपयतां वानराणां शीतापनोदस्योत्पत्तिः असत्यैव च कामिन्या स्वप्ने संभोगसुख एवं च न रसविपाकादिसाम्यापत्तिर्नवा काचिदन्यापत्तिर्दृष्टिसृष्टिमतेऽपि संभवति दृष्टानुसारित्वादेवेति बोध्यम् :

द्वितीया तु भ्रान्तिः ब्रह्मज्ञानेतराबाध्यबाध्यविषयिणी यां प्रमामुद्घोषयन्त सिद्धिमुपगच्छन्तः प्रपञ्चसत्यत्वमुरीकुर्वन्ति भवन्तः, अद्वैतवादिनस्तु सुतरां तां

स्वीकुर्वन्तोऽपि व्यवहारकालाबाध्यत्राध्यविषयिणीं व्यावहारिकीमेव प्रमामुदीरयन्ति सृष्टिदृष्टिपक्षे दृष्टिसृष्टिपक्षे, तु अथत्रेत्यदिनेदानीमेव प्रादर्शि।

उक्तोभयरूपा भ्रान्तिः कल्पना तया सिद्धस्य कल्पितत्वेन न पारमार्थिकत्वं नहि सिद्धत्वमात्रेण पारमार्थिकत्वमपि तु प्रमासिद्धत्वेन प्रमा तु अबाधितब्रह्मविषयकचरम-निर्विकल्पसाक्षात्काररूपाऽतस्तदभिव्यक्तं ब्रह्मैव स्वतः सिद्धं पारमार्थसत् अन्यत्सर्वं बाधितमेवेति सिद्धम्।

अत्र मिथ्यत्वानुमाने हेतूक्तं दृश्यत्वं च भामतीकृन्मते वृत्तिविषयत्वम्। एतन्मते हि शुद्धस्य ब्रह्मणो वृत्तिविषयत्वमपि नास्तीति स्वयं व्युत्पादयिष्यति प्रथम एव सूत्रेऽतो न ब्रह्मणि व्यभिचारः। अज्ञानतत्कार्यनिवृत्तिप्रयोजिका तत्त्वमस्यादिमहावाक्यजन्यवृत्तिरपि हि स्वोपहितमेव गोचरयति न शुद्धम्। 'तदेतद्रेश्यम्' 'यतो वाचो निवर्तन्ते' इत्यादि श्रुतिशतैः शुद्धे वृत्तिविषयत्वस्यापि निराकरणात्।

ननूपहितविषयकत्वंकथं ज्ञानस्य कथम्वा तस्याज्ञाननिवर्त्तकत्वमिति चेच्छृणु यथा हि घटादौ विद्यमाना अपि द्रव्यत्वादयोधर्माः अयं घटइत्यादि ज्ञानेऽभासमाना भवन्त्युपलक्षणानि एवं तत्त्वम-स्यादिमहावाक्यजन्यनिर्विकल्पवृत्तिकाले विद्यमाने अप्यज्ञानतत्कार्ये वृत्त्या न विषयीक्रियेते अतो भवत्युपहितचैतन्यमात्रविषयकत्वं तस्याः, ब्रह्मज्ञानमपि अज्ञानं तत्कार्यं च न विषयीकरोति अपि तूहितं चैतन्यमात्रमतस्तयोर्विरोधिनोः भवति समानविषयकत्वमतो भवति निवर्त्त्य-निवर्तकभाव इति स्फुटी भविष्यति चैतदग्रेऽपि।

यत्तु न्यायभास्करकृता 'अहं ब्रह्म घटो विनाशी' इत्यादिसमूहालम्बनेऽपि ज्ञाने प्रपञ्च-बाधकत्वस्य सैद्धान्तिकत्वमापाद्यात्याडम्बरो दर्शितः, स त्वतितमामयुक्त एव, अज्ञानतत्कार्या-विषयके निर्विकल्पकेऽज्ञानसमानविषयक एव ज्ञानेऽज्ञानादिसकलप्रपञ्चनिवर्तकत्वस्य सिद्धा-न्तिभिः स्वीकृतत्वात्, समूहालम्बनज्ञानस्याज्ञाननिवर्त्तकत्वासंभवात्। केन-चित्तथोक्तत्वेऽपि भाष्यकार-वार्तिककार-भामतीकारादिभिर्महद्भिस्तथानुक्तत्वात्।

एतेन निर्विकल्पस्याज्ञानादिनिवर्त्तकत्वं न सम्भवति तद्वत्ताबुद्धिं प्रति तदभावा-वगाहिनिर्णयस्यैव प्रतिबन्धकत्वादित्यपि न्यायभास्करकाराद्युक्तिरयुक्तैव, समानप्रकारत्वेन प्रतिबन्धकत्वासम्भवेऽपि प्राचीनैरुपगतस्य समानविषयकत्वेन मणिमन्त्रादिन्यायेन वा प्रतिबन्धकत्वस्य निवारयितुमशक्यत्वात्। वस्तुतः घटमुद्गरपातयोरिव प्रतिबध्यप्रतिबन्धक-भावान्यस्यैव निवर्त्त्यनिवर्त्त्यकभावस्य ज्ञानाज्ञानयोः स्वीकाराच्चेति भवति सर्वमवदातम्।

भामती आत्मख्याति

स चायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेव सम्मतः परीक्षकाणाम्, तद्भेदे परं विप्रतिपत्तिरित्यनिर्वचनीयतां द्रढयितुमाह

(तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति। अन्य

धर्मस्य, ज्ञानधर्मस्य रजतस्य ज्ञानाकारस्येति यावत् अध्यासोऽन्य
सौत्रान्तिकनये तावद्बाह्यमस्ति वस्तु सत्तत्र ज्ञानाकारस्य
विज्ञानवादिनामपि यद्यपि न बाह्यं वस्तु सत्तथाप्यनाद्यविद्यावास
तमलीकं बाह्यं, तत्र ज्ञानाकारस्यारोपः । उपपत्तिश्च यद्यादृशमनु
रूपं तत्तादृशमेवाभ्युपेतव्यमित्युत्सर्गोऽन्यथात्वं पुनरस्य बलवत्
प्रत्ययवशात्, नेदं रजतमिति च बाधस्येदन्तामात्रबाधेनोपपत्तौ

**प्रकाशः**

नन्वध्यासलक्षणे प्रकृते मतान्तरोपन्यासः किमर्थः ? न तावन्मत
विप्रतिपन्नत्वात्, न वा दूषणाभिधानाय तदकरणादित्याशङ्क्य मत
वायमुपन्यास इत्याह–सचायमिति । एवं लक्षणकः तदभाववति
रकज्ञानस्वरूपपर्यवसायी स्मृतिरूप इत्यादिभाष्योक्तः, वक्ष्यति च
भाष्यकारः 'अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम' इति । तर्हि
कुत्रेत्यत आह–तद्भेदइति । अधिष्ठानारोप्यविशेषविषये,
बलादङ्गीकारयितव्य इति भावः । अत्र यद्यप्यन्यधर्मस्य रजत
अन्यत्र शुक्तिकादावध्यास इत्यर्थकत्वेऽन्यथाख्यातिरपि ग्रहीतुं शक्य
पादिकाकारादिभिर्गृहीताऽपि सा तथाप्येतस्यान्यथाख्यातिप
कत्वेऽग्रिमेणाख्या तपक्षेण दुर्बलेनैतत्खण्डनकरणस्याशक्यतया अ
लक्षणानां पौर्वापर्यसूचितस्य पूर्वपूर्वलक्षणे उत्तरोत्तरलक्षणेन नि
स्वारस्यस्य भङ्गो भवेदतो नैतदन्यथाख्यात्यनुवादकतया भामतीप्रकि
र्येण व्याख्यातम् । एवञ्च अन्ये त्वित्यग्रिमं वाक्यमेव तदनुवा
बोध्यम् । **ज्ञानाकारस्येति** । अयमभिप्रायः –सौत्रान्तिकवैभाषिकं
भूतं भौतिकम् आन्तरं च सुखदुःखादिकमस्ति सर्वं वस्तु सत् । तत्र
न्तिकैः ज्ञाने आकारसमर्पकत्वेन सर्वो विषयोनुमेय आस्थीयते । वै
यथायोग्यं प्रात्यक्षिक आनुमानिकश्च विषयोऽभ्युपेयतेऽन्यत्सर्वं
मतद्वयेऽपि ज्ञेयं ज्ञाने स्वाकारं समर्पयति, तत्र 'इदं रजतम्' इ
बहिर्देशे स्वाकारसमर्पकस्य रजतस्याभावेन 'इदं रजतम्' इत्याकारता
न स्यादतः प्रतिक्षणोत्पद्यमानात्मचैतन्यमेव रजताकारतामा
पुरोवर्त्तिनि शुक्त्यादिरूपेऽधिष्ठाने इदन्त्वेनारोप्यते इति भवत्यन्य
न्यत्रारोप इति ।

## विकासः--

ज्ञानाकारस्येति । अत्र विमतं रजतमात्मरूपं संप्रयोगमन्तरेणापरोक्षत्वात् संवेदनवदित्यनुमानमपि प्रमाणयन्ति सौत्रान्तिका वैभाषिकाश्च । तत्रेदं विचारणीयम्--चतुर्विधान् हेतून् प्रतीत्य ( अवलम्ब्य ) चित्तचैत्ता उत्पद्यन्ते इति सौगतं मतम्, ते च हेतवः प्रत्ययशब्दाभिलप्याश्चत्वारः । तेषु तावत् आलोकादिः सहकारिप्रत्ययो न रजताकारतामाविर्भावयितुमर्हति तस्य स्पष्टतामात्रहेतुत्वात्, नाप्यधिपतिप्रत्ययश्चक्षुरादिस्तथा तस्य विषयनियमनमात्रहेतुत्वात्, नाऽपि समनन्तराख्यः पूर्वप्रत्ययस्तथा तस्य सजातीयं ज्ञानं प्रत्येव हेतुत्वात् प्रकृते च विजातीयज्ञानानन्तरमिदं रजतमित्यादिप्रत्ययोत्पादात्, नाप्यालम्बनप्रत्ययस्तथा बाह्यपदार्थाभ्युपगन्तॄणां हि प्रमास्थले तथासम्भवेऽपि भ्रमस्थले तदसम्भवः, बाह्यानभ्युपगन्तॄणां विज्ञानवादिनां सुतरां तदसम्भवः, सति चैवं कथं विज्ञानस्य रजताकारतेति चेत् ! संस्कारसामर्थ्यादित्यवधारय नन्वेतदपि कथं, संस्कारो ह्ययं न स्थायी तथासति सर्वक्षणिकमिति पक्षक्षतिः स्यात्, अस्थायी चेत् ! तदापि तस्य ज्ञानभिन्नत्वेन विज्ञानवादिनां विज्ञानमात्रवादहानिरिति चेन्न, अनादिसिद्धज्ञानसंततौ यत्कदाचित्पूर्वं रजतज्ञानमुत्पन्नं तदेव संस्कारः स एव बही रजतादिबुद्धिं जनयतीत्युपगमात् । यथा हि व्रीहिबीजमङ्कुरादिकार्यव्यवधानेन पुनः सजातीयंबीजान्तरं जनयति तद्वत्, यदि च तत्र न पूर्वबीजमङ्कुरकारणं किन्तु पूर्वबीजजन्याङ्कुरादिसन्तान एव तथेति मन्यते तदाऽत्रापि पूर्वरजतज्ञानजन्यसंस्कारसन्तान एवास्तु तथा, एवं पूर्वरजतज्ञानमपि तत्पूर्वरजतज्ञानादुत्पद्यतेऽतोऽनादिवासनाप्रापितं रजतं बुद्धिरूपमेव भ्रान्त्या बहिर्वदवभासत इति ।

## भामती

गोचरतोचिता । रजतस्य धर्मिणो बाधे हि रजतं च तस्य च धर्म इदन्ता बाधिते भवेताम्, तद्वरमिदन्तैवास्य धर्मो बाध्यतां न पुना रजतमपि धर्मि, तथा च रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठत इति ज्ञानाकारस्य बहिरध्यासः सिध्यति । अख्यातिवाद

केचित्तु ज्ञानाकारख्यातावपरितुष्यन्तो वदन्ति "यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम" इति अपरितोषकारणं चाहुः-विज्ञानाकारता रजतादेरनुभवाद्वा व्यवस्थाप्येतानुमानाद्वा ? तत्रानुमानमुपरिष्टान्निराकरिष्यते । अनुभवोऽपि रजतप्रत्ययो वा स्याद् बाधकप्रत्ययो वा ? न तावद्रजतानुभवः । स हीदंकारास्पदं रजत-

मावेदयति न त्वान्तरम्, अहमिति हि तदा स्यात् प्रतिपत्तृ-
याद्व्यतिरेकात्। भ्रान्तं विज्ञानं स्वाकारमेव बाह्यतयाऽध्यव-
तथा च नाहङ्कारास्पदमस्य गोचरो, ज्ञानाकारता पुनरस्य भ्रा-

प्रकाशः—

विज्ञानवादिनां मतेऽपि ज्ञानाकारस्यैव बहिः समारोपः, यद्यपि बाह्यंग्राह्यं नास्ति वस्तु सत् तथाप्यनाद्यविद्यावासनासमारोपितमः शुक्त्यादिकमस्ति बाह्यं तत्रान्तरस्य ज्ञानस्य भवति समारोप इ विज्ञानवादिनामिति। योगाचाराणाम्। तत्रैतेषां माध्यमिकभिन्नानां मते आत्मख्यातिरेव। असत्ख्यातिस्तु शून्यवादिभिर्माध्यमिकैरेवोपेय: चैतन्यस्यात्मनोऽप्यभाव एव केवलमविद्यैव हि असद् घटादेरिवासत नोऽपि ज्ञानं जनयति, तदिदं पूर्वपूर्वज्ञानाज्जायमानमुत्तरोत्तरं ज्ञानमसद्विषयकम् 'असत्ख्यातिः, न केवलं शुक्तिकादौ जाय रजतमित्यादिकमेव, अतःसर्वमेव च ज्ञानं पूर्वप्रत्यय, 'कारण, सामर्थ्यास भावविशेषादेवासत्प्रकाशरूपं भवदसत्ख्यातिरिति व्यपदिश्यते, लक्षणलक्ष्यतामासादयतीत्यतस्तन्मतं पूर्वमेव विविच्य निराकृतमतो ख्यातेश्चर्चा कृतेति बोध्यम्। उपपत्तिश्चेति। तैः क्रियत इति सम्प्रति भूतं प्रेतेन योजयेदितिन्यायेनायमात्मख्यातिवादः, प्रभाकरद्वारा नि केचित्विति। वदन्तीति अख्यातिवादिनः प्राभाकराः, वादित्वं च तेषां भ्रमस्थले विशिष्टज्ञानानङ्गीकर्तृत्वेन। आन्तरम् ज्ञान उपरिष्टात् 'नाभाव उपलब्धेः २-२-२८, इति सूत्रभाष्यव्याख्यायाम्। यत् येन नियतसहोपलम्भनं न तत् ततो भिद्यते यथैकस्माच्चन्द्रमसो श्चन्द्रमा इत्यनुमानं बौद्धैरुपन्यसिष्यमाणं, यत् येन सह नियतसहो तत् ततो भिद्यते, भेदं विना साहित्यस्यानुपपद्यमानत्वात्, इत्यादिना करिष्यति। आवेदयति विषयीकरोति। प्रतिपत्तु प्रत्ययादिति स करणे पञ्चम्यौ प्रतिपत्रपेक्षया ज्ञानात्मकस्य रजतस्यानतिरेकादि यद्यपि रजतमहंत्वेनोल्लिखितुं योग्यं तथापि दोषात्तस्येदन्तया भव इत्याह—भ्रान्तमिति दोषजन्यम्। ज्ञानस्य द्वौ विषयौ ग्राह्योऽध्यव ज्ञानस्य स्व स्वरूपं गृह्यमाणं ग्राह्यमित्युच्यते स्वविषयत्वलक्षण ग्रह तैरङ्गीकृतत्वात्, घटादिश्चाध्यवसेय उच्यते। भ्रान्तिस्थले तु बहि भावात्स्वस्वरूपमेवाध्यवसेयमपि भवति तथा च पुरोवर्त्तिन्यधिष्ठाने

भामती

यप्रवेदनीयेतिचेत् ? हन्त ! बाधकप्रत्ययमालोचयत्त्रायुष्मान्। किं पुरोवर्ति द्रव्यं रजताद्विवेचयति आहो ज्ञानाकारतामप्यस्य दर्शयति। तत्र ज्ञानाकारतोपदर्शनव्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवानांप्रियः। पुरोवर्तित्वप्रतिषेधादर्थादस्य ज्ञानाकारतेतिचेत् ? न असन्निधानाग्रहनिषेधादसन्निहितो भवति प्रतिपत्तुः, अत्यन्तसन्निधानं त्वस्य प्रतिपत्त्रात्मकं कुतस्त्यम्।

नचैष रजतस्य निषेधो न चेदन्तायाः, किन्तु विवेकाग्रहप्रसञ्जितस्य रजतमेव व्यहारस्य। न च रजतमेव शुक्तिकायां प्रसञ्जितं रजतज्ञानेन,

प्रकाशः

कारूपं रजतमिदंत्वेनारोप्यतेऽतो नाऽहन्त्वेनोल्लेख इति भावः। बाह्यतया अध्यवसेयतया इदन्त्वादिनेति यावत्। तथा चेति। यद्यहन्त्वं तत्राध्यवसेयतया विषयो भवेत् भवेत्तदाऽहं रजतमित्याकारता तत्रेति भावः। अध्यवस्यति विषयीकरोति। सिद्धे ज्ञानाकारत्वे एवं कल्प्येत तदेव कुतोऽत आह—ज्ञानाकारतेत्यादि। नेदं रजतमित्यादिबाधकप्रत्ययेनाध्यवसेयस्येदन्त्वाकारस्य बाधे रजताकार एवावतिष्ठते स च ज्ञानरूप एवेति भावः। 'आहो' इत्यव्ययं पक्षान्तरबोधकम्। देवानां प्रियः, मूर्खः। बाधकप्रत्ययः किं साक्षात् ज्ञानाकारतां दर्शयति अर्थाद्वेति विकल्प्य प्रथमं पक्षमनुभवविरोधेन निराकृत्य द्वितीयं निरस्यति—पुरोवर्तित्वेति। नेदं रजतमिति बाधकप्रत्ययेन संनिहितत्वरूपेदन्ता बाध्यते, स च बाधो रजतस्य देशान्तरसम्बन्धेऽपि पर्यवस्यन्नात्मरूपतां न साधयतीत्यथोपपत्तिमाह— असन्निधानेति। अस्य रजतस्य। रजतस्य धर्मिणो बाधे हीत्यादिना प्रसञ्जितं धर्मधर्मिणोर्द्वयोर्बाधकल्पनागौरवं परिहरति--न चैष इति। सर्वसम्मतस्य व्यवहारबाधस्यैव स्वीकारे न कस्यचिदप्यर्थस्य रजतादेर्बाध इत्यतिलाघवमिति भावः। व्यवहारः प्रवृत्तिः शब्दप्रयोगश्चावगन्तव्यः। रजतमेवेति। अत्र कचित् एवकाररहितोऽपि पाठो दृश्यते सोऽपि युक्त एव द्विविधस्यैव व्यवहारस्य दर्शनात्। ननु न व्यवहारस्यैव निषेधः किन्तु शुक्तौ प्रतीयमानस्य रजतस्येत्यन्यथाख्यातिमाशङ्क्य निषेधति-न च रजतमेवेति।

## भामती

नहि रजतनिर्भासस्य शुक्तिकालम्बनं युक्तम्, अनुभवविरोधात् । न सत्तामात्रेणालम्बनम्, अतिप्रसङ्गात् । सर्वेषामर्थानां सत्त्वाविशेषात् आलम्बनत्वप्रसङ्गात् । नापि कारणत्वेन, इन्द्रियादीनामपि कारणत्वात् । तथा च भासमानतैवालम्बनार्थः । न च रजतज्ञाने शुक्तिका भासमाना कथमालम्बनम्, भासमानताभ्युपगमे वा कथं नानुभवविरोधः ? अपि चेन्द्रियादीनां समीचीनज्ञानोपजनने सामर्थ्यमुपलब्धमिति कथं मिथ्याज्ञानसम्भवः ? दोषसहितानां तेषां मिथ्याप्रत्ययेऽपि सामर्थ्यं चेत् ? न, दोषाणां कार्योपजननसामर्थ्यविघातमात्रे हेतुत्वात्, अन्यथा दुष्टादपि कुटजबीजाद् वटाङ्कुरोत्पत्तिप्रसङ्गात् । अपि च स्वगोचरव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः । तस्मात् सर्वं ज्ञानं समीचीनमास्थेयम् । तथा च रजतमिदमिति च द्वे विज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् दोषवशात्तद्गतशुक्तित्वसामान्य

### प्रकाशः

यदि रजतज्ञानात् शुक्तौ रजतं प्रसज्येत, बाध्येत तदा तत्रबाधकप्रत्ययेन रजतत्वेवमित्यर्थः । तत्र हेतुमाह—न हीति । अनुभवविरोधं स्फुटयितुं रजतज्ञानस्य किं पुरोदेशे सत्त्वेन शुक्तिरालम्बनमुत तत्कारणत्वेनेति विकल्प्य निषेधति—न खल्विति । सर्वेषां लोष्टादीनाम् । रजतसंस्कारोद्बोधकत्वेन रजतमिति ज्ञानं प्रति कारणं शुक्तिरतः कारणत्वेनेयमालम्बनमिति पक्षमाक्षिपति—नापीति । सत्तामात्रेण कारणत्वेन वाऽऽलम्बनत्वाभावे भासमानत्वेनालम्बनमस्तु शुक्तिरित्याशङ्कामपनेतुमालम्बनशब्दार्थमाह—तथा चेति । यदि रजतज्ञानं शुक्तिं विषयीकुर्यात्तदा तन्मिथ्या भवेत् नच तत्सम्भवति यथार्थज्ञानं प्रति क्लृप्तेभ्यः कारणेभ्यो मिथ्याज्ञानस्योत्पत्त्यसम्भवादित्याह—अपि चेति । दोषः खल्विन्द्रियादेः कार्योत्पादनशक्तिं प्रतिरुणद्धि न तु विपरीतज्ञानजननशक्तिमुत्पादयतीति भावः । अन्यथा विपरीतकार्यार्जकत्वे पुरोवर्तिविषयकज्ञानस्य मिथ्यात्वेऽभ्युपगम्यमाने विषयव्यभिचारेण ज्ञानमात्रे विषयव्यभिचारशङ्का समुन्मिषन्ती सर्वामेव प्रवृत्तिं व्याकुलयेदित्याह—अपि चेति । 'इदं रजतम्' इति ज्ञानयोरेकत्वे समीचीनत्वं दुर्घटं स्यादत आह-तथाचेति । ग्रहणं

## भामती

विशेषस्याग्रहात्, तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति। सा च गृहीतग्रहणस्वभावापि दोषवशाद् गृहीतत्वांशप्रमोषाद् ग्रहणमात्रमवतिष्ठते। तथा च रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात् सन्निहितरजतगोचरज्ञानसारूप्येण इदं रजतम् इति भिन्ने अपि स्मरणग्रहणे अभेदव्यवहारं च सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः। क्वचित्पुनर्ग्रहणे एव मिथोऽगृहीतभेदे, यथा पीतः शङ्ख इति। अत्र हि विनिर्गच्छन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येव स्वच्छस्य पीतत्वं गृह्यते, पित्तं तु न गृह्यते। शङ्खोऽपि दोषवशात् शुक्लगुणरहितः स्वरूपमात्रेण गृह्यते। तदनयोर्गुणगुणिनोरसंसर्गाग्रहसारूप्यात् पीततप-

## प्रकाशः

त्त्वम्। सदृशतयेति। चाकचक्येनात्र सादृश्यम्। रजते इति। अत्र सप्तम्यर्थो विषयत्वम्। सा च स्मृतिश्च। प्रमोषात् परित्यागात् अभावादिति यावत्। नन्विदं रजतमिति वाक्यमपि बोधद्वयं समूहालम्बनं वा बोधमुत्पादयतीति भ्रमभीरुणा भवता वक्तव्यम्, तथा च नैकवाक्यत्वं पदयोरेतयोरतोऽयं रजतमित्यादयोऽपि व्यपदेशाः प्रामाणिकानां कुतो न स्युरत आह—सन्निहितेति। सन्निहितरजतगोचरं हि ज्ञानमिदंरजतमिति प्रमात्वेनोभयवादिसम्मतमिदंपदार्थरजतपदार्थयोरससर्गं न गोचरयति तयोस्तादात्म्येन संसृष्टतयाऽसंसर्गस्याभावात्, नापि स्वस्वरूपगतस्वभेदमेकज्ञानत्वात् अतोऽभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च जनयति। एवमुक्तग्रहणस्मरणे भिन्ने अपि न स्वगतं भेदं नाप्यसंसृष्टौ सन्तावपि स्वस्वविषयौ परस्परमसंसृष्टत्वेनावेदयत इति भवति सारूप्यम्। अभेदव्यवहारम् पुरोवर्त्तिगोचरप्रवृत्तिम्। सामानाधिकरण्यव्यपदेशम् इदं रजतमिति समानलिङ्गवचनकपदप्रयोगम्। 'पीतःशङ्खः, इत्यादौ गृह्यमाणारोपस्थले व्युत्पादयति—क्वचिदिति। विनिर्गच्छदिति। अत्र विनिर्यदिति पाठान्तरम्, अर्थे तु न भेदः। काचः हरितद्रव्यविशेषः। नन्वेवं नेदं

## भामती

नीयपिण्डप्रत्ययाविशेषेणाभेदव्यवहारः समानाधिकरणव्यपदेशश्च। ग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमिति विवेकप्रत्ययस्य बाध मप्युपपद्यते, तदुपपत्तौ च प्राक्तनस्य प्रत्ययस्य भ्रान्तत्वमपि लोक सिद्धं भवति। तस्माद्यथार्थाः सर्वे विप्रतिपन्नाः संदेहविभ्रमाः प्रत्य घटादिप्रत्ययवत्। तदिदमुक्तं यदध्यास इति। यस्मिन् शुक्ति यस्य रजतादेरध्यास इति लोकप्रसिद्धिः नासावन्यथाख्यातिनिब किंतु गृहीतस्य रजतादेस्तत्स्मरणस्य च गृहीतत्तांशप्रमोषेण; गृही तस्य य इदमिति पुरोऽवस्थिताद् द्रव्यमात्रात्तत्प्रज्ञानाच्च विवेकस्तद निबन्धनो भ्रमः। भ्रान्तत्वं च ग्रहणस्मरणयोरितरेतरसामानाधिकर देशो रजतादिव्यवहारश्चेति। अन्ये तु अत्राप्यपरितुष्यन्तो यत्र ध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते। अत्रेदमा अस्ति तावद्रजतार्थिनो रजतमिदमिति प्रत्ययात्पुरोवर्तिनि द्रव्ये प्र सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम्। तदेतन्न तावद् ग्रहणस्म

## प्रकाशः

रजतमिति बाधकप्रत्ययो निरालम्बनः स्यादत आह—भेदाग्रहेति। बाधक यस्तु गृह्यमाणस्मर्यमाणयोर्भेदग्रहात्मको भेदग्रहाभावं विनिवर्तयन् तद्धेतुक रमपि निवर्तयतीत्यर्थः। सर्वे विप्रतिपन्ना इति। अयमेको धर्मिनिर्देशः हविभ्रमा इत्यपरः, नातो विप्रतिपन्ना इत्यस्य वैयर्थ्यम्। अत्रायथार्थत्व हेतुत्वेन पक्षता न तु संशयत्वेन विभ्रमत्वेन च नातोऽख्यातिमते सिद्धिः साध्यमपि स्वीयसर्वविषयावच्छेदेन बोध्यम्, नातो धर्म्यंशयाथा दाय सिद्धसाधनम्। ननूक्तयुक्त्याऽऽत्मख्यातेरसम्भवेऽपि अन्यथाख्या रेवास्त्वत आह—नासाविति। अन्यथाख्यातेः पूर्वमेव निरस्तत्वा प्रपञ्च्यते। य इति विवेक इत्यनेनान्वयः। रजतादिव्यवहा रजतादिगोचरप्रवृत्तिश्च। तथा च ज्ञाननिष्ठमेतद्द्वयजनकत्वमेव न तु तदभाववति तत्प्रकारताकत्वमिति भावः। तमिममख्यातिवादि मानानन्यथाख्यातिवादिनो नैयायिकान् प्रत्यवस्थापयन्ति—अन्ये त्वि

भामती

स्तद्गोचरयोश्च मिथो भेदाग्रहमात्राद् भवितुमर्हति । ग्रहणनिबन्धनौ हि चेतनस्य व्यवहारव्यपदेशौ कथमग्रहणमात्राद् भवेताम् । ननूक्तं—नाग्रहणमात्रात् किन्तु ग्रहणस्मरणे एव मिथः स्वरूपतो विषयतश्चागृहीतभेदे समीचीनपुरःस्थितरजतविज्ञानसादृश्येन अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । अथ समीचीनज्ञानसारूप्यमनयोर्गृह्यमाणं वा व्यवहारप्रवृत्तिहेतुः, अगृह्यमाणं वा सत्तामात्रेण ? गृह्यमाणत्वेऽपि समीचीनज्ञानसारूप्यमनयोरिदमिति रजतमिति च ज्ञानयोः इतिगृहणम्, अथ वा 'तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रह' इति गृहणम् । तत्र न तावत् समीचीनज्ञानसदृशी इति ज्ञानं समीचीनज्ञानवद्व्यवहारप्रवर्तकम्, नहि गोसदृशो गवय इति ज्ञानं गवार्थिनं गवये प्रवर्तयति । अनयोरेव भेदाग्रह इति तु ज्ञानं पराहतं नहि भेदागृहेऽनयोरिति भवति, अनयोरिति गृहे भेदागृहणमिति च भवति । तस्मात्सत्तामात्रेण भेदागृहोऽगृहीत एव व्यवहारहेतुरिति वक्तव्यम् । तत्र किमयमारोपोत्पादक्रमेण व्यवहारहेतुः आहोऽनुत्पादितारोप एव एव स्वत इति । वयं तु पश्यामः— चेतनव्यवहारस्याज्ञानपूर्वकत्वानुपपत्तेः आरोपज्ञानोत्पादक्रमेणैवेति । ननु सत्यं चेतनव्यवहारो नाज्ञानपूर्वकः किन्त्वविदितविवेकगृहणस्मरणपूर्वक इति, मैवम्— नहि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते ।

प्रकाशः

सत्तामात्रेण । विद्यमानतामात्रेण यथाऽदृष्टादिकं स्वरूपसदेव कारणं न ज्ञायमानत्वेन तथेतिभावः । तयोरेव ग्रहणस्मरणयोरेव । अयं भेदाग्रहः । अनुत्पादितारोपः अनुत्पादित आरोपो येन स तथा भेदाग्रहः ।

कथमग्रहणमात्रादिति । तथा सति हि सुषुप्त्यादावपि तावापतेताम् ।

अज्ञानपूर्वकत्वानुपपत्तेरिति । इष्टतावच्छेदकप्रकारकज्ञानमन्तरेण प्रवृत्तेरनुपपत्तेरिति भावः । अगृहीतविवेके ग्रहणस्मरणे सम्भूय व्यवहारं जनयतः प्रत्येकं वा ? नाद्यः ज्ञानयोरयौगपद्यात् । न द्वितीय इत्याह—न हि रजतेति । विशेष्यविशेषणभावानापन्नरजतमात्रेत्यर्थः । स्मरणमिति । ग्रहण-

## भामती

इदंकारास्पदाभिमुखी खलु रजतार्थिनां प्रवृत्तिरित्यविवादम् । कथं मिदंकारास्पदे प्रवर्तेत । यदि तु न तदिच्छेत् । अन्यदिच्छत्यन्य तीति व्याहतम् । नचेदिदंकारास्पदं रजतमिति जानीयात्कथं रज तदिच्छेत् । यद्यतथात्वेनाग्रहणादिति ब्रूयात्स च प्रतिवक्तव्योऽथ त्वेनाग्रहणात्कस्मान्नोपेक्षेतेति । सोऽयमुपादानोपेक्षाभ्यामभिमत माणश्चेतनोऽव्यवस्थित इदंकारास्पदे रजतसमारोपेणोपादान एव स्थाप्यत इति भेदाग्रहः समारोपोत्पादक्रमेण चेतनप्रवृत्तिहे तथाहि—भेदाग्रहादिदंकारास्पदे रजतत्वं समारोप्य, तज्जाती पकारहेतुभावमनुचिन्त्य, तज्जातीयतयेदंकारास्पदे रजते तमनु तदर्थी प्रवर्तत इत्यानुपूर्व्यं सिद्धम् । नन्व तटस्थरजतस्मृतिरिदं स्पदस्योपकारहेतुभावमनुमापयितुमर्हति; रजतत्वस्य हेतोरपक्षधर्म एकदेशदर्शनं खल्वनुमापकं न त्वनेकदेशदर्शनम् । यथाहुः ज्ञातसंबन्धस्यैकदेशदर्शनादिति । समारोपे त्वेकदेशदर्शनमस्ति । त

## प्रकाशः

मपि तथैव शुक्तिज्ञानस्यापि रजतविषयकत्वे तदिच्छाविरहेण तदर्थिप्र पपत्तेस्तुल्यत्वात् । अन्यदिच्छतीति । कृतीच्छयोः सामानाधिकरण्येन विषयकत्वेन च कार्यकारणभावादितिभावः । अतथात्वेनेति । पुरोवर्ति जतत्वेनाग्रहणाद्रजतार्थिनस्तत्रेच्छा ततः प्रवृत्तिरित्यर्थः । इदं पुरोवर्ति रणाद्युपकारक रजतत्वात् सम्प्रतिपन्नरजतवदित्यनुमाय प्रवर्त्तेत इत्य तथाहीति । आनुपूर्व्यं क्रमः । यथा सत्यरजतज्ञानस्थले उपकारकत्वम प्रवर्त्तते तथेत्यर्थः । यस्मिन् पक्षात्मके देशे सिषाधयिषा तस्मिन् देशे हेतुः चेत्तदा तत्र भवत्यनुमितिर्न तु पक्षसम्बन्धित्वेन हेतोरग्रहणेऽप्यनु रित्याह—एकदेशदर्शनमिति । एकदेशस्य व्याप्यव्यापकयोरेक याप्यस्य हेतोर्दर्शनमनुमापकं न तु तदभावे इत्यर्थः । लिङ्गविशिष्टस्य लि पक्षस्यैकदेशो यल्लिङ्गं तस्य पक्षे दर्शनं भवत्यनुमापकं न तु तदभावे वा । शाबरभाष्यवाक्यमुदाहरति—यथाहुरिति । ज्ञातसम्बन्धस्येत्यादि ज्ञातः सम्बन्धः साध्यसाधनयोर्व्याप्तिलक्षणो येन तादृशस्य पुरुषस्य, ए

## भामती

मेतद्विवादाध्यासितं रजतादिज्ञानं, पुरोवर्तिवस्तुविषयं, रजताद्यर्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद्यदर्थिनं यत्र नियमेन प्रवर्तयति, तज्ज्ञानं तद्विषयं; यथोभयसिद्धसमीचीनरजतज्ञानं, तथाचेदं तस्मात्तथेति ।

## प्रकाशः

दर्शनात् लिङ्गविशिष्टस्य पक्षस्य य एकदेशो लिङ्गं तस्य पक्षे दर्शनादनुमितिरिति तदभिप्रायः । एवं चाख्यातिवादिमते रजतत्वस्य हेतोरपक्षधर्मत्वात् तेनोपकारकत्वानुमित्यसंभवात रजतार्थिप्रवृत्त्यनुपपत्तिरिति सिद्धम् । ननु समारोपपक्षेऽपि रजतत्वस्य पक्षधर्मत्वाभावस्तुल्य एवेति शङ्कामपनुदति—**समारोपे त्विति** । स्वरूपसत्तया लिङ्गं नानुमापकमपि तु पक्षधर्मिकं लिङ्गज्ञानम्, तच्चान्यथाख्यातिपक्षे भ्रमात्मकमस्त्येवेति नानुपपत्तिः, भ्रमानङ्गीकर्तृणां भवतांमते तु हेतुज्ञानं पक्षे नास्तीत्यनुपपत्तिरेव, सिद्धान्ते च प्रातिभासिकेन तादात्म्येन पुरोवर्तिनि धर्मिणि रजतत्वमप्यस्त्येवेति न काचिदनुपपत्तिः । इदं रजतमिति भ्रमस्थले हि शुक्तौ रजततादात्म्यमिव रजतत्वस्यापि तादात्म्यं प्रवृत्त्यनुरोधात् कल्प्यते, पुरोवर्तिधर्मिकरजतार्थि वृत्तिं प्रति पुरोवर्तिधर्मिकरजतत्वप्रकारकज्ञानस्य हेतुत्वादिति भावः । **रजतार्थिन** इत्यादि फलज्ञान मप्युपाये प्रवर्त्तकं भवति आभरणादिरूपोपकारश्चात्र फलं तज्ज्ञानं रजतादिरूपोपाये प्रवर्त्तयतीति रजतार्थिप्रवृत्तिजनकत्वमुपकाररूपस्य फलस्य ज्ञानेऽप्यस्ति नास्ति च तत्र पुरोवर्त्तिविषयकत्वमित्यनैकान्तिको हेतुरतो नियमेनेत्युक्तम् । तथा च फलस्य नानोपायसाध्यत्वात्प्रतिग्रहादिनाऽपि आभरणादिरूपफलप्राप्तिसंभवान्न तज्ज्ञानं रजतार्थिनो नियमेन प्रवर्त्तकमतो न व्यभिचारः । नन्वेवं फलज्ञानमिवोपायज्ञानमपि न नियमेन प्रवर्त्तकम् उपायस्यापि नानाविधत्वेन प्रतिग्रहादिनाऽपि रजतादेः प्राप्तिसम्भवात्, तथा च हेतोरसिद्धिरिति चेन्न, इष्टसाधनत्वव्याप्यरजतत्ववदिदं रजतमित्याकारकस्य रजतज्ञानस्य पक्षत्वात् हेतोस्तत्र सत्त्वाच्चासिद्धिविरहादिति । नियमेन प्रवर्त्तकत्वं हट्टस्थरजतस्मरणस्यापि कस्यचिदस्ति नच तत्र पुरोवर्त्तिविषयकत्वमस्तीति व्यभिचारं वारयितुं पुरोवर्तिनीत्येतदर्थकं तत्रेत्युक्तम् । नियमेन प्रवर्तकत्वं तु प्रवृत्त्यसाधारणकारणत्वम्; तच्च प्रवृत्तिप्रागभावेऽप्यस्तीति तत्र व्यभिचारं निवर्त्तयितुं 'रजतार्थिन' इत्युक्तम् । तथा चेच्छाधीना प्रवृत्तिकारणता लभ्यते, नच सा तत्प्रागभावेऽस्तीति न व्यभिचारः । प्रवृत्तिश्चात्र शरीरक्रिया-

साधारण्यापाररूपा । तस्मात्तथेति । तथा च न भेदाग्र-
निर्वाहस्तस्माद्विशिष्टज्ञानमुपेयमेव ।

## विकासः

तस्मात्तथेति । इदं पुनरिहावधेयम्—पुरोवर्तिनि रजतार्थिप्रवृत्तिस्थले च्छिन्नविशेष्यताकतादात्म्यसम्बन्धावच्छिन्नरजतत्वावच्छिन्नप्रकारताकज्ञानत्वेन तादात्म्यादिना रजतत्वप्रकारताकज्ञानत्वेन वा कारणत्वं भ्रमप्रमासाधारणमन्य-दिवादिभिर्वक्तव्यम्, अख्यातिवादिभिश्च इदन्त्वप्रकारकनिश्चयविशिष्टरजतत्वप्र-यकालीनरजतभेदग्रहाभावत्वेन कारणत्वं वाच्यम्, वैशिष्ट्यञ्चैकज्ञानावच्छि-त्वसम्बन्धेनेत्यख्यातिवादिनां व्यक्तं गौरवम् एवमुक्तनिश्चययोर्विशेष्यविशेषणभाव-नाविरहप्रयुक्तं त्वतितरामेव गौरवम् । एवं भेदाग्रहादेर्विशिष्टज्ञानकारणत्व-जायमानं विशिंष्टज्ञानं भ्रमात्मकमेव स्यात्तद्दोषमित्तद्वारणाय इदं रजतमिति-प्रतिप्रबन्धकत्वमपि इदन्त्वप्रकारकनिश्चयविशिष्टरजतत्वप्रकारकनिश्चयत्वेन स्वी-क्षणीयम्, वैशिष्ट्यं चानुपदोक्तेन सम्बन्धेनेत्यतितमां गौरवं लाघवान्वेषिणां प्राम-नचेदं रजतमिति ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावमुपेत्य विशिष्टज्ञान-वाख्यातिवादिनामपि प्रवृत्त्यादिव्यवहारजनकत्वं शक्यते स्वीकर्त्तुम् एक-विषयतयोर्निरूप्यनिरूपकभावस्यानुभवसिद्धत्वात्, अन्यथा 'शोभनः पटः गृ-त्यादिज्ञानद्वयीयविषयतयोरपि निरूप्यनिरूपकभावापत्त्या पटार्थिनो गृहादौ प्रवृ-त्तप्रवृत्तिप्रसङ्गः एवं बहुतरव्यवहारविप्लवश्च स्यात् पूर्वोक्तविशिष्टज्ञानाप्रतिबन्धक-दवस्थ्यं च !

किञ्च शुक्तौ पुरः स्थितायां नेदं रजतमिति भेदाग्रहे रङ्गे च पुरोवर्तिनि नेदं-गृहीतभेदे शुक्ताविव रङ्गेऽपि रजतार्थिप्रवृत्तिप्रसङ्गः रजतभेदग्रहाभावघटितावा-सत्त्वादतस्तदुद्देश्यकरजतार्थिप्रवृत्तिं प्रति तद्विशेष्यको यो रजतभेदग्रहस्तदभाव-वाच्यम्, तथा च प्रमास्थले भवन्मते रजतविशेष्यकरजतभेदग्रहस्याप्रसिद्धया त-भावात्, प्रमास्थले विशिष्टबुद्धित्वेन तदतिरिक्तमेव कारणत्वं वाच्यं तत्रापि प्रवृत्तौ व्यभिचारवारणायाव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ नि-द्विविधकारणत्वमुपगच्छतां भवतामख्यातिवादिनामतितमां गौरवं केन निवार्यं-तु विशिष्टज्ञानत्वेनैकमेव भ्रमप्रमासाधारणं कारणत्वमित्यत्यन्तं लाघवं मुक्त-

नचानन्तविशिष्टज्ञानातत्सामग्री-तद्ध्वंसप्रागभावादयश्च कल्पनीया इति विशिष्टभ्रमवादिनामपीतिवाच्यम् कारणत्वग्रहसमयेऽवच्छेदक.पस्थिते-प्रमास्थलगृहीतविशिष्टज्ञानत्वस्य भेदग्रहाभावत्वस्य चोपस्थितौ दकत्वमितिविमर्शे तदानीमनावश्यकतया तेषामस्मत्पक्षे प्रदर्शितगौरवस्याभावात्

विकासः

लाघवेन हि विशिष्टज्ञानत्वस्यावच्छेदकत्वे गृहीते पश्चाद्दृश्यमानस्याप्यसन्मते गौरवस्य भवत्प्रदर्शितस्य फलमुखत्वेनादोषत्वात् उपायान्तराभावेन सोढव्यत्वाच्च । अपि च नेदं रजतमिति ज्ञानेन व्यवहार एव बाध्यते न तु भ्रमस्तस्यासिद्धेरित्यपि भवत्सिद्धान्तोऽयुक्तः, रजतं साक्षात्करोमीत्यनुव्यवसायसिद्धस्य रजतस्य स्मरणेनोपपादयितुमशक्यत्वात् बाधोपगमावश्यकत्वात् । अन्यच्च पुरः स्थिते रजते दोषवशात् यत्र नेदं रजतमितिधीस्तत्रापि प्रवृत्तिप्रसङ्गः भ्रमभीरुणा भवता रजतभेदाग्रहाभावस्य तत्रावश्यं वक्तव्यत्वात्, तस्मान्न भेदाग्रहमात्रेण निर्वाहोऽतस्तज्जन्यो भ्रमोऽवश्यमङ्गीकार्य इति विवेचितञ्चैतदस्मद्गुरुभिर्गीतामधुसूदन्या गूढार्थतत्त्वालोके ।

इदमपिचविचारमर्हति 'ह्रदो वह्निमान्, इदं ज्ञानं भ्रम इत्याप्तवाक्यस्य प्रामाणिकत्वे भ्रमोऽवश्यमुपेयः, अप्रमाणिकत्वे च स्वजन्यज्ञानस्याप्रामाणिकत्वमन्तरेण वाक्यस्याप्रामाणिकत्वमसम्भवीत्यतोऽपि भ्रमोऽङ्गीकार्य इत्युक्तप्रायम् । एवं प्रतिबिम्बविभ्रमोऽप्यख्यात्या निर्वोढुमशक्यः भवति हि जपाकुसुमादेरग्रहणेऽपि तत्सन्निहितस्य स्फटिकस्य 'लोहितः स्फटिकः' इति ग्रहणम् । तत्र न प्रत्यक्षात्मकं ज्ञानद्वयं लोहितेनासन्निकर्षात्' नापि लोहितस्य तत्र स्मरणम्, सादृश्यादेरुद्बोधकस्याभावात् कस्यचिदुद्बोधकत्वकल्पनेऽपि प्रतिबिम्बग्राहकयन्त्रादिना लौहित्यविशिष्टस्य स्फटिकस्य ग्रहणानुपपत्त्याऽवश्यं तत्रानिर्वचनीयं लोहित्यं स्वीकार्यमित्यभिहितमधस्तात् तस्मादनिर्वचनीयख्यातिमेव शोभमानां मन्यमानाः परीक्षकाः नाख्यातिं न वाऽन्यां काञ्चित्ख्यातिं मुहुरनाद्दतां प्रमोदमजनयन्तीं कामयन्ते ।

भामती

यच्चोक्तमनवभासमानतया न शुक्तिरालम्बनमिति, तत्र भवान्पृष्टो व्याचष्टां, किं शुक्तिकात्वस्य इदं रजतमिति ज्ञानं प्रत्यनालम्बनत्वं; आहोस्वित् द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्य । यदि शुक्तिकात्वस्यानालम्बनत्वम् । अद्धा; उत्तरस्यानालम्बनत्वं ब्रुवाणस्य तवैवानुभवविरोधः । तथाहि— रजतमिदमित्यनुभवन्ननुभविता पुरोवर्ति वस्त्वङ्गुल्यादिना निर्दिशति । दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्य-

प्रकाशः

अद्यमिष्टापत्त्या परिहरति—यदीति । द्वितीयं निषेधति--उत्तरस्येति । अङ्गुल्या निर्दिशतीति । एवं च रजतं पश्यामीति सार्वजनीनोऽनुभवोऽपि समर्थ्यत इति भावः । यच्चोक्तं समीचीनज्ञानहेतुभ्यो न मिथ्याज्ञानमुत्पत्तुमर्हतीति तत्राह—दृष्टंचेति । पचनमिति पाचकत्वमित्यर्थः । यथा च ज्ञानानां

तं केचित् अन्यत्रान्यधर्माध्यास इति वदन्ति। केचित्तु य
यदध्यासस्तद्विवेकाग्रह निबन्धनो भ्रम इति॥ अन्ये तु य

भामती

प्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम्; यथा दावाग्निदग्धानां वेत्र
जानां कदलीकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बहुअ
चनमिति। प्रत्यक्षबाधापहृतविषयं च विभ्रमाणां यथार्थत्वानुमानमा
सः, हुतवहानुष्णत्वानुमानवत्। यच्चोक्तं मिथ्याप्रत्ययस्य व्यभिचा
सर्वप्रमाणेष्वनाश्वास इति; तत् बोधकत्वेन स्वतःप्रामाण्यं नान्या
चारेणेति व्युत्पादयद्भिरस्माभिः परिहृतं न्यायकणिकायामिति

प्रकाशः

स्वभावतो यथार्थव्यवहारजनकत्वेऽपि दोषवशादयथार्थव्यवहारजनक
भवद्भिरास्थीयते तथैव यथार्थज्ञानजनकानामपीन्द्रियाणां दोषवशादयथा
ज्ञानजनकत्वमपि किं न स्यादितिभावः। प्रत्यक्षबाधेति। तथा च यथा
त्वानुमाने परोद्भाविते दुष्टसामग्र्यप्रसूतत्वमुपाधिरिति भावः। अपि च य
र्थत्वानुमाने विभ्रमत्वेन पक्षीकरणे तस्य स्वीकारापत्त्या स्वपक्षपातः, अय
र्थव्यवहारहेतुज्ञानत्वेन पक्षत्वे च ईश्वरज्ञानस्य कार्यमात्रं प्रति हेतुतया त
यथार्थत्वेन सिद्धसाधनम्। न चावच्छेदकावच्छेदेन साध्यतेति वाच्य
एवमपि हि सर्वस्यैव ज्ञानस्य विशेष्यांशे प्रमात्वेनान्यथाख्यातिवादिनां वे
न्तिनां च सिद्धसाधनम्। विशेष्यतावच्छेदकस्य हि विशेष्ये भासमान
तद्वति तत्प्रकारताकत्वरूपस्य प्रमात्वस्य विशेष्यांशे भ्रममात्रे सत्त्वात्। न
ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वादित्यनुमानं मानम्। मात्रपद
वर्त्यस्थायथार्थज्ञानस्य स्वीकारास्वीकाराभ्यां व्याहतत्वात्। एतेनायथार्थ
त्वाभावसाधनमपि निरस्तम्, भवन्मतेऽयथार्थज्ञानस्यैवासिद्धेरिति बोध
परिहृतं न्यायकणिकायामिति। अयं हि तत्रत्यग्रन्थाभिप्रायः—किमर्थाव्य
चारित्वं प्रामाण्यमेव उत प्रामाण्यहेतुः, अथ प्रामाण्यव्यापकम्! तत्र इदं
मित्यादावर्थव्यमिचारेऽपि विषयान्तरे घटादौ चक्षुरादीनां प्रमाजनक
कल्पत्रयस्य वक्तुमशक्यत्वात्। रजतादिभ्रमस्थले चक्षुरादावर्थाव्यभिचा
त्वाभावे हि तत्स्वरूपस्य प्रामाण्यस्य विरहः प्रसज्येत, एवं प्रामाण्यं प्रति हे
अर्थाव्यभिचारस्याभावे भ्रमस्थलेऽभावे तज्जन्यस्य प्रामाण्यस्य चक्षुरादौ विर
प्रसज्येत, प्रामाण्यव्यापकस्यार्थाव्यभिचारस्याभावे व्याप्यस्य प्रामा
स्याभावश्चक्षुरादौ प्रसज्येत, तस्मात् ज्ञानस्य स्वप्रकाशतया स्वगतं प्रामा

## शाङ्करभाष्यम्

यदध्यासस्तस्यैव विपरीतधर्मकल्पनाम् आचक्षते, इति ॥ सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति।

## भामती

नेह प्रतन्यते। दिङ्मात्रं चास्य स्मृतिप्रमोषभङ्गस्योक्तम्। विस्तरस्तु ब्रह्मतत्त्वसमीक्षायामवगन्तव्य इति, तदिदमुक्तम् 'अन्ये तु अत्राप्यपरितुष्यन्तः यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति।' यत्र शुक्तिकादौ यस्य रजतादेरध्यासः तस्यैव शुक्तिकादेः विपरीतधर्मकल्पनां रजतत्वधर्मकल्पनामिति योजना। ननु सन्तु नाम परीक्षकाणां विप्रतिपत्तयः प्रकृते तु किमायातमित्यत आह। सर्वथापित्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वचनीयतेत्यधस्तादुपपादितम् तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनाऽवश्यंभाविनीत्या-

## प्रकाशः

स्वत एव निश्चीयत इत्युत्सर्गः अनाश्वासस्तु बाधकप्रत्ययात्। सति चैवं यत्र बाधकं नास्ति तत्र स्वाभाविक आश्वासो विद्यत एवेति न काचिदनुपपत्तिरिति। नेह प्रतन्यत इति। इदमप्यालोचनीयम्——यथा भवताऽऽपादितोऽयं ज्ञानेऽनाश्वासः तथा प्रवृत्तिरूपे व्यवहारे एवायथार्थत्वमिच्छतां भवतां मतेऽस्माभिरप्यापाद्यमानमिममनाश्वासोन्मत्तसिन्धुरं सर्वामेवोच्चावचप्रवृत्तिकदलीं समूलमुन्मूलयन्तमुपदर्शितमौत्सर्गिकप्रामाण्यनिश्चयनिगडमपहाय कोऽन्यः शक्यो निवारयितुमिति।

अवगन्तव्य इति। 'अत्र प्रमुष्टतत्ताकज्ञानस्य स्मृतित्वमपि न निर्वहति। न ह्यनुभवसामग्र्यभावात्पारिशेष्येण स्मृतित्वम्, अनुमित्यादेरपि पारिशेष्येण स्मृतित्वापत्तेः इन्द्रियार्थसन्निकर्षव्याप्त्याऽनुभवसामग्र्यभावात्। सर्वानुमितिसामग्र्यभावो नानुमित्यादाविति चेत्? कथं पुनस्तत्तांशशून्यरजतादिज्ञानहेतुसामग्री नानुभवसामग्रीत्यवधारितमायुष्मता, पञ्चप्रमाणीकरणसामग्र्यभावादिति चेत्? चतुःप्रमाणीकरणसामग्र्यभावात् पञ्चमी प्रमा किं न पारिशेष्यात्स्मरणं त्वया व्यवस्थापि' इत्यादिकं खण्डनकारोक्तमप्यनुसन्धेयम्। योजनेति। अयं चान्यथाख्यातिवादः सिद्धान्त्यभिमतप्रथमाध्यासलक्षणोपपादनावसर एव विस्तरेणास्माभिर्निराकृतोऽतोनेह पुनर्निराक्रियते। भाष्येऽन्यथाख्यातिपक्षः स्वीकृत इति भ्रमं व्युदस्यन् विवृणोति-अन्यस्यान्यधर्मकल्पनेति। भाष्यस्थावभासपदस्य

## भामती

निर्वचनीयता सर्वतन्त्राविरुद्धोऽर्थः इत्यर्थः । अख्यातिवादिभिरका[illegible] सामानाधिकरण्यव्यपदेशप्रवृत्तिनियम स्नेहादिदमभ्युपेयमिति भावः न केवलमियमनृतता परीक्षकाणां सिद्धा, अपितु लौकिकानामपीत्याह-

## शाङ्करभाष्यम्

तथाच लोकेऽनुभवः–शुक्तिका हि रजतवदवभासत इति न पुना रजतमिदमिति शेषः। स्यादेतत्—– अन्यस्यान्यात्म[illegible] विभ्रमो लोकसिद्धः एकस्य त्वभिन्नस्य भेदभ्रमो न दृष्ट इति कुतो[illegible] दात्मनोऽभिन्नानां जीवानां भेदविभ्रम इत्यत आह–एकश्च[illegible] सद्वितीयवदिति । पुनरपि चिदात्मन्यध्यासक्षिपति–

## प्रकाशः

व्याख्यानंकल्पनोतसर्वतंत्रविरुद्धोऽर्थः सवतंत्रसिद्धोर्थः, यथा चक्षुरा[illegible] प्रमाणं रूपादिकं च प्रमेयं सर्वतन्त्रसिद्धं तथेत्यर्थः । यद्यप्यन्यथाख्यातिप[illegible] न्यस्यान्यात्मताऽनिर्वाचनीयेत्यसिद्धमेवं मतान्तरेऽपि तथापि तत्तन्मतमनुसर[illegible] रपि पूर्वोक्तदोषमनुद्धरद्भिर्दुराग्रहग्रहंपरित्यजद्भिरनिर्वचीयख्यातिरेवभवेदा[illegible] णीयेत्यभिप्रेत्य सर्वतन्त्राविरुद्धतोक्ता । अध्यासकरय मिथ्यात्व [illegible] प्रदर्शनपूर्वकमभिदधाति भाष्ये—शुक्तिका होति । बाधकप्रत्ययानन्तर [illegible] तत्र व्यवहारः शुक्तिका रजतवदवभासते न पुना रजतमिति । तेन पूर्व[illegible] विषयरजतस्य मिथ्यात्वं सिद्धयतीति भावः । कोऽयमध्यासो ना[illegible] दिनाऽध्यासाक्षेपस्य कृतत्वात्पुनस्तदाक्षेपकरणे पौनरुक्त्यमिमाशङ्क्य नुदति—पुनरपीति । आरोप्यसिद्ध्यसम्भवप्रयुक्तो हि अध्यासाक्षेपः [illegible] पर्यहारि, सम्प्रति प्रकारान्तरेण आत्मनोऽधिष्ठानत्वानुपपत्त्याऽध्यास आक्षि[illegible] इत्यतो न पौनरुक्त्यमिति भावः । अत्र 'अयमर्थ इत्यारभ्य तस्मिन्[illegible] विषयतद्धर्माणां देहेन्द्रियधर्माणां कथम्' इत्यतः प्राक्तनेन ग्रन्थेन सिद्धा[illegible] भिमतं ज्ञानस्य स्वप्रकाशत्वमात्मरूपत्वं चानूद्यत तस्मिन्नेतस्मिन्ना[illegible] नाध्यासः सम्भवतीत्यभिप्रायवान् पूर्वपक्षी प्रत्यवतिष्ठते इत्यवगन्तव्य[illegible] द्वितीयकल्पमेव सूचीकटाहन्यायेन तावन्निराकरोति—नचेदिति । प्र[illegible] इति पक्षे किं ज्ञानविषयतया प्रकाशते उत घटादिविषयकज्ञानाश्रयतया आ[illegible] स्वप्रकाशत्वेन, आद्येऽपि पक्षे किं स्वसमवेतज्ञानविषयतया स्वग्राह[illegible] आत्मान्तरसमवेतज्ञानविषयतया परग्राह्यत्वं वा ? तत्राद्यं निषेध[illegible]

## शाङ्करभाष्यम्

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्

## भामती

अयमर्थः । चिदात्मा प्रकाशते न वा ? न चेत् प्रकाशते, कथमस्मिन्नध्यासो विषयतद्धर्माणाम् । न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य वा तद्धर्माणां वा समारोपः सम्भवतीति । प्रतिभासे वा न तावदयमात्मा जडो घटादिवत् पराधीनप्रकाश इति युक्तम् । न खलु स एव कर्ता च कर्म च भवति, विरोधात्, परसमवेतक्रियाफलशालि हि कर्म, न च ज्ञानक्रिया परसमवायिनीति कथमस्यां कर्म, न च तदेव स्वं च परं च, विरोधात् । आत्मान्तरसमवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसंगः । एवं तस्य तस्येत्यनवस्थाप्रसंगः ।

स्यादेतत् । आत्मा जडोपि सर्वार्थज्ञानेषु भासमानोपि कर्तैव न कर्म, परसमवेतक्रियाफलशालित्वाभावात् चैत्रवत् । यथा हि चैत्रसमवेतक्रियया चैत्रनगरप्राप्तावुभयसमवेतायामपि क्रियाफलयां नगरस्यैव कर्मता परसमवेतक्रियाफलशालित्वात्, न तु चैत्रस्य, क्रियाफलशालिनोऽपि चैत्रसमवायाद् गमनक्रियाया इति । तन्न । श्रुतिविरोधात् ।

## प्रकाशः

न तावदिति । परसमवेतेति । दृश्यते च पाकानुकूलव्यापाररूपा क्रिया कर्तरि, पाकश्च तण्डुलादावतस्तण्डुलादेः कर्मत्वमिति । कथमस्यां कर्मेति । आत्मेति पूर्वेणानुषज्यते । विरोधादिति । ननूपाधिभेदेनैकस्यात्मनः कर्तृत्वं कर्मत्वं च न विरुध्येते इति चेन्न तथासति चैत्रः स्वं गच्छतीत्यापत्तेः कथन्तर्हि 'मामहं जानामि,' इत्यादिव्यपदेश इति चेत् ? देहान्तःकरणयोर्मध्ये एकस्य कर्तृत्वमपरस्य कर्मत्वमादाय न त्वेकस्यैवोभयमादायेति बोध्यम् । आत्मान्तरसमवेतज्ञानकर्मत्वरूपे आद्यस्य द्वितीयपक्षे तदात्मान्तरम् ज्ञेयमुताज्ञेयम् ? अन्त्ये तस्यैवात्मान्तरत्वेनाभिमतस्याज्ञेयस्यात्मत्वापत्त्या ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः, आद्ये तस्यापि ज्ञानान्तरग्राह्यत्वेऽनवस्थापत्त्या कस्याप्यात्मत्वं न व्यवतिष्ठेतेत्याह—आत्मान्तरेति । एतावत्पर्यन्तग्रन्थेन ज्ञानविषयतयेति प्रथमं पक्षं बौद्धीयं प्रतिक्षिप्य घटपटादिविषयकज्ञानाश्रयतयेति द्वितीयं पक्षमाश्रयतां प्राभा-

प्रकाशः

कराणां मतमुत्थापयति—स्यादेतदिति । यद्यपि तार्किकवैशेषिका
प्राभाकराणामात्मस्वरूपे ऐकमत्यम् तथापि ज्ञानस्य स्वप्रकाशत्वं वैशेषिका
स्तार्किकाश्च नानुमन्यन्त इत्यस्ति प्रकृते विशेषः । कर्त्तेवेति तथाच नैव
कर्तृत्वकर्मत्वे अतो न विरोधः ।

विकासः—

स्यादेतदिति । प्राभाकरा हि आत्ममनोयोगस्यात्मसाक्षात्कारहेतोर्ज्ञानमात्र
सत्त्वेन घटादिज्ञानेऽप्यात्मभानं तार्किकप्रकारेणापि निवर्त्तयितुमशक्यमतः सर्वत्रैव
भवत्यात्मनो भानम् । न चैवं चाक्षुषत्वादिभिर्मानसत्त्वस्य साङ्कर्यम् ? परस्परात्यन्ता
सामानाधिकरण्याभावात् । लौकिकत्वालौकिकत्ववदंशभेदेनैवोपपत्तौ सङ्करस्यात्रादोषत्वात्
गतजातौ हि सङ्कर्यस्यांशतो गवाश्वरूपैकव्यक्तिसंभावनाप्रसङ्गेन दोषत्वेऽपि प्रकृते
गुणे स्वीक्रियमाणायां जातौ तदभावेन बहुतरलाघवेन तत्र तस्यादोषत्वम् ।
गवाश्वरूपैकव्यक्तिजनकसामग्रीविरहेण तादृशव्यक्तेरनुपपत्तौ द्रव्यगतजातावपि तस्या
षत्वमेव । तथा च घटं जानामीत्यादिप्रत्ययात् घटादिज्ञानं कर्मतया
स्वस्वरूपमपि विषयीकुर्वदाश्रयतयाऽऽत्मानमपि विषयीकरोति अतश्च न व्यवसाय
र्थमनुव्यवसायोऽतिरिक्तोऽङ्गीकार्यः तस्य प्रदीपवत् स्वव्यवहारे सजातीयपरानपेक्ष
सर्वमेव ज्ञानं त्रिपुटीभानरूपं भवतीति सिध्यति ।

अथ यथा घटव्यवहारार्थं घटज्ञानमुपेयते तथा घटज्ञानव्यवहारार्थं घटज्ञान
स्वीकार्यं व्यवहारस्य व्यवहर्त्तव्यज्ञानसाध्यत्वादिति चेत् ? अतएव ज्ञानस्य स्वविषयक
स्वप्रकाशत्वमुपेयते सतिचैवं घटज्ञानस्यैव घटज्ञानज्ञानतयाऽनुपपत्तिविरहात्
व्यवहर्त्तव्यभिन्नत्वमपि व्यवहर्त्तव्यज्ञानविशेषणं देयं गौरवात् तथा च ईश्वरज्ञान
योगिज्ञानवत् प्रमेयमिति ज्ञानवच्च स्वेनैव स्वव्यवहारोपपत्तौ न ज्ञानान्तरकल्पनावकाश
नानुव्यवसायसिद्धिरपित्वेकस्मिन्नेव व्यवसाये व्यवसेयो घटादि; व्यवसाय आत्मा
भातीत्यभ्युपेयम् ।

ज्ञानस्यानुव्यवसायवेद्यत्वमुपगच्छन्तस्तार्किकाः प्रष्टव्याः येन मनःसंयोगेन घटप्रत्ययो
जन्यते तेनैवानुव्यवसायोऽपि, व्यवसायप्रत्यक्षरूपो जन्यते उत संयोगान्तरेणेति ! आद्ये
किं युगपदेव ज्ञानद्वयं जनयति मनःसंयोग उत क्रमेणेति । नाद्योऽनुव्यवसायं प्र
कर्मतया जनकस्य व्यवसायस्य स्वजन्यानुव्यवसायेन युगपदुत्पत्त्यसंभवात् , नापि क्रमेण
अक्रमात्कारणात् कार्यभेदक्रमयोगात् अन्यथा युगपदेव संप्रयुक्तेषु नानाविषयेषु युगपद्
ज्ञानजन्मप्रसङ्गात् । अस्तु तर्हि संयोगान्तरेणेति द्वितीयः पक्ष इति चेन्न- घटज्ञानोत्पत्ति
हि मनसि क्रिया ततो विभागस्ततः पूर्वसंयोगनाशस्तत उत्तरसंयोगोत्पत्तिस्तदधिम
जायमानः प्रत्ययः कथं तदानीमविद्यमानं पूर्वं ज्ञानं प्रत्यक्षीकर्त्तुं प्रभवेत् ! प्रत्यक्षे विषय
कारणत्वादिति प्रतिपेदिरे ।

## भामती

श्रूयते हि 'सत्यं ज्ञानमनन्तं ब्रह्मेति । उपपद्यते च, तथाहि—योयमर्थप्रकाशः फलं यस्मिन्नर्थश्च आत्मा च प्रथेते स किं जडः स्वयंप्रकाशो वा ? जडश्चेद्विषयात्मानावपि जडाविति कस्मिन् किं प्रकाशेताविशेषात्, इति प्राप्तमान्ध्यमशेषस्य जगतः । तथा चाभाणकः—'अन्धस्येवान्धलग्नस्य विनिपातः पदेपदे' । न च निलीनमेव विज्ञानमर्थात्मानौ ज्ञापयति चक्षुरादिवदिति वाच्यम् । ज्ञापनं हि ज्ञानजननं, जनितं च ज्ञानं जडं सन्नोक्तदूषणमतिवर्तेतेति एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्थानम् । तस्मादपराधीनप्रकाशा संविदुपेतव्या ।) स्वप्रकाशत्वम् ।

प्रकाशः—

प्राभाकरपक्षं खण्डयन् सिद्धान्तिपक्षमाश्रयते पूर्वपक्षी—तन्नेति । ननूक्तश्रुतौ ज्ञानाश्रय एव लक्षणया ज्ञानपदार्थोऽस्त्वित्याशङ्क्यां निराचिकीर्षुरात्मनो ज्ञानरूपतां सम्पादयति—उपपद्यते चेति । यदि श्रुत्या प्रतीयमानोऽर्थो युक्त्या बाध्येत स्यात्तदा स्वार्थात्प्रच्याव्यान्यथानयनं श्रुतेर्नत्वेवमस्तीतिभावः । प्रकाशोजड इति पक्षे किमर्थात्मनोस्तत एव प्रकाश उत तज्जनितज्ञानादिति विकल्प्याद्यं निराकरोति—जडश्चेदिति । जडत्वं ज्ञानवेद्यत्वं ज्ञानभिन्नत्वं वा । आभाणकः । लौकिकी गाथा । द्वितीयं निरस्यति—नचेति । निलीनम् अज्ञातम्, यथा चक्षुरादिकं स्वयमप्रकाशमानमेवार्थान् प्रकाशयति तथा जडेन अस्वयंप्रकाशमानेन, ज्ञानेनोत्पादितं ज्ञानमर्थमात्मानं च प्रकाशयतीत्यर्थः । निराकरणे हेतुमाह—ज्ञापनं हीति । चक्षुः संयोगादिना जायमानेन ज्ञानेन यदर्थात्मज्ञानं जन्यते तज्ज्ञानं यदि जडं तदा न विषयावभासोऽतो जगदान्ध्यं दूषणं न निवृत्तम्; यदि च तदप्यर्थात्मानौ ज्ञापयति तदेवं क्रमेणानवस्थेति भावः । अनवस्थेति यदि चेमामनवस्थामपाकर्त्तुं दूरं गत्वा कस्यचिज्ज्ञानस्य स्वयंप्रकाशत्वमुपगम्येत तदा किमपराद्धं प्राथमिकेन ज्ञानेनेति भावः ।

इदमपि च विचारमर्हति निलीनस्य ज्ञानस्य निश्चायकप्रमाणानवतारे तदस्तित्वस्यैवासम्भवः असता च ज्ञानेनार्थात्मज्ञापनासंभवोऽन्यथा खपुष्पेणापि मालादिकार्यं निष्पाद्येत चक्षुरादेस्तु कदाचिदनुमानादिप्रमाणग्राह्यतया भवति सत्त्वमतो न तत्रानुपपत्तिः अनवस्थितज्ञानपरम्परा तु विषयान्तरसञ्चारमात्रप्रसङ्गेन नोपगन्तुमर्हेत्यतः स्वप्रकाशत्वं ज्ञानस्यास्थेयमिति । उपसंहरति—

प्रकाशः

तस्मादिति ।अपराधीनप्रकाशेति । न परोऽपरः न तु परशब्दसमानार्थकोऽ परशब्दः । चैतन्ये न स्वस्य नापि परस्य ज्ञानस्य विषयत्वमित्येतादृश स्वप्रकाशत्व मभिमतं वेदान्तिनां नतु स्वविषयकत्वं बौद्धप्राभाकराभिमतं तत्, स्वस्मिन् क्रियाकर्मभावविरोधात्, नहि सुशिक्षितोऽपि नटवटुः स्वकीयं स्कन्धमधिरोढुमर्हति न चैवं तस्य तुच्छत्वं स्वतः सर्वदा भासमानत्वात्, सर्वकल्पनाधिष्ठानत्वात्, सक लदृश्यावभासकत्वाच्चेति । तदेवंविधस्वप्रकाश एवात्मा न तु तदाश्रयः, ज्ञानभिन्ने घटादिवज्जडत्वेन कल्पितत्वापत्तेः अद्वैतश्रुतिविरोधापत्तेश्च ।

अथैवं कथं घटमहं जानामीति प्रतीतिरितिचेच्छृणु स्वयंप्रकाशज्ञान रूपोऽप्यात्मा तत्तद्वृत्तिमदन्तःकरणविशिष्टः प्रमाता भ्रन्तः करणोपहितश्चात्मा साक्षीत्यभिधीयते ।अथवा ऽन्तःकरणोपहित आत्मा प्रमाता अविद्योपहित श्चात्मा साक्षीत्युच्यते एतस्मिन् द्वितीयस्मिन् पक्षेऽन्तःकरणस्य तेन तेन सुखदुःखादिरूपेण परिणामे तत्तदन्तः करणरूपावच्छेदकभेदेनैव साक्षिसम्ब न्धस्य तत्तत्सुखदुःखाद्यभिव्यञ्जकत्वस्वीकारेण न प्रमात्रन्तरस्य तत्तत्सुखादिप्रकाश प्रसङ्गः, तस्य तस्य चान्तः करणस्य चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटाद्याकारः परिणामो वृत्त्याख्यो भवति, एकदेशस्थितोपाधिद्वये उपधेय भेद प्रयोजकत्वस्य गृहाकाशतद्गृहवृत्तिघटाकाशस्थले सिद्धतया प्रमातृचैतन्यं घटाद्यवच्छिन्नं चैतन्यं तद्वृत्त्यवच्छिन्नं च चैतन्यमेकतामापद्यतेऽतस्तया वृत्त्या घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं नश्यति, अनावृतं च तच्चैतन्यं स्वावच्छेदकं घटादिकर्मापि आध्यासिकसत्तादात्म्यापन्नं भासयति, अन्तःकरणं तत्परिणामश्च वृत्त्याख्योऽतिस्वच्छः केवलेन साक्षिचैतन्येन भास्यतेऽतो भवत्यन्तः करणतद्वृत्ति घटादीनामपरोक्षता, तदेतदकारत्रयं भवति अहं घटं जानामीति भासक चैतन्यस्यैकरूपत्वेऽपि घटं प्रति वृत्त्यपेक्षत्वात्प्रमातृता अतिस्वच्छान्तःकरणतद्वृत्तिं प्रति तु वृत्त्यनपेक्षत्वात्साक्षिता । आत्मनो ज्ञानरूपत्वेऽपि घटज्ञानमुत्पन्नं विनि वृत्तमित्यादि प्रतीतौ चैतन्याभिव्यञ्जकवृत्तेः क्रियारूपाया उत्पत्तिविनाशाभ्यामेव चैतन्येउत्पत्तिविनाशावरोपितौ ध्वन्यवच्छेदेन शब्दस्येवेति ।

ननु किमर्थं वृत्तिभिन्नं दभिव्यङ्ग्यं ज्ञानमुपेयते गौरवग्रस्तमिति चेन्न, यतो वृत्तेरन्तःकरणपरिणामत्वेन जडतया वस्तुभासकत्वायोगादतिरिक्तज्ञानमुपेयम् सति चैवं यदीदं भवताऽऽत्ममनोयोगादिजन्यं ज्ञानमुपेयते तत्सर्वमस्मा न्मतेऽन्तःकरणपरिणामरूपा तथैव वृत्तिरिति तदंशे गौरवविरहः, योऽयं भवतामभ्युपेयते स एवास्माकं मते ज्ञानमिति कुतो गौरवम् प्रत्युत सत्ताया जातित्वस्य खण्डिततया एकस्यैव सद्रूपतया व्यवसित

## प्रकाशः

स्यात्मरूपतयाऽऽत्मनो ज्ञानस्य भेदाभावान्न वृत्त्यभिव्यक्तज्ञानस्यातिरिक्तस्य कल्पनं सर्वकल्पनाधिष्ठानस्य ब्रह्मरूपस्य तस्य सिद्धत्वादतिलाघवम् भवन्मते ज्ञानभिन्नस्यात्मनोऽसंख्यत्वाद्गौरवं दुर्निवारमेवेत्यलम्

## विकासः—

अपराधीनप्रकाशेति। यदत्र कश्चित् ज्ञानस्य स्वप्रकाशतायां प्रमाणसत्त्वे तद्वेद्यत्वमसति च तस्मिन् साधकाभावादेव न तत्सिद्धिरिति प्रललाप तन्न, प्रमाणजनितवृत्तिविषयत्वरूपस्य वेद्यत्वस्य सत्त्वेऽपि ज्ञानविषयत्वस्यास्वीकारात्।

अपि चेदमपि विचारपदवीमधिरोहति 'न तत्र सूर्यो भाति न चन्द्रतारके नेमा विद्युतो भान्ति कुतोऽयमग्निः' 'तमेव भान्तमनुभाति विश्वं तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतेः सर्वभासकस्य चैतन्यस्य स्वभानार्थं न स्वभास्यायाः वृत्तेरपेक्षा किंतु कल्पिताज्ञाननिवृत्त्यर्थं कल्पितस्यैव कल्पितविरोधित्वात् सुन्दोपसुन्दन्यायादिति।

इदमपि विचारमर्हति सर्वस्य प्रमाणप्रमेयात्मकस्य जगतः साधकः आत्मा कथं स्वाधीनसिद्धिकेन प्रमाणेन सिद्धः स्यात् प्रामाणात् पूर्वमेव हि स सिद्धः अन्यथाऽसिद्धप्रमातृकं प्रमाणमेव नात्मानं लभेत तदाह श्रुतिः 'विज्ञातारमरे केन विजानीयात्' तथा च प्रमाणाभावेऽपि स्वतः सिद्धस्य चैतन्यस्यात्मनो नासिद्धिरिति।

अस्मिंश्च स्वप्रकाशत्वे 'अयं घट एतद् घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात् पटवत्' इति चित्सुखाचार्योक्तं महाविद्यानुमानमपि मानम्। पक्षभिन्ने किञ्चित्साधयदेव यत् पक्षे साध्यं साधयत्यनुमानं तन्महाविद्यानुमानमित्युच्यत इत्यभिहितं प्राक् एतदपि प्रदर्शितमनुमानं कस्य चिदवेद्यत्वं साधयदेव पक्षे साध्यं साधयति। तथा हि एतद्घटान्यत्वविशिष्टस्य वेद्यत्वस्य यदनधिकरणमेतद्घटः तदन्यत्वस्य पटादौ प्रसिद्धत्वैतद् घटे तदैव सिद्धिः स्याद्यदि कश्चित्पदार्थो वेद्यत्वानधिकरणं स्यात् एतद्घटो वा एतद्घटान्यः स्यात् तत्रैतद्घटस्य स्वान्यत्वासंभवात् वेद्यत्वानधिकरणं किमपि यदायैव साध्यं पर्यवस्यति यच्च तदनधिकरणं तदेव ब्रह्म स्वप्रकाशमिति। नन्वस्त्वेतद्घटान्यत्वविशिष्टस्य वेद्यत्वस्यानधिकरणं ब्रह्म परन्तु घटोऽपि तथा तादृशान्यत्वस्य च सामान्याभावरूपतया पक्षे विरहाद् बाध इति चेन्न, एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य साध्यत्वात्। एवं हि सत्येतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं यद् ब्रह्म तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्यैतद्घटे सत्त्वान्न बाधः। अत्रैतत्पदादुपादाने घटान्यत्वविशिष्टवेद्यत्वानधिकरणं सर्व एव घटस्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदस्य परस्परं सर्वस्मिन्नेव घटे सत्त्वात् सिद्धिसाधनमतस्तद्वारणाय तदुपात्तम्। पक्षे चैदमपदानुपादाने एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणस्यैतद्घटस्य भेदो घटान्तरे वर्त्तत

## विकासः

एवेति सिद्धसाधनं विवक्षितार्थासिद्धिश्चेत्यनस्तदुक्तम् । न च वह्न्यनुमानवत्तानुमानस्य बाधितमेतदनुमानमिति वाच्यम्, तस्य प्रत्यक्षबाधितत्वेऽपि प्रकृतानुमाने बाधज्ञानस्य श्रुतिविरोधेन संदिग्धप्रामाण्यकतयाऽप्रामाण्यज्ञानास्कन्दितत्वेन प्रतिबन्धकत्वायोगात् घटादेरभावसत्त्वेपि व्यवहारकालेऽविद्यया भानात् शुक्तिरजतादिवत् प्रत्यक्षस्योपपत्तेश्चेति।

ज्ञानस्यानुव्यवसायगम्यत्वमुपगम्यास्वप्रकाशतामुरीकुर्वतां नैयायिकानां मतं मेव प्राभाकरमतोपपादने खण्डितम् । तस्मात् ज्ञानस्य स्वप्रकाशतैव मानसमाह्लादयति । स्थिते च ज्ञानस्य स्वप्रकाशत्वे तत्र ज्ञानविषयत्वाभावात् अप्रज्ञेयमित्यादिश्रुत्यनुगृहीतमात्मानो निर्गुणत्वमभिदधन्तः सिद्धान्तिनो विजयन्ते ।

नन्वास्तां संविदोऽपराधीनप्रकाशता आत्मा तु जडः 'ज्ञानभिन्नः' किं न स्यादिति संविदाश्रयत्ववादिनं प्रति आत्मनः स्वयंप्रकाशचैतन्यरूपतां साधयितुं भूमिकामारचयन्ति तथापीति । इदं पुनरिहावधेयम्—'अत्रायं पुरुषः स्वयं ज्योतिः' इत्यादि श्रुतिः स्वयंप्रकाशतां ख्यापयन्ती ज्ञानात्मनोरेकत्वमभिदधती अद्वैतश्रुत्यनुरोधं आत्मैव हि विषयोपाधिकोऽनुभवं इत्याख्यायते अविवक्षितविषयोपाधिसम्बन्धश्च न चात्मनः स्वप्रकाशत्वे सुषुप्तावपि स भासेतेति चेद् ? भासत एव तदानीमपि अप्रबोधे सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति स्मृतिरुपपद्यते । तथा हि स्वप्रकाश चैतन्यस्वरूप आनन्दः सर्वदा भासमानोऽपि जाग्रत्स्वप्नयोस्तीव्रवायुविक्षिप्तप्रदीप 'अहं मनुष्य' इत्यादिमिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते, सुषुप्तौ तु तदभावात् स्पष्टमेवावभासते । आवरणाविद्या तु ब्रह्मतत्त्वाकारमाच्छादयन्त्यपि स्वभासकं साक्षिणं नावृणोति अन्यथाऽविद्यैव निःसाक्षिका सती न सिद्ध्येत् तस्मात् सुषुप्तौ आनन्दरूप आत्मा भावरूपमज्ञानं चानुभूयेते जाग्रति स्मर्येते च । एतद् द्वयं च तदानीं वृत्त्यैवानुभूयतेऽन्तःकरणस्य तदानीं लयश्रवणात् प्रबोधे स्मरणं च तद्वृत्तिनाशरूपेण जन्येन वा संस्कारेणोपपद्यते तत्तांशस्तु प्रमोषान्न स्मर्यते इति बोध्यम् ।

नन्वेवमविद्याविशिष्टस्य सौषुप्तिकस्यानुभवितृत्वमन्तःकरणविशिष्टस्य जाग्रतः जीवस्य स्मर्तृत्वमिति वैयधिकरण्यमिति चेत् ? अत्राहुः विवरणप्रमेयसंग्रहकाराः 'जागरेऽप्यविद्याविशिष्टस्यैव स्मर्तृत्वम् जीवस्य स्वस्वरूपाभिलापेऽहं शब्द एव प्रयुक्तोऽहंशब्दस्य भवति तत्रोल्लेख' इति । वयं तु अविद्यापरिणामरूपस्य करणस्यापि सुषुप्तिभङ्गे 'प्रबोधे, पुनराविर्भवितुः स्मर्तृत्वे क्षतिविरहः उपादानकार्येऽपि प्राप्तेरित्यालोचयामः ।

नन्वस्तु सुषुप्तिकालीनस्य ज्ञानाभावस्यात्मनिष्ठस्य त्वक्संयुक्तेन मनसा संयुक्तविशेषणतया जाग्रदाद्यक्षणे प्रत्यक्षमेव न स्मृतिरिति चेन्न अभावप्रत्यक्षकारणस्य प्रतियोगितावच्छेदक प्रतियोगिज्ञानस्याभावात् ज्ञानाभावप्रत्यक्षानुपपत्तेः भावे वा ज्ञानसामान्याभावस्य

विकासः

सैवाभावात्कस्य प्रत्यक्षं स्यात् प्रत्यक्षे विषयस्यापि कारणत्वादिति।

अथ प्रदर्शिते सुखमहमस्वाप्समिति परामर्शे, 'स्मृतौ' सुखमित्यनेन दुःखाभावः नावेदिषमित्यनेन ज्ञानाभावश्च विषयोऽस्त्विति चेन्न, तयोः सुषुप्तौ विद्यमानयोरननुभवात्, अननुभूतयोस्तयोः स्मरणासंभवात् अभावस्य साक्षिभास्यत्वाभावात् तस्यानुपलब्धिप्रमाण-गम्यत्वात् अनुपलब्धेश्च नास्ति तदानीमवसरः प्रतियोगिनोर्दुःखज्ञानयोस्तदानीमस्मर-णात्। प्रतियोगिज्ञानं विनाऽनुपलब्धेरभावग्राहकत्वासंभवात् क्लृप्ताभावग्राहकसामग्रीतो विलक्षणसामग्रीस्वीकारे क्लृप्ताभावविलक्षणस्यैव विषयत्वौचित्यात् तज्ज्ञानस्य निर्विकल्प-कत्वे च तद्विषयस्य भावत्वमेवोचितम्। अभावस्य निर्विकल्पकवेद्यत्वानङ्गीकारात्। तथापि तयोरभावत्वोपगमे परिभाषामात्रत्वापत्तेः, अविद्याया भावत्वस्य व्यवस्थापयिष्य-माणत्वाच्च, तस्माद्विद्यमानोऽपि तदानीं दुःखाभावो ज्ञानाभावश्च नोक्तस्मृतौ विषय इति। 'आत्मा सुखरूपः सुखलक्षणत्वात् वैषयिकसुखवत् यत् यल्लक्षणवत् तत्तदात्मकं यथा सास्नावद् गवादि, इत्यनुमानेनापि आत्मनः सुखरूपता सिध्यति। अन्येच्छानधीनेच्छाविषय-त्वं हि सुखलक्षणम् तच्चास्त्येवात्मनि। तदुक्तं संक्षेपशारीरके—

"सर्वं यदर्थमिह वस्तु यदस्ति किञ्चित्पारार्थ्यमुज्झति च यन्निजसत्तयैव।
तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञास्तत्प्रत्यगात्मनि समं सुखताऽस्य तस्मात्॥"

एवम् आत्मा सुखम् अनौपाधिकप्रेमगोचरत्वात् यन्नैवं तन्नैवं यथा दुःखम्, इत्यनेनाप्यनुमानेनात्मनः सुखरूपता प्रत्याय्यते तदप्युक्तं तत्रैव—

"प्रेमानुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः।
प्रेयः श्रुतेरपि ततः सुखतानुमानं नैयायिकोऽपि न हगात्मनि निह्नुवीत॥

अत्रानुपाधिः अन्याप्रयुक्तः असुखात्मनि, 'सुखभिन्ने' स 'प्रेमा' प्रत्यगात्मनि निष्क-शङ्कारतत्साक्षिचैतन्ये, कृमेरपीत्यत्रापिशब्देन बहुलदुःखप्राणिनामप्यात्मनि दृश्यते प्रेम किमु वक्तव्यं विशिष्टानामिति द्योतितम्। कृमीणामपि दुःखपरिहारस्य धावनादिदर्शने-नास्त्येव दुःखे द्वेषः, स चात्मनि प्रेमाभावे नोपपद्यतेऽतः 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्' इत्यादिश्रुतिसिद्धाऽऽत्मनः सुखरूपता निराबाधैव नैयायिकादिभिरप्युपेतव्येति।

कथन्तर्हि सौषुप्तयोरननुभूतयोर्दुःखाभावज्ञानाभावयोर्जागरेऽवगम इति चेत्? अर्था-पत्येति ब्रूमः। दर्शितदिशा सौषुप्तमविक्षिप्तं सुखमनुभूय तदन्यथानुपपत्त्या तद्विरोधिनो दुःखस्याभावो जाग्रद्दशायां कल्प्यते। तथा परामृष्टस्य भावरूपस्याज्ञानस्यानुपपत्त्या तद्वि-रोधिनो ज्ञानस्याभावश्च कल्प्यत इति। नच भावरूपमप्यज्ञानं ज्ञानविरोध्येवेति तदानीं सुखादिभाने कथमज्ञानभानमिति वाच्यम्, अज्ञानं हि अन्तःकरणवृत्तिविशेषेणैव विरुध्यते नत्र विद्यावृत्त्या साक्षिचैतन्येन च, अन्यथाऽविद्याभानानुपपत्तेरिति गृहाण।

## विकासः

यदपि तार्किकाः सुषुप्तौ विद्यमानस्य ज्ञानाभावस्य जाग्रत्कालेऽनुमितिरित्याहुः तदपि न, अनुमितिकारणस्याभावात् सुषुप्तिकालरूपस्य पक्षस्यैवाज्ञानात्, पक्षतावच्छेदक- सुषुप्तिकालस्य ज्ञानविरहात् सुषुप्तिकालावच्छिन्नात्मपक्षकानुमानस्याप्यसंभवात्। एवं जाग्रत्कालः सुषुप्तिकालविशिष्टः जाग्रत्कालत्वात् मैत्रीयजाग्रत्कालवदिति सुषुप्तिकालानुमाने अव्यवहितोत्तरत्वं च साध्यतावच्छेदकः सम्बन्धः, नचाद्यजाग्रत्काले व्यभि- जाग्रत्कालोत्तरत्वस्य हेतुविशेषणत्वे तदसंभवात्। नचान्यदीयजाग्रत्कालोत्तरत्वस्य त- सत्त्वेन व्यभिचारस्तदवस्थ इति वाच्यम्, अन्यदीयसुषुप्तिमादाय साध्यस्यापि सत्त्वात्।

एवं प्रभातकालोऽयं पूर्वगृहीतरात्रियामानन्तरयामपूर्वकः प्रभातत्वात् सम्प्रति- पन्नप्रभातवदित्यनुमानेन सुषुप्तिकालमनुमाय तत्कालेऽहं ज्ञानाभाववान् ज्ञानसामग्रीरहित- अवस्थाविशेषवत्वाद्वेत्यनेनाप्यनुमानेन सौषुप्तस्य ज्ञानाभावस्यानुमानं च न संभवति लि- भावात्। नचोक्तसामग्र्यभावो लिङ्गं तस्यासिद्धेः, ज्ञानाभावेन सामग्र्यभावस्य त- ज्ञानाभावस्यानुमानमित्यन्योन्याश्रयापत्तेः। अवस्थाविशेषवत्त्वस्य च ज्ञानाभाव- हेतुसाध्ययोरविशेषात्। ज्ञानवत्त्वेनास्मर्यमाणत्वमपि न हेतुः संभवति अनुकूल- न्यत्वात् प्रत्यक्षादिज्ञानदशायामुक्तहेतोः सत्त्वेऽपि साध्यविरहनिश्चयात्, सुषुप्तावुपे- ज्ञानसत्त्वेऽपि संस्काराभावादिदानीमस्मर्यमाणत्वसिद्धौ साध्यविरहनिश्चये बाधकाभाव- तस्मात्सुषुप्तावपि भावरूपाज्ञानाद्यवभासकं साक्षिचैतन्यमस्तीति सिद्धम्। तथाच श्रुतिः 'यद्वैतन्न पश्यति पश्यन् वैतन्न पश्यति' 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशि- इत्यादिः स्वप्रकाशस्फुरणसद्भावं तन्नित्यतया दर्शयति।

अपि च सति प्रमाणं प्रवर्ततेऽसति वेति विवेचनीयम्—असति चेत्? अ- विशेषात् गगनकमलिनीमपि प्रमाणं गमयेत्, सति चेत्तर्हि न प्रमाणाधीना व- प्रमाणप्रवृत्तेः पूर्वमेव प्रमेयसत्ताऽभ्युपगमात्। सत एव वस्तुनः प्रमाणाधीनं भान- चेत्? अस्त्वनात्मन्यचेतने तथा प्रथा स्वयमेव भानस्वरूपे आत्मनि तु न ह्येवं भवि- तदाह श्रुतिः—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति।

किञ्चात्र भगवत्पादप्रतिपादिता मधूसूदनसरस्वत्या गीताटीकायामुद्धृतापि युक्तिरनुस- तथाहि— यत्र जिज्ञासोः संशयविपर्ययव्यतिरेकप्रमाणामन्यतममपि नास्ति तत्र तद्विरो- मस्तीति स्वीकार्यम्, अन्यथा त्रितयान्यतमापत्तेः। आत्मनि चाहं नाहं वेति न कस्यचित् न वा नाहमिति विपर्ययः नाप्यभावग्राहकेणानुपलब्धिप्रमाणेनाभावग्रहरूपा नाहं- व्यतिरेकप्रमा तस्मात्तत्स्वरूपप्रमा सर्वदाऽस्तीत्यभ्युपेयमतः सिद्धमात्मनः स्वप्रका- ज्ञानरूपत्वम्।

भामती

तथापि किमायत्तं विषयात्मनोः स्वभावजडयोः ? एतदायातं यत्तयोः संविदजडेति । तत्किं पुत्रः पण्डित इति पितापि पण्डितोऽस्तु, स्वभाव एष संविदः स्वयंप्रकाशाया यदर्थात्मसम्बन्धितेति चेत्, हन्त ! पुत्रस्यापि पण्डितस्य स्वभाव एष यत् पितृसम्बन्धितेति समानम् । सहार्थात्मप्रकाशेन संवित्प्रकाशो न त्वर्थात्मप्रकाशं विनेति तस्याः स्वभाव इति चेत्,

प्रकाशः

किमायातमिति । एकस्य स्वप्रकाशत्वमात्रेणापरस्य प्रकाशेऽतिप्रसङ्गादिति भावः । सम्बन्धो नियामक इत्यभिदधाति—एतदायातमिति । तयोरिति । अत्र षष्ठ्या सम्बन्धः प्रतीयते । स च साक्षेपत्वमात्रं सम्बन्धो नित्यसाक्षेपत्वं वा तदविनाभूतप्रकाशत्वं वा ? तत्राद्यं निराकरोति—तत्किमिति । अजडायामपि संविदि अर्थात्मसम्बन्धिन्यां नार्थात्मनोः प्रकाशमानतासिद्धिः पण्डितेऽपि पुत्रे पितुरपाण्डित्यवत् सम्बन्धस्यान्यदीयधर्माप्रापकत्वादित्यर्थः । न च विषयत्वमेव ज्ञानज्ञेययोः सम्बन्धः ? तस्यापि निरूपयितुमशक्यत्वस्याग्र्यणमेव वक्ष्यमाणत्वात् । तदभ्युपगमेऽपि न घटादेः प्रकाशमानत्वं ज्ञानधर्मस्य प्रकाशमानत्वस्य घटादावसम्भवात्, तथासति पुत्रगतपाण्डित्यस्य पितरि प्रसङ्गस्य जागरूकत्वादित्यवगन्तव्यम् । नच जपाकुसुमसान्निध्येन स्फटिकादावारुण्यप्रतिबिम्बदर्शनात् प्रकृतेऽप्यन्यदीयो धर्मोऽन्यमुपसंक्रमिष्यतीति वाच्यम्, तद्वदेव हि ज्ञानधर्मः प्रकाशमानत्वमर्थेऽप्याध्यासिकमेव स्यान्न वास्तविकमिति जितमद्वैतवादिनेति । द्वितीयं नित्यसापेक्षत्वसम्बन्धमाशङ्कते—स्वभाव इति । संविदो हि आश्रयविषयाभ्यां पारतन्त्र्यनियमात् स्वभावतस्तत्सम्बद्धत्वं, न त्वेवं पुत्रस्य नित्यसापेक्षत्वं पितुरभावेऽपि पुत्रस्य भावात् तथा चोभयोर्वैषम्यमित्यर्थः । पुत्रगतजन्यत्वस्यापि पितृगतजनकत्वेन नित्यसापेक्षत्वं समानमेव पितुरभावेऽपि तन्निरूपितजन्यत्वस्य पुत्रे विद्यमानत्वात् अन्यथा पितरि देवदत्ते मृते 'अयं देवदत्तस्य पुत्र' इति व्यवहारो न स्यादित्युत्तरयति—हन्तेति । अर्थात्मप्रकाशाविनाभूतप्रकाशकत्वसम्बन्ध इति तृतीकल्पं दूषयितुमाह—सहात्मार्थेति । अत्र संविदर्थात्मनां त्रित्वेऽपि अर्थात्मनो जडत्वेनैकीकृत्य संवित्प्रकाशोऽर्थात्मप्रकाशश्चेति द्वौ प्रकाशौ निर्दिष्टावित्याहुः कल्पतरुव्याख्यातार आभोगकाराः । योऽयं संवित्प्रकाशो यश्चार्थात्मनोः

## भामती

तत्किं संविदो भिन्नौ संविदर्थात्मप्रकाशौ ? तथा च न स्वयंप्रकाशा संवित् न च संविदर्थात्मप्रकाश इति । अथ संविदर्थात्मप्रकाशौ न संविदो भिद्येते, संविदेव तौ । एवं चेत्, यावदुक्तं भवति संविदात्मार्थौ सहेति तावदुक्तं भवति संविदर्थात्मप्रकाशौ सहेति, तथा च न विवक्षितार्थसिद्धिः ! नचातीतानागतार्थगोचरायाः संविदोऽर्थसहभावोऽपि । तद्विषयहानोपादानोपेक्षाबुद्धिजननादर्थसहभाव इति चेत्, अर्थसंविद इव हानादिबुद्धीनामपि तद्विषयत्वानुपपत्तेः । हानादि

## प्रकाशः

प्रकाशः तौ संविदः सकाशाद्भिन्नावभिन्नौ वेति विकल्प्याद्यं दूषयति—तत्किमिति । तथा च प्रकाशभिन्ना सती संवित् घटादिवदस्वप्रकाशा स्यात्! अर्थात्मप्रकाशयोश्च संविद्भेदेऽर्थात्मप्रकाशरूपा संविन्न सिध्येत्, किन्तु सार्थात्मप्रकाशयोर्ज्ञापिका स्यात् एवं सत्यर्थात्मप्रकाशयोरपि ज्ञेयतया जडत्वेन स्वतोऽप्रकाशमानत्वमेव उक्तप्रकाशयोर्ज्ञानं च तत्सहभावमात्रमवलम्बमानं न तत्प्रकाशौ प्रकाशयितुं कथमपि क्षमेतातस्तदपि ज्ञापकमेव स्यादित्यनवस्थाया अवस्थानं भवेदिति भावः । अभेदपक्षमुत्थापयति—अथेति । संविदोऽर्थात्मनोश्च प्रकाशावित्यर्थः । किं तर्हीत्यत आह संविदेवेति । निराकरोति एवं चेदिति । न विवक्षितार्थसिद्धिरिति । संविदभिन्नप्रकाशानङ्गीकारे संविदर्थात्मनां साहित्यमुक्तं स्यात् साहित्यसंबन्धमात्रेण च नार्थात्मनोः प्रकाशसिद्धिरिति पुत्रपाण्डित्यतुल्यतैवेत्यर्थः । सोऽयमर्थस्य प्रकाशमानतायामनुपयुक्तोऽपि संवित्सहभावो न सार्वत्रिक इत्याह—न चेति । अतीतादेर्बुद्धिस्तत्सहिता तस्मिन् हानादिबुद्धिजनकत्वात् वर्त्तमानबुद्धिवदिति शक्यतेऽनुमातुमिति शङ्कते—तद्विषयेति । तद्विषयाश्च ताः हानादिबुद्धय इति कर्मधारयः, नातो हानादीनां तद्विषयकत्वं विशेषणम्, हानादौ तद्विषयकत्वस्य विशेषणत्वे हि हानादिबुद्धीनामर्थविषयकत्वानुपपत्तिप्रदर्शकस्योत्तरग्रन्थस्यालग्नतापत्तिरतो बुद्धावेव तद्विशेषणम् । उक्तानुमाने बाधस्यातिस्फुटतया तमनभिधाय हेतौ तद्विषयकत्वविशेषणस्यासिद्धिमाह— अर्थसंविद इवेति । यथा अर्थसंविदः 'घटादिबुद्धेः' घटादिविषयकत्वं न सिद्धं तथा हानादिबुद्धी

भामती

जननाद्धानादिबुद्धीनामर्थविषयत्वम्, अर्थविषयहानादिबुद्धिजननाच्चार्थसंविदस्तद्विषयत्वमिति चेत्, तत् किं देहस्य प्रयत्नवदात्मसंयोगो देहप्रवृत्तिनिवृत्तिहेतुरर्थे इत्यर्थप्रकाशोऽस्तु। जाड्याद्देहात्मसंयोगो नार्थप्रकाश इति चेत् नन्वयं स्वयंप्रकाशोऽपि स्वात्मन्येव खद्योतवत्

प्रकाशः

नामप्यर्थविषयकत्वं न सिद्धं येन तत् विशेषणभावं भजेतेत्यर्थः। प्रथमं घट इत्यादिबुद्धिस्तदनन्तरं घटस्त्याज्यः, उपादेय इत्यादिबुद्धिस्तदनन्तरं घटादेस्त्याग उपादानादिकं वा भवतीति वस्तुस्थितिः। इत्थञ्च यस्याः 'घटस्त्याज्यः' इत्यतीतघटादिबुद्धेरनन्तरमतीतघटादौ हानादिकं जायते तां बुद्धिमिदंत्वेन पक्षीकृत्य इयं बुद्धिरतीतघटसंबद्धाऽतीतघटादौ हानादिजनकत्वात् इत्यनुमानेन यः संबन्धः सिद्ध्यति स एव तद्विषयत्वमित्याशयवान् प्रतिवादी विशेषणासिद्धिं परिहरति—हानादिजननादिति। एवं च हानादिबुद्धिजनकतयाऽतीतार्थज्ञानस्यार्थसहभावो निराबाधं सिद्ध्यति, स एव च विषयत्वमितिभावः। अर्थविषयप्रवृत्त्यादिजनकत्वस्यार्थविषयप्रकाशतानियामकत्वेऽतिप्रसङ्गं दर्शयन् पूर्वोक्तां विशेषणासिद्धिमेव सिद्धान्ती द्रढयति—तत्किमिति। अर्थविषयप्रवृत्त्यादिजनकत्वं यद्यर्थविषयप्रकाशतानियामकं स्यात्तदा देहनिष्ठः प्रयत्नवदात्मसंयोगोऽर्थे देहस्य प्रवृत्तिनिवृत्तिजनकोऽर्थप्रकाशः स्यादित्यतिप्रसङ्गेन पूर्वोक्तानुमानं दूषितं न सहभावं साधयितुं समोहत इति भावः। अर्थे इति। अत्र सप्तम्या विषयत्वमर्थः। ननु भवेदेतदेवं यदि तत्तदर्थविषयकप्रवृत्त्यादेर्जनकत्वमात्रं तत्तदर्थप्रकाशनियामकं भवेन्न त्वेवं किन्तु तत्तज्जनकप्रकाशत्वं न च तदस्ति जडरूपे देहप्रयत्नवदात्मसंयोगे इति नातिप्रसङ्ग इत्याशङ्कते—जाड्यादिति। निराकरोति—नन्वयमिति। अयमाशयः—संविदः स्वरूपभानेऽभेद एव क्लृप्तः प्रपञ्चस्तु न तदभिन्नोऽभ्युपेयते भवता येन सोऽपि भासेत, अतः प्रपञ्चं प्रति देहात्मसंयोगवदनवभासिकैव संवित् स्यात्। नचार्थविषयकप्रवृत्त्यादिजनकप्रकाशत्वं तत्तद्विषयकत्वरूपतत्तद्भाननियामकं, यतस्तत्तद्विषयकप्रवृत्त्यादिजनकप्रकाशत्वमस्तु प्रकाशे तत्तद्विषयकत्वं मास्त्विति व्यभिचारशङ्कां निवर्त्तयितुं नानुकूलतां कश्चित्तर्कः समाश्रयतेऽतो विषयत्वसाधकानुमानमनवकाशमिति तदुपजीव्यमतीतादिस्थलेऽर्थसहभावानुमानमपि न प्रादुर्भवितुमर्हतीति। नच तत्तद्विषयकत्वं यदि प्रकाशे न स्यात्तदा तत्तदर्थे

## भामती

प्रकाशः, अर्थे तु जड इत्युपपादितम् । न च प्रकाशस्यात्मनो विषयः;

### प्रकाशः

प्रवृत्त्यादिजनकप्रकाशत्वमपि न स्यादित्यनुकूलस्तर्कः शक्नोति समुत्थातुमिति वाच्यम्, प्रकाशे तत्तद्विषयकत्वाभावेऽपि तत्तदभिन्नत्वस्यैव तादृशप्रवृत्त्यादिजनकप्रकाशत्वव्यापकतया तत्तद्विषयकत्वाभावस्य निरुक्तप्रवृत्तिजनकत्वाभावासाधकत्वात् । गगनादिज्ञाने प्रवृत्त्याद्यजनके गगनादिविषयकत्वानुपपत्तिः सुवर्णादिज्ञाने तदुपष्टब्धमृत्तिकादेरप्युपादानजनके मृत्तिकादिविषयकत्वापत्तिश्च, तत्तदर्थविषयकत्वस्वीकारेऽपि तत्तदर्थभानासम्भवश्च सम्बन्धस्यान्यदीयधर्मासाधकत्वस्य पुत्रपाण्डित्यादिस्थले दर्शितत्वादिति । अर्थे तु जड इति । चैतन्ये स्वभिन्नस्याप्रकाशकत्वात्तदंशे जड एवेत्यर्थः । तस्मादर्थात्मसहभावमानेऽपि नार्थात्मप्रकाशः सम्भवतीत्यात्मस्वरूपमेव ज्ञानमास्थेयम् । विषयोऽपि तस्मिन् तादात्म्येनाध्यस्यते चेद् तदा सोऽपि भासेत नान्यथाऽतो विषयस्याखिलप्रपञ्चस्य ज्ञानेन सहाध्यासिकतादात्म्यं सम्बन्धोऽङ्गीकार्यः । नचैवं सर्वज्ञस्य ग्रहणप्रसङ्गः ? अविद्ययाऽऽवृतत्वात् । आवरणतिरोधानायैव हि वृत्तिरपेक्ष्यते, यस्य तु अन्तःकरणादेर्नावरणं तस्य यावदवस्थानं साक्षिभास्यत्वं भवत्येव । यथा चाध्यासिकस्य तादात्म्यस्य प्रकारताविशेष्यत्वादिरूपत्वं तथोपपादितं गौड ब्रह्मानन्दसरस्वती भिरद्वैतसिद्धेर्लघुचन्द्रिकायामिति · हप्रपञ्च्यते। नचैवं घटाभिन्नं यच्चैतन्यं तेन सह पटस्याभेदाद्घटपटयोरप्यभेदापत्तिस्तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति वाच्यम, यतोऽद्वैतवादिभिरेतादृशनियमो नाङ्गीक्रियते मानाभावात्, परस्परविरुद्धधर्मस्य घटत्वपटत्वादेर्विद्यमानत्वात् । यदि हि घटपटयोरैक्यव्यवहारः प्रादुरभविष्यदभविष्यत्तदोक्तनियमः, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्युपगमात् । किञ्चैतद्दूषणमपि प्रपञ्चस्यानिर्वचनीयतानेव द्रढयतीति का नो हानिरिति सूक्ष्ममीक्षणीयम ।

### विकासः

अर्थे तु जड इति । तस्मादाध्यासिकतादात्म्यमेव विषयत्वं ज्ञानविषययोः सम्बन्ध आस्थेयः । यत्तु पारमार्थिकमेव विषयत्वं ज्ञानज्ञेययोः सम्बन्धः, तच्च विषये स्वरूपेण ज्ञाने च निरूपकतया वर्त्तत इति सम्बन्धिद्वयनिष्ठत्वमपि तस्य नानुपपन्नम् , न हि एकेनैव सम्बन्धेनोभयनिष्ठत्वम्भवति मानाभावात् । एवं विषयित्वमपि सम्बन्धः शक्यतेऽभिधातुम्। तच्च ज्ञाने स्वरूपेण विषये निरूपकतयाऽवतिष्ठत इति परोऽभ्युपैति । स प्रतित्रकल्

## विकासः

यदत्र विषयत्वं सम्बन्धत्वेन कल्प्यते तत्किं सम्बन्धिद्वयातिरिक्तं तदनतिरिक्तं वा! आद्ये सम्बन्धिभ्यां सम्बद्धमेव तद् विषयत्वमेष्टव्यम्, अन्यथाऽतिप्रसङ्गात्। एवं तत्सम्बन्धोऽपि तथैव भवितुमर्हतीत्यनवस्थापातः। किञ्चैतत्पक्षे सम्बन्धिद्वयातिरिक्तं विषयत्वं स्वरूपसम्बन्धेन घटादौ वर्त्तत इति भवतोपगमात् घट इति ज्ञानविषयत्वस्य पटादिव घटादपि व्यतिरिक्तस्य घटेनेव पटेनापि कुतो न सम्बन्धः? घटस्वरूपमिव पटस्वरूपस्यापि विद्यमानत्वादिति सर्वमाकुलं स्यादित्यप्यालोचनीयम्। द्वितीये विषयत्वमिदं ज्ञानात्मकं विषयात्मकमुभयात्मकं वा स्यात्, आद्ये 'इदं रजतमिदं रङ्गम्' इति समूहालम्बनप्रमाया भ्रमत्वापत्तिः रङ्गरजतनिष्ठयोर्विशेष्यतयोरुक्तज्ञानात्मकत्वेनैकतया रङ्गत्वनिष्ठप्रकारतानिरूपितत्वस्य ज्ञानात्मकरजतनिष्ठविशेष्यतायाम्, एवं रजतत्वनिष्ठप्रकारतानिरूपितत्वस्य ज्ञानात्मकरङ्गनिष्ठविशेष्यतायामपि सत्त्वात्। एवं 'पर्वतो वह्निमान् महानसं धूमवत्' इति समूहालम्बनज्ञानं 'महानसं वह्न्यभाववत्, पर्वतो धूमाभाववान्, इति बुद्धयोः प्रतिबन्धकं स्यात् एकज्ञानात्मकविशेष्यत्वयोरेकतया महानसत्वावच्छिन्नविशेष्यतायामपि वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वस्य सत्त्वात्, पर्वतत्वावच्छिन्नविशेष्यतायामपि धूमत्वावच्छिन्नप्रकारतानिरूपितत्वस्य सत्त्वाच्च। द्वितीये संयोगसम्बन्धावच्छिन्नवह्नित्वाववच्छिन्नप्रकारत्वसमवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारत्वयोरेकवह्निनिष्ठयोरैक्यापत्त्या संयोगेन वह्निर्नास्तीति बुद्धिं प्रति समवायेन वह्निर्नास्तीतिबुद्धेः प्रतिबन्धकत्वापत्तिः एवं पर्वतत्वावच्छिन्नयोर्विशेष्यत्वप्रकारत्वयोः वह्नित्वावच्छिन्नप्रकारत्वविशेष्यत्वयोश्चैकत्वापत्त्या पर्वतो वह्न्यभाववानिति बुद्धिंप्रति पर्वतवान् वह्निरित्यस्यापि निश्चयस्य प्रतिबन्धकत्वापत्तिरिति। तृतीयस्तु पक्षोऽसम्भवादेव पराहतः। तदुक्तं गङ्गेशोपाध्यायैस्तत्त्वचिन्तामणौ सत्प्रतिपक्षप्रकरणे 'वस्तुनोऽद्वयात्मकत्वेन' इति। तस्मान्न ज्ञानज्ञेययोः कश्चित्पारमार्थिकः सम्बन्धः शक्यतेऽभिधातुमिति।

एतेन प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वरूपसम्बन्धविशेषो विषयत्वमित्यात्मतत्त्वविवेके योगाचारमतनिराकरणे उदयनाचार्योक्तमप्यपास्तम्, उक्तरीत्या विषयत्वस्य ज्ञानरूपतया विषयरूपतया वा निरूपयितुमशक्यत्वेन स्वरूपसम्बन्धरूपत्वासम्भवात्। पारमार्थिकविषयत्वस्यानभिमतत्वे तु आचार्याणामुक्तिरप्यादरणीयैव तैरद्वैतसिद्धान्तस्यैव तत्र तत्रोक्तत्वात्।

अत एव ज्ञानकर्मत्वमपि न विषयत्वम्। तद्धि न ज्ञानजन्यफलाधारत्वं फलं च ज्ञाततेति शक्यते मन्तुम्। ज्ञानं हि स्वासम्बद्धे ज्ञाततामुत्पादयति चेत्? सर्वत्रैव जनयेत्, स्वसम्बद्धे चेत्? तत्र यादृशेन सम्बन्धेन स्वसम्बद्धं स्यात् तादृश एव सम्बन्धो ज्ञानविषययोरस्तु. अलं ज्ञाततयेति। अपि चातीतादेरविद्यमानतया तत्र ज्ञाततोत्पादनासंभवान्न तस्य ज्ञानविषयत्वसम्भवः, तथा च विनैव ज्ञाततामतीतादौ गौणकर्मत्वादिनैव येन

विकासः

केनचिद्विशिष्टव्यवहारस्योपपादनीयतया प्रत्यक्षेऽपि ज्ञातताभिन्नेनैव केनचिद् व्यवहारोपपा... युक्तत्वात् ज्ञाततायां मानाभावः।

एतेन विषयो ज्ञाने स्वाकारमर्पयतीत्यतो ज्ञानाकारार्पणक्षमत्वं विषयत्व... सौगतमपि लक्षणं निरस्तम्, विषयो हि कस्मिन्नाकारमादधीत स्वसम्बद्धे स्वासम्बद्धे ज्ञाने ? नाद्यः सम्बन्धस्याद्याप्यनिरूपणात्, न द्वितीयोऽतिप्रसङ्गादिति। तत्र... पादानगोचरत्वमपि न तद्विषयत्वम्, अतादृशे गगनादौ विषयत्वानुपपत्तेः, गोचरशब्दा... र्थस्य दुर्निरूपत्वाच्चेति। यस्यां संविदि योऽर्थोऽवभासते स तस्या विषय इत्यपि... भासमानत्वस्याद्याप्यनिरुक्तेः। एवमन्यान्यपि विषयत्वलक्षणानि दुर्निरूपणीयान्येव।

किञ्च सर्वेष्वेव पक्षेषु ज्ञानविषययोर्यः सम्बन्धो विषयत्वादिः स तात्त्विक एव... पेयस्तत्तद्वादिभिः स केनचित्सम्बन्धेन सम्बध्यमानोऽसम्बध्यमानो वा विशिष्टव्यवहारं जनयेत् ? आद्ये सम्बन्धपरम्परायामनवस्थापातः, द्वितीये 'घट' इति ज्ञानविषय... पटादावप्यापत्तिरिति दोषस्य जागरूकत्वम्। तस्मात् आध्यासिकतादात्म्यमेव विष... मास्थेयम्, तस्याविद्यकतयाऽनुपपत्त्यादेरपि भूषणत्वेन दूषणानवकाश इति संक्षेपः।

भामती

ते हि विच्छिन्नदीर्घस्थूलतयाऽनुभूयन्ते, प्रकाशश्चायमान्तरोऽस्थू... ऽनणुरह्रस्वोऽदीर्घश्चेति प्रकाशते, तस्माच्चन्द्रेऽनुभूयमान इव द्वितीयश्चन्द्र...

प्रकाशः

अथास्तु प्रपञ्चस्य वास्तविकमेव ज्ञानरूपत्वमिति वदन्तं मस्तकन्यस्त... बौद्धहस्तमेकदेशिनं 'सम्प्रति सिद्धान्तिमतानुप्रविष्टो ध्यासं निराचिकीर्षुः पूर्व... पक्षी निराकरोति—नच प्रकाशस्येति। विषया न प्रकाशस्यात्मानः, न वस्तु... ज्ञानस्वरूपाः। अत्र तद्विलक्षणस्वभावत्वं हेतुमाह—ते हीति। प्रकाशत इति... तस्माद्विलक्षणस्वभावत्वान्न ज्ञानज्ञेययोर्वस्तुत ऐक्यम्। संविदः स्वप्रकाश... यामभेदस्य क्लृप्ततया विषयाणामपि संविदभेदे एव भवेद् भानं नान्यथा... चाभेदः काल्पनिकोऽपि भाननियामको विषयाणामभेदाभिव्यक्त्यर्थं च वृत्ति... क्ष्यते इत्युपसंहरति सिद्धान्तमतानुप्रविष्टः सिंहचर्मावृतः पूर्वपक्षी। तस्मादिति... अनिर्वचनीय इति। महाभाष्यकर्तुः पतञ्जलेरपि अनिर्वचनीयवाद एव सिद्धान्तः। तदुक्तं तेन परमार्थसारे—

'रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ?।  
तद्वद् द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ॥' इति।

## भामती

स्वप्रकाशादन्योऽर्थोऽनिर्वचनीय एवेति युक्तमुत्पश्यामः। न चास्य प्रकाशस्याजानतः स्वलक्षणभेदोऽनुभूयते। न चानिर्वाच्यार्थभेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति अतिप्रसङ्गात्। न चार्थानामपि परस्परं भेदः

### प्रकाशः

नन्वेकस्यैव सत्यत्वे नानाऽभावात् प्रत्यक्षादीनि प्रमाणानि निर्विषयाण्येव भवेयुः, एवं विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत; मोक्षशास्त्रस्यापि गुरुशिष्यभेदसापेक्षत्वात्तदभावे तदपि व्याहन्येत, कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति चेत्? न, सर्वेषामेषां प्रमाणप्रमेयव्यवहाराणां प्राग्ब्रह्मात्मत्वज्ञानादबाध्यतया व्यावहारिकसत्यत्वोपगमेनोपपादनात्, स्वाप्नव्यवहारस्येव प्राक् प्रबोधात् यावद्धि नसत्यात्मैकत्वप्रतिपत्तिः तावत् प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते, विकारानेव तु अहं ममेत्यविद्यया आत्मात्मीयभावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा, तस्मात्प्राग् ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः, यथा स्वप्ने उच्चावचान् भावान् पश्यतो जनस्य निश्चितमेव प्रत्यक्षाभिमतं ज्ञानं भवति प्राग्बोधात् तद्वदिति 'तदनन्यत्व' सूत्रे भगवता भाष्यकृतैव सर्वं व्युदपादीति।

एतावता प्रबन्धेन संविदः स्वप्रकाशत्वं विषयाणां च तादात्म्येन तदध्यस्ततया भानं व्यवस्थाप्य तस्या अद्वितीयब्रह्मात्मतासिद्ध्यर्थं प्रकाशभेदं निराकरोति **न चास्येति**। अयमाशयः—प्रकाशस्य स्वतो भेद उतोपाधिकृतः न तावदाद्यः सर्वेषामेव पुंसाम् 'अनुभवामि' इत्यनुभवांशे एकाकारताऽवभासेन भेदाप्रतीतेः। नचायमेकाकारप्रत्ययो जात्येकत्वप्रयुक्तः? लाघवेन व्यक्त्यैकत्वप्रयुक्तस्यैव मन्तुमुचितत्वात् ज्ञानस्य ब्रह्मरूपत्वात् तस्य चैक्यात्, जानाम्यनुभवामीत्याद्याश्रयत्वप्रतीतिस्तु ज्ञानाभिव्यञ्जकवृत्तिमदन्तःकरणस्य साक्षिचैतन्यरूपाऽतोनानुपपत्तिः, न चैवम् 'इच्छामि' इत्याद्यनुगतप्रतीत्या इच्छादीनामप्येकत्वापत्तिः? ममेच्छोत्पन्ना नष्टेत्यादिप्रत्ययेनेच्छाया एकत्वासिद्धेः, ज्ञाने उत्पत्तिविनाशानुभवस्य तु तदभिव्यञ्जकवृत्तिविषयत्वेनोपपत्तेः, इच्छायास्तु स्वयमेव वृत्तिरूपतया तदभिव्यञ्जकवृत्तेरेवासत्त्वेन स्वरूपेणैवोत्पत्तिविनाशयोग्यत्वात्। **आजानतः** स्वभावतः। उपाधिकृत इति द्वितीयं पक्षं निराकरोति—**न चेति**। नहीत्यर्थः।

प्रकाशः

स हि न वास्तवं भेदमापादयति तथासति घटमठाद्युपाधिकृत भेदोऽपि तदनुभूतमाकाशभेदमापादयेदिति भावः। अविद्योपाधिभूतार्थभेदस्य वास्तविकत्व एव हि तत्प्रयुक्तः प्रकाशभेदोऽपि वास्तविकः स्यात् स एव नास्तीत्याह —— नचार्थानामपीति।

विकासः

नचार्थानामपीति। एतेन—

न सा धीः क्वचिदप्यस्ति यत्र भेदो न भासते।
अत एव न तन्मानं यन्न भेदप्रमापकम्॥

इत्याद्यनल्पं जल्पन्तोऽसंख्यश्रुतियुक्तिविरुद्धं कल्पयन्तो गौरवमतितमां प्रदर्शयन्तोऽविचारितरमणीयत्राह्यविचारचारुरचनायामेव चमत्कृतिमाश्रयन्तस्तत्रैव सर्व मनांसि प्रेरयन्तो मन्दानममन्दं जयन्तः सर्वमान्यानां भगवद्गीतादीनां प्रमाणतामुरीकुर्वन्त तदुक्ताद्वैतमनाकलयन्तोऽद्वैतबोधिकाया अपि 'अस्थूलमनणु' इत्यादिश्रुतेः स्वारस्यमज यन्तः स्थूलादिभेदवत्त्वेन ब्रह्मप्रतिपादनपरतां समर्थयन्तो देहादितादात्म्यज्ञानस्य संसार तामुदीरयन्तो देहादिभेदज्ञानस्य मोक्षहेतुतां चाभिदधन्तो जीवब्रह्मणोर्भेदमेवोपपन्तो मिथ्यात्वसाधकप्रमाणं युक्त्याभासवाक्याभासैरप्रमाणीकुर्वन्तः भेदस्य पारमार्थिकतां गच्छन्तोऽन्ये निरस्ता वेदितव्याः। तथा हि यदि भेदज्ञानं मोक्षहेतुरभविष्यत् श्रुतेर्भेदे प्रामाण्यं व्यवास्थापयिष्यत्, न चेदमस्ति मोक्षहेतुः प्रमाणाभावात् 'आत्मा अरे द्रष्टव्यः' 'तरति शोकमात्मवित्' 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिभिः केवलात्मज्ञानस्यैव हि मोक्षहेतुत्वं श्रुतं न भेदज्ञानस्येति न भेदे श्रुतेस्तात्पर्यम्, नेत्येवकारेण वस्त्वन्तरविषयकत्वव्यवच्छेदात्, अस्थूलादि वाक्यं तु सर्वतो निष्कृष्ट स्वरूपं प्रतिपादयन्न भेदज्ञानस्य मोक्षहेतुत्वमभिप्रैति। नापि देहादितादात्म्यज्ञानस्य संसारहेतुत्वं येन तद्विरोधि भेदज्ञानं मोक्षहेतुर्भवन्न निवार्येत अपि तु ब्रह्माज्ञानस्य संसारहेतुत्वम्, समानविषयकयोरेव च ज्ञानाज्ञानयोर्विरोधित्वेन ब्रह्मविषयकनिर्विकल्प साक्षात्कारस्यैव मोक्षहेतुत्वं श्रुतिस्मृतियुक्तिभ्योऽवधार्यते। तथा हि 'तद्यथा वटबीजान्यमनेकान् स्वाव्यतिरिक्तान् वटान् सद्बीजानुत्पाद्य तत्र तत्र पूर्णं तिष्ठति एवमेवैषा तदव्यतिरिक्तानि परिपूर्णानि चेत्राणि दर्शयित्वा जीवेशाद्याभासेन करोति माया चाविद्या स्वयमेव भवति 'न तं विदाथ य इमा जजानान्युष्माकमन्तरं बभूव' 'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' 'अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितं मन्यमानाः' योऽस्माकमविद्यायाः पारं तारयसि, इत्याद्याः श्रुतयः।

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।'

इत्याद्याः स्मृतयः, संसारोऽज्ञानकार्यं ज्ञाननिवर्त्त्यत्वात् रज्जुसर्पवदित्यादयो युक्तयः प्रदर्शितप्रदर्शयिष्यमाणप्रपञ्चमिथ्यात्वसाधकबहुतरयुक्त्यालीमाश्लिष्यन्त्यः समुल्लसन्ति

विकासः

नाविदितं केषाञ्चिद्विपश्चिताम्। तस्मान्न देहादितादात्म्यज्ञानस्य संसारहेतुत्वम्। नापि च देहादिभेदज्ञानस्य मोक्षहेतुत्वं श्रुतं येन भेदस्य तात्त्विकताम् अभ्युपगच्छेम। नच 'द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च' 'द्वा सुपर्णा सयुजा सखाया, जुष्टं यदा पश्यत्यन्यमीशम्। इत्यादिश्रुतिर्जीवब्रह्मणोर्भेदं दर्शयन्ती तस्य तात्त्विकतायां मानतामासादयतीति वाच्यम्, सा हि 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' 'उपाधिना क्रियते भेदरूपः' इत्यादिश्रुतिभिर्निरवकाशत्वेन प्रबलाभिर्बाध्यमाना लोकव्यवहारसिद्धं भेदमादायोपपद्यमानोपास्योपासकभावं सम्पादयन्ती न जीवपरमात्मनोर्वास्तविकं भेदमभिदधाति 'द्वौ चन्द्रौ' घटाकाशमहाकाशौ' इत्यादिवद्द्विवचनोपपत्तेः, नहि लाघवानुगृहीताऽद्वैतश्रुतिर्व्यवहारसिद्धमपि भेदं तिरस्करोति; तथा सति वर्णानामपि भेदाभावेन वर्णपदसमुदायत्वरूपयोः पदवाक्यत्वयोरप्यसत्त्वप्रसङ्गेन वेदादेः स्वरूपमेव न सिद्ध्येत्, दर्शितश्चाचार्यैस्तात्त्विकभेदस्यानपेक्षितत्वम्।

नापि 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इतिश्रुतिर्भेदज्ञानस्य मोक्षहेतुत्वं प्रतिपादयन्ती भेदस्य सत्यत्वं व्यवस्थापयति, मुक्तेः पूर्वं सगुणं ब्रह्म विज्ञाय तदुपासनया क्रममुक्तिद्वारा परम्परयोपकारिकाया भेदबुद्धेर्लोकसिद्धाया अभिधानात्, अत एव प्रेरकत्वपृथक्त्वज्ञानस्य जोषहेतुत्वमुक्त्वाऽग्रे 'वेदविदो विदित्वालीना ब्रह्मणि तत्परा ये विमुक्तास्तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः' इत्येकत्वमेव वदन् वेदः 'एकधैवानुद्रष्टव्यम्' इत्यादिबहुतरश्रुतिसंवलितो भेदस्य सत्यत्वं निराकरोति।

अतएवोपदर्शिताया भेदबोधकश्रुतेः 'एकमेवाद्वितीयम्, योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः, ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्मवेद, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्, इत्यादिश्रुतिभिर्भेदपारमार्थिकत्वं प्रतिक्षिपन्तीभिरविरोधः।

एवं 'स्वर्गकामो यजेत' इत्यादिवाक्यप्रतीयमानः स्वर्गयागयोः कार्यकारणभावोऽपि व्यावहारिकं भेदमादायोपपद्यमानो न भेदस्य पारमार्थिकतां समर्थयितुं कौशल्यमाश्रयते तस्य दुर्निरूपत्वात्। तथाहि किं नाम भेदत्वम्? संसर्गाभावभिन्नाभावत्वमिति चेत्! न, भेदलक्षणे भेदप्रवेशेनात्माश्रयापत्तेः, एवं संसर्गाभावत्वमपि भेदभिन्नाभावत्वमेव वाच्यमित्यन्योन्याश्रयापत्तेश्च। एवं संसर्गाभावत्वान्योन्याभावत्वे अखण्डोपाधी इत्यपि न, अखण्डोपाधेर्द्रव्यादिष्वनन्तर्भावेण पदार्थान्तरतापत्त्याऽपसिद्धान्तापत्तेः।

अथाखण्डोपाधेः सामान्येऽन्तर्भावः? द्विविधं हि सामान्यम्, जातिस्वरूपमुपाधिस्वरूपं च। तत्रोपाधिर्द्विविधः सखण्डोऽखण्डश्च सखण्डश्चावच्छिन्नप्रकारताश्रयः। अखण्डस्त्वनवच्छिन्नप्रकारताश्रयः। तत्र सखण्डो द्रव्यादिष्वन्तर्भवति अखण्डश्च सामान्ये इति चेन्न, तावेतावुपाधी स्वस्माद्भिन्ने स्वाश्रये वर्तेते स्वाभिन्ने वेति विकल्पपराहतत्वात्, उपाधेः सामान्यात्मकत्वे मानाभावाच्च। नित्यमेकमनेकसमवेतं हि सामान्यम्, तच्च परमपरं चेति भवद्भाष्यकृता विभक्तम्, न तूपाधित्वजातित्वाभ्याम्; तथा चापसिद्धान्तः।

## विकासः

किञ्चाखण्डोपाधिनाऽनुगतव्यवहारोपगमे गतं गोत्वादिना, जातित्वाभावे एके-
पाधित्वं कल्प्यते इति चेत् ? कल्प्यताम्, निरङ्कुशत्वात् भवताम्, किमनेन फलतोऽविशेषा
उभयोरखण्डत्वेन लाघवस्यापि साम्यात् । जातौ व्यञ्जकनियमोऽस्ति विशेष इति चे-
न, प्रत्यक्षत्वादौ तदसम्भवात्, इन्द्रियजन्यत्वस्य तद्व्यञ्जकत्वे ईश्वरज्ञानस्य तदभावात्
व्यञ्जकस्याप्रत्यक्षत्वे व्यङ्ग्यस्याप्यप्रत्यक्षत्वेन इन्द्रियजन्यत्वस्याप्रत्यक्षतया प्रत्यक्षत्व-
प्रत्यक्षापत्तेश्च ।

नापि संसर्गान्योन्याभावत्वे स्वरूपसम्बन्धविशेषौ अनुगतव्यवहारानुपपत्तेः ता-
दात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं भेदत्वं भेदभिन्नाभावत्वं संसर्गाभावत्वमित्यत्र
अभावत्वप्रतियोगित्वयोर्दुर्निरूपत्वात् । द्रव्यादिभेदकूटवत्त्वमभावत्वमिति चेन्न, द्रव्यभेदा-
व्याप्तेः, नहि स एव द्रव्यभेदस्तस्मिन् द्रव्यभेदे वर्त्तते आत्माश्रयापत्तेः । न वा द्र-
भेदान्तरम् ? तस्यासिद्धेः तत्राव्याप्तिवारणाय पूर्वस्य द्रव्यभेदस्य वृत्तौ अन्योन्याश्रयापत्तेः
तदतिरिक्तस्य चोपगमे चक्रकानवस्थे प्रसज्येते । नाप्यखण्डोपाधिरभावत्वम् ? निरुक्तयु-

अत एव प्रतियोगित्वमपि नाखण्डोपाधि र्न वा स्वरूपसम्बन्धविशेषो निरु-
युक्तेः । किञ्चेदं घटाद्यभावप्रतियोगित्वं केन सम्बन्धेन स्वाश्रये घटादौ वर्तते इति वि-
रणीयम्—न तावत् स्वरूपसम्बन्धेन, यतोऽयं स्वरूपसम्बन्धः घटस्वरूपं प्रतियोगि-
स्वरूपं वा ! आद्ये घटस्येव पटादेरपि स्वरूपाविशेषात् घट इव पटेऽपि घटाभावप्रति-
गिताऽभिसरन्ती न शक्यते केनचिन्निवर्त्तयितुम्, घटपटयोरिदानीं भेदासिद्ध्या घ-
एव न पटे इत्यपि न शक्यतेऽभिधातुम्, द्वितीये तत्प्रतियोगित्वं स्वरूपेणैकस्मिन् घ-
वर्त्तमानं कथं घटान्तरे वर्त्तेत, नहि एकं वस्तु अनेकस्वरूपं भवितुमर्हति, अ-
नेकमेव घटाभावप्रतियोगित्वम्, अनुगतव्यवहारानुपपत्तेः । नापि सर्वेषु तादृशप्रति-
गित्वेषु, प्रतियोगितात्वमेकमनुगतव्यवहारनियामकम्, तस्यापि हि प्रतियोगित्वैः स-
स्वरूपसम्बन्ध एवावस्थीयते भवतेति कथमेकस्यानेकैस्तैः सह स्वरूपं सम्बन्धोऽवटेत-
पदोक्त एव दोषः ।। यदि च प्रतियोगितायाः स्वाश्रयेण सहान्य एव कश्चित्सम्बन्ध-
दा तस्याप्यन्य एव सम्बन्ध इति सम्बन्धपरम्परायामापतन्ती अनवस्था दुर्नि-
केन शक्या प्रतिरोद्धुम् । यदि वा विनैव सम्बन्धं प्रतियोगित्वं वर्त्तते इत्युं-
तदा घटाभावप्रतियोगित्वं घटादावपि प्रसज्येतासम्बन्धाविशेषात् ।

एवं घटाभावादौ प्रतियोगी घटादिर्विशेषणमुपलक्षणं वा ? आद्येऽतीताना-
तादिप्रतियोगिकत्वमभावे न स्यात्, अतीतादेरपि विशेषणत्वे पाकरक्तेऽपि घटे श्या-
त्वस्य विशेषणत्वापत्त्या इदानीमयं श्याम इति प्रतीतेः प्रमात्वापत्तेः । द्वितीये घ-
पलक्षितोऽभावो हि स्ववृत्तिप्रतियोगितासम्बन्धेन घटसम्बन्धी अभावः, तादृशश्च सम्ब-
उभयत्वावच्छिन्नप्रतियोगितात्मकोऽपि तेन च सम्बन्धेन घटोपलक्षितस्याभावस्य प्र-
योगिमद्देशेऽपि सत्त्वात्तत्रापि घटो नास्तीतिप्रतीतिप्रसङ्गः, प्रदर्शयिष्यमाणेनाभा-
वस्य विशिष्टवैशिष्ट्यावगाहित्वनियमेन घटादेरुपलक्षणत्वासम्भवश्चेति ।

## विकासः

इदमपि च विदाङ्कुर्वन्तु भवन्तः पारमार्थिकभेदमुपगच्छन्तोऽद्वैतश्रुतिं व्याकुलयन्तः ? योऽयं घटाद्भिन्नः पट इत्यादौ प्रतीयमानो भेदः स किं भिन्ने वर्त्ततेऽभिन्ने वा किं वोदासीने ? आद्ये तेनैव भेदेन भिन्ने तस्य वृत्तावात्माश्रयापत्तिः, भेदान्तरेण भिन्ने वृत्तौ भेदान्तरेऽपि तस्मिन्नेष पर्यनुयोगः पर्यवस्यतीति प्रथमस्य द्वितीयापेक्षायां द्वितीयस्य च प्रथमापेक्षायामन्योन्याश्रयं धावन्तं को निरोद्धुं प्रभवेत् । अग्रे धावने च चक्रकानवस्थे । नचामी अनवस्थिता भेदाः केषाञ्चिद्विपश्चितां कथमप्यनुभवपथमारोहन्ति येनेयमापाद्यमानानवस्थाऽऽस्थीयेतेति ।

अथ तद्भेदवति तस्य वृत्तौ को दोषः ? नहि विशेषणीभूते भेदे तस्य वृत्तिरङ्गीक्रियते येनायमात्माश्रयः स्यात्, नहि विशिष्टवृत्तिधर्मों विशेषणेऽपि वर्त्तते इत्यस्ति नियमः 'घटो रूपवान्' इत्यादौ व्यभिचारात् घटत्वे रूपाभावेऽपि घटे रूपस्य विशेषणत्वादिति चेन्मैवम्, रूपवति रस इत्यत्र रूपस्येव 'घटोरूपवान्' इत्यत्र घटत्वस्योपलक्षणताया एव हि चिन्तामणिकृत्सम्मतत्वेन तस्य विशेषणत्वोपगमेऽपसिद्धान्तापत्त्या उक्तव्यभिचारस्य भवता दर्शयितुमशक्यत्वात् तस्माद्भेदस्य विशेषणत्वे स्यादेवात्माश्रयः, भवति च विशिष्टवृत्तिधर्मस्य विशेषणांशे वृत्त्या विशेषणत्वव्यवहारो लौकिकानाम्; तदतिक्रमे विशेषणपदस्य पारिभाषिकत्वापत्तेः, अन्यथा दण्डिनं भोजयेत्यादौ दण्डादिरुपलक्षणमेवं 'सपुत्रो देवदत्तो भोजयितव्यः' इत्यत्रसपुत्रत्वं विशेषणमित्यादयो विश्वजनीना व्यवहारा बाध्येरन्, आधेयस्याधारतावच्छेदकत्वमनुभवविरुद्धं च, न हि देवदत्तविशिष्टे गृहादौ देवदत्तोऽवतिष्ठते तस्मात्तद्भेदवति तस्य वृत्तावात्माश्रयो युक्त एवेति ।

द्वितीये स्वतोऽपि स्वस्य भेदापत्त्या घटो घटाद्भिन्न इति व्यवहारापत्तिः । अथास्माभिर्भेदोपरक्ते भेदस्य वृत्तौ दोषाभावाद्भेदस्योपलक्षणत्वमेवास्थेयमत उदासीने इति तृतीयः पक्षः परिगृह्यत इति चेत् ? परिगृह्यतां नाम यत्रानिर्वचनीयतया न कवलीकृतः स्यात्, नच ततः परिरक्षितुं शक्यते; उपरक्तो ह्याश्रयः स च केन चित्सम्बन्धेन भवति । सम्बन्धश्चेह किं भेदस्वरूपमेव किं वा धर्मिस्वरूपं किं वोभयस्वरूपम् अथवाऽर्थान्तरम् ? एतेषु नैकमपि सम्भवति, तथाहि—एक एव घटत्वावच्छिन्नप्रतियोगिताको भेदः, सच यदा एकस्मिन् पटे स्वात्मकेन स्वरूपेण वर्त्तेत तदाऽन्यत्र कथं वर्त्तेत, तस्य हि स्वरूपमेकत्रैव पर्याप्तं तस्यानेकस्वरूपताया अप्रामाणिकत्वात् । किञ्च यदि घटभेदस्वरूपं पटेऽवतिष्ठेत तदा घटप्रतियोगिकत्वविशिष्टस्य भेदस्य पटस्वरूपत्वमिव पटप्रतियोगिकत्वविशिष्टस्य भेदस्यापि घटस्वरूपत्वं केन वार्येत भेदस्य परस्परं सत्त्वात् अतो घटोऽपि घटात्मन्येव प्रविष्टः पटश्च घटात्मनीति भेदप्रतीतिरेवाभेदेऽपि पर्यवस्यन्ती प्रपञ्चस्यानिर्वचनीयतामेव द्रढयति । नचाभावे घटादिप्रतियोगिकत्वमुपलक्षणम्, तद्रहितस्य तद्भेदस्य स्वरूपानिष्पत्तेः, तथापि तस्योपलक्षणत्वे घटप्रतियोगिकस्य भेदस्य पटस्वरूपत्वे सभेदः पटश्चैक एव पदार्थः पर्यवसितः । तथा च

## विकासः

पटेऽपि घटप्रतियोगिकत्वापत्त्या घटाद्भेदः पटस्येतिवत् घटात्पटस्येति व्यवहारापत्तिः। द्वितीये 'अन्योन्याभाववान् पटः' इत्याश्रयाश्रयिभावप्रतीतिर्बाध्येत स्वस्मिन्नाश्रयाश्रयिभावानुपपत्तेः सम्बन्धस्य भेदनियम्यत्वात् 'राहोः शिरः' इतिवद् भविष्यतीति चेत् ? तर्हि तद्वदेव सम्बन्धाभावे सम्बन्धप्रतीतिर्भ्रमरूपैव वाच्या, तथासति न वस्तुनो पटेऽन्योन्याभावसम्बन्धसिद्धिः। किञ्चायमन्योन्याभावः स्वाश्रयबुद्धिं कुत्रोत्पादयति किं भिन्ने किं वाऽभिन्ने ? इति घटकुट्यां प्रभातम्। यत्र विद्यते तत्रोत्पादयतीति चेत् ? कुत्र विद्यते, यत्र प्रतीयते इति समाधानं तु न युक्तं तस्यैवाधिकरणस्य पृच्छ्यमानत्वेनान्योन्याश्रयप्रसक्तत्वात्। तृतीये उभयात्मकस्यैकस्यासम्भवः। चतुर्थे तस्यापि सम्बन्धान्तरोपगमेऽनवस्थानमिति।

अपि च योऽयं 'घटो न पटः' इत्यादिप्रत्यये प्रतीयमानः पटादिप्रतियोगिको भेदः स घटादेः स्वरूपं धर्मो वा ? न तावदाद्यः एवं हि सति शुक्तौ दृष्टायां रजतभेदोऽपि दृष्ट एव स्यादिति न रजतादिविभ्रमः प्रादुर्भवेत्, घटादेः पटादिरूप प्रतियोग्यनपेक्षिततया तत्स्वरूपभूतस्य भेदस्यापि प्रतियोग्यनपेक्षितत्वप्रसङ्गात्। घटादेर्वा पटादिरूपप्रतियोगिग्रहं विना ग्रहणानुपपत्तेः। किञ्च पटप्रतियोगिकभेदस्य घटस्वरूपत्वे तद्विशेषणीभूतस्य पटस्यापि घटस्वरूपान्तर्भावापत्तिः, पटो हि न भेदस्योपलक्षणं निष्प्रतियोगिकभेदे प्रमाणागोचरत्वस्योक्तत्वात् न द्वितीयः अन्योन्याभावविशेषणीभूतस्य पटादेरपि घटधर्मत्वापत्तेः। एवमेव घटस्य पटस्वरूपत्वं पटधर्मत्वं च स्यात् परस्परं भेदस्य सत्त्वात् उक्तमेव पुनः पुनरावर्तते न भवति केषां चित्प्रत्ययः घटारूढःपटः पटारूढश्च घट इति तस्माद्दुर्निरूप एव भेद इति॥

नन्वेवं स्वक्रियाव्याघातवारणाय भवद्भिरपि परपक्षमाक्षिपद्भिर्ब्रह्मवादिभिर्भेदोऽभ्युपगन्तव्य एवेति चेत् जगदनिर्वचनीयत्ववादिनो ब्रह्मैवैकं परमार्थतत्त्वमुपदर्शितोऽस्मान् प्रति पर्यनुयोगानवकाशात् न हि वयं पारमार्थिकं भेदं प्रत्यादिशन्तोऽप्यविद्याविद्यमानदेहं भेदमपारमार्थिकमप्यपाकुर्मो येनैवमनुयुज्जेमहि, तदुक्तं खण्डनकृद्भिः, ममचानिर्वचनीयतैवप्रतीति-व्यवहारव्यवस्थापर्यनुयोगबाणवारणाय वज्रवारवाणायमाना विजयते मम ह्येवं दर्शने प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणं भवदपि जगत्तथासत्वोपगमेऽपि बाध्यमानत्वादनिर्वचनीयमिति अत्र पर्यनुयोगबाणः, प्रश्नरूपो बाणः 'वज्रवारवाणायमाना, वज्रस्य लोहस्य यो वारवाणः कञ्चुकस्तत्समानेत्यर्थः। इत्थंचानिर्वचनीयमपि भेदमास्थाय व्यवस्थाऽवतिष्ठत एवेति न भेदः पारमार्थिकः शक्यतेऽभ्युपगन्तुमिति।

अथैवं घटत्वादिकमपि तद्वति वर्तते तदभाववति वेति विकल्पस्य संभवात् घटत्वादेरपि प्रस्थीयते इति चेत् प्रस्थीयतां नाम धर्ममात्रेण का हानिरस्माकं जगदनिर्वचनीयमिति

## विकासः

ब्रुवतां परमार्थसदेकमद्वितीयब्रह्मतत्त्वमुपगच्छताम् । तदुक्तम्—भेदं खण्डयद्भिरद्वैतं मण्डयद्भिः खण्डनकृद्भिः—

'बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम् ।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम्' ॥ इति ।

घटोऽयमित्यादयश्च व्यवहारा आविद्यकघटत्वादिभिरुपपद्यमाना न तेषां पारमार्थिकतां साधयितुमुत्सहन्ते ।

नन्वेवम् 'इदं सर्वं यदयमात्मा' 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतीः, एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञापयन्तीः कार्यकारणयोर्ब्रह्मप्रपञ्चयोरभेदं प्रत्याययन्तीश्च श्रुतीरवलम्ब्य सर्वाभिन्नं ब्रह्मेति वदतस्तवापि मते अभेदो भिन्ने ब्रह्मणि वर्त्ततेऽभिन्ने वा ? आद्ये यद् ब्रह्म भिन्नमासीत् तत्कथमभिन्नं स्यादिति व्याघातः, द्वितीये तेनैवाभेदेनाभिन्नमुताभेदान्तरेण आद्ये आत्माश्रयः द्वितीयेऽनवस्थेति चेन्न, प्रपञ्चस्यानिर्वचनीयत्वेन तेन सह ब्रह्मणो हि न वास्तविकोऽभेदोऽभ्युपगम्यते किंत्वनिर्वचनीय एव अन्यथा प्रपञ्चस्यापि सत्त्वापत्तेः घटादिनाशे ब्रह्मणोऽपि नाशापत्तेश्च, अतः प्रपञ्चस्यैवासत्त्वेन केन सहाभेदो भवेत्, भेदस्तर्हि ब्रह्मप्रपञ्चयोस्तात्त्विकः स्वीकृतः स्यादित्यपि न प्रपञ्चस्यानिर्वचनीयत्वेन तेन सह भेदस्याप्यनिर्वाच्यत्वात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञयाऽपि कार्यस्य यत्तत्त्वं कारणं तस्मिन् कारणात्मके ब्रह्मणि तत्त्वे विज्ञाते सति तत्र कल्पितं कार्यमतत्त्वं विज्ञायते, यथा कारणे रज्जौ सर्पस्य तत्त्वे विज्ञाते तत्र कल्पितः सर्पोऽतत्त्वेन विज्ञायते तथा इत्येतत्परा 'मृत्तिकेत्येव सत्यम्, इति दृष्टान्तानुरोधात्, तदेतत् 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रभाष्यभामतीपर्यालोचनयाचावगम्यते । सति चैवं भेदाभेदयोरुभयोरेव काल्पनिकत्वेन यथा व्यवहारं कल्प्यमानत्वेन तत्राभिधीयमानो दूषणगणोऽपि भूषणतयैव गण्यमानो जगतो मायिकतामेव दृढीकुर्वन्नस्मन्मतानुकूलतामेवावलम्बते इति परसिद्धान्तानभिज्ञो भवन् भवान् कथं न भवत्युपहासास्पद इति स्वयमेवावधारयेति विरम्यते, अधिकं खण्डनचित्सुखीभेदधिक्काराद्वैतरत्नरक्षणपर्यालोचनयाऽवगन्तव्यमिति ।

## भामती

समीचीनज्ञानपद्धतिमध्यास्ते इत्युपरिष्टादुपपादयिष्यते । तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थनित्यो निरंशः प्रत्यगात्मा अशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमश्नाति जानातीति

## प्रकाशः

तदेवं पक्षान्तरं निरस्य स्वप्रकाशचैतन्यस्वरूप आत्मेत्युपपादि, सम्प्रत्यध्यासाक्षेपकं भाष्यं योजयति—तदयमिति । प्रतीपम् प्रतिलोम्यम्, तदाह

## शाङ्करभाष्यम्

# सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति ।

## भामती

प्रत्यङ् स चात्मेति प्रत्यगात्मा, स चापराधीनप्रकाशत्वादनंशत्वाच्चा-विषयस्तस्मिन्नध्यासो विषयधर्माणां देहेन्द्रियादिधर्माणां, कथम् ? किमाक्षेपे । अयुक्तोऽयमध्यास इत्याक्षेपः । कस्मादयमयुक्त इत्यत आह "सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति। एतदुक्तं भवति यत्पराधीनप्रकाशमंशवच्च तत्सामान्यांशग्रहे कारणदोष-वशाच्च विशेषाग्रहेऽन्यथा प्रकाशते । प्रत्यगात्मा त्वपराधीनप्रकाशत्वा-न्न स्वज्ञाने कारणान्यपेक्षते येन तदाश्रयैर्दोषैर्दूष्येत । न चांशवान् येन कश्चिदस्यांशो गृह्येत कश्चिन्न गृह्येत. नहि तदेव तदानीमेव तेनैव गृहीतमगृहीतं च सम्भवतीति न स्वयंप्रकाशपक्षेऽध्यासः । सदातने-ऽप्यप्रकाशे पुरोऽवस्थितत्वस्याभावान्नाध्यासः । नहि शुक्त्यपुरः स्थिताया रजतमध्यस्यतीदं रजतमिति । तस्मादत्यन्तग्रहेऽत्यन्ताग्रहे च नाध्यास इति सिद्धम् । स्यादेतत् । अविषयत्वे हि चिदात्मनो नाध्यासः; विषय एव तु चिदात्माऽस्मत्प्रत्ययस्य, तत्कथं नाध्यास इत्यत आह-

## प्रकाशः

निर्वचनीयमिति । किमाक्षेप इति । यद्यप्यन्यत्र कथं शब्दस्य केन प्रकारे-त्यर्थो भवति तथापि अग्रिमेण ग्रन्थेन प्रकारविशेषो नाभिधीयते-त्यस्थमुप्रत्ययार्थस्याविवक्षिततयाऽवशिष्यमाणः किं शब्दो भवत्याक्षेपार्थ इति हृदयम् । अप्रथमानत्वपक्षे दूषणं सर्वोहीति । पूर्ववादी आध्यासाक्षेपमुपसंहरति तस्मादिति । आत्मनो ज्ञानविषयत्वे दृश्यत्वेन मिथ्यात्वापत्त्यानात्मत्वं स्यात् तस्यापि ज्ञानस्य ज्ञानान्तरविषयत्वेऽनवस्थापत्तिश्चेत्यतः कस्यचिद्वस्तुनः स्वप्रका-शत्वमावश्यकमित्यात्मन एव तद्युक्त मेति भाष्याशयमाविष्करोति-विषयत्वे हीति

शाङ्करभाष्यम्

युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते--न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्

भामती

युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । विषयत्वे हि चिदात्मनोऽन्यो विषयी भवेत्, तथा च यो विषयी स एव चिदात्मा, विषयस्तु ततोऽन्यो युष्मत्प्रत्ययगोचरोऽभ्युपेयः । तस्मादनात्मत्वप्रसङ्गादनवस्थापरिहाराय युष्मत्प्रत्ययापेतत्वम् अत एवाविषयत्वमात्मनो वक्तव्यं, तथा च नाध्यास इत्यर्थः ।

परिहरति —"उच्यते न तावदयमेकान्तेनाविषयः, कुतः ? अस्मत्प्रत्ययविषयत्वात् । अयमर्थः—सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च, तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इवाभिन्नोऽपि भिन्न इवाकर्ताऽपि कर्तेवाभोक्ताऽपि भोक्तेवाविषयोऽप्यस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासते, नभ इव

प्रकाशः

आत्मनोऽस्मत्प्रत्ययविषयत्वमुपवर्ण्याविषयत्वस्यासिद्धिरुक्ता भाष्ये सा न संगच्छते स्वयंप्रकाशस्य विषयत्वायोगादित्याशंकामनाद्यविद्योपधानेनौपाधिकं विषयत्वादिकं सर्वमेव संभवतीति तदाशयं प्रकटयन्निराकुरुते—अयमर्थ इति। बुद्धिमनःप्राणेन्द्रियाणां परलोकगमने आश्रयभूतानि भूतसूक्ष्माणि सूक्ष्मशरीरपदेनेह प्रतिपत्तव्यानि ।

पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपंचीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

इत्युक्तसूक्ष्मशरीरं त्विह न गृह्यते तथासति बुद्ध्यादीनां पृथगुपादानमनर्थकं स्यात् । इन्द्रियपदं बहिरिन्द्रियपरम्, मनसः पृथगुपादानात् । नन्वविषयत्वं स्वतः विषयत्वं त्वविद्याकृतमन्तःकरणवृत्तिनिरूपितमौपाधिक-

## भामती

घटमणिकमल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मकमिवेति । नहि
चिदेकरसस्यात्मनश्चिदंशे गृहीतेऽगृहीतं किंचिदस्ति । न खल्वानन्दनित्य-
त्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन् ।
गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाभान्ति ।
न चात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः येन चिदात्मनि गृह्यमाणे
सोऽपि गृहीतो भवेत्; बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याप्यनिर्वा-

## प्रकाशः

मिति किमिति वर्ण्यते उभे अपि विषयत्वाविषयत्वे अंशभेदेन वस्तुभूते स्व
कुतो नोपेयेते यथा शुक्तेः कालपृष्ठत्वादिः कश्चिदंशस्तदानीमगृह्यमाणस्तदानीं
गृह्यमाणश्च चाकचक्यादिः कश्चिदपरोंऽशस्तद्वत्, यदंशो गृह्यते तदंशे ग्रहण-
विषयत्वमितरांशे च तदविषयत्वमस्त्वितीमामाशंकामनंशत्वेन समादधाति-
न हि चिदेकरसस्येति । ननु चिदंशभानेऽप्यानन्दादिकं न भातीत्यस्त्येवांशभेद
इत्यत आह— न खल्विति । नन्वेवं साक्षिप्रत्यक्षे कुतो नानन्दाद्युल्लेखोऽ
आह—गृहीता एवेति । सर्वदा स्वरूपानन्दस्फूर्त्तावपि संसारदशायां दुःखसंभि-
श्रिततया दुःखविरोधित्वेनाग्रहणात् अध्यस्ताहंकाराद्यपकर्षणयोगाच्च न तदुल्लेख-
स्तदेतदाह—कल्पितभेदेनेति । कल्पितो यो भेदः 'भिद्यमानः' अहंकारादिभि
सह न विवेचिताः न भिन्नत्वेन गृहीताः अपि त्वहंकारतादात्म्येनैव गृहीताः
अतोऽगृहीता इवाभान्तीत्यर्थः, एवं चात्मनि वास्तविकस्यांशस्यासत्त्वेऽपि
काल्पनिकस्यांशस्य सत्त्वात् चिद्रूपस्य सदंशस्य च भासमानस्याधिष्ठानसा-
मान्यांशस्य ग्रहणम् आनन्दस्याभानात् तस्य भानेऽपि अपरिच्छिन्नत्वादि
विशेषांशस्याविद्याकल्पितभेदस्याभानादध्यासकारणमस्तीति नासंभवोऽध्यासस्येति
तात्पर्यार्थः । नन्वात्मनि भासमाने तद्गतोऽन्तःकरणादिभेदः कुतो न
भातीत्यत आह—नचात्मन इति । आनन्दादीनां वास्तविकत्वाच्चैतन्यैक-
रसत्वं नत्वेवं बुद्ध्यादिभेदस्य, न ह्ययं वस्तुभूत आत्मधर्मो येनात्मनो ग्रहे-
ऽयमपि भेदो गृह्येत तस्य निर्धर्मकत्वादतो नात्मनो भाने बुद्ध्यादिभेदभानम्
सोऽपि । बुद्ध्यादिभेदोऽपि । बुद्ध्यादिभेदस्यातात्त्विकत्वे युक्तिमाह—
बुद्ध्यादीनामिति । अनिर्वाच्यत्वेनेति । ननु किमर्थमनिर्वाच्यत्वं मिथ्यात्व-

## प्रकाशः

परपर्यायं बुद्ध्यादीनां सर्वेषां ब्रह्मभिन्नानामुपेयतेऽद्वैतवादिना ब्रह्मज्ञानात्त-न्निवृत्त्यर्थमिति चेत्, तरति शोकमात्मवित्, भिद्यते हृदयग्रन्थिः, भूयश्चान्ते विश्व-माया निवृत्तिः' इत्यादिशास्त्रप्रामाण्येन सत्यस्यापि जगतो निवृत्तिसम्भवादितिचेन्न, सत्यस्यात्मवन्निवृत्त्यसम्भवेन जगतः सत्यत्वस्य वक्तुमशक्यत्वात्, अपिच शुक्तिरूप्यरज्जुसर्पादौ तत्तद्रूप्यत्वं सर्पत्वादिकं च न ज्ञाननिवर्त्यतावच्छेदक-मननुगमात् किंतु सर्वानुगतमधिष्ठानप्रमात्वमेव तथा, तथा च यत्र ज्ञानस्या-धिष्ठानप्रमात्वेन निवर्त्तकत्वं तत्र मिथ्यात्वेनैव निवर्त्यत्वमिति नियमो लाघवा-दुपेयः, सति चैवं कृत्स्नस्यापि प्रपञ्चस्यात्मप्रमानिवर्त्यत्वे तदज्ञानकल्पितत्व-रूपं मिथ्यात्वमेवावच्छेदकं कल्प्यते न त्वननुगतमन्तःकरणत्वादिकं गौरवात्। तथाच शुक्त्यादिज्ञानस्य येन रूपेण (अधिष्ठानसाक्षात्कारत्वेन) निवर्त्तकत्वं तेनैव रूपेणात्मज्ञानस्यापि निवर्तकत्वम्। रूप्यादौ येन रूपेण (मिथ्यात्वेन) निवर्त्यत्वं तेनैव रूपेण प्रपञ्चस्यापि निवर्त्यत्वमिति सिद्धं जगतो मिथ्यात्वमिति।

ननु भवेदेतदेवं यद्यधिष्ठानप्रमात्वमेव ज्ञाननिष्ठनिवर्तकताया अवच्छेदकं भवेत् नत्वेतदस्ति किंतु सेतुदर्शनस्यैनो निवृत्तौ विहितक्रियात्वेन, उत्तरज्ञानस्य पूर्वज्ञाननिवृत्तौ स्वोत्तरवर्त्तिविशेषगुणत्वेन, संस्कारनिवृत्तौ स्मृतेः फलत्वेन, रागादिनिवृत्तौ विषयदोषदर्शनत्वेन, विषनिवृत्तौ गरुडध्यानत्वेन, स्वप्रागभाव-निवृत्तौ ज्ञानस्य प्रतियोगित्वेन जनकत्वम्, न हि तत्र तत्र मिथ्यात्वं निवर्त्यता-वच्छेदकमिति चेन्न, उक्तेषु हि प्रकारेषु एकस्यापि जगन्निवर्तके आत्मज्ञानेऽसत्त्वेन न तदेतेषु मध्ये कस्मिन्नपि शक्यतेऽन्तर्भवितुम् येन मिथ्यात्वमन्तरेणापि शक्यते निवर्तयितुम्। एतस्य चात्मज्ञानस्याधिष्ठानज्ञानत्वेनैव निवर्तकत्वमिति, यत्र चाधि-ष्ठानज्ञानत्वेन निवर्त्तकत्वं तत्र मिथ्यात्वं निवर्त्यतावच्छेदकमित्यस्य प्रदर्शि-तत्वेन कथमस्य जगतः स्यात्सत्यत्वमिति स्वयमप्यवधारयापहायाभिनिवेशम्।

किंच मायामात्रमिदं द्वैतमद्वैतं परमार्थतः, उपाधिना क्रियते भेदरूपः, नेह नास्ति-किंचन, तद्यथा वटबीजसामान्यम्, वाचारम्भणं विकारो नामधेयम्, इत्यादि श्रुतिः दृश्यत्वादिलिङ्गकमिथ्यात्वानुमितिसहचरी प्रपंचस्याविद्यकत्वमभिदधती अध्यारोपापवादन्यायेन तस्योत्पत्तिं ब्रुवन्ती तस्य सत्यत्वं प्रतिक्षिपन्तीत्यसकृदावे-दितमन्येष्वपि च तेषु तेषु ग्रन्थेषु विद्वद्भिरित्यलम्। तद्भेदस्याप्यनिर्वाच्यत्वादिति बुद्ध्यादेः कल्पितत्वेन तदभेदस्येव तद्भेदस्यापि वास्तविकत्वासंभवादिति भावः।

## विकासः

तदध्यासेन जीवभाव इति। अत्रेदं बोध्यम्—दुःखादीनां स्वभावत आत्म-धर्मत्वे तदुपरमस्याशक्यत्वमेव धर्मिनिवृत्तिं विना स्वाभाविकधर्मस्य निवृत्त्यसंभवात्, 'कामः

## विकासः

संकल्पो विचिकित्सा इत्यादिश्रुतेश्चान्तःकरणधर्मा एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माः संस्काराः नात्मधर्मा आत्मनोऽसङ्गत्वश्रवणात्, ज्ञानं सुखं च द्विविधम् आत्मनः स्वरूपं तदभिव्यञ्जकमन्तःकरणवृत्तिरूपं च, तत्र स्वरूपभूतं ज्ञानं साक्षिरूपमविद्यानावृतं सदाऽज्ञानसमानमेवावतिष्ठते, अन्यथाऽन्तःकरणस्य तद्धर्मसुखदुःखादीनां चाभानेन जगदान्ध्यप्रसङ्गात् साक्षिभिन्नं तु चैतन्यरूपमपि ज्ञानमविद्यावृतं वृत्तिमपेक्ष्यैवावभासते। आत्मस्वरूपं सुखं तु आ ब्रह्मसाक्षात्कारमविद्यावृतमेव, वृत्तिरूपं च सुखमात्मसुखाभिव्यञ्जकं भवति। ते चैते वृत्तिरूपे ज्ञानसुखे यावद्वर्तेते तावदवभासमाने एव इत्यज्ञातयोरेतयोरभावः। एवं दुःखेच्छाद्वेषप्रयत्ना अपि नाज्ञातास्तत्र मानाभावादतः साक्षिभास्या एव, साक्षी चान्तःकरणोपलक्षितश्चिद्रूपो नित्यत्वादेव न कारणमपेक्षते, एवं चावरणाभावे ज्ञानसुखदुःखादावसत्त्वादावरणभङ्गादेर्वृत्तिप्रयोजनस्याभावेन ज्ञानसुखदुःखादयो न स्वगोचरां वृत्तिं कामपि कामयन्तेऽतो नैते स्वस्वगोचरज्ञानाभिव्यञ्जकवृत्तिकरणतया मनः साधयितुमर्हन्ति अपि तु परिणामितयैव, घटादयस्तु बाह्याश्चाक्षुषादिवृत्तीर्विना प्रकाशमलभमानाः स्वस्वगोचराः वृत्तीः कामयमाना अपि तासु वृत्तिषु चक्षुरादीन्येव करणान्यपेक्षमाणा न मनः करणत्वेनापेक्षन्ते। एवं स्रक्चन्दनवनितादिबाह्यसम्पर्कप्रभवास्तत्तत्सुखविशेषाः मनसः परिणामितां साधयन्तोऽपि न स्वोत्पत्तये मनसः करणतां साधयितुं क्षमन्ते प्रयोजनाभावादतो न मनसःकरणत्वसिद्धिः अपि तु कर्तृत्वसुखदुःखादिवृत्त्याश्रयतयैव, तादृशं च मनोऽन्तःकरणाभिधमविद्याकृतभेदविशिष्टे यस्मिन् चैतन्येऽध्यस्यते तदेव जीव इत्याख्यायते। तदेतन्मनो न न्यायमत इव नित्यम्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, इत्यादिश्रुतिभिर्जन्यत्वावधारणात्? 'अन्नमयं हि सौम्य मनः' इत्यादिना छान्दोग्यषष्ठाध्याये युक्त्याऽपि मनसोऽन्नकार्यत्वाभिधानाच्च। नचैवं मनसो जन्यत्वे कृतनाशाकृताभ्यागमप्रसङ्ग इति वाच्यम् प्रलये मनसः सूक्ष्मरूपेणाविद्यायां विद्यमानत्वेऽपि कार्याक्षमत्वेन सृष्ट्यादौ कार्यक्षमतासंपादनं भवतीत्यभिप्रायकत्वात्। नाऽप्ययमणुपरिमाणकं शरीरव्यापिसुखदुःखाद्युपलब्धेः किंतु संकोचविकासशालिशरीरसमानपरिमाणकम्; हृदयं चास्य मुख्यं स्थानम् प्रदीपप्रभावद्विसरणशालि चोपेयते। ननु मनसोऽणुत्वाभावे व्यासङ्गानुपपत्तिः व्यासङ्गो हि अनेकैरिन्द्रियैः संनिकृष्टेष्वपि तत्तद्विषयेषु कस्यचिदेकस्यैवेन्द्रियस्य कार्योत्पत्तिः, स चायमणुत्वपक्ष एवोपपद्यते यदा हि येनैकेनेन्द्रियेण मनः संयोगस्तदा तदतिरिक्तेनेन्द्रियेण संयोगाभावात् इन्द्रियान्तरजन्यं प्रत्यक्षं नोदेतुमर्हति, अणुत्वेऽनभ्युपगम्यमाने तु सर्वेन्द्रियसंयोगाविशेषात् युगपदेव सर्वेन्द्रियजन्यानि ज्ञानानि प्रादुर्भवेयुरिति न व्यासङ्गो निर्वोढुं शक्यते इति चेत्?

अत्राहुरस्मद्गुरुचरणाः गीतामधुसूदन्याः गूढार्थतत्त्वालोके हृत्पुण्डरीकोदरकुहरवर्त्तिनोऽणुनो मनसो हृत्पुण्डरीकसम्बद्धासु नाडीषु कया चिदेकया

## विकासः

विवृतद्वारया नाड्या निर्गतस्य तस्य केन चिदेकेनैवेन्द्रियेण संयोगो नापरेण यथा घटान्तःस्थप्रदीपतेजस उद्घाटितेन केनचिद्घटच्छिद्रेण निर्गतस्य तद्दिग्वर्ति नैव वस्तुना सम्बन्धो नापरेण तथा येन चेन्द्रियेण संबन्धस्तदीयविषयकमेव ज्ञानं जायते नान्यदीयविषयकम् क्षणादेव तदिन्द्रियाद्वियुज्य येनापरेणेन्द्रियेण संयुनक्ति तदीयविषयकमेव च ज्ञानं जन्यते इति यथा न्यायमते व्यासङ्गो निर्वाह्यते, तथाऽस्मन्मते शरीरसमानपरिमाणकमप्यन्तःकरणं संकोचविकासशालितया झटिति तदिन्द्रियप्रदेशात्परावृत्य हृदयान्तःप्रविश्य संकुचिते च तन्नाडीद्वारे उद्घाटितद्वारयाऽपरनाड्या निर्गत्यापरेणेन्द्रियेणातिजवं संयुनक्तीत्युपपद्यत एव सम्यग् व्यासङ्गः । इयांस्तु विशेषो यदस्मन्मते दीर्घशष्कुलीभक्षणादिस्थले यदाऽनेकस्या नाड्याः द्वारविवृतिस्तदा ताभिरनेकाभिर्निर्गत्याऽन्तःकरणं घटस्यानेकैश्छिद्रैः प्रदीपतेजस इव बहुभिर्वस्तुभिर्युगपत्तत्तदिन्द्रियसम्बद्धैः युगपदेव बहिरिन्द्रियगोचरतत्तद्विषयाणां नाना ज्ञानमुत्पादयतीति यौगपद्यानुभवोऽपि समर्थितो भवतीति । नच शतपत्रभेदनवत् यौगपद्यप्रतीतिर्भ्रम इति वाच्यम् । तद्वदिह बाधकस्याभावात् । तस्मान्नाणु मनः किंतुशरीरसमानपरिमाणकमेव, सति चैवं युगपद्धस्तपादाद्यवच्छेदकभेदेन सुखदुःखाद्यनुभवः शरीरव्यापिसुखदुःखाद्यनुभवश्च निर्वहतीति ।

न्यायनये तु हस्तपादादावणुनो मनसो युगपत्प्राप्त्यभावान्न यौगपद्यानुभवः प्रामाणिकतामाश्लिष्येत् । नच मनःसंयुक्तात्मसमवायस्य युगपत्तत्तत्प्रदेशावच्छिन्नसुखादिषु सत्त्वात्तत्तत्प्रत्यक्षमुपपद्यत एवेति वाच्यम्, एवं हि सति वृक्षे मूले कुठारसंयोगे तत्समवायस्य शाखायामपि सत्त्वात्तदवच्छेदेनापि वृक्षे छिद्रादिकमापतेत्, तस्मात्तद्देशावच्छेदेन फलोत्पत्तौ तद्देशावच्छेदेन करणसम्बन्धस्यापेक्षणीयतयाऽणुनो मनसो युगपद्देशान्तरावच्छेदेनात्मनि संयोगासम्भवेनोक्तानुभवस्य प्रामाणिकत्वं भवद्भिरुपपादयितुमशक्यमेव । किंच मनसोऽणुत्वे ज्ञानायौगपद्योपपत्तये विभिन्नविषयकप्रत्यक्षादिकं प्रति शाब्दसामग्र्यादेः प्रतिबन्धकत्वान्यपि भवन्ति कल्पनीयानीति भवन्मते गौरवं दुर्वारम्, अस्मन्मते चानेकज्ञानसामग्रीसत्त्वे भवत्येवानेकप्रत्ययप्रसूतिरिति न प्रतिबन्धकत्वकल्पनम्, तस्मान्न मनसोऽणुत्वम् किंतु शरीरसमानपरिमाणकत्वम्, सति चैवं 'कामः संकल्प' इत्यादिश्रुतिरप्रत्यूहं कामादिमत्त्वं तत्र साधयितुं प्रभवति कामादेरप्रत्यक्षस्यापादनासंभवात् एतादृशेन च मनसा तादात्म्याध्यासाद्भवति ब्रह्मणो जीवत्वम्, तस्मात्सुष्ठूक्तम् 'तदध्यासेन जीवभाव' इति । न्यायमते कामादेरणुनि मनसि सत्त्वे प्रत्यक्षासंभवादात्मधर्मत्वमेवास्थीयते परंतु तन्मतेमंत्वानुपपत्तिः धर्मनाशे आत्मनो धर्मिणोऽपि नाशापत्तेरित्यधस्तादुपपादितमेवेति ।

ननु भामतीकृन्मते ब्रह्मसाक्षात्कारकरणत्वं मनसएवाभ्युपगतं नहि करणं विना प्रत्यक्षमुत्पत्तुमर्हति, नच तत्र तत्त्वमसीत्यादिशब्दः करणम् शब्दस्य परोक्षजनकत्वस्वाभाव्यतया तेन प्रत्यक्षोत्पत्त्यसम्भवात् तस्मान्मनस एव करणत्वम्, 'मनसा ह्येव पश्यति'

### विकासः

'मनसैवेदमाप्तव्यम्' इत्यादिश्रुतयोऽप्येतमेवार्थमुपोद्बलयन्ति तत्कथमेकस्यान्तःकरणस्य कर्तृत्वकरणत्वे उभे विरुद्धे स्यातामिति चेन्न, एकस्यापि हि तस्य मनस्त्वेन करणत्वम् अन्तःकरणत्वादिना चकर्तृत्वं सुखादिपरिणामित्वं च रूपभेदेनाभिमतमिति भवति सर्वमनवद्यम्।

### भामती

चनीयत्वात्। तस्माच्चिदात्मनः स्वयंप्रकाशस्यैवानवच्छिन्नस्यावच्छेदकेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तदध्यासेन जीवभाव इति। तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते। तथा हि—कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते। न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा सम्भवति। यस्य च बुद्ध्यादेः कार्यकरणसंघातस्य क्रियाभोगशक्ती न तस्य चैतन्यम्। तस्माच्चिदात्मैव कार्यकरणसंघातेन ग्रथितो लब्धक्रियाभोगशक्तिः, स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात् कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च जन्तुरिति च क्षेत्र

### प्रकाशः

विषयत्वे युष्मत्प्रत्ययविषयत्वापत्तिरतश्चानात्मत्वमिति यदुक्तं तत्र तस्य चेति योऽहमर्थ इदमंशोऽन्तःकरणं तदात्मना विषयत्वमनिदमात्मकचैतन्यत्वेनास्मदुल्लेखश्चोपपद्यते इत्यर्थः। तदिदं जीवस्येदमनिदमात्मकत्वं तद्धर्मान्वयप्रदर्शनेनोपपादयति—तथाहीति। उदासीनस्येति तत्त्वं च असङ्गो ह्ययंपुरुष इत्यादिबहुतरागमबलादवगन्तव्यम्। तस्य आत्मनः। तस्मादिति क्षेत्रज्ञ इतिचाख्यायते इत्यनेन सम्बन्धः। कार्यकरणसंघातेन ग्रथित इति शरीरं करणमिन्द्रियम् तद्घटितो यः संघातः शरीरेन्द्रियान्तःकरणैतत् त्रितयं तेन ग्रथितस्तत्तत्तादात्म्यापन्नः। बुद्ध्यादीति बुद्ध्यादिरूपो यो विषयस्तद्विच्छुरणात् तत्तादात्म्याध्यासादित्यर्थः। तदेतदुक्तं परमार्थसारेऽपि भगवता पतञ्जलिना

राहुरदृश्योऽपि यथा शशिबिम्बस्थः प्रकाशते जगति।
सर्वगतोऽपि तथाऽऽत्मा बुद्धिस्थो दृश्यतामेति। इति।

ननूपाधिसम्बन्धमन्तरेण वास्तविक एव जीवपद

शाङ्करभाष्यम्

अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः न चायमस्ति नि-

भामती

इति चाख्यायते । न खलु जीवश्चिदात्मनो भिद्यते । तथाच श्रुतिः— "अनेन जीवेनात्मना" इति । तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयं प्रकाशोऽप्यहंप्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते । न चाध्यासे सति विषयत्वं विषयत्वे चाध्यास, इत्यन्योन्याश्रयत्वमिति—साम्प्रतम्, बीजाङ्कुरवदनादित्वात्; पूर्वपूर्वाध्यासतद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वादित्युक्तं नैसर्गिकोऽयं लोकव्यवहार' इति भाष्यग्रन्थेन । तस्मात् सुष्ठूक्तं 'न तावदयमेकान्तेनाविषय इति । जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः ।

स्यादेतत्—न वयमपराधीनप्रकाशतयाऽविषयत्वेनाध्यासमपाकुर्मः किन्तु प्रत्यगात्मा न स्वतो नापि परतः प्रथत इत्यविषय इति ब्रूमः । तथाच सर्वथाऽप्रथमाने प्रत्यगात्मनि कुतोऽध्यास इत्यत आह— "अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः" । प्रतीचआत्मनः प्रसिद्धिः प्रथा, तस्या अपरोक्षत्वात् । यद्यपि प्रत्यगात्मनि नान्या प्रथाऽस्ति,

प्रकाशः

त्मनोभेदोऽस्त्वित्याशंकामपाकरोति —न खल्विति । 'अनेन जीवेन' इति 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिरपि श्रुतिरत्र ग्राह्या । बीजाङ्कुरवदिति । येन बीजेन यदङ्कुरं जन्यते तेनैवाङ्कुरेण तद्बीजं जन्येत चेद्भवेत्तदान्योन्याश्रयः न त्वेवमपि तु अङ्कुरान्तरेणेति न वस्तुतोऽन्योन्याश्रयो दोषः, तथा प्रकृतेऽपीत्याह-पूर्वपूर्वेति । आत्मनः स्वप्रकाशत्वे सदैव प्रकाशनान्नारोप इति पूर्वपक्षः पूर्वपूर्वाध्यासवशादप्रकाशसमर्थनेन निराकृतः, सम्प्रत्यात्मन्यप्रकाशमाने नारोपः संभवतीत्याह-

## शाङ्करभाष्यम्

यमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति
अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति

## भामती

तथापि भेदोपचारः, यथा पुरुषस्य चैतन्यमिति । एतदुक्तं भवति
अवश्यं चिदात्माऽपरोक्षोऽभ्युपेतव्यस्तदप्रथायां सर्वस्याप्रथनेन जगद
न्ध्यप्रसङ्गादित्युक्तम् । श्रुतिश्चात्र भवति–'तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति' इति । तदेवं परमार्थपरिहारमुक्त्वाऽभ्यु
त्यापि चिदात्मनः परोक्षतां प्रौढवादितया परिहारान्तरमाह
न चायमस्ति नियमः पुरोऽवस्थित एव–अपरोक्ष एव विषये
विषयान्तरमध्यसितव्यम् । कस्मादयं न नियम इत्यत आह
"अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति
हिर्यस्मादर्थे । नभो हि द्रव्यं सद् रूपस्पर्शविरहान्न बाह्येन्द्रियप्रत्यक्षम्

## प्रकाशः

स्यादेतदिति । न प्रथते इति अप्रथमानत्वमपरोक्षत्वाभावः, अपरो
भ्रमस्याधिष्ठानमात्मा तदैव स्यात् यदाऽयं स्वयमपरोक्षो भवेत् नचेदयमपरोक्ष
कथमस्मिन्नध्यास इत्यर्थः । 'पुरोऽवस्थित एव'इतिभाष्यस्य व्याख्या –अपरोक्ष
एवेति । रूपस्पर्शविरहादिति । अत्र नभो न बाह्येन्द्रियजन्यप्रत्यक्षविषयः रूप
रहितद्रव्यत्वादित्येकः स्पर्शरहितद्रव्यत्वादित्यपरो हेतुर्विवक्षितो नातोऽन्यतरवै
यर्थ्यम्, तत्र वायोः स्पार्शनप्रत्यक्षपक्षे द्वितीय एव हेतुस्तत्पक्षे प्रथमहेतोर्व्यभि
चारित्वात् । नापि मानसमिति । संक्षेपशारीरके तु मनोऽवगम्येऽप्यनं
तावलादित्यादि४३श्लोके आकाशस्यापि मानसत्वमुपगतम् । तट्टीकायां मधुसूदन
सरस्वतीभिर्व्यवस्थापितं च । तत्सारांशः प्रदर्श्यते-तथाहि 'नीलं नभः शुक्लं नभः'
इत्यादिप्रत्यक्षोपपादनाय नभसो बाह्यस्य घटादिवदावृतस्यावरणभङ्गाय प्रमाणा
पेक्षणात् प्रमाणस्य चान्यस्याप्रवर्त्तनादगत्या मन एव तत्र प्रमाणमुपेयम्, मन

## शाङ्करभाष्यम् ।

एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यते ।

### भामती

नापि मानसम्, मनसोऽसहायस्य बाह्येऽप्रवृत्तेः; तस्मादप्रत्यक्षम् । अथ च तत्र बाला अविवेकिनः परदर्शितदर्शिनः कदाचित्पार्थिवच्छायां श्यामतामारोप्य, कदाचित्तैजसं शुक्लत्वमारोप्य नीलोत्पलपलाशश्याममिति वा राजहंसमालाधवलमिति वा निर्वर्णयन्ति, तत्रापि पूर्वदृष्टस्य तैजसस्य वा तामसस्य रूपस्य परत्र नभसि स्मृतिरूपोऽवभास इति । एवं तदेव तलमध्यस्यन्ति अवाङ्मुखीभूतं महेन्द्रनीलमणिमयमहाकटाहकल्पमित्यर्थः । उपसंहरति "एवम्—" उक्तेन प्रकारेण सर्वाक्षेपपरिहारात्, अविरुद्धः प्रत्यगात्मन्यप्यनात्मनां—बुद्ध्यादीनाम्, अध्यासः । ननु सन्ति च सहस्रमध्यासास्तत्किमर्थमयमेवाध्यास

### प्रकाशः

बहिरस्वातन्त्र्योक्तिश्च केवलमनोविषया । प्रकृते च कदाचिदालोकनिष्ठेन शुक्लेन रूपेण कदाचिन्नेत्रकनीनिकादिनिष्ठेन श्यामरूपेण वोपहिते नभसि भवति चक्षुःसंयोगः, चक्षुर्द्वारा च मनसोऽपि तत्र गमनात् भवति मानसं नभसः प्रत्यक्षम् । नचैवं चाक्षुषत्वमेव कुतो न नभसोऽभ्युपेयतेति वाच्यम्, उद्भूतरूपवत्त्वस्य द्रव्यचाक्षुषे प्रयोजकस्य नभस्यभावात् तस्मादन्यदीयरूपोपरागेण चक्षुषः प्रवृत्तिस्तद्द्वारा मनसश्चेत्युपेयम्, दृश्यते च परकीयरूपोपरागेणाऽपि 'पीतः शंखः' इत्यादौ चक्षुषः प्रवृत्तिरिति 'अप्रत्यक्षेऽपि चाकाशे' इति भाष्यं तु रूपानुपधानकालाभिप्रायम् परमतेन वेति ।

अत्रेदं समीक्ष्यते-'नीलं नभः, 'शुक्लं नभ' इत्यादिप्रतीतेर्भ्रमत्वं संक्षेपकारादिभिरपि स्वीकृतमेव तत्र च नास्ति विवादस्यावसरोऽपि स्वकीयं हि नभसोरूपं नास्ति दूरतो नीलादिग्रहणेऽपि तत्प्रदेशगमने तथाऽग्रहणात्, 'नीलं नभः,'शुक्लं नभ' इत्यादि प्रतीतिश्च कदाचित् पृथवीछायागतायाः श्यामतायाः कदाचित्तैजस्याः शुक्लताया

## भामती

आक्षेपसमाधानाभ्यां व्युत्पादितः, नाध्यासमात्रमित्यत आह—"तमेतमेवलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" अविद्या हि सर्वानर्थबीजमिति श्रुतिस्मृतीतिहासपुराणादिषु प्रसिद्धम्,

## प्रकाशः

नभस्यध्यासरूपैव वाच्येत्यत्रापि न विवादः सा च नभसो मनोग्राह्यत्व-त्वस्वीकारमन्तरेणाप्युपपद्यत एव अध्यस्यमानाधिष्ठानयोरेकेन्द्रियग्राह्यत्व-नियमे रूपस्य चक्षुर्ग्राह्यत्वं नभसश्च मनोग्राह्यत्वमुपगच्छद्भि-र्भवद्भिरेव व्यभिचारोदर्शितः। एवं च नभसो मनसाऽग्रहणेऽपि तत्र रूपादिभ्रमो-पपत्तेर्न नभो मनोग्राह्यत्वमुपेयम्। तस्मात् यदत्र भामत्या साचार्येणाभिहितं तन्न सम्यक्। अतश्चात्रत्यभाष्यस्यान्यमतानुसारित्वादिकल्पना कलङ्कोऽपि प्रक्षालितः। यथा च चक्षुषाऽसाक्षात्कृतेऽपि नभसि नीलादिविभ्रमस्तथा ब्रह्मण्यसाक्षात्कृतेऽपि तत्र प्रपञ्चविभ्रमे बाधकाभाव इति भाष्यभामत्योस्तात्पर्यम्। बाला इत्यस्य व्याख्या अविवेकिन इति। अस्यापि व्याख्या परदर्शितदर्शिनः इति। नील नभ इत्या-दिभ्रमेऽध्यासलक्षणं संगमयति तत्रापीति। तदेव नभ एव नीलरूपेणाध्यस्यत इ-तीत्यर्थः।

## विकासः

अविद्या हि सर्वानर्थबीजमिति। एतेन परमाणुवादोऽपि निराकृतो वेदितव्यः। परमाणवस्तावद्वैशेषिकैर्नैयायिकैः सौगतैश्चाभ्युपगम्यन्ते तत्र सौगताः परमाणव एव संयो-गविशेषं लभन्तो महत्वैकत्वस्थूलत्ववन्तो भवन्तोऽध्यक्षतामाश्रयन्तो घटादिसंज्ञां भजन्तोऽ-न्योऽन्यव्यावृत्तव्यवहारं जनयन्तोऽवयविनो व्यपदिश्यन्ते, नतु परमाणुसंघातातिरिक्ताः सन्त्यव-यविन इत्याचक्षते, तदेतद्वैशेषिकाः नैयायिकाश्च नानुमन्यन्तेऽपि तु पार्थिवाः, पार्थसाः, पावकाः, पावनाः चतुर्विधा परमाणवो द्व्यणुकादिक्रमेण स्थूलान्यस्थूलानि च यावन्त्यवयवि-वीन्यारभन्ते; तानि चावयवीन्यवयवेभ्योऽत्यन्तं भिन्नान्येवेति व्यवस्थापयन्ति। तथाहि सर्व-जनीनानुभवसिद्धाः घटादयो न संयोगविशेषापन्नैः कपालादिभिरन्यथयितुं शक्यन्ते तथा कपालादयोऽपि संयोगविशेषमाश्रिताः कपालिकादय एव स्युरित्येवंक्रमेण मध्यवर्तिनोऽ-वयवा अभ्युपगन्तुमशक्या एवेति परमाणव एव संयोगविशेषमापन्नाः अवयविव्यपदेश-भिषिच्यमाना महत्त्वादिधर्मभाजो भवेयुरिति घटादीनामप्रत्यक्षतैवापद्येत्। प्रत्यक्षता हि महत्त्व-

## विकासः

द्रूतरूपादिसम्बन्धमपेक्षमाणा न तद्विरहिणं परमाणुसंघातं मनागपि स्प्रष्टुमीहते । नापि प्रत्येकमप्रत्यक्षा अपि परमाणवः समुदायभावं भजन्तोऽध्यक्षतामाश्लेष्टुं क्षमन्ते, समुदायो हि न प्रत्येकस्मादतिरिच्यते नहि गृहस्थितो देवदत्तः सभास्थिताद्देवदत्ताद्भिद्यमानोऽनुभूयते, केशादिपुञ्जोऽपि नात्र दृष्टान्तभावमवलम्बते समीपे तदेकैकस्यापि प्रत्यक्षत्वात् । नाप्यणुत्वगुणावरुद्धे परमाणौ तद्विरुद्धमहत्त्वगुणः समात्रेष्टुमर्हति विरोधात् ।

यदपि संयोगविशेषः संयोगविशेषापन्नपरमाणुसंघातत्वमेव वा महत्त्वं तदेव च स्थौल्यं तदेव च प्रत्यक्षत्वनियामकं तस्यैकत्वादेव 'एको घट' इत्यादयो व्यवहारा भवन्तीत्युच्यते तदाऽनन्तानां तादृशसंयोगानां परस्परानपेक्षाणां प्रत्यक्षत्वप्रयोजकत्वे तादृशसंयोगघटकपरमाणुद्वयसंयोगमात्रे जानेऽपि प्रत्यक्षापत्तिः, परस्परापेक्षाणां तथात्वे च विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरानन्तकार्यकारणभावापत्तिः । नाप्युक्तसंघातत्वस्य संभवति महत्त्वरूपत्वम्, तद्धि संख्या वाऽपेक्षाबुद्धिविषयत्वं वा ? आद्ये परमाणुष्वतीन्द्रियेषु संख्योत्पादिकाया 'अयमेकोऽयमेक' इत्यपेक्षाबुद्धेरसंभवात् न संख्योत्पत्तेः संभवः, संभवे वाऽपेक्षाबुद्धिनाशजन्यनाशप्रतियोगिन्यां तादृशसंख्यायां संघातत्वरूपायामपेक्षाबुद्धेरपगतावपगतायां घटादीनां प्रत्यक्षता न स्यात् प्रयोजकस्य संख्यास्वरूपमहत्त्वस्याभावात्, अतीन्द्रियगतायाः संख्याया अप्यतीन्द्रियत्वेन 'महानयम्' इति प्रत्यक्षविषयत्वानुपपत्तेश्च । तादृशापेक्षाबुद्धिरहितस्य पुंसस्तादृशसंख्योत्पत्तेरसंभवेन तदभावदशायामपि महत्त्वप्रत्यक्षोत्पत्त्या तद्विषयत्वस्योक्तसंख्याया वक्तुमशक्यत्वात्, सति चैवं संघातत्वस्वरूपस्यैवानिष्पत्त्या 'एको घट' इत्यादिप्रत्यक्षे संघातत्वगतैकत्वस्य विषयत्वासंभवेनातिरिक्तावयविगतस्यैवैकत्वस्याकामेनापि कांदिशीकेन भवता विषयत्वस्वीकर्तव्यत्वात् । द्वितीये बुद्धेरचाक्षुषत्वेनापेक्षाबुद्धिविषयत्वस्य चाक्षुषादिविषयत्वासम्भवेन महत्त्वरूपत्वासम्भवात् 'अयं घट' इत्यादि प्रत्यक्षविषयत्वस्यानन्तपरमाणुषु तत्तत्संयोगेषु च कल्पनामपेक्ष्यैकस्यातिरिक्तस्यावयविन एव विषयत्वकल्पनाया उचितत्वाच्च ।

अपिच परमाणूनां समुदायत्वेन घटादिस्वरूपत्वे प्रत्यक्षत्वे चाभ्युपगम्यमाने 'धान्यराशिरयम्' इतिवत् 'परमाणुराशिरयम्' इति प्रत्यक्षमापद्येत, तद्वारणाय कस्यचिद्दोषस्य प्रतिबन्धकत्वकल्पने च गौरवं केन वार्येत । एवं जलाहरणादिकार्यं प्रत्यनन्तपरमाणूनां भवता कारणत्वं कल्पनीयं तदप्यतिगौरवावहम्, एवं संयोगानपेक्षस्य च परमाणुगतसमुदायत्वस्य जलाहरणादिकारणतावच्छेदकत्वेऽसंयुक्तेभ्योऽपि तेभ्यः परमाणुभ्यो जलाहरणादिकार्यापत्तिः संयोगापेक्षस्य च तत्त्वे संयोगानामनन्तत्वेन तेषां विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरासंख्यकार्यकारणभावो न शक्यते वारयितुम् ।

## विकासः

एवमपोहरूपस्य घटत्वस्य जलाहरणादिकारणतावच्छेदकत्वोपगमोऽपि भवतां न समी-चीनज्ञानपद्धतिमाश्रयति परमाणुपुञ्जातिरिक्तस्य घटस्यैकस्य भवन्मतेऽभावेन तद्भिन्नभिन्नरू-पस्यापोहस्य भवत्संकेतितस्य दुर्निरूपत्वात्, तत्पदेनैकस्यैव कस्यचित्परमाणोर्ग्रहणेन तद्भिन्नभिन्न-त्वस्य तस्मिन्नेकस्मिन्नेव कस्मिंश्चित्परमाणौ पर्यवसानेन घटादौ तदसम्भवात् । तत्तत्परमा-णुव्यक्तिभेदकूटावच्छिन्नभेदस्य संयुक्तपरमाणुभ्योऽसंयुक्तपरमाणूनामनन्यत्वे तेष्वपि सत्त्वेना संयुक्तेभ्योऽपि तेभ्यः परमाणुभ्यो जलाहरणादिकार्यापत्तिः, अन्यत्वे संयुक्तानामतिरिक्तानां तावत्परमाणूनां कल्पनापेक्षयाऽतिरिक्तैकावयविकल्पनाया एव युक्तत्वात् ।

नन्वावयविनोऽतिरिक्तत्वे य एवावयवी अर्वाग्भागे स एव पश्चाद्भागेऽपीत्यर्वाग्भागे चक्षुःसंयोगे पश्चाद्भागोऽप्युपलभ्येत, नचैवमुपलभ्यतेऽपि तु पश्चाद्भागे 'पीतः श्वेतो वा' इति संशय एव जायते; एवं चैकस्यैवावयविन उपलब्धत्वानुपलब्धत्वरूपविरुद्धधर्माध्यासप्रसङ्ग इतिवाच्यम्, अवयवी हि एक उपलभ्यत एव 'पटं पश्यामीत्याद्यनुभवस्यापह्नोतुमशक्यत्वात् । न तु नोपलभ्यते' इति न विरुद्धधर्माध्यासप्रसङ्गः पश्चाद्भागेऽवयवविशेषो नोपलभ्यते न तु तदीयरूपादिकमतस्तदंशेष्वेव संशयो नावयविस्वरूपे इति न कश्चिद्दोषः

नन्वयमतिरिक्तोऽवयवी एकस्मिन्नवयवे कार्त्स्न्येन वर्त्तते एकदेशेन वा ? आद्ये॰ वयवान्तरवैयर्थ्यम्, द्वितीये वृत्तिनिरूपकावयवात् तद्वृत्तितावच्छेदकस्यातिरिक्तस्यैकदेशस्व वक्तव्यत्वापातः नहि स्ववृत्तौ स्वस्यावच्छेदकत्वं सम्भवति आत्माश्रयादिति वाच्यम्; 'अवयवेषु सर्वेषु व्यासज्यावयवी वर्त्तते' इत्येतावन्मात्रोपगमात् न कस्याप्यवयवस्य वैयर्थ्यम् अव्याप्यवृत्ति-त्वानभ्युपगमेनावच्छेदकदेशविकल्पस्योत्थानानर्हत्वात् । एवं चलत्वाचलत्वरूपविरुद्धांसर्गो॰ पि सुनिरसः अवच्छेदकदेशकालभेदेनोपपत्तेरिति सिद्धेऽतिरिक्तेऽवयविनि तदवयवधाराणा क्वचिदवश्यं विश्रामो वाच्योऽन्यथैकेन सर्षपेणाविश्रान्तावयवधारकेणेदं कृत्स्नं जगद्व्याप्येत, एतदभिप्रायेणैव तत्र तत्र मेरुसर्षपयोः साम्यप्रसक्तिरुक्ता ।

तत्र च त्रसरेणावेव विश्रान्तिमुपगच्छन्तो दीधितिकृतः त्रसरेणोर्निरवयवद्रव्यत्वं तस्य तदीयमहत्त्वस्य च नित्यत्वमेवोररीचक्रुः—तथाहि जन्यमहत्त्वम्प्रत्येवानेकद्रव्यत्वं प्रयोजकं नापकृष्टमहत्त्वं प्रतीत्यतो न त्रसरेणौ सावयवत्वमापद्यते अतो निरवयवद्रव्यतयैव तस्य नित्यत्वम् तत्परिमाणस्य तु त्रसरेणुमहत्त्वं नित्यं सजातीयनिरूपितोत्कर्षापकर्षोभयानाधारत्वे सति महत्त्व-त्वात् गगनमहत्त्ववदित्यनुमानान्नित्यत्वम्— यथा हि गगनपरिमाणं स्वापेक्षयोत्कृष्टमहत्त्वस्याभा-वेनापकर्षानाधारत्वादुभयानाधारः, अथ च नित्यमेवं त्रसरेणुमहत्त्वमपि स्वापेक्षयाऽपकृष्टमहत्त्व-स्याभावेन तदुत्कर्षानाधारत्वादुभयानाधार इति तेनापि नित्येन भवितव्यम् तत्राणु-व्यवहारश्चापकृष्टमहत्त्वेन परमाणुव्यवहारश्चोत्कर्षानाश्रयमहत्त्वेनोत्पद्यत इति ।

तदेतद्दीधितिकृतां मतं न सम्यक् निरुक्तानुमानस्याप्रयोजकत्वात् महत्त्वत्व नित्यतायामपकर्षानाश्रयत्वमात्रस्य लाघवेन प्रयोजकत्वात् महत्त्वस्यापकर्षाश्रयत्वे हि तद-

## विकासः

अयस्य महतो विभुत्वासम्भवेन परिच्छिन्नत्वापत्तौ विभाज्यत्वेन सावयवत्वादनित्यत्वं स्यादतस्तदाश्रितं महत्त्वमपि न नित्यं सेद्धुमर्हतीत्यतोऽपकर्षानाश्रयत्वं तत्र स्वीकार्यम्, तथा च सति तदाश्रये विभुत्वाभावात् तादपरिच्छिन्नानवयवत्वेनानित्यत्वस्यासम्भवेन तस्य नित्यत्व-मबाधितं भवतीत्यतस्तन्मात्रस्यैव नित्यत्वप्रयोजकत्वेनोक्तहेतावुकर्षप्रवेशस्य व्यर्थत्वात् उभया-नाश्रयत्वहेतोरपकर्षानाश्रयमहत्त्वत्वेन सोपाधित्वाच्च तस्य परिमाणत्वसमानाधिकरणनित्य-त्वरूपसाध्यव्यापकत्वात् अपकर्षानाश्रयत्वमात्रेण त्रसरेणुमहत्त्वे नित्यत्वसाधनन्तु स्वरूपा-सिद्धिपराहतम्, प्रत्युत चाक्षुषत्वे सति महत्त्वत्वादिना नित्यत्वाभाव एव तत्र सिध्यतीति। तथा च त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यनेनानुमानेन त्रसरेणोरवयवसिद्धौ न त्रुटावेव विश्रामः ।

नच दृश्यस्य त्रसरेणोरवयवोऽपि दृश्य एव वाच्यः दृश्यम्प्रत्यदृश्यस्यानुपादानत्वेना-दृश्योपादेयस्यादृश्यत्वापत्तेः दृश्यावयवकत्वं च त्रसरेणावनुपलम्भबाधनमिति न सावयव-त्वसिद्धिरितिवाच्यम्, तेजसि व्यभिचारेण तन्नियमस्य त्याज्यत्वात्; दृश्यते हि अदृश्यादेव भर्जनकपालस्थवह्नेर्दृश्यदहनोत्पत्तिः, भवति च महत्त्वोद्भूतरूपादिकारणसम्बन्धात् दृश्यत्वं तदभावाच्चादृश्यत्वमिति तस्मात् त्रसरेणुरदृश्यावयवादुत्पद्यमानो महान् दृश्यश्च स्यादिति त्रसरेणोरवयवसिद्धौ बाधकाभावः । नच प्रत्यक्षविषयस्य सर्वस्यैव घटादेर्महदवयवारब्धत्वदर्श-नात्त्रसरेणुरपि यद्यवयवारब्धः स्यान्महदवयवारब्ध एव स्यात् तादृशश्चावयवो योग्यानुपल-म्भबाधित एवेतिवाच्यम्, एवं हि सति यथाकथंचित्सहचारेण व्याप्तिसिद्धौ तेजसः प्रचुरस्यो-द्भूतस्पर्शवत एवोपलब्धेरतादृशं नयनं न तैजसं स्यात्, तस्मात् त्रसरेणोः प्रत्यक्षविषयत्व-मस्तु महदवयवारब्धत्वं मास्त्विति व्यभिचारशंकाकलङ्कपङ्कप्रक्षालनपटीयसोऽ-नुकूलतर्कस्य विरहेणोक्तनियमस्याप्रयोजकत्वमेवास्थेयम् । तथा च बाधकाभा-वात् त्रसरेणोरवयवसिद्धौ त्रसरेणोरवयवाः सावयवाः चाक्षुषद्रव्यारम्भकत्वात् कपालिकावत्' इत्यनुमानात् ये तदवयवाः सिध्यंति त एव परमाणवोऽभिधीयन्ते । नचैवं द्व्यणुकावयवः सावयवः चाक्षुषद्रव्यारम्भकारम्भकत्वात् कपालिकाव-दित्यनुमानात्तदवयवोऽपि सिध्यत्विति वाच्यम् अनवस्थया मेरुसर्षपसाम्यप्रसङ्गरूपप्रतिकूल-तर्कपराहतत्वेन चैतदनुमानस्याप्रयोजकत्वात् ।

अथ परमाणव एव सन्तु साक्षात् त्रसरेण्वारम्भकाः किमतीन्द्रियद्व्यणुकोपगमेनेति चेन्न, परमाणवो न साक्षान्महदारम्भकाः परमाणुत्वात् घटोपगृहीतपरमाणुवदित्यनुमानेन द्व्यणुकमनारभ्य साक्षात् त्रसरेण्वारम्भासिद्धेः । तत्र द्व्यणुके व्यभिचारवारणाय परमेति, परमाणूनां साक्षाद् घटाद्यारम्भकत्वे घटनाशे कपालादयो नोपलभ्येरन् तस्मान्न परमाणुभ्यो द्व्यणुकमनारभ्य त्रसरेण्वारम्भ इति । द्वाभ्यां च

## विकासः

परमाणुभ्यामारभ्यमाणं द्रव्यमीश्वरापेक्षबुद्धिजन्येन परमाणुगतद्वित्वेन जायमान... परिमाणमाश्रयते द्व्यणुकत्र्यादित्रसरेण्वादयः प्रादुर्भवन्तो भवन्ति महान्तः दीर्घा।

द्व्यणुकद्वयात्तु न कस्यचिदुत्पत्तिर्वैयर्थ्यात्, तथाहि द्व्यणुकद्वयादुत्पद्यमानं कार्यं महत्त्वहेतूनामवयवबहुत्वमहत्त्वप्रचयविशेषाणामभावेन महत्त्वासंभवात् ... द्व्यणुकयोर्बहुत्वमहत्त्वविरहस्तु स्फुटतर एव, प्रचयविशेषोऽपि तूलपिण्डानामिव ... नामवयववत्त्वे सत्येव स्यान्न चैतदस्ति, तस्माद् द्व्यणुकद्वयादुत्पद्यमानं कार्यं द्व्यणुक... स्वरूपमेव स्यात्। नच तत् स्वतः कस्यचिदुपभोगाय पर्याप्तम्, एतादृशैस्तु प्रत्येकं द्व्यणुक... द्वयादुत्पद्यमानैर्द्व्यणुकरूपतामेवोपपद्यमानैस्त्रिभिः कस्यचिन्महत उत्पत्त्युपगमे पूर्वो... द्व्यणुकत्रयेणैव तदुत्पत्त्युपगमस्योचितत्वात् तस्माद्द्व्यणुकद्वयान्न द्रव्यमारभ्यतेऽपि तु द्व्यणु... कत्रयात् त्र्यणुकमिति संक्षेपतः प्रदर्शितस्तार्किकाणां परमाणुवादः, यस्मात्कार्यं ... विशेषावस्थामापद्यमानं न कार्यमपि तु कारणादत्यन्तं भिन्नमेव तस्मादारम्भ...

इत्याख्यायते तार्किकैरिति।

स चायं वादः श्रुतियुक्तिविहीनत्वाद्वेदान्तिभिरुपेक्ष्यते। सर्गप्रलयौ हि तार्किकैः... न सामञ्जस्यमर्हतः। तत्र परमाणुतः सृष्ट्युपगमे यतो वा इमानि भूतानि जायन्ते, इत्या... द्यनन्तश्रुतिविरोधः श्रुतिं परिशीलयतां विपश्चितां नाविदित इति युक्तिविरोध एव पुरस्ता... दर्श्यते तथाहि परमाणवो यदि संयुक्ताः स्युः स्यात्तदा संभवो द्व्यणुकादिक्रमेण सर्गस्य, न... संभवति तत्संयोगो हि परमाणुवदेवानुमानगम्यः अनुमानं च दृष्टसाधर्म्येण प्रवर्त... न दृष्टमर्यादामुल्लङ्घयितुमुत्सहते दृष्टं च सृष्टिदशायां नोदनाभिघातवेगगुरुत्वद्रवत्वैर्... द्वयोर्वा जाते कर्मणि संयोगभवनं नादृष्टमात्रात्कर्म ततः संयोगश्चेति। नच ... नोदनादित्रयं संभवति तस्य क्रियासाध्यत्वात् तत्साम्यत्वाच्च क्रियाया इत्यन्यं ... गुरुत्वद्रवत्वे च परमाणुगते नित्ये इति तन्मात्रस्य तद्धेतुत्वे परमाणुक्रियाप्रसङ्ग... इत्यतः कर्माभावात्संयोगाभावेन न सर्गसम्भवः। नचेदानीमपि दृष्टमदृष्टमात्राद्वायो... र्यंगमनं वह्नेरूर्ध्वज्वलनं च, एवमेव पवनपावकयोः परमाणुस्वरूपयोरदृष्टमात्रात्सर्गे... ऽपि स्यात् कर्म ततस्तयोर्द्व्यणुकादेरुत्पत्तिः तेन नोदिताः पार्थसीयाः पार्थिवा... परमाणवो जातक्रियाः यथाक्रमं सर्गाय संयुज्यन्ते इति वाच्यम्, सर्गकालेऽपि... वाय्वन्तरेणाभिहता नोदिता एव वा वायवो वह्नयश्च वाय्वभिहता एव क्रिया... भवन्ति नादृष्टमात्रात्, अभ्युपगम्येतापि दृष्टातिक्रमेणादृष्टमात्रात् क्रिया यद्यन्यथा... पत्तिः सर्गस्य स्यात् सा हि सर्वतो बलवती तदुक्तं खण्डतर्कज्ञैः,—

अन्यथाऽनुपपत्तिश्चेतदस्ति वस्तुप्रसाधिका॥
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका, इति॥

## विकासः

नचान्यथाऽनुपपत्तिरस्ति सृष्टेरविघ्नकत्वस्योपपादितत्वात् उपपादयिष्यमाणत्वाच्च, तदानीं शरीराभावेन चात्मगुणानां ज्ञानेच्छाप्रयत्नानामसंभवेन प्रयत्नवदात्मसंयोगविरहात्. शरीरादन्यत्र प्रयत्नवदात्मसंयोगस्य क्रियाजनकत्वाभावाच्च न परमाणौ क्रियायाः संभव इति । अपि च नाचेतने चेतनानधिष्ठिते क्रियाया आश्रयत्वप्रयोजकत्वे संभवतः, जीवानां तदानीं चैतन्याभावेनानधिष्ठानत्वात् अदृष्टमप्रत्यक्षयतां जीवानां तदधिष्ठातृत्वस्य सृष्टिकालेऽप्यसम्भवाच्च ।

अथेन्द्रियाधिष्ठातृत्ववत् तन्निष्पादितकर्मफलभोक्तृत्वेन जीवानामदृष्टाधिष्ठातृत्वसंभवात् जीवाधिष्ठितेन चादृष्टेन स्वाश्रयात्मसंयोगस्य संबन्धस्य परमाणौ सत्त्वात् संभवति परमाणौ कर्मेति चेन्न, अदृष्टमात्रस्य हि परमाणुक्रियायामुक्तरीत्या हेतुत्वे तस्य पूर्वमपि सत्त्वेन तदानीमपि परमाणुक्रियाप्रसक्तिः यथा काममभिसरन्ती केन वार्येत । नचेष्टापत्तिः तथासति प्रलयाव्यवहितपूर्वक्षणवर्तिनः परमाणवः प्रलयोत्पत्तिक्षणेऽपि संयुक्ता एव भवेयुरिति प्रलय एव न सिध्येदिति । अत एव प्रलये ईश्वरस्याधिष्ठातृत्वं तेनाधिष्ठितादृष्टात्परमाणौ कर्मेत्यपि प्रत्युक्तं प्रयत्नवदीश्वरसंयुक्तात्मसमवायस्यादृष्टसहकारित्वे तत्सातत्येनादृष्टकार्यस्य परमाणुक्रियादेः सातत्यप्रसङ्गात् । एवमदृष्टवदात्मसंयोगोऽपि परमाणुभिर्न संभवति परमाणोरात्मनश्च निरवयवतया तत्संयोगावच्छेदकासंभवेनाव्याप्यवृत्तित्वासंभवात् संयोगस्य चाव्याप्यवृत्तित्वनियमात् ।

एवं परमाणोर्निरंशत्वमपि भवदुपगतं दुरुपपदम् मध्ये स्थितस्य हि परमाणोश्च तुर्दिक्षूर्ध्वधश्च षड्भिः परमाणुभिः कदाचिद्योगसंभवात् परमाणोः षडंशता स्यात् । तदुक्तं 'षट्केन युगपद्योगात्परमाणोः षडंशता, इति सांशत्वेन परिमण्डलत्वं नित्यत्वं च दुर्लभम्, न च द्वयोरेव परमाण्वोः संयोगो न षड्भिरिति वाच्यम्, एवं निर्युक्तिकेऽभ्युपगम्यमानेऽपि तस्मिन् दैशिकाव्याप्यवृत्तित्वस्यैव स्वीकर्तुमुचितत्वेन सांशत्वप्रसङ्गस्य तावताऽप्यवारणात् ।

अथ संयोगस्य व्याप्यवृत्तित्वं स्वभावविरुद्धमतोऽवच्छेदकदेशविरहेऽप्यव्याप्यवृत्तित्वमुपगम्यते इति चेत् ? तर्हि माभ्युपगम्यतां परमाण्वोः संयोगः नहि कस्यचिन्निर्बन्धोऽस्ति भवद्भिरवश्यमुररीक्रियतां परमाणुवाद इति, अभ्युपगम्येतापि दृष्टविरुद्धा कल्पना यद्यन्यथाऽनुपपत्तिः सर्गस्य स्यादित्यवोचाम । देशावच्छिन्नत्वबाधे च दिङ्मात्रावच्छिन्नत्वप्रयुक्तमव्याप्यवृत्तित्वं न तस्य समर्थयितुं शक्यते यो हि सावयवस्तस्यैव कश्चिदवयवः प्राचीस्थः कश्चिच्चावाचीस्थः प्रतीचीस्थ उदीचीस्थो वा भवति भवति, च तदीयसंयोगस्य तत्तद्दिगवच्छिन्नत्वं न चैतदस्ति प्रकृते, ईदृश्यां च वस्तुस्थितौ अनवस्थाप्रयुक्तमेरुसर्षपसाम्यप्रसक्तिपिशाची अन्यथोपपत्तेरेव च साहाय्यमाचरन्ती ग्रसस्येव तन्वङ्गीं परमाणुकल्पनामनाथां निष्प्रत्यूहमिति ।

## विकासः

नित्यः परमाणुरित्यपि वैशेषिकाणामुपगमो निर्युक्तिकः रूपवद्विनाशि मूर्तत्वादित्याद्यनुमानेनानित्यत्वस्यैव सिद्धेः, नचानुकूलतर्कशून्यत्वम्, 'अतोऽन्यदार्तम्' इत्यादिश्रुतिभिर्ब्रह्मातिरिक्ताखिलप्रपंचानित्यत्वप्रतिपादिकाभिः अपौरुषेयतया नित्यनिर्दोषाभिः प्रमाणप्रबलाभिर्मिथ्यात्वसाधकानुमितिसमाश्लिष्टाभिः प्रतिकूलतर्कशतोन्मूलनसमर्थाभिः गृहीतत्वादिति।

एवं परमाणुद्वयादुत्पन्नो द्व्यणुकः पदार्थो भवति भागवान् तत्तद्भागावच्छिन्नत्रयाणां द्व्यणुकानां संयोगात्स्थूलस्य त्रसरेणोरुत्पत्तिरित्यपि प्रक्रिया वैशेषिकाणामयुक्तैव, यदि हि परमाणू सर्वतः संयुक्तौ तदा द्व्यणुकः परमाणुस्वरूप एवावतिष्ठेत तादृशैः द्व्यणुकैर्जायमानस्य त्रसरेणोरपि परमाणुरूपतैव स्यात्। न च परमाणोर्निरवयवत्वेन संयोगस्य व्याप्यवृत्तित्वाभावेन च सर्वतः संयुक्ताविति वक्तुमशक्यमिति वाच्यम्, तर्हि हि सत्येकदेशेन संयुक्ताविति वक्तव्यम् न च निष्प्रदेशस्यैकदेशः संभवति न च न सर्वतः संयुक्तौ नाऽप्येकदेशेन संयुक्तावित्यतो न संयुक्ताविति परस्परविरुद्धयोः तृतीयप्रकारस्यासंभवात्। तदुक्तम्—उदयनाचार्यैः 'परस्परविरोधे हि प्रकारान्तरस्थितिरिति।

एतेन परमाण्वोरारम्भकसंयोगो विलक्षणः फुल्लाख्यो जायते तस्मात्तज्जन्यकार्यस्य भवति परिमाणवृद्धिरित्यपि प्रत्युक्तम् सति हि परमाणुसंयोगे फुल्लं कार्यं तिष्ठेत स एव त्वनुपपन्नः पूर्वोक्तयुक्तिनिवहैरिति।

अवयवसंयोगादारब्धोऽवयवी अवयवादत्यन्तं भिन्नस्तत्र समवैतीत्यपि वैशेषिकाणां राद्धान्तोऽयुक्त एव समवायखण्डनयुक्तेः सत्ताखण्डनावसरे पूर्वमेव प्रदर्शितायाः सर्वस्या एवात्र प्रसरादिति।

तस्मात्परमाणुद्वये समवायेन द्व्यणुकादिक्रमेण च पृथिव्याद्यशेषमेव जगदुत्पद्यते इतीयं तार्किकाणां वैशेषिकाणां च सृष्टिप्रक्रिया श्रुतियुक्तिविरोधादुपेक्षणीयैव।

एवं तत्तत्प्राण्यदृष्टसहकृतस्येश्वरस्य संजिहीर्षावशाद्विभक्तेषु तत्तदवयवेषु अवयवरूपतामापद्यमानेषु त्रसरेण्वारम्भकद्व्यणुकावयवपरमाणौ कर्म ततो विभागस्ततः संयोगनाशस्ततो द्व्यणुकनाशः क्षणैकमात्रस्थायिना त्रसरेणुना तस्य परमाणोः संयोगभङ्गक्रियानाशत्रसरेणुनाशौ ततस्तत्संयोगनाशात्मको महाप्रलय इति संहारप्रक्रियापि तार्किकाणां वैशेषिकाणां चायुक्तैव दर्शितदिशा परमाणोस्तत्कर्मणस्तत्संयोगस्य चासिद्धेः; नचादृष्टस्य सहकारित्वमपि संभवति अदृष्टं हि कस्यचिदुपभोगाय भवतीत्युपभोगजनकमेव पदार्थमुत्पादयेत् नतूपभोगजननासमर्थं प्रलयमिति कार्यमात्रं प्रत्यदृष्टस्य कारणताऽपि गता। तस्मात्सर्वथाप्यनुपपन्नः परमाणुकारणवाद इति।

### विकासः

अथास्तु सांख्याभिमतायाः प्रकृतेरेव जगदुपादानत्वमिति चेन्न तस्या अनिर्वचनीयत्वे सैव मायेतीष्टापत्तेः, निर्वाच्या तु सा न संभवति सा हि सती असती वा ? आद्ये संसारजननस्वरूपयोग्यायास्तस्या निवृत्त्यभावेन नित्यतया नित्यस्य च स्वरूपयोग्यत्वे फलावश्यम्भावादनिर्मोक्षापत्तिः प्रसज्येत, असत्त्वे गगनकमलिनीवदुपादानत्वानुपपत्तिः । एवं सावयवत्वेऽनादित्वव्याघातः निरवयवत्वे पुरुषवत्परिणामित्वानुपपत्तिः, नचाविद्यायामप्यमी दोषा आक्रमितुमुत्सहन्ते तस्या मायारूपत्वेनानुपपत्तेर्दूषणस्य भूषणायमाणत्वात् तदुक्तं मण्डनमिश्रैः अनुपपद्यमानार्थैव हि माया अतएवैनामनिर्वचनीयां वयं मन्यामहे । तस्मादघटितघटनापटीयसी श्रुतिसिद्धाऽनिर्वाच्याऽविद्यैव जगदाकारेण परिणमते ब्रह्मसाक्षात्काराच्च बाध्यते रज्जुसाक्षात्कारात् रज्ज्वज्ञानसर्पादिकमिवेति श्रौतीमेव प्रक्रियां समर्थयन्तः श्रेयोऽर्थिनो-विद्वच्चक्रचूडामणयो विजितकामाद्यरातयो नित्यनैमित्तिकानुष्ठानक्षपितकल्मषा अद्वैतवाद-मेवैनं सर्वातिशायिनं मन्यन्ते । तत्र कश्चित्पदार्थः साक्षादेवाविद्यापरिणामः यथा ईश्वरस्य देहो रामकृष्णादिरूपः स्वाप्निकश्च हस्त्यादिः कश्चिच्च भूतद्वारेत्यभिहितं प्राक् ।

नचाविद्यापरिणामवादिना ब्रह्मवादिना सत्कार्यवादोऽपि परिणामवादानुवर्ती सांख्येनेवास्थेयः । स च न संभवति कारकव्यापाराज्जायमानाया अभिव्यक्तेरपि पूर्वं सत्त्वे कारकव्यापारवैयर्थ्यम्, तन्त्वाद्यवस्थायामपि पटादेर्दृश्यत्वाद्यापत्तिश्च । अभिव्यक्तेरभिव्यक्तिपरम्परायामनवस्था च अभिव्यक्तेरुत्पत्तिस्वीकारे च किमपराद्धं पटादिनेति चेत् ? तदेतदारम्भवादेऽपि तुल्यम्, उत्पत्तेरनादित्वे हि कारकव्यापारवैयर्थ्यम्, उत्पत्तेरुत्पत्त्युपगमे चानवस्थेति । नचाद्यक्षणसम्बन्धरूपैवोत्पत्तिः, सा च घटादिरूपैवेति नानवस्थादयो दोषा-इति वाच्यम्, यतो घटोऽस्तीत्यादितः आद्यक्षणसम्बन्धोऽस्तीति 'घट उत्पद्यते इत्यत-आद्यक्षणसम्बन्ध उत्पद्यते इति च न कश्चित्प्रत्येति, क्षणस्यातीन्द्रियतया तद् घटितस्वरूपस्य घटादेरदृश्यत्वप्रसङ्गश्च । अथैवं भवन्मतेऽभावस्याधिकरणात्मकत्वं कथं स्यात् भूतलादावतीन्द्रियस्याभावस्य सत्त्वेन तत्स्वरूपभूतस्य भूतलादेरप्यदृश्यत्वप्रसङ्गादिति चेत् एकस्यापि हि रूपभेदेन दृश्यत्वमदृश्यत्वं च कल्प्यमानं न दोषावहम् भूतलत्वेन हि दृश्यत्वमतीन्द्रियाभावत्वेन चादृश्यत्वमित्युपगमे दोषाभावात् ।

किञ्चास्तु अन्येषां सांख्यादीनां यथा तथा ब्रह्मातिरिक्तानां सर्वेषामाविद्यकत्वं मन्यमानानां वेदान्तिनामस्माकं पक्षे आपत्त्यभावात् । आरोपे सति निमित्तानुसरणात् । तदुक्तं विवरणे 'आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप, इति ।

एतेन ब्रह्मण्यपि सर्वप्रपञ्चाभावानामभ्युपगततया तत्रातीन्द्रियाभावस्यापि ब्रह्मरूपत्वेन ब्रह्मणोऽप्यतीन्द्रियत्वापत्त्या मनसाऽपि तस्य साक्षात्कारो न स्यात् अभावस्य सप्रतियोगिकतया तदभिन्नत्वेन ब्रह्मणोऽपि तत्तत्प्रतियोगिकत्वाद्यापत्तिश्च नच ब्रह्माप्यनिर्वचनीयं येन तस्मि-

## विकासः

अभिधीयमानं दूषणमपि भूषणं स्यादित्यपि पराहतम्, ब्रह्मरूपाधिकरणात्मकत्वं न तावदैक्यमपितु ब्रह्मसत्तातिरिक्तसत्ताऽभावः यथा प्रातीतिकस्य सर्पस्य रज्ज्वनं सत्त्वा नावस्तद्वदेव घटाभ.वादेरपीत्य तो न काचिद्रापत्तिरिति ।

तस्मात् सांख्य तार्किकयोः प्रदर्शितस्यैतत्पर्यनुयोगवारणस्यानुत्तरणीयत्वसाम्येऽपि ब्र चापरिणामवादिनां पर्यनुयोगस्यानवकाश एव एतस्यमायिकत्वसमर्थकत्वेन भूषणत्वात् ।

इदमप्यत्र समीक्ष्यते 'घट उत्पद्यते' इत्यादिव्यवहारः सत्कार्यवादानभ्युपगन्तृ तार्किकाणां न सामञ्जस्यमर्हति घटस्य पूर्वमविद्यमानतया उत्पत्तिक्रियाकारकत्वानुपपत्तेः आविर्भावतिरोभाववादिनां तु सूक्ष्मेण रूपेण घटस्यावस्थानान्नानुपपत्तिः । अवयवि दानीभूतावयवाद् भेदे तत्र सम्बन्धानुपपत्तिश्च कार्त्स्न्येन सम्बध्नाति एकदेशेन विकल्पपराहतत्वात् अतीन्द्रियपर्याप्तबहुत्वादेरिव यावदवयवपर्याप्तघटादेः प्रत्यक्षानुपपत्ति 'उत्पद्यते' इत्यस्य उत्पत्त्याश्रय इत्यर्थकत्वेऽप्येतद्दोषस्यावारणञ्च पूर्वं प्रदर्शितं परमाणोस्तत्संयोगस्य तत्समवायस्य चानुत्पत्तेः सद्भावश्च तस्मात् सांख्यापेक्षयाऽऽरम्भ नितरामनुपपन्न एवेति मन्तव्यमिति ।

अत्रेदमप्यवगन्तव्यम्—यथा सांख्यैः परिणामवादः सत्कार्यवादश्चाभ्युपेयते प्र परिणामो जगत्, तच्च सूक्ष्मेण रूपेण कारणे विद्यमानमेवाविर्भवतीति; एवं वेदा भिरपि अविद्यापरिणामः प्रपञ्चः कारणे ( अविद्यायाम् ) सूक्ष्मरूपेण विद्यमान एव र्भवतीति 'तद्यथा वटबीजसामान्यमनेकान् स्वाव्यतिरिक्तान् वटान्, इत्यादि श्रुत्या संसिद्धि तो न वटबीजात्सहकारतरोरुत्पत्तिरतः प्रपञ्चस्य परिणामत्वसाम्येऽपि वेदान्तनये स्कालपर्यन्तमज्ञानं तावदेव तत्तत्कार्यं स्वस्वकारणे सूक्ष्मेण रूपेणावतिष्ठत इत्यु भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतिभ्यः अज्ञानबाधे तु तत्कार्यस्यापि प्रपञ्चस्य बाधो न तु सूक्ष्मेणापि रूपेणावस्थानं, यथा रज्ज्वज्ञानबाधे तत्कार्यस्य भवति बाधस्तद्वदतो न काचिदनुपपत्तिः । सांख्यमते तु प्रकृतेर्नित्यतयाऽऽविर्भाव रोभावक्रमेण प्रपञ्चोऽपि नित्य एव न तु बाधित इति मुक्तस्यापि संसारापत्तिदुः माधाना । नच सत्त्वपुरुषान्यताख्यातिरूपाया विवेकख्यातेः प्रागेव बुद्धिः साधिकार पमतिघोरे संसारहुतभुजि होतुं प्रभवति न तु तत ऊर्ध्वमिति दग्धबीजस्य अ ङ्कुरोपजननसामर्थ्यस्येवेति वाच्यम्, बाधमनङ्गीकुर्वता केवलमाविर्भावतिरोभावं वदता तदभिधातुं शक्यते विवेकख्यात्यापि हि बुद्ध्यादेर्बाधानङ्गीकारेण पुनरुत्थानं निवारयितुं क्षमेतेति ।

## शाङ्करभाष्यम्

तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं

## भामती

तदुच्छेदाय वेदान्ताः प्रवृत्ता इति वक्ष्यति । प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुर्न पुना रजतादिविभ्रमा इति स एव विद्या, तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुमिति तदेव व्युत्पाद्यं नाध्यासमात्रम् । अत्र च 'एवं लक्षणमित्येवंरूपतयाऽनर्थहेतुता'उक्ता । यस्मात्प्रत्यगात्मन्यशनायादिरहितेऽशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति, तस्मादनर्थहेतुः । न चैवं पृथग्जना अपि मन्यन्तेऽध्यासं येन न व्युत्पाद्येतेत्यत उक्तम् पण्डिता मन्यन्ते । नन्वियमनादिरतिनिरूढनिविडवासनानुबद्धाऽविद्या न शक्या निरोद्धुमुपायाभावादिति यो मन्यते तं प्रति तन्निरोधोपायमाह— "तद्विवेकेन च वस्तुस्वरूपावधारणं—निर्विचिकित्सं ज्ञानं, विद्यामाहुः" पण्डिताः प्रत्यगात्मनि खल्वत्यन्तविविक्ते बुद्ध्यादिभ्यो बुद्ध्यादिभेदाग्रहनिमित्तो बुद्ध्याद्यात्मत्वतद्धर्माध्यासः । तत्र श्रवणमननादिभिर्यद्विवेकविज्ञानं तेन विवेकाग्रहे निवर्तितेऽध्यासापबाधात्मकं वस्तुस्वरूपावधारणं विद्या चिदात्मरूपं स्वरूपे व्यवतिष्ठत इत्यर्थः । स्यादेतत्—अतिनिरूढनि-

## प्रकाशः

उक्ता सूचिता । तामुपपादयति—यस्मादिति । अशनाया बुभुक्षा आदिना पिपासापरिग्रहः । दुःखाकरोति वस्तुवृत्तेनादुःखिनं दुःखिनं करोतीत्यर्थः । पृथग् जनाः पामराः । निर्विचिकित्सं संदेहभिन्नम् । तद्विवेकेनेति भाष्येण परमात्मनो बुद्ध्यादिभ्यो विवेकग्रहस्य वस्तुस्वरूपावधारणे उपयोग उक्तस्तत्र विवेकग्रहे सामग्रीं दर्शयन्नुपयोगप्रकारं दर्शयति— प्रत्यगात्मनीति । वस्तुस्वरूपावधारणमित्यत्र वस्तुस्वरूपं च तदवधारणमिति कर्मधारयेण अखण्डाकारवृत्त्यभिव्यक्तं चैतन्यं विवक्षितमित्याह—चिदात्मरूपमिति । चरमतत्त्वसाक्षात्काररूपया वृत्त्याऽभिव्यक्तमेव हि स्वरूपज्ञानम-

## शाङ्करभाष्यम् ।

सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते। तमेतमविद्याख्यमात्मानात्मनोरित-

## भामती

विद्वासनानुविद्धाऽविद्या विद्ययाऽपबाधिताऽपि स्ववासनावशात्पुनरुद्भविष्यति, प्रवर्तयिष्यति च वासनादिकार्यं स्वोचितमित्यत आह—

## प्रकाशः

विद्यानिवर्त्तकम्, न केवलं चैतन्यम्, यथा केवलस्य सौरालोकस्य तृणदाहाजनकत्वेऽपि सूर्यकान्तमणिमुपारूढस्य तस्यैव दाहकत्वं तद्वत्। तदुक्तम्—

'तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तन्न्यायं तत्र योजयेत् ॥' इति।

भाष्ये—'तत्रैवं सतीति। यथा हि रज्जावध्यस्तस्य सर्पस्य दोषगुणाभ्यां न रज्जुः संस्पृश्यते एवं ब्रह्मापि स्वस्मिन्नध्यस्तस्य जगतो गुणदोषाभ्यां न संस्पृश्यतेऽतश्चाविकार्योऽयमुच्यते इत्यादीनि वाक्यानि भवन्ति निराबाधमुपपन्नानीति।

एतेन ब्रह्मपरिणामवादः प्रतिक्षिप्तः। अयं च वादो निराकर्तु रेव त्रपामापादयति, निरवयवस्यासङ्गस्य ब्रह्मणः परिणामासम्भवात्, परिणामित्वे हि ब्रह्मणो विकारित्वापत्त्योत्पत्तिविनाशित्वप्रसङ्गात्। अविकृतस्तु परिणामो व्याघातादेव पराहतः। उक्तञ्च वार्तिककृद्भिः— 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणाम्' इति।

इमं च ब्रह्मपरिणामवादमास्थाय वल्लभीयाः शुद्धाद्वैतमिति वेदान्तस्य नामान्तरं कुर्वन्ति तेऽपि प्रष्टव्याः किं केवलं ब्रह्मैव स्वपरिणामं प्रति हेतुः सहकारिसापेक्षं वा ? नाद्यः एकदैव सर्वपरिणामप्रसङ्गात् समर्थस्य क्षेपायोगात् द्वितीयानपेक्षणात् जगद्वैचित्र्यानुपपत्तेश्च। तदुक्तम् उदयनाचार्यैन्यायकुसुमाञ्जलौ-

'एकस्य न क्रमः क्वापि वैचित्र्यं च समस्य न।
शक्तिभेदो नचाभिन्नः स्वभावो दुरतिक्रमः ॥' इति।

## भामती

तत्रैवं सति—एवंभूतवस्तुतत्त्वावधारणे सति,। यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते अन्तःकरणादिदोषेणाशनायादिना चिदात्मा, चिदात्मनो गुणेन चैतन्यानन्दादिनाऽन्तःकरणादि न सम्बध्यते। एतदुक्तं भवति-तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स तादृशो यदनादिमपि निरूढनिविडवासनमपि मिथ्याप्रत्ययमपनयति । तत्त्व पक्षपातो हि स्वभावो धियाम् । यथाऽऽहुर्बाह्या अपि—

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥' इति ।

### प्रकाशः

न द्वितीयः—यदि हि इच्छाकालादिकं कमपि सहकारिणमपेक्ष्यैव ब्रह्म परिणमते इत्युच्यते, तदेदं सहकारित्वेनाभिमतं ब्रह्मणो भिन्नमभिन्नं वा ? आद्ये ब्रह्मभिन्नं वस्तु स्वीकुर्वतां भवतां शुद्धाद्वैतपदं पारिभाषिकं स्यात्, न चैवमपि संभवति निरवयवस्य ब्रह्मणः परिणामासम्भवात्, अपि च जीवपरमात्मनोर्नित्यं भेदमुपगच्छतां धर्ममार्गं प्रवर्त्तयतां बहूनुपकुर्वतामपि भवतां शुद्धाद्वैतमिति संज्ञा परीक्षकाणां न मनागपि चेतांसि चमत्करोति । द्वितीये सामग्रीभेदाभावात्कार्यभेदानुपपत्तिरिति पूर्वोक्तदोषानुषङ्गः । किञ्च कार्त्स्न्येन ब्रह्म परिणमेत एकदेशेन वा ? आद्ये दध्याकारेण परिणतस्य पयस इव ब्रह्मणः जगत्स्वरूपातिरिक्तस्वरूपस्याभावप्रसङ्गेन घटादिनाशे ब्रह्मणो नाशापत्तिरशक्यसमाधाना, द्वितीये ब्रह्मणो निरवयवस्यैकदेशाभावेन एकदेशेन परिणामासंभवः, अपि च तस्यैकदेशस्य ब्रह्मणो भिन्नत्वेऽनेकं ब्रह्मणः स्वरूपमापद्येत सर्वथा ब्रह्मणोऽनन्यत्वे च ब्रह्मणो नाशापत्तिर्दुर्निवारैवेति बोध्यम्। एवम्भूतेति। निरस्तसमस्तधर्मकाखण्डचिन्मात्रस्वरूपेत्यर्थः । परस्पराध्यासमभिप्रेत्याह—चिदात्मनो गुणेन धर्मतया कल्पितेन। विज्ञानवादिनां कारिकामुदाहरति-निरुपद्रवभूतार्थेति अयमाशयः—सर्वं क्षणिकमिति भावनया विषयेष्वनादित्वकल्पनाः

## भामती

विशेषतस्तु चिदात्मस्वभावस्य तत्त्वज्ञानस्यात्यन्तान्तरङ्गस्य कुतो निर्वाच्ययाऽविद्यया बाध इति । यदुक्तं 'सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्याहमिदं ममेदमिति लोकव्यवहार' इति, तत्र व्यपदेशलक्षणो व्यवहारः कण्ठोक्तः । इति शब्दसूचितं लोकव्यवहारमा- दर्शयति--तमेतमविद्याख्यमिति । निगदव्याख्यातम् ॥

### प्रकाशः

निवर्तन्ते स्वलक्षणमिति भावनया च द्रव्यगुणकर्मादिषु विशेष्यविशेषण- भावकल्पनाः नश्यंति दुःखमिति भावनया च रागादिदोषप्रवृत्तिसुखान- प्लवाः क्षीयन्ते, शून्यमिति भावनया च विषयोपप्लवा अपगच्छन्ति ।

ततश्च चतुर्भिर्भावनाभेदैश्चतुर्विधसंस्कारविरोधिभिश्चतुर्विधेषूक्तेपूपप्लवेषु क्रमेणाभिभूतेषु भावनाप्रकर्षपर्यन्तात्समनन्तरप्रत्ययात् सर्वोपप्लवरहितं यत् विशुद्ध विज्ञानमुत्पद्यते तस्य निरुपद्रवपरमार्थस्वभावस्य संस्कारबलादनुवर्तमानेन यविपर्ययैर्न बाधःतत्र हेतुः अयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपातत इति परमार्थ- विषयकभावनाजन्यायाः बुद्धेर्विनापि प्रयत्नं तत्त्वप्रावण्यलक्षणतत्पक्ष- पातित्वेन प्राबल्यादिति ।

तमेतमित्यादिभाष्यस्य अहमिदं ममेदमिति प्राक्तनेन भाष्येण पौनरु- क्त्यमपाकरोति—यदुक्तमिति । व्यवहारो द्विविधोऽभिलापरूपः प्रवृत्तिरूपश्च तत्र प्रथमोऽहमिद ममेदमित्यादिनोक्तोऽपि प्रवृत्तिरूपो व्यवहारो नाद्याऽप्यभि- धायीत्यतस्तदभिधीयते भाष्यकृतेत्याह—इति शब्दसूचितमिति ।

### विकासः

प्रमाणानि नाविद्यावन्तं प्रेरकत्वेनाश्रयन्ति अनुपयोगात् विरोधाच्चेत्यादि भाष्यं वर्णयन्ति—तत्त्वपरिच्छेदो हीति । एषा प्रत्यक्षप्रक्रिया सिद्धान्तिनाम्, विषय- चैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यं चेति त्रिधा तावच्चैतन्यमविद्यावशाद् विभक्तं भवति । तत्र घटादिविषयावच्छिन्नं चैतन्यं विषयचैतन्यम्, चैतन्यस्य घटाद्यवच्छिन्नं चाधिष्ठानतया भवति, सर्व एव हि पदार्थाः अविद्यया विभक्ते यस्मिन् यस्मिन् चैतन्ये कल्पिताः तत्तच्चैतन्यं तत्तद् विषयाधिष्ठानं तत्तद्विषयावच्छिन्नं चेत्युच्यते । तत्र घटाद्यवच्छिन्नचैतन्यं विना वृत्तिरूपप्रमाज्ञानमभासमानतया तदभानप्रयोजकावरणरूपता ब्रह्मसाक्षात्कारपर्यन्त

## विकासः

विद्यमानस्याज्ञानस्योपेयते; चक्षुरादिद्वाराऽन्तःकरणस्य च विषयदेशगमने यो भवति तस्य घटपटाद्याकारः परिणामः स एव वृत्तिरित्युच्यते; वृत्त्यवच्छिन्नं चैतन्यमेव च प्रमाणचैतन्यमित्याख्यायते ।, अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यमिति निगद्यते अन्तःकरणस्य चेन्द्रियप्रणालिकया विषयदेशगमने त्रयाणामप्युक्तचैतन्यानामेकदेशस्थत्वेन भवत्यैक्यम् । प्रदर्शितरूपया तया वृत्त्या प्रदीपवत्स्वच्छया घटाद्यवच्छिन्नचैतन्यावरकाज्ञानगतावरणशक्तिनाशे घटाद्यवच्छिन्नं चैतन्यं प्रकाशते तथासत्यवच्छेदकोऽपि घटादिः प्रकाशमानचिद्रूपसदधिष्ठानतादात्म्यापन्नत्वात्प्रकाशतेऽतो घटो भातीति व्यवहारे घटाकारवृत्तिमदन्तःकरणावच्छिन्नचैतन्यात्मकप्रमात्रभेदस्य भवत्युपयोगः वृत्तिनाशे च पुनरावरणशक्तिरुद्भवतीति ।

अयमत्र निष्कर्षः शुक्तिरजताद्यखिलप्रातिभासिकानां सुखदुःखादीनां योग्यानामन्तःकरणधर्माणामन्तःकरणस्याविद्यायाश्च वृत्तिमनपेक्ष्यैव साक्षिणैव भानम् अन्येषां तु प्रमाणजनितवृत्तिसापेक्षं भवति भानमिति ।

नन्वन्तःकरणस्यापि स्वच्छतया तस्य विषयदेशगमनेनैव विषयसम्बन्धे जायमाने विषयावच्छिन्नचैतन्यगताज्ञानावरणनिवृत्त्युपपत्तौ किमर्थं वृत्तिः स्वीक्रियते इति चेत् ? अत्रैवमवधारयन्तु समाहितान्तःकरणः धीमन्तो भवन्तः ? परोक्षस्यापि विषयस्य भवति सत्त्वेन ज्ञानम्, भवति हि वह्न्यादेरनुमितौ सत्यां वह्निरस्तीत्यादि प्रत्ययः समेषाम्, तस्मिन् वह्न्यादिप्रदेशे चक्षुराद्यसन्निकृष्टेऽन्तःकरणस्य निर्गमनाभावेन शरीरस्थिते एवान्तःकरणे वृत्तिरपेक्षा तया च वृत्त्या वह्न्याद्यवच्छिन्नचैतन्येऽसत्त्वापादकावरणस्य निवृत्तिर्भवतीति वृत्तेरावरणनाशकत्वं क्लृप्तम्, एवमपरोक्षस्थलेऽपि अभानापादकावरणनाशाय वृत्तिरेवोपयुज्यते सति चैवं तज्जन्यस्य संस्कारस्योदयात्स्मरणमप्युपपद्यतेतराम् ।

अपि च चक्षुर्द्वारान्तःकरणे विषयदेशं गते रूपादेरिव गन्धादेरप्यावरणभङ्गापत्तिः अन्तःकरणसन्निकर्षस्योभयत्र समानत्वात् अतः स्वीकार्या वृत्तिः । तथा च गन्धविषयकवृत्तेर्जनकस्य घ्राणसन्निकर्षस्याभावात्तस्या उत्पत्त्यसंभवान्न तज्जन्यस्य गन्धावरणभङ्गस्य प्रसङ्ग इति ।

अथैवमपि परोक्षस्थलवदनिर्गतस्यैवान्तःकरणस्य विषयेन्द्रियसम्बन्धादिरूपकारणविशेषजन्या वृत्तिरस्तु परोक्षवृत्तिविलक्षणायास्तस्याः 'भाति' स्फुटं प्रकाशते' इत्यादिव्यवहारप्रयोजकत्वस्य संदेहजिज्ञासानिवर्त्तकत्वस्य च सन्निकर्षजन्यतया संभवादिति चेन्न, अन्यदेशस्थितस्य हि आलोकात्मकस्य प्रकाशस्यान्यत्र तमोविनाशविषयाभिव्यक्त्यादेरजनकत्वेन प्रकाशे स्वसम्बद्धार्थस्यैव भासकत्वेन विषयदेशे वृत्त्युत्पत्तयेऽन्तःकरणनिर्गमनस्यावश्यकत्वम्, सुखादिषु साक्षाज्ज्ञानसम्बन्धस्यैव भानप्रयोजकत्वेनान्यदेशस्थिताया वृत्तेरन्यत्रावरणानभिभावकत्वात् अन्यथाऽतिप्रसङ्गात् । एवं शुक्तिरजतादेरन्तःकरणोपहिते साक्षिण्यध्यस्तत्वरूपं प्रत्यक्षत्वं पुरोवर्त्तिनि अन्तःकरणगमनं विना न संभवतीत्यतोऽपि विषयदेशेऽन्तःकरणस्य गमनमङ्गीकार्यम् ।

विकासः

वृत्त्यवच्छिन्नचैतन्याभेद एव च विषयचैतन्यगतमपरोक्षत्वमन्यस्य प्रत्यक्षत्वस्य दुर्व-चत्वात् । जडान्तःकरणपरिणामरूपाया वृत्तेर्ज्ञानत्वाभावात्, ज्ञानस्यैकत्वेन तत्रापरोक्षत्वजातेरसम्भवात् उपाधिभूतवृत्तिवैजात्यात्तदुपगमेऽपि 'सुरभि चन्दनम्' इत्यादावेकज्ञानत्वोपगमेन तस्यापरोक्षत्वे सौरभांशेऽपि तस्यापरोक्षत्वापातात् जातेरव्याप्यवृत्तित्वस्य दृष्टविरुद्धत्वात् । तस्माद् वृत्त्यवच्छिन्नचैतन्याभेद एव ज्ञानस्य प्रत्यक्षत्वम्, तयोरभेदश्चैकदेशस्थत्वं विना न संभवति । न च तत अन्तःकरणनिर्गमनं विनेत्यतोऽपि तन्निर्गमनस्यावश्यकत्वम् । किञ्च चक्षुरादिसन्निकर्षस्य रूपादाविव गुरुत्वादावप्यविशेषात् चक्षुर्द्वारान्तःकरणसम्बन्धस्य संयुक्ततादात्म्यस्याविशेषाच्च रूपादेरिव गुरुत्वादेरप्यावरणभङ्गापत्तिः । इन्द्रियस्य वृत्त्युपजनव्यापारे च वृत्तेः कल्प्यायाः फलानुरोधेन तत्तदिन्द्रिययोग्यत्वेनाभिमत एव कल्पनीयत्वात् तस्या एव चावरणनाशकत्वेन गुरुत्वादेर्न प्रत्यक्षप्रसङ्गस्तस्माद्भवति विषयदेशे वृत्तिरावश्यिकीति ।

शाङ्करभाष्यम्

रेतराध्यासं पुरस्कृत्य सर्वे प्रमातृप्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ? उच्यते—देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यव-

भामती

आक्षिपति—"कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि" तत्त्वपरिच्छेदो हि प्रमा, विद्या, तत्साधनानि प्रमाणानि कथमविद्यावद्विषयाणि । नाविद्यावन्तं प्रमाणान्याश्रयन्ति, तत्कार्यस्य विद्याया अविद्याविरोधित्वादिति भावः । सन्तु वा प्रत्यक्षादीनि सं- तथापि यथा तथा, शास्त्राणि तु पुरुषहितानुशासनपराण्यविद्याप्रतिपक्षतया नाविद्यावद्विषयाणि भवितुमर्हन्तीत्याह—शास्त्राणि चेति ।

भामती

समाधत्ते—"उच्यते देहेन्द्रियादिष्वहंममाभिमानहीनस्य तादात्म्यतद्धर्माध्यासहीनस्य, प्रमातृत्वानुपपत्तौ सत्यां, प्रमाणप्रवृत्त्यनुपपत्तेः" अयमर्थः प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं तच्च स्वातन्त्र्यं, स्वातन्त्र्यं च प्रमातुरितरकारकाप्रयोज्यस्य समस्तकारकप्रयोक्तृत्वम्। तदनेन प्रमाकरणं प्रमाणं प्रयोजनीयम्। न च स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति। न च कूटस्थनित्यश्चिदात्माऽपरिणामी स्वतो व्यापारवान्। तस्माद् व्यापारवद्बुद्ध्यादितादात्म्याध्यासाद् प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति। अथ मा प्रवर्तिषत प्रमाणानि किं नश्छिन्नमित्यत आह—नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति। व्यवह्रियतेऽनेनेति व्यवहारः फलं, प्रत्यक्षादीनां प्रमाणानां

प्रकाशः

अनुपयोगं प्रदर्श्य विरोधाभिप्रायं प्रकटयति—नाविद्यावन्तमिति। अत्र 'उच्यते देहेन्द्रियादिषु' इत्यादिपरिहारभाष्येण प्रमाणप्रवृत्तावविद्याया उपयोग समर्थनात् शङ्काग्रन्थस्यानुपयोगप्रदर्शनपरत्वमेवोचितं न तु विरोधप्रदर्शन परत्वमपीति शङ्का निरस्ता वेदितव्या, विरोधानुपयोगोभयपरतया व्याख्यानस्य कृतत्वादिति। युक्तञ्च प्रमाणजन्यज्ञानरूपाया विद्याया अविद्याविरोधित्वाक्षेप परत्वेनापि भाष्याभिप्रायवर्णनमन्यथा तस्यापि विद्यमानत्वे तदनभिधानं भाष्यकृतां न्यूनतामापादयेत्, उत्तरभाष्येण चाविद्याया उपयोगं समर्थयता विरोधोऽपि परिहृयत एवातोऽत्रैवंवर्णनमावश्यकमेवेति भवति सर्वमवदातम्। अध्यासहीनस्य प्रमातृत्वानुपपत्तिमुपपादयति—प्रमातृत्वंहीति। निर्व्यापारे आत्मनि प्रमाणप्रेरणरूपो व्यापार आध्यासिक एवेति भवति प्रमाणानामविद्यावता पुरुषेण प्रेर्यमाणत्वमिति भावः। प्रयोजनीयम् प्रकर्षेण योजनीयम् प्रेरणीयमिति यावत्। स्वोक्तं पुरुषविषयत्वं व्याचष्टे—पुरुषाश्रयत्वमिति। अनुपादाय अप्रवर्त्त्य। व्यवहारशब्दस्य प्रवृत्तावभिलापे एव च वृत्तेः प्रत्यक्षादिव्यवहार इत्यनुपपन्नमित्याशङ्क्य प्रमितावपि तस्य व्युत्पत्तिं दर्शयति—व्यवह्रियतइति। फलं प्रत्यक्षादिप्रमितिः। दण्डिन

शाङ्करभाष्यम्

हारः सम्भवति न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः सम्भवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन्सर्वस्मिन्नसत्यसङ्गस्यात्मनः

भामती

फलमित्यर्थः । इन्द्रियाणीति इन्द्रियलिङ्गादीनीति द्रष्टव्यम्, दण्डिनो गच्छन्तीति वत् । एवं हि प्रत्यक्षादीन्युपपद्यते । व्यवहारक्रियया च व्यवहार्याक्षेपात्समानकर्तृकता । अनुपादाय यो व्यवहार इति योजना । किमिति पुनः प्रमातोपादत्ते प्रमाणानि, अथ स्वयमेव कस्मान्न प्रवर्तते इत्यत आह—"न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः- प्रमाणानां व्यापारः, संभवति । न जातु करणान्यनधिष्ठितानि कर्त्रा स्वकार्ये व्याप्रियन्ते । मा भूत्कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिरिति । अथ देह एवाधिष्ठाता कस्मान्न भवति, कृतमत्रात्माध्यासेनेत्यत आह "न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते" । सुषुप्ते ऽपि व्यापारप्रसङ्गादिति भावः । स्यादेतत् यथाऽनध्यस्तात्मभावं वेमादिकं कुविन्दो व्यापारयन् पटस्य कर्ता एवमनध्यस्तात्मभावं देहेन्द्रियादि

प्रकाशः

इति । यथा लक्षणाद्वारेण दण्डयद्दण्डिसमुदायपरो दण्डिशब्दः, एवमिहेन्द्रियशब्दोऽपीन्द्रियानिन्द्रियसाधारणप्रमाणसमुदायपर इति भावः । उपपद्यन्ते इति । इतरथाऽऽदिपदग्राह्यास्वनुमित्यादिवृत्तिषु इन्द्रियाणामनुपयोगादादिपदोपादानमनुचितं स्यात्, प्रमाणमात्रपरत्वे तु भवत्यादिपदमुपादातुमुचितमित्यर्थः । 'अनुपादाय व्यवहार' इति भाष्ये कर्तुरनभिधानात्समानकर्तृकक्रियापेक्षक्त्वाप्रत्ययायोगमाशङ्क्य कर्तारमाक्षिप्य परिहरति—व्यवहारक्रिययेति । व्यवहार्याक्षेपात् व्यवहारिण आक्षेपात् । नन्वेवमप्यनुपादाय व्यवहारो न सम्भवतीत्यनुपपन्नम् अनुपादानस्य प्रमातृकर्तृकत्वेन असम्भवनस्य च व्यवहारकर्तृकत्वेन कर्तृभेदादित्याशङ्क्याह—अनुपादायेति । तथा चानुपादाय यो व्यवहारः प्रमातुः

## भामती

व्यापारयन् भविष्यति तदभिज्ञः प्रमातेत्यत आह--"नचै तस्मिन् सर्वस्मिन्-इतरेतराध्यासे इतरेतरधर्माध्यासे चासति, आत्मनोऽसङ्गस्य सर्वथा सर्वदा सर्वधर्मधर्मिवियुक्तस्य प्रमातृत्वमुपपद्यते । व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति. अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापारयोगोऽसङ्गत्वादित्यर्थः । अतश्चाध्यासाश्रयाणि प्रमाणानीत्याह--'न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति" प्रमायां खलु फले स्व तन्त्रः प्रमाता भवति । अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा। कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत्, यदि चिदात्मा तत्र

## प्रकाशः

कर्तृकः स न सम्भवतीत्येवं योजनयाऽनुपादानव्यवहारयोः समानकर्तृकत्वानुपपत्तिः। साङ्ख्यः शङ्कते किमितीति। कुत इत्यर्थः स्वप्रयोजनार्थं प्रमाता प्रमाणानि किमर्थमुपादत्ते प्रमाणान्येव प्रमात्रर्थं प्रवर्त्तन्ताम्, दृश्यते हि वत्सविवृद्ध्यर्थं स्वयमेव क्षीरं प्रवर्त्तते इत्यर्थः । मा भूदिति न हि भवतीत्यर्थः । चार्वाकः शङ्कते--अथ देह एवेति । कृतमत्रेति । इन्द्रियाद्यधिष्ठातृत्वसिद्ध्यर्थं देहे आत्मनस्तादात्म्याध्यासाङ्गीकारो व्यर्थ इत्यर्थः । नन्वात्मनो देहादितादात्म्याध्यासमन्तरेणेच्छयैव तदधिष्ठातृत्वमस्तु भवन्ति हि 'चैत्रः स्वेच्छयोत्तिष्ठति स्वेच्छयोपविशति' इत्यादयो व्यवहारा इति तार्किकः शङ्कते--स्यादेतदिति । आत्मनोऽसङ्गस्य प्रेरकत्वसिद्ध्यर्थमवश्यमपेक्षणीयोऽयमध्यास इति भाष्यभावमाविष्करोति--व्यापारवन्तो हीति । प्रमाणप्रेरकत्वेनाध्यासं समर्थ्य प्रमाश्रयत्वेनापि तं समर्थयति--अतश्चेति । अवश्यश्चेत्यर्थः । अत्र यद्यपि 'नच प्रमातृत्वमन्तरेण' इति भाष्यं पूर्वभाष्यस्य शेषत्वेन प्रतीयतेऽनुमतं च विवरणप्रस्थानानुगामिना तथैव, तथापि 'प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः इति भाष्येण पौनरुक्त्यमपाकर्तुमेवं विभज्य भामतीपतिना व्याख्यातमिति बोध्यम् ।

## भामती

नाध्यस्येत । कथं चैष चिदात्मकर्तृको भवेत्, यदयन्तःकरणं व्याप...
चिदात्मनि नाध्यस्येत् । तस्मादितरेतराध्यासाच्चिदात्मकर्तृत्वं प्रमा...
सिध्यति । तत्सिद्धौ च प्रमातृत्वं, तामेव च प्रमामुररीकृत्य प्रमाण...

### प्रकाशः

ननु प्रमाणप्रवृत्तिः प्रमातृत्वमन्तरेण न भवतीत्युपगच्छामः तावता ... प्रमाया अध्यासाश्रितत्वमतस्तदुपपादयति-प्रमायां खल्विति परिणाम... परिणामविशेषः । प्रमेयप्रवणः । प्रमेयविषयकः, अनेन सुखदुःखादयो नि... पयाः व्यावर्त्यन्ते चित्स्वभाव इत्यनेन चेच्छादयः । कथञ्चेत्यादि । आश... शयः —जडस्यान्तःकरणस्य योऽयं वृत्त्याख्यः परिणामः स स्वभावतो जड... न वस्तुप्रकाशनार्हः यच्च वस्तुप्रकाशनार्हं चैतन्यं तदप्यविद्यावृतमिति ... जगदवभासयेदिति प्राप्तमान्ध्यमशेषस्य जगतोऽतोऽन्तःकरणवृत्तौ भवत्याध्या... चैतन्यतादात्म्यम् । एतया वृत्त्याऽभिव्यज्यते चैतन्यम्, आवरणं वा तस्य तिरस्क... इत्याद्युपेयते, तादृशं चाभिव्यक्तं तद्यत्रच्छिन्नं चैतन्यं प्रमेत्युच्यते । तस्याश्च चित... त्स्यापन्नायावृत्तेराश्रयेणापि तथैव चिदात्मना भवितव्यम्, नहि केवल... न्तःकरणस्य परिणामश्चैतन्यतादात्म्यं लब्धुमर्हति तथासति दुग्धादिपरि... मस्य दध्यादेरपि चित्तादात्म्यग्राहकत्वापत्तेरविशेषात्, तस्मादन्तः... चैतन्यतादात्म्यमध्यस्यते । तादृशस्य चान्तःकरणस्य परिणामश्चिद्रूप... 'चैतन्यतादात्म्ययोग्यताम्,' आपद्यते । यद्यन्तःकरणं स्वरूपतश्चिदात्मनि ना... स्येत कथं निर्विशेषे आत्मनि प्रमातृत्वादिव्यवहार उपपद्येत अतस्त... परस्परतादात्म्याध्यासोऽभ्युपेय इति भवत्यध्यासाधीनत्वं प्रमातत्कारणानामि... नच सर्वस्यैव प्रपञ्चस्य ब्रह्मणि तादात्म्येनाध्यासाद् दुग्धादिपरिणामस्यापि ... नोक्तचिद्रूपतेति वाच्यम्, सर्वत्र सदंशाध्यासेऽपि चैतन्यांशाध्यासस्यान्तः... तद्वृत्तावेव चोपगमात् 'सन् घट' इति प्रतीतिसत्त्वेऽपि 'चेतनो घट' इ... प्रतीतेः 'चेतनोऽहङ्करोमि' इति प्रतीतेश्चात एकस्मिन्नखण्डेऽपि ब्रह्मणि सद... चिदंशानन्दांशानां भिन्नानामविद्यया परिकल्प्यमानानां यथा व्यवहारं क... स्यचिदेवांशस्य तादात्म्याध्यासोऽङ्गीक्रियते न तु सर्वस्य सर्वत्र अतोऽन्तःक... णतद्वृत्त्योरेव भवति चैतन्यतादात्म्याध्यास इति । चिद्रूपः । चित्तादात्म्या... चिदात्मा चित्तादात्म्यम् व्रत अन्तःकरणे-एषः अन्तःकरण परिणाम...

शाङ्करभाष्यम् ।

प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दा-

भामती

प्रवृत्तिः । प्रमातृत्वेन च प्रमोपलक्ष्येत । प्रमायाः फलस्याभावे प्रमाणं न प्रवर्तेत । तथा च प्रमाणमप्रमाणं स्यादित्यर्थः । उपसंहरति तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि । स्यादेतत् । भवतु पृथग्जनानामेवम्, आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानां व्युत्पन्नानामपि पुंसां प्रमाणप्रमेयव्यवहारा दृश्यन्त इति कथमविद्यावद्विषयाण्येव प्रमाणानीत्यत आह—पश्वादिभिश्चाविशेषाद् इति ।

विदन्तु नामागमोपपत्तिभ्यां देहेन्द्रियादिभ्यो भिन्नं प्रत्यगात्मानं, प्रमाणप्रमेयव्यवहारे तु प्राणभृन्मात्रधर्मान्नातिवर्तन्ते । यादृशो हि पशुशकुन्तादीनामविप्रतिपन्नमुग्धभावानां व्यवहारस्तादृशो व्युत्पन्नानामपि पुंसां दृश्यते । तेन तत्सामान्यात्तेषामपि व्यवहारसमयेऽविद्यावत्त्वमनुमेयम् । च शब्दः समुच्चये । उक्तशङ्कानिवर्तनसहितपूर्वोक्तोपपत्तिगविद्यावत्पुरुषविषयत्वं प्रमाणानां साधयतीत्यर्थः । एतदेव विभजते यथा हि पश्वादय इति" अत्र च शब्दादिभिः श्रोत्रादीनां सम्बन्धे सतीति प्रत्यक्षं प्रमाणं दर्शितम् । शब्दादिविज्ञान इति तत्फलमुक्तम् । प्रतिकूल इतिचानुमानफलम् । तथाहि शब्दा

प्रकाशः

त्तसिद्धौ च प्रमाश्रयत्वं प्रमातृत्वमिति सिद्धौ च, अनेन नाविद्यावन्तं प्रमाणान्याश्रयन्तीत्यादिना प्रदर्शितस्य विरोधस्य परिहारः कृतः । तत्त्वपरिच्छेदो हीत्यादिना प्रदर्शितमनुपयोगं परिहरति—तामेव चेति । प्रमोपलक्ष्यते इति । यदि हि प्रमातृत्वं प्रमाणप्रेरकत्वरूपं प्रमायां स्वातन्त्र्य

शाङ्करभाष्यम् ।

दिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्तन्ते, यथा—दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति

भामती

दिस्वरूपमुपलभ्य तज्जातीयस्य प्रतिकूलतामनुस्मृत्य तज्जातीयतयो-पलभ्यमानस्य प्रतिकूलतामनुमिमीत इति । उदाहरति 'यथा दण्डे'ति शेषमतिरोहितार्थम् । स्यादेतत् । भवन्तु प्रत्यक्षादीन्यविद्यावद्विषयाणि, शास्त्रं तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि न देहात्माध्यासेन प्रवर्तितुमर्हति । अत्र खल्वामुष्मिकफलोपभोगयोग्योऽधिकारी प्रतीयते । तथा च पारमर्षं सूत्रम्— 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्' इति । न च देहादि भस्मीभूतं पारलौकिकाय फलाय कल्पत इति देहाद्यतिरिक्तं कंचिदधिकारिणमाक्षिपति शास्त्रं, तदवगमश्च विद्येति कथमविद्यावद्विषयं शास्त्रमित्याशङ्क्याह— शास्त्रीये त्विति । तुशब्दः प्रत्यक्षादिव्यवहाराद् भिनत्ति शास्त्रीयम् । अधिकारशास्त्रं हि स्वर्गकामस्य पुंसः परलोकसम्बन्धं बिना न निर्वहतीति तावन्मात्रमाक्षिपेत्, न

प्रकाशः

मुच्यते तदा देहेन्द्रियादिष्वित्यादिभाष्येण पौनरुक्त्यम्, तेनाऽपि प्रमातृप्रेरकत्वेनैवाध्यासस्य समर्थनात्, प्रमाया उपलक्षणत्वे तु साऽपि दर्शितेन प्रकारेण सुदृढं समर्थयत्यध्यासमिति भवति सर्वमुपपन्नम् । उपलक्षणत्वमिह स्वबोधकत्वे सति स्वेतरबोधकत्वम् । 'अविद्यावद्विषयाण्येव' इत्यत्र भाष्ये एवकारानुपपत्तिमाशङ्कते—स्यादेतदिति । अनुमेयमिति तथा च प्रयोगः विद्वद्व्यवहारोऽविद्यापूर्वकः व्यवहारत्वात् पश्वादिव्यवहारवदिति । शास्त्रफलमिति साङ्गदर्शपूर्णमासादेः प्रयोगे 'अनुष्ठाने' स्वयं यजमानः कर्ता स्यात्, यतः शास्त्रगम्यं फलं प्रयोक्तरि प्रतीयते, कुतः ? तल्लक्षणत्वात् शास्त्रप्रमाणकत्वादलौकिकार्थस्य, 'स्वर्गकामो यजेत' इत्यादौ स्वर्गोद्देशेन भावनामभिदधदाख्यातं भावना-

## भामती

तस्यासंसारित्वमपि तस्याधिकारेऽनुपयोगात् । प्रत्युतौपनिषदस्य पुरुषस्याकर्तुरभोक्तुरधिकारविरोधात् । प्रयोक्ता हि कर्मणः कर्मजनितफलभोगभागी कर्मण्यधिकारी स्वामी भवति । तत्र कथमकर्ता प्रयोक्ता कथं वाऽभोक्ता कर्मजनितफलभागभोगी ।

## प्रकाशः

क्षिप्रकर्तृसम्बद्धं फलमवगमयति, आत्मनेपदेन च फलस्य कर्तृगामिता प्रतीयत इत्यर्थः । यद्यपीदं पूर्वमीमांसायाः पूर्वपक्षसूत्रं तथापि फलस्य कर्तृगामित्वांशे न विगानमिति तावत्येवांशे प्रमाणतयोपन्यस्तम् । अशनायाद्यतीतपदसूचितं कर्तृत्ववैपरीत्यमाह—प्रयोक्ता हीति असंसार्यात्मपदसूचिताभोक्तृत्ववैपरीत्यमाह—कर्मजनितेति । अपेतब्रह्मेत्याद्युक्तानधिकारवैपरीत्यमाह—अधिकारीति । तस्यार्थमाह—स्वामीति । अकर्ता कर्तृत्वशक्तिरहितः ।

## विकासः

उपसंहरति—तस्मादिति । नन्वेतत्सर्वमविद्यासिद्धावुपपद्यते, सैव तु न कुतश्चित्सिध्यतीति चेत् ? भवत्प्रश्नादेव तावदियं सिद्धयति, अज्ञाते विषये प्रश्नानुपपत्तेः । प्रश्नो हि वाग्व्यवहारविशेषः, व्यवहारश्च व्यवहर्त्तव्यज्ञानजन्योऽतो व्यवहर्त्तव्याया अविद्याया ज्ञानं प्रष्टुर्भवत आवश्यकमतो भवत्प्रश्न एव सिद्धामविद्यां प्रत्याययति । ननु सिद्धयतु तावदिवमविद्या परन्तु सा केन प्रमाणेन सिध्यतीति प्रमाणविषयकोऽयं मदीयः प्रश्न इति चेत् ? तद्भवानेव जानीयात् येन प्रमाणेन तज्ज्ञानं जातमिति, नहि मयाऽयं नियमः कृतः यद्विषयकं भवतो ज्ञानं जायेत तत्र तत्र प्रमाणाभिधानं कर्त्तव्यमिति अस्तु वा प्रश्नोऽयं यथा तथा न किञ्चित्प्रमाणमिति वदामः ज्ञानं हि प्रमाणमपेक्षते नाज्ञानं । तदुक्तं वेदान्तमुक्तावलीकृता—

'अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः ।
स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा ॥' इति ।

तत्किं प्रमाणविरहान्नास्त्येवाविद्येति चेत् ? साद्यनुभवक्रोडीकृतां सर्वानेव व्यामोहयन्तीमुच्चावचप्रपञ्चमुदञ्चयन्तीमनिर्वचनीयां तां कोऽपह्नुवीत ! तथा हि अहमज्ञः' 'मयि ज्ञानं नास्ति' इत्यादिसामान्यतः प्रत्यक्षम्, 'ईश्वरं न जानामि' 'त्वदुक्तमर्थं न जानामि' इत्यादिविशेषतः प्रत्यक्षं सर्वानुमतमेव । एतैश्चानुभवैर्विषयीकृतेयमविद्या येन विनाऽनुपपद्यमाना तत्सर्वं भावरूपत्वमनादित्वमनिर्वचनीयत्वं विचित्रशक्तिमत्त्वादिकं स्वोपपादकं कल्पयति

## प्रकाशः

न हि ज्ञानप्रागभाव एवाज्ञानम्, भगवतैव तस्य निराकृतत्वात् तथाहि—

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।

इति गीतायामभिदधता भक्ताननुजिघृक्षताऽज्ञाननाशे ज्ञानस्य हेतुताऽभिहिता। सा च
नाज्ञानस्य ज्ञानप्रागभावरूपत्वे घटते, ज्ञानस्य स्वप्रागभावनाशरूपतया स्वंप्रति हेतुत्व
वादतः प्रागभावादन्यद् भावरूपमेवाज्ञानमुपेयम् । येऽपि प्रतियोगिनोऽन्यं प्रागभावध्वंस
क्षते न तेऽपि ज्ञानप्रागभावरूपस्याज्ञानस्य नाशं प्रति ज्ञानस्य हेतुत्वं व्यवस्थापयितुं क्षम
तथाहि—ज्ञानप्रागभावरूपस्याज्ञानस्य यो नाशो ज्ञानाद्भिन्नो ज्ञानादुत्पद्येत तस्यापि प्राग
वाच्योऽन्यथाऽज्ञाननाशस्यानादित्वापत्त्या तत्साधनवैयर्थ्यापत्तिः तस्य चाज्ञाननाशप्रागभाव
ज्ञाननाशोत्पत्तिक्षणे एव नाशः स्वीकार्यः अयमपि चाज्ञाननाशप्रागभावनाशस्तदानीमुत्पद्य
स्ततः पूर्वं स्वप्रागभावनाशमन्तरेणानुपपद्यमानः स्वप्रागभावनाशमपि तदानीं साधयति,
सोऽपि प्रागभावनाशस्तथेत्येवमप्रामाणिक्यनवस्था प्रसज्यते ।

अपि चैतत्कल्पे ज्ञानसामग्र्येव यदि ज्ञानप्रागभावरूपाज्ञाननाशं ज्ञानं
जनयेत् तदैकसामग्रीजन्यत्वेन द्वयोरैक्यमनिवार्यं स्यादतो ज्ञानसामग्री ज्ञानं
जनयति ज्ञानं च स्वप्रागभावनाशमिति वक्तव्यं तदपि न सम्भवति ज्ञानस्य स्वप्रागभाव
जन्मासम्भवात् । न च ज्ञानोत्पादकसामग्र्या यस्मिन् क्षणे ज्ञानं जायते तस्मिन्नेव क्षणे
ज्ञानेन ज्ञानप्रागभावरूपमज्ञानं नश्यतीति शक्यते वक्तुम्, समसमययोर्जन्यजनकभावानुप
तस्मादज्ञाननाशानन्तरमेव ज्ञानस्य जन्माभ्युपेयम्; ततश्च पश्चाद्भाविनो ज्ञानस्य पूर्व
नाशहेतुत्वमतितरामनुपपन्नमतो न ज्ञानप्रागभावरूपत्वमज्ञानस्य कथमपि भगवदभिमतम्

न वा ज्ञानध्वंसस्याज्ञानरूपत्वं भगवदभिमतं ज्ञानेन तस्य ध्वंसासंभवात्।
च घटादेः प्रत्यक्षकालेऽपि भाविनस्तत्प्रत्यक्षस्य प्रागभावसत्वात घटं न जानामीति
तिप्रसङ्गः, एवं प्रत्यभिज्ञादिकालेऽपि पूर्वज्ञानध्वंसस्य सत्त्वात् घटं न जानामीतिप्रतीति
अतोऽपि न ध्वंसप्रागभावौ तत्र विषयौ शक्यौ वदितुम्, नापि ज्ञानस्यभेदात्यन्ताभावौ
परैस्तयोर्नित्यत्वोपगमेन तस्याभिधातुमयुक्तत्वात् प्रतियोगिमत्यपि भेदस्य विद्यमानत्वा
ज्ञाननिवर्त्यमज्ञानं भावरूपमेव भगवतोऽभिमतमिति सिद्धम् ।

नन्वस्तु भगवद्वाक्यं यथा तथा 'अघटंभूतलम्' इत्यादिप्रत्ययस्य
घटात्यन्ताभावो विषयो न तु घटविरोधी भावरूपोऽघटात्मकः कश्चित्
तथैवोक्तप्रतीतेरपि ज्ञानात्यन्ताभावो विषयोऽस्तु अलं ज्ञानविरोधिभावरूपा
पगमेनेति चेन्न, अभावस्य हि विषयत्वेऽभ्युपगम्यमाने प्रतियोग्यंशे भा
धर्मपर्यासावच्छेदकताकप्रतियोगिताकः सामान्याभाव एव विषयो वाच्योऽपरथा घट
घटो नास्तीतिप्रतीतेः प्रामाण्यप्रसङ्गात् घटनिष्ठप्रतियोगिताकस्य तत्तद्घटत्वभावा
सत्त्वात् । न च तत्तद्विशेषाभाव...

## विकासः

वाच्यम्, एवमपि 'घटवद्भूतलम्' इत्यादिनिश्चयदशायां 'घटो नास्ति' इत्यादिबुद्धिप्रसङ्गात्, तत्तद्विशेषाभाववत्ताबुद्धौ शुद्धघटत्वावच्छिन्नवत्तानिश्चयस्याप्रतिबन्धकत्वात्। न च तद्धर्मावच्छिन्नवत्ताबुद्धौ तद्धर्मपर्याप्तावच्छेदकताका या प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारता तन्निरूपिताभावत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वमुपेयम्, तादृशश्च निश्चयो 'घटो नास्ति' इत्याकारकोऽभावकूटविषयकोऽपीति तस्यैव विरोधित्वमतो नोक्तः प्रसङ्ग इति वाच्यम्, तत्र हि संसर्गीभूतप्रतियोगिता यदि शुद्धघटत्वावच्छिन्ना तदा तन्निरूपकाभावस्यैव सामान्याभावतया स्वीकृतोऽतिरिक्तः सामान्याभावः। यदि च तत्तद्विशेषधर्मावच्छिन्ना तदा घटवत्यपि घटो नास्ति' इत्यादिप्रतीत्यापत्तेर्न वारणमतोऽभ्युपगन्तव्योऽतिरिक्तः सामान्याभाव इति।

अथ समान्यधर्मावच्छिन्नप्रतियोगित्वतन्निरूपकाभावयोरतिरिक्तयोः कल्पनमपेक्ष्य क्लृप्तेष्वखिलेषु तत्तद्घटादिविशेषाभावेष्वेव घटत्वादिसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्ति लाघवात्कल्पनीयम्, एवं सति एकविशेषवति तादृशसामान्यधर्मावच्छिन्नप्रतियोगित्वनिरूपकस्याभावकूटस्यासत्त्वेनातिप्रसङ्गानवकाश इति चेत्? एवमप्यास्माकं वेदान्तिनां क्षतिविरह एव 'अहमज्ञः' 'मयि ज्ञानं नास्ति' इत्यादि प्रत्ययस्याप्यखिलज्ञानविशेषाभावावगाहित्वस्यैव भवता वाच्यतया यत्किञ्चिज्ज्ञानदशायां सामान्याभावावगाहिन इव विशेषाभावकूटावगाहिनोऽपि प्रत्ययस्यासम्भवादतिरिक्ताज्ञानसिद्धौ बाधकाभावः। वस्तुतस्तावदभावेष्वनन्तेषु तादृशप्रतियोगित्वस्य तस्मिन् व्यासज्यवृत्तित्वस्य तावदभावेषु 'रूपं नास्ति' इत्यादिज्ञानविषयत्वसम्बन्धस्य च गरीयसीं कल्पनामपेक्ष्यातिरिक्तसामान्याभावकल्पनैव लघीयसी।

किञ्च व्यासज्यवृत्तिधर्मस्य निखिलाश्रययोग्यतयैव प्रत्यक्षयोग्यत्वं न तु किञ्चिदाश्रयस्य योग्यत्वे नहि वृक्षपिशाचादिगतं द्वित्वादिकं केनचिदध्यक्षीक्रियते, अतएव यावत्स्ववयवेषु व्यासज्य वर्तते ऽवयवीति पक्षः पराकृतः परेषां प्राक्, एवंसति 'वायौ रूपं नास्ति' इत्यादिप्रत्यक्षानुपपत्तिः, अयोग्यानां रूपाणामयोग्या एवाभावास्तेऽपि कूटान्तर्गताः तावन्निष्ठस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवर्तिनोऽयोग्यतया वायौ रूपाभावप्रत्यक्षासम्भवात्, सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यातिरिक्तस्योपगमे तु न 'रूपं नास्ति' इत्यादिप्रत्यक्षानुपपत्तिः रूपत्वादितद्धर्माश्रयस्य यत्किञ्चित्प्रतियोगिनो योग्यत्वस्यैवात्यन्ताभावप्रत्यक्षनियामकत्वादिति कृतमप्रस्तुतानल्पजल्पनेनेति।

प्रकृतमनुसरामः—'अहमज्ञः' इति प्रतीतौ न ज्ञानात्यन्ताभावो विषयः तथात्यभावप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणत्वेन पूर्वं ज्ञानज्ञानस्यावश्यकतया तत्सत्त्वे तदभावस्य विषयत्वासंभवात्। यदि च विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वस्य सर्वसम्मततया तद्विरहादेव घटाद्यज्ञानकाले घटाभावादिप्रत्यक्षस्य वारणसम्भवादभावबुद्धौ प्रतियोगितावच्छेदकरूपेण प्रतियोगि-

विकासः

ज्ञानस्य कारणत्वं नाङ्गीकरणीयम्, तदनुगमे च 'घटत्वेन पटो नास्ति' इत्याद्यनुभवः पटे घटत्वाभावनिर्णयकालीनो व्यधिकरणधर्मावच्छिन्नाभावविषयकोऽप्युपपद्यते तदनुभवे पटत्वविशिष्टस्य स्वनिष्ठघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावांशे वैशिष्ट्यावगाहितया तदुत्पत्तौ बाधकाभावादित्युच्यते, तदापि अभावज्ञानस्य विशिष्टवैशिष्ट्यावगाहितया विशेषणतावच्छेदकप्रकारकस्य ज्ञानज्ञानस्य सत्त्वे विषयतया कारणस्य ज्ञानाभावस्य विरहादेव न तस्य प्रत्यक्षं स्यात् तस्य सत्त्वे च तस्यैव विरोधिनो वर्तमानतया तदानीं ज्ञानसामान्याभावस्य ज्ञानविशेषाभावकूटस्य वा प्रत्येतुमशक्यत्वमेव।

नच ज्ञानसामान्याभावस्य घटादिनिष्ठस्य ज्ञानलक्षणप्रत्यासत्त्या भानमस्तु विरोधिज्ञानस्य वर्तमानत्वेऽपि अनादिवासनारूपदोषवशाद्भाने बाधकाभावात् प्रतिबध्यतावच्छेदककोटौ दोषविशेषाजन्यत्वस्यापि प्रवेशात् भवति च वासनादोषात् ज्ञानिनोऽप्यहं गौर इत्याद्यनुभव इति वाच्यम्, ज्ञानलक्षणसन्निकर्षस्य निरासेनान्यथाख्यातेर्वक्तुमशक्यत्वात्; तदुपगमेऽनुमितिमात्रोच्छेदापत्तेर्दर्शितत्वात्। किञ्च अमेरिकादिदेशमज्ञातवतोऽस्मदादेर्भवति 'नाहममेरिकां जानामि' इत्यादि प्रतीतिः प्रमा, सा चेयं ज्ञानाभावं न गोचरयितुमर्हति प्रदर्शितयुक्त्याऽमेरिकादिदेशज्ञानस्य पूर्वमावश्यकतापत्तेः। नचास्तु शब्दादिना तज्ज्ञानं तत्सत्त्वेऽपि दोषवशात् 'न जानामि' इति प्रतीतिसम्भवात्,ज्ञानाभावभासकसामग्र्याश्च प्रतिबन्धकत्वेन 'अमेरिकां जानामि'इति प्रतीतिप्रसङ्गवारणसम्भवाच्चेति वाच्यम्, एवं दुःसाहसकरणेऽपि तत्र न जानानीतिप्रतीतेर्भ्रमत्वापत्तेः अमेरिकादिज्ञानवति तदभावप्रकारकत्वात्। एवम ज्ञानभासकसामग्र्या बलवत्त्वे तत्तत्प्रत्ययकालेऽपि 'तत्तन्न जानामि इति प्रतीतिप्रसङ्गात् तस्मान्न न जानामीतिप्रतीतौ ज्ञानात्यन्ताभावो विषयः।

एवं 'त्वदुक्तमर्थं न जानामि' इत्यादावपि न ज्ञानाभावो विषयो निरुक्तयुक्तेः। एवं सुषुप्तोत्थितस्यैव व्यपगतमूर्च्छस्य 'तदानीं किं तव ज्ञानमासीत्' इति प्रश्ने, न' किंचित्' इत्युत्तरमपि भावात्मकमज्ञानं साधयति। तत्र ज्ञानाभावस्य विषयत्वे, ज्ञातज्ञानस्योक्तयुक्त्याऽऽवश्यकतया व्याघातात्।

यत्तु—'अहमज्ञः' इत्यत्र ज्ञानविशेषाभाव एव विषयः, एवं 'त्वदुक्तमर्थं न जानामि इत्यत्र त्वदुक्तार्थगतविशेषविषयकज्ञानाभावः 'घटं न जानामि' इत्यादौ घटगतविशेषविषयकज्ञानाभाव एव विषय इति तन्न, ज्ञानविशेषत्वदुक्तार्थगतविशेषघटगतविशेषविषयकाणां ज्ञानविशेषाणामपि ज्ञानविशेषणतया तत्तज्ज्ञानस्यावश्यम्भावात् व्याहतेस्तादवस्थ्यात्, अन्याकारानुभवस्यान्याकारत्वोपगमः स्वरसतोऽन्यार्थकतया प्रतीयमानस्याप्यभिलापस्यकल्प्यमानोऽन्योऽर्थश्च परित्यक्तनिगडनिकर उन्मत्तसिन्धुर इव सर्वामेव वस्तुसिद्धिं व्याकुलयन्निखिलामेव मर्यादां समूलमुन्मूलयेत्। एवं हि सति 'घटे ज्ञानं नास्ति' इत्याद्यनुभवानि-

## विकासः

लक्षयोरप्युक्तरीत्या ज्ञानविशेषाभावविषयकत्वसम्भवेन घटादौ ज्ञानसामान्याभावोऽपि न सिध्येत्। अपि चैवं घटं न जानामि' इत्यादिषु प्रदर्शितदिशा घटज्ञानस्य' तदुक्तार्थज्ञानस्य चावश्यकतया तत्र घटं जानामि त्वदुक्तमर्थं जानामि' इत्यादि प्रतीतिव्यवहृतयोः प्रसङ्गश्च स्यात्। नच ज्ञानाभावभासकसामग्र्यास्तत्प्रतिबन्धकत्वं कल्पनीयम्, सर्वत्र तत्तज्ज्ञानप्रतिबन्धकत्वकल्पनेऽनन्तगौरवात्। घटज्ञानकालेपि 'घटं न जानामि' इति प्रतीतिप्रसङ्गाच। सिद्धान्ते तु घटाद्यज्ञानस्य भावरूपतया तत्प्रत्यक्षे घटज्ञानस्यापेक्षैव नास्तीति नोक्तप्रतिबन्धकत्वकल्पनावसरः, तस्मान्न ज्ञानाभावोऽज्ञानम्।

अथातिरिक्ताज्ञानपक्षेऽपि तस्य ज्ञानविरोधित्वेनैव भानमुपेयमन्यथाऽज्ञानानुभवेन तद्ग्रहणे तस्य ज्ञानविरोधित्वमप्रमाणिकमापद्येत, अतएव तदभिलापे 'न जानामि' इत्यादौ भवति विरोधाभिधायकस्य नञः प्रयोगः। एवम् 'अत्रास्याज्ञानम्' इत्यादौ पुरुषविशेषीयत्वविषयविशेषविशिष्टत्वादिनाऽप्यज्ञानस्यानुभवः, तथा चाज्ञानानुभवस्यापि तत्तद्विशेषणविशिष्टाज्ञानावगाहित्वेन तत्तज्ज्ञानस्य पूर्वसत्वमावश्यकमेवेति भावात्मकस्याप्यज्ञानस्य कुतस्तदानीं सम्भवोऽतो ज्ञानाभावविषयकत्वपक्षवद्भवत्पक्षेऽपि व्याघातो दुर्वार एवेति चेत्? न ... यस्य हि परैर्मानसं प्रत्यक्षमुपेयते तस्यास्माभिरौपनिषदैः साक्ष्यात्मकं प्रत्यक्षमुपेयते। तत्र यथा न्यायमते विषयसहितस्य ज्ञानस्य प्रत्यक्षे 'घटं जानामि' इत्यादिस्वरूपे विषयातिरिक्तं यद्विशेषणतावच्छेदकविषयकं ज्ञानं यच ज्ञानत्वादेर्ज्ञानं तन्न कारणतयाऽपेक्ष्यते, यदेव हि साक्षात्करणीयम् 'अयं घट' इत्यादि ज्ञानं तस्यापि विशेषणतावच्छेदकघटविषयकत्वात् तदेवापेक्ष्यते न तु पुनस्तदतिरिक्तं घटज्ञानं ज्ञानत्वज्ञानं च, तदपेक्षणे तेन विशेषणतावच्छेदकीभूतघटज्ञानेन ज्ञानत्वज्ञानेन चोत्तरवर्तिगुणेन साक्षात्करणीयस्य 'अयं घट' इत्यादिज्ञानस्य विनाशात् कस्य प्रत्यक्षं स्यादतो न विषयातिरिक्तं ज्ञानमपेक्ष्यते, तथाऽस्माभिः सामान्यत एव योग्यसविषयकप्रत्यक्षे विषयातिरिक्तं यद्विशेषणतावच्छेदकविषयकं ज्ञानमज्ञानमन्यद्वा सविषयकं तस्य कारणत्वं नोपेयते। तत्र ज्ञानत्वं न प्रवेश्यते प्रयोजनाभावात्। तथा च घटाद्यज्ञानस्यापि योग्यतया सविषयकतया च तत्प्रत्यक्षे विषयीभूतं यद् घटाज्ञानं तदतिरिक्तं यद्विशेषणतावच्छेदकं घटादिर्विषयः ज्ञानत्वं ज्ञानविरोधित्वादिकं च तेषां ज्ञानं 'घटमहं न जानामि' इति प्रत्यक्षेण नापेक्ष्यते।

ननु च 'घटं जानामि' इत्यादौ प्रत्यक्षविषयस्य ज्ञानस्वरूपत्वेन तस्यैव विषयरूपविशेषणतावच्छेदकविषयकत्वात् युक्तं तदतिरिक्तज्ञानानपेक्षत्वम्, 'धनमिच्छति' इत्यादौ तु विशेषणतावच्छेदकं यद्धनं तद्विषयकज्ञानस्य धनेच्छारूपविषयातिरिक्तत्वात्तस्यापेक्षणं न निराकृतमतस्तज्ज्ञानापेक्षणापत्त्या प्रत्यक्षकाले इच्छाया असत्त्वात्तत्प्रत्यक्षानुपपत्तिरिति वाच्यम्, ज्ञान प्रत्यक्षस्येवेच्छाप्रत्यक्षस्यापि प्रामाणिकतया ज्ञानत्वेच्छात्वादेर्विशेषणतावच्छेदकत्वेन तज्ज्ञा-

## विकासः

नस्यापेक्षणे विषयनाशेन प्रामाणिकप्रत्यक्षस्वरूपानुपपत्त्या यथा न तदपेक्षा भवत्येवमि-च्छाप्रत्यक्षे विषयरूपं यद् विशेषणतावच्छेदकं तज्ज्ञानस्यापि न भवत्यपेक्षा योग्यत्वे-नापेक्षितत्वात्; एवं सुखादिप्रत्यक्षेऽपि विशेषणतावच्छेदकस्य सुखत्वादेर्ज्ञानस्य न भवत्यपेक्षितत्वम् अन्यथा नैनोत्तरवर्तिना गुणेन सुखस्य नाशे विषयाभावे-क्वापि सुखादेः प्रत्यक्षं न स्यादतः परमते मनोग्राह्यस्य अस्मन्मते साक्षिभास्य च यदसाधारणो धर्मः तत्तत् विषयकत्वतत्तत्पुरुषीयत्वज्ञानत्वेच्छासुखत्वादिको योग्य-तद्विशिष्टप्रत्यक्षे तत्तद्विशेषणतावच्छेदकविषयकज्ञानस्य कारणत्वं नोपगम्यते सति चैवं भावरूपाज्ञानमपि सविषयकं साक्षिभास्यमेवोपेयते इच्छाविरोधिद्वेषवत् ज्ञान-विरोधिनोऽज्ञानस्य सविषयकत्वेनैवानुभवात् तदसाधारणधर्मस्योत्सर्गतस्तद्विशेषणते-मानयोग्यस्य विषयपुरुषसम्बन्धज्ञानविरोधित्वादेर्ज्ञानं पूर्ववर्तितया नापेक्ष्यते, अपि तु तत्तद्विशिष्टाज्ञानविषयकसाक्षिप्रत्यक्षमेव साक्षात्तत्तद्विशेषणविषयकमपि भवतीति व्याघातसम्भवः, अत एवोक्तं विवरणे—'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिप्रत्यक्ष-विषय' इति तत्र ज्ञाततयाऽज्ञाततयेत्यस्य ज्ञानाज्ञानयोर्विषयत्वेन विशेषणतयेत्यर्थः। साक्षिज्ञानं तु अज्ञानविषयघटादिविषयकमपि नाज्ञानस्यविरोधि, तत्साधकत्वात्, विरोधित्वे घटादिज्ञानतदज्ञानयोरेकदा सत्त्वं न स्यात् न स्याच्च तथासति विषयस्याज्ञानस्य तदानीमवि-मानतया प्रत्यक्षम्, किन्त्वज्ञानविषयविषयकप्रमाणजन्यवृत्त्यात्मकज्ञानविशेषस्यैवाज्ञानविरोधि-त्वम्, एवं सति परमते ज्ञानत्वस्येवास्मन्मते ऽज्ञानत्वमप्यखण्डोधर्म एव, अधर्मासुरादिव-दज्ञानादिपदस्यापि भावार्थकत्वं च अधर्मादिपदघटकनञ् पदमखण्डदुरितत्वादौ लक्षणाता-त्पर्यग्रहजनकमिवाज्ञानाविद्यापदघटकनञ् पदमपि मायात्वाज्ञानत्वादौ तात्पर्यग्राहकमेव तस्मादप्यज्ञानं भावत्वरूपमेव मन्तव्यम्।

ज्ञानाभावस्वरूपत्वे तु न तस्य साक्षिप्रत्यक्षं संभवति अभावस्य साक्षि-त्वानुपगमेन अभावविशेषणस्य ज्ञानस्य तद्विशेषणस्य विषयस्य च साक्षिणा ग्रही-मशक्यत्वात् भूतलादौ घटाद्यभावस्यानुपलब्धिवेद्यतायाः कॢप्तत्वेन सर्वत्रैव तस्य तथौ-चित्यात्। अज्ञानस्य भावरूपत्वे तु तस्य साक्षिवेद्यत्वेन तद्विशेषणतयाऽनीतानाग-विद्यमानसकलवस्तुग्रहणं भवत्येवेति न काचिदनुपपत्तिः। नच यत् येन गृह्यते तदभावो-पि तेनैव गृह्यतेऽतो ज्ञानाभावोऽपि साक्षिभास्य एवेति वाच्यम्, धर्मिग्रहोपक्षीणव्यापार-नेन्द्रियस्याभावग्रहणाक्षमत्वेनावश्यमनुपलब्धेरनन्यव्यापाराया एव करणत्वस्योचितत्वे-तयैवाभावस्य ग्रहणात्। नचाभावस्यानुपलब्धिवेद्यत्वेऽपि तद्विशेषणस्य ज्ञानादेः साक्षि-भास्यत्वमेवास्त्विति वाच्यम्, तथा सति साक्षात्साक्षिवेद्यस्य विद्यमानत्वनियमात्तस्य विद्यमानत्वे ज्ञानाभावस्यैव दुर्लभत्वापत्तेः।

## विकासः

किञ्चाज्ञानस्य भावत्वे विशेष्ये विशेषणं तत्रापि विशेषणान्तरमितिरीत्या तस्य भानं सम्भवति ज्ञानविरोधित्वविषययोरज्ञानविशेषणतया भासमानयोर्ज्ञानस्य साक्षिप्रत्यक्षे स्वपूर्ववर्तितयाऽनपेक्षणात् साक्षिप्रत्यक्षस्य विशिष्टवैशिष्ट्यावगाहित्वनियमाभावात्, विशिष्टबुद्धौ च न विशेषणज्ञानस्य कारणत्वं येनाज्ञानविशेषणीभूतस्य वस्तुनो भवेज्ज्ञानमावश्यकम्, 'रक्तो दण्ड' इति ज्ञानविरहकाले 'रक्तो दण्डो न वा' इति संशयकाले वा 'रक्तदण्डवान् पुरुष' इति ज्ञानस्य विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानत्वेन तादृशनिश्चयत्वेन वा कारणतयैव वारणात्, विशेषणज्ञानकारणतोपगमे तदुपपत्तयेऽनन्तनिर्विकल्पव्यक्तिकल्पनागौरवात् चक्षुः सन्निकर्षानन्तरं निर्विकल्पकविलम्बेन विशिष्टज्ञानविलम्बस्याप्रामाणिकत्वाच्च ।

नच यत्र चक्षुःसंयोगानन्तरं जातित्वेन घटत्वोपस्थितौ सत्यां 'जातित्वेन घटत्वावगाहि जातिमानयम्' इति ज्ञानं जायते तत्र स्वरूपतो घटत्वप्रकारकमपि प्रत्यक्षं स्यात् सामग्रीसत्त्वात्, विशेषणज्ञानत्वेन कारणत्वे त्वभ्युपगम्यमाने निरवच्छिन्नघटत्वनिष्ठप्रकारताकबुद्धौ निरवच्छिन्नघटत्वनिष्ठविषयताकज्ञानस्य कारणतया तदभावेनापत्त्यसम्भव इति वाच्यम्, घटत्वांशे जातित्वभासकसामग्रीसद्भावे तदंशे तद्भानस्य दुर्वारतया तदानीं स्वरूपतो घटत्वप्रकारकज्ञानस्यापत्त्यसम्भवात् घटत्वाद्यंशेऽन्यभानप्रयोजकसामग्र्यभावसहकृतात् चक्षुः संयुक्तसमवायात् तत्तादात्म्याद्वा निरवच्छिन्नप्रकारताया घटत्वादिनिष्ठायाः सम्भवेन विशेषणज्ञानत्वेन कारणताया निर्युक्तिकत्वात् ।

सति चैवं विशेषणज्ञानस्य कारणताया निर्वाहाय न निर्विकल्पबोधो भवत्यङ्गीकारार्हः सिद्धान्तिनाम्, किन्तु नक्षत्रमण्डलं पश्यता बालकेन तदन्तर्गतः प्रकृष्टप्रकाशश्चन्द्रोऽपि दृष्ट एवेति कश्चन्द्र इति प्रष्टुस्तस्य न प्रकृष्टप्रकाशांशो जिज्ञासितोऽपि तु चन्द्रस्वरूपमात्रम्, उत्तरयिता च सहसैव बुबोधयिषितचन्द्रस्वरूपमात्रबोधकशब्दाभावात्तन्मात्रबोधनेऽसमर्थोऽगत्या 'प्रकृष्टप्रकाशश्चन्द्र' इति वाक्यं प्रयुङ्क्तेऽतस्तत्र विशिष्टबोधानन्तरं प्रतिपित्सितचन्द्रव्यक्तिविषयकनिर्विकल्पकबोधस्तात्पर्यवशाल्लक्षणया सम्पद्यत इति । भवति च समाधौ सविकल्पकबोधानन्तरं निर्विकल्पकप्रत्यक्षं न तु निर्विकल्पपूर्वकः सविकल्प इति । तस्माद्विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वविरहान्नाज्ञानविशेषणस्य विषयादेः पूर्वं ज्ञानमावश्यकमपि तु तत्तद्विशेषणसहितस्याज्ञानस्यैकदैव भवति भानमिति ।

अभावावगाहिप्रत्यक्षं तु न विशेष्ये विशेषणमितिरीत्या सम्भवति, 'अभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते' इति नियमस्य चिन्तामणिकारादिभिरुपगमात् । प्रादर्शि चायं नियमो व्युत्पत्तिवादे गदाधरभट्टाचार्यैः, उपपादि च तस्य टीकायां गूढार्थतत्त्वालोकाभिधायामस्मद्गुरुभिः सर्वतन्त्रस्वतन्त्रैः पण्डितकुलपतिभिर्बच्चाझामहानुभावैः ।

विकासः

एतन्नियमानुपगमे स्वसमानाधिकरणप्रतियोगित्वसम्बन्धेन घटविशिष्टस्याभावस्य घटवत्यपि सत्त्वात्, तत्रापि 'घटो नास्ति' इति प्रतीतिः प्रामाणिकी स्यात्, तदुपगमे तु विशेषणतावच्छेदकस्य घटत्वादेः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावांशे भानात् तादृशस्य चाभावस्य तत्र विरहान्न दोष इत्यादिभिर्युक्तिभिरस्माभिरपि व्युत्पादि व्युत्पत्तिवादस्य प्रकाशटीकायाम्। तस्मात् भवद्भिर्ज्ञानाभाववादिभिः' ईश्वरं न जानामि' इत्यादिबुद्धिः विशिष्टवैशिष्ट्यावगाहिन्येवास्थीयेत, न च तथा सम्भवति विशेषणतावच्छेदकप्रकारकज्ञानविरहादतो भावरूपमेवाज्ञानमास्थेयम्।

अथाभावप्रत्यक्षस्यान्यस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वेऽपि ज्ञानाभाव प्रत्यक्षस्य न तज्जन्यत्वं कल्प्यते इति चेत्? समायातोऽसि मार्गेण, सामग्रीभेदो हि कार्यभेदप्रयोजकः कार्यस्य चाज्ञानप्रत्यक्षस्य स्वतोवैलक्षण्यं नास्त्येवेति विषयकृतमेव वैलक्षण्यं सम्पादनीयम्।

'अर्थेनैव विशेषो हि निराकारतया धियाम्।'

इत्युदयनाचार्यीयमनवद्यं पद्यं स्मरता लाघवमन्वेषता 'अहमज्ञो' 'मयि ज्ञानं नास्ति' इत्यादौ प्रतीयमानस्याज्ञानस्य क्लृप्ताभावविलक्षणतां संपिपादयिषता मन्दाक्षं जयता भवताऽपि भावरूपता शब्दान्तरेणाङ्गीकृतैवेति नाममात्रे विवादः पर्यवसन्न इति तस्माद्भावएवाज्ञानम्।। एवं 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति सुषुप्त्युत्तरपरामर्शसिद्धः सौषुप्ता ज्ञानानुभवोऽपि तस्य भावरूपतां साधयतीत्यभिहितं प्राक्।

तदेवं साक्ष्यनुभवबलादेवाज्ञानसिद्धौ 'यो नाम स्वसिद्धान्ताभ्यासाहितव्यामोहो विप्रतिपद्यते तं प्रत्यनुमानमुपन्यस्यते, इति न्यायकणिकोक्तं प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः इति न्यायवार्तिकतात्पर्योक्तं च वाचस्पत्यमनवद्यंगद्यमनुस्मरन्तो विवरणोक्तमनुमानमपि मानं दुराग्रहगृहीतमानसान् प्रत्युपदिशामः। तथाहि—विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्-अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशवत्' इति तदेतन्नानाऽज्ञानपक्षीयम्। अत्र साक्षिभास्याज्ञानसुखादेरज्ञानपूर्वकत्वाभावाद्बाधवारणाय प्रमाणज्ञानमित्युक्तम्; प्रमाणजनितं ज्ञानमिति तदर्थः, साक्षिज्ञानं च न प्रमाणजनितमतस्तद् व्युदासः। इदन्त्वावच्छिन्ने भ्रमसंशयादर्शनात्तदंशेऽज्ञानकल्पने मानाभावेन इदमित्याकारके प्रमाणजन्ये ज्ञाने बाधवारणाय विवादपदमित्युक्तम्, धर्मविशेषप्रकारकमिति तदर्थः। यदि च एतावन्तं कालमिदं न ज्ञातमिदानीं ज्ञायते' इत्यनुभवादिदमंशेऽप्यज्ञानमुपेयते, तदा विवादपदं नोपादेयम्। धारावाहिकद्वितीयादिज्ञाने बाधवारणाय

विकासः

विवादपदमुपादेयमिति तु न युक्तम्, घटादिप्रत्यक्षादिदशायामपि इदानीं घटो वर्तते नवेत्याद्यशिंशयवारणाय सिद्धान्ते कालस्य सर्वप्रमाणवेद्यत्वोपगमेन तत्तत्कालविशिष्टार्थविषयकवृत्तेरज्ञातविषयकत्वस्य सत्त्वात् । 'अस्ति प्रकाशते' इत्यादिव्यवहारविरोधित्वमेव स्वविषये आवरणत्वं तत् ज्ञानप्रागभावेऽप्यस्तीति तेनार्थान्तरवारणाय व्यतिरिक्तान्तम् । यद्यपि अभावव्यतिरिक्तेत्युक्तावपि प्रागभाववारणं सम्भवतीति प्राक्पदं व्यर्थम्, तथाप्यभावत्ववत्प्रागभावत्वस्याप्यनुयोगिताविशेषरूपस्याखण्डतया तत्प्रवेशोऽपि गौरवानवकाशः । तज्ज्ञानजनकस्य विषयान्तरज्ञानप्रतिबन्धकस्यावरणरूपतया तस्य कार्यनाश्यस्यादृष्टस्य वारणाय स्वविषयावरणेति, तस्य विषयान्तराऽऽवरणत्वेऽपि स्वस्य प्रमाज्ञानस्य विषयेऽनावरणत्वाद्वारणम् । नचैवं प्रदीपप्रभायाः दृष्टान्तस्य सविषयकत्वाभावेन स्वविषयघटितस्य साध्यस्याभावात् दृष्टान्तत्वानुपपत्तिरिति वाच्यम्, स्वविषयेत्यस्य स्वभास्येत्यर्थकत्वात् प्रमया इव प्रभयाऽपि घटादयो भासन्ते एवेति नानुपपत्तिः । तज्ज्ञानप्रतिबन्धकादृष्टमादायार्थान्तर वारणाय-स्वनिवर्त्त्येति । तथाच तादृशस्य कल्प्यमानस्यादृष्टस्य स्वेन प्रतिबध्यीभूत तज्ज्ञानेन निवर्त्यत्वं नास्तीत्यतस्तद्व्युदासः विषयगताज्ञातत्वेनार्थान्तरवारणाय स्वदेशगतेति तादृशं च वस्त्वन्तरमज्ञानमेवेति तत्पूर्वकत्वं प्रमायाः सिध्यति, अन्तरपदं तु स्वरूपकीर्तनमेव ।

ननु दृष्टान्तपक्षसाधारणस्यैकस्य प्रकाशत्वस्याभावेनेदमसङ्गतमिति चेन्न, 'अप्रकाशितोऽर्थः प्रकाशते' इति व्यवहारस्य प्रयोजकत्वे सति प्रकाशपदवाच्यत्वस्य हेतुत्वात् 'अयमिदानीं प्रकाशते' इति व्यवहारस्य प्रयोजकत्वमज्ञाननाशद्वारा ज्ञाने, तमोनाशद्वारा आलोकेऽप्यस्त्येव प्रकाशपदवाच्यत्वञ्चोभयत्राविशिष्टमतो नानुपपत्तिः; तत्र प्रकाशपदवाच्यत्वमात्रस्य हेतुत्वे प्रकाशनामके पुरुषेऽपि हेतोः सत्त्वाद्व्यभिचारः, एवं भ्रमविषये ज्ञातैकसत्त्वे साक्षिभास्ये सुखादौ चाज्ञानविरहाद्रजताकारवृत्तौ सुखादिप्रत्यक्षे च हेतोः सत्त्वात् व्यभिचारः स्यादतोऽप्रकाशितेत्युक्तम् । तथा च यथा तत्र साध्यं नास्ति तथा रजतादेः प्रकाशकालमात्रसतोऽप्रकाशितत्वविरहेणाप्रकाशितार्थप्रकाशत्वं हेतुरपि नास्तीति न व्यभिचारः सम्भवति, अत्रानुकूलतर्कश्च 'त्वदुक्तमर्थं न जानामि इत्यादिप्रत्ययान्यथानुपपत्तिरनुसन्धेयः ।

अत्रानेनानुमानेनाज्ञानानुमितिर्जायते नवा ? आद्ये तस्यामप्यज्ञानानुमितौ प्रमारूपायां पक्षकोटिप्रविष्टायामज्ञानपूर्वकत्वानुमितिर्वाच्या, एवं तदनुमितेरपि पक्षकोटिप्रवेशात्तत्राप्यज्ञानपूर्वकत्वानुमितिर्वक्तव्यैवेत्येवमनवस्था प्रसज्यते । अपि च पक्षतावच्छेदकाश्रयेऽज्ञानानुमितौ हेतुसाध्ययोरभावादुक्तानुमाने स्वरूपासिद्धिर्बाधश्च स्याताम्, द्वितीये वृथोपन्यसनीयेन षण्डकेनानेनानुमानेन अज्ञानानुमितेरजननादिति, रामानुजीयानामाक्षेपः परास्तः, नहि केवलं प्रमायाः पक्षत्वमपि तु प्रमाणजन्यायाः प्रमायाः, अज्ञानस्य चाज्ञाना-

## विकासः

विषयत्वात्सदैव प्रकाशमानेन साक्षिणा विषयीकृतत्वात् न तज्ज्ञानं प्रमाणजन्यं येन तत् पक्षकोटौ समाविशेत्, किन्तु घटपटादिप्रमैव माणजन्या तत्रैवाज्ञानपूर्वकत्वं साधयन् प्रमाणितमनुमानं साधयति। यदि चाज्ञानप्रमाया अपि प्रमाणजन्यत्वेन पक्षकोटिप्रवेशो यदभिमतस्तदापि सिद्धं न समीहितम्, न हि असिद्धः पदार्थः पक्षो भवितुमर्हति सिद्धस्यैव पक्षत्वादतो नानवस्था नवाऽसिद्धिबाधाविति सुनिपुणैरेतद् विभावनीयम्।

अत्र चानुमाने अनादिभावत्वं न ज्ञाननिवर्त्यनिष्ठम, अनादिभावमात्रनिष्ठम् आत्मत्ववत्। निवर्त्यत्वम् अनादिभावनिष्ठं न भवति निवर्त्यमात्रनिष्ठत्वात् घटत्वादिवत् प्रमाणज्ञानम् अभावान्यानाद्यनिवर्त्तकं ज्ञानत्वात् भ्रमवदित्याद्यनुमानै न सत्प्रतिपक्षः एतेषामनुमानानामनुकूलतर्कराहित्येनाप्रयोजकत्वात्, तस्मादनाविलं विवरणोक्तमनुमानम्।

एवं 'चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्त्तिका प्रमात्वात् मैत्रप्रमावत्' इति चित्सुखाचार्योक्तमनुमानमपि मानम्, मैत्रप्रमायां हि चैत्रप्रमाप्रागभावातिरिक्तं यदनादि तन्मैत्रप्रमाप्रागभावस्तन्निवर्त्तकत्वमस्तीति भवति तस्या दृष्टान्तत्वम्' पक्षे च तादृशं यदज्ञानं तन्निवर्त्तकत्वं साध्यं पर्यवस्यति।

श्रुतिस्तु अविद्यां प्रमापयन्ती तत्तत्स्थलेषु भूयसी उदाहृतैव। अत्रापि प्रसङ्गात् पुरस्तात् किंचिदुपदर्श्यते—'सैषाऽविद्या जगत्सर्वम्' इत्युपक्रम्य नृसिंहतापिन्यामुपनिषदि 'तद्यथा वटबीजसामान्यमनेकान् स्वाव्यतिरिक्तान् वटान् सबीजानुत्पाद्य तत्रतत्र पूर्णं तिष्ठति एवमेवैषा स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुतिः स्पष्टमेवाविद्यकत्वं जगतोऽविद्यां च प्रमापयति एवं 'यर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यारूढा' इति ब्रह्मवेदनप्रतिबन्धकत्वेनानृतं ब्रुवती श्रुतिर्ब्रह्मावरकमज्ञानमभिदधाति। नचानृतं पापमेव इह नात्र विवक्षितम्, 'ऋतं सत्यं तथा धर्म' इत्यनेन ऋतशब्दस्याधर्मविरोधिधर्मवाचकत्वग्रहादिति वाच्यम्, सुषुप्त्यवस्थामधिकृत्य हि श्रुतिरियं प्रवृत्ता, तदानीञ्चान्तःकरणस्य समुदाचद्वृत्तिकत्वाभावेन लीनतया तदाश्रितस्य पापस्यापि तदानीं कार्यकरत्वासम्भवेन तस्य प्रतिबन्धकत्वकल्पनं नितरामयुक्तं; पापेन च प्रत्यारूढत्वे सुषुप्तौ दुःखानुभवापत्तेः 'न किञ्चिदवेदिषम्' इत्यनेन सम्वादस्यानुपपत्तेश्च तस्मादनृतशब्देन सत्यभिन्नं मिथ्याभूतमज्ञानमेव प्रतिपाद्यते, नहि पापादिकं द्वैतवादिना केनाप्यसत्यमुपगम्यते इति। एवम्—'अविद्यायामन्तरे वर्त्तमानाः' 'नीहारेण प्रावृताः' इत्यादयोऽपि श्रुतयः प्रमाणतया उदाहार्याः। एवम्—

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥'

इत्यादि विष्णुपुराणादिवचननिश्चया अपि स्मर्त्तव्याः।

## विकासः

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' ।

इति च एवम् 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतौ मायाशब्दोऽपि तदेवा वरणं ज्ञाननिवर्त्यं प्रतिपादयतीत्यवधेयम् ।

न च मायाऽज्ञानात्पृथगेव, अन्यथा मायिनः परमेश्वरस्याज्ञत्वापत्तिरिति वाच्यम्; शुद्धसत्त्वप्राधान्येन मायात्वस्य मलिनसत्त्वप्राधान्येनाविद्यात्वस्य चैकस्यामेव शक्तौ कल्पनेन दोषपरिहारात् । अथवा विक्षेपशक्तिप्राधान्येन हि मायात्वम्, आवरणशक्तिप्राधान्येनाविद्या-त्वमित्याभ्यामेव धर्माभ्यां भेदोपगमात् तादृशमायोपाधिकस्येश्वरस्य मायित्वं सर्वज्ञत्वं सर्वकारणत्वं च, अविद्योपाधिकस्य अविद्याकार्यान्तःकरणोपाधिकस्य वा जीवस्याल्पज्ञत्वमज्ञत्वं किञ्चित्कार्य-कारणत्वं च भवतीत्थं जीवेशयोर्भेदः । नचैकमेव सत्त्वमेकदैव शुद्धं मलिनं प्रधानं चाप्रधानं चेति कथं सम्भवतीति वाच्यम्, यथाहि एकं पुरुषं प्रति मन्त्रविशेषप्रतिबद्धशक्तेर्हुताशनस्या-दाहकत्वमन्यं प्रति च दाहकत्वं तथैव ईश्वरं प्रति सत्त्वस्यानभिभूतत्वात्स्वीयाखिलकार्य-कारित्वादिशुद्धत्वं प्राधान्यं च, जीवं प्रति तद्विपरीतत्वादशुद्धत्वमप्रधानत्वं चोच्यते तथैव कल्पितत्वात्, मायाऽविद्ययोः स्वरूपभेदपक्षे तु दोषलेशोऽपि नावतरतीति ।

यत्तु 'तम आसीत्' इति श्रुतिरेव तमसोऽज्ञानरूपस्यासीत्पदेन सत्त्वमावेदयतीति कथमस्यानृतत्वमिति तन्न, यतो 'नासदासीन्नोसदासीत्' इति श्रुतिस्तुच्छत्वपारमार्थिकत्वे निषेधन्ती अविद्याया व्यावहारिकत्वमवधारयति । इत्थञ्च मायाऽविद्ययोरुपाध्योः प्रदर्शितभेदे न मायान्तःकरणयोर्भेदेन वा तत्तदुपाधिकयोर्जीवेशयोरपि औपाधिक एव भेदः सिध्यति न पारमार्थिकः एतादृशमेव चोपाधिकृतं व्यावहारिकं भेदमुपजीव्य 'अनीशया शोचति मुह्यमानः' इति श्रुतिः, 'मुह्यमानः' मोहरूपाज्ञानविशिष्टो जीवः शोचतीत्यर्थिका, उद्देश्य-भावमहिम्ना जीवेशभेदस्य मोहरूपाज्ञानप्रयोज्यत्वमनुवदन्ती आविद्यकत्वं जगतो व्यवस्थापयतीति ।

अर्थापत्तिरप्यज्ञाने मानम्—श्रुत्यादिप्रमितब्रह्माभेदस्य जीवस्यानवच्छिन्नस्वप्रका-शाखण्डानन्दाप्रकाशः तादृशाखण्डानन्दस्यावरणं विनाऽनुपपद्यमानोऽविद्यारूपावरणं कल्प-यति । एवं च चित्त्वानन्दत्वाभ्यामविद्याकल्पितभेदस्य यावदज्ञानमनुवृत्तत्वेन सच्चिद्रूपेण प्रकाशमानस्याप्यखण्डानन्दरूपेणाप्रकाशमानत्वोपपत्तिः । एवं शुक्तिरूप्यादेर्भ्रमकाले उत्प-त्तेर्व्यवस्थापितत्वेन 'तत्र प्रमाणव्यापारासम्भवात् शुक्त्यादौ रूप्यादेर्भ्रमस्यान्यथानुपपत्त्याऽपि तत्परिणाम्युपादानत्वेन तदाकारवृत्तिपरिणाम्युपादानत्वेन चाविद्या कल्प्यते, नहि कूटस्थ नित्यस्य ब्रह्मणो रजताकारस्तद्वृत्त्याकारो वा परिणामः सम्भवति विनाशित्वप्रसङ्गात् । न च सांख्याभिमताया प्रकृतेरुपादानत्वं तस्या अनिर्वचनीयत्वे सैव मायेतीष्टापत्तेरुक्तत्वात् निर्वचनीया तु सा न सम्भवत्येव तस्या हि ब्रह्मणो भेदेऽपौरुषेयतया निर्णीतप्रामाण्याद्वै-तश्रुतिसिद्धस्याद्वितीयैकत्वस्य हानिः अभेदे तस्या जडत्वानुपपत्तिः ब्रह्मणो जडत्वापत्तिश्च

## विकासः

भेदाभेदयोश्च पारमार्थिकयोर्विरुद्धयोरेकत्र समवधानासम्भवः । अपि च प्रधानस्या- कश्चिन्नास्ति प्रेरको यः प्रलयोत्तरं सृष्टौ प्रवर्त्तयेत् पुरुषस्यासङ्गत्वात्, न- नियामकत्वपक्षे यथा धर्माधर्मौ नियामकौ तथा तत्पक्षेऽपीति वक्तुं शक्यम् धर्मो हि अधर्मप्रति- बद्धः सन् न सुखमयीं सृष्टिं कर्तुमुत्सहते अधर्मश्च धर्मप्रतिबद्धो न दुःखमयीं सृष्टिं कर्तुमुत्सहते इति तत्तत्कार्यप्रतिबन्धकतयैव तन्मते धर्माधर्मयोरुपयोगो न तु किंचित्कार्यजनकतया अद्वैतमते तु तत्तत्कार्योत्पत्तौ तयोरुपयोग इति महद्वैषम्यम् वक्ष्यते चैतत् व्यतिरेकानवस्थि- तेरिति ( २ अ० २ पा० ४ सू० ) सूत्रभामत्यामाचार्यैः । तस्माज्जगदुपादानतया सिद्धा- मिमामविद्यां कोऽह्नोतुं शक्नुवीत ।

अविद्या चेयं प्रमाणवृत्तिमन्तरेणैव स्वपरिणाम स्वाकारवृत्त्युपहितेन साक्षिणा गृह्यते प्रमाणग्राह्यत्वे सुषुप्तौ सर्वप्रमाणोपरमे तस्या अभानप्रसङ्गात् । । नच तदानीं तस्या वृत्त्युप- व्यर्थः ? नावेदिषम्' इति स्मरणप्रयोजकवृत्तिनाशाधेयसंस्कारोपपत्तये, तदावश्यकत्वात्, तथा च तदानीमिव स्वाकारपरिणामरूपया वृत्त्यैव जाग्रत्यपि भानसम्भवान्न तत्र प्रमा- व्यापारकल्पनाया युक्तत्वम् । नन्वेवं तत्र प्रमाणोपन्यासो व्यर्थः ? साक्षिणा स्वरू- णाज्ञानभानेऽपि सदसद्विलक्षणत्वादिरूपमिथ्यात्वसिद्ध्यर्थं प्रमाणोपन्यासस्य कृतत्वात्।

ननु कथमस्याः सदसद्विलक्षणत्वं सत्त्वाभावेऽसत्त्वं स्यात् असत्त्वाभावे च सत्त्वं न तूभयविलक्षणत्वं क्वचिदपि सम्भवति विरुद्धयोः प्रकारान्तरस्याभावात् इति चेत् ? स्यादयं पर्यनुयोगो यदि सत्त्वासत्त्वयोः परस्परविरहरूपत्वमस्माभिरुपगम्येत नत्वेवं किन्तु त्रिकाला- बाध्यत्वं सत्त्वम् असत्त्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम् नतु तत् सत्त्वाभावः तथाच त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वं मिथ्यात्वमतो न काचिदनुपपत्तिरधिकमद्वैतसिद्धौ तदीयगौडब्रह्मानन्दादौ द्रष्टव्यम्।

सा पुनरियमविद्या—

'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥' इति

( अत्र निर्विभागचितिः शुद्धं चैतन्यं पूर्वसिद्धतमसः पश्चिमः अनाद्यज्ञानात् पश्चाद्- भूतान्तःकरणोपाधिको जीवः) संक्षेपशारीरिकानुसारात् शुद्धं चितमेवाश्रयत्वविषयत्वे स्वीकुर्वन्तो विवरणकारादय इत्थमाचक्षते—जीवो न तदाश्रयः तथासति अविद्याश्रयत्वे जीवत्वे च सत्यविद्याश्रयस्वमित्यन्योन्याश्रयापत्तेः, किंतुब्रह्मैव जीवेऽज्ञत्वव्यवहारस्य चाविद्या- ब्रह्मतादात्म्यादेवोपपत्तेः ईश्वरेऽज्ञानसत्त्वेऽप्यज्ञानकृत्यावरणतत्प्रयुक्तभ्रमाद्यभावात् ईश्वरो- इत्यादयो न व्यवहाराः । एवमेव शुद्धेऽपि न तद्व्यवहारः ईश्वरे कुतो नावरणादिरिति चेत् तस्याविद्यारूपोपाधिप्रयुक्तबिम्बरूपत्वादुपाधेश्च प्रतिबिम्बपक्षपातित्वात् दृश्यते च

## विकासः

विहाय प्रतिबिम्बे एव जलदर्पणाद्युपाधेः कम्पमालिन्याद्युपधायकत्वम् । तस्मात् बिम्बभूतमीश्वरं विहाय प्रतिबिम्बे एव जीवेऽज्ञानस्याज्ञत्वासर्वज्ञत्वभोक्तृत्वाद्युपधायकत्वम् । अतश्चेश्वरे निरवद्यत्वनित्यमुक्तत्वादिबोधकस्य 'निरवद्यो निरञ्जन' इत्याद्यागमस्य न विरोधः प्रतिबिम्बपक्षपातित्वेऽपि बिम्बे कस्यापि धर्मस्य नाधायकत्वमित्यस्याभ्युपगतत्वात् बिम्बत्वसर्वज्ञत्वादेरौपाधिकस्य धर्मस्य बिम्बेऽपि न हानिरितीश्वरो बिम्बस्तत्प्रतिबिम्बो जीव इति ॥

अप्रतिमप्रतिभाप्रक्षालितान्तःकरणाः सकलदर्शनपारावारपारदृश्वानो मिथिलामण्डनमण्डनायमानाः **मण्डनमिश्रा वाचस्पतिमिश्रा** स्तदनुयायिनश्च जीवस्यैवाज्ञानाश्रयत्वं वर्णयाम्बभूवुः 'अहमज्ञः' इत्यादिप्रतीत्यनुरोधात् । मते चास्मिन्नन्योन्याश्रयदोषपरिहारः प्रागेव प्रदर्शित इति नेह प्रतन्यते । प्रतिबिम्बपक्षेऽव्यवहितस्य चाचाक्षुषस्य प्रतिबिम्बासम्भवोऽधस्तादुपन्यस्तः सर्वथैव दोष आपतति । एतत्पक्षे च जीवस्यौपाधिकनानात्वे नाविद्याऽपि तत्तज्जीवाश्रिता भिन्नैवेति तत्तदज्ञाननाशे मुक्तेऽपि तत्तज्जीवे जीवान्तरं प्रति संसारस्यावस्थानं न विरुध्यते । अविद्याया विषयस्त्वेतन्मतेऽपि प्रकाशस्वभावं ब्रह्मैव नतु जीवस्तस्याज्ञानविषयत्वेऽन्तःकरणादेरभानेन जगदान्ध्यप्रसङ्गस्य दर्शितत्वात् तस्माद् ब्रह्मैवावृणोत्यविद्या । आवरणकृत्यं हि प्रकाशमाने वस्तुनि दृश्यते यथा प्रदीपे घटादिप्रकाशके केनचिदावृते 'नास्ति न भाति' इति व्यवहारः, 'अस्ति भाति' इति व्यवहाराभावो वा भवत्यावरणकृत्यम्, अस्तित्वं च तूलाज्ञानपक्षेऽसत्त्वापादकाज्ञानाभावविशिष्टचित्तादात्म्यम् । भातत्वं च अभानापादकाज्ञानाभावविशिष्टचित्तादात्म्यम् । अज्ञानसत्त्वदशायां तु 'अस्ति भाति' इति न भवति व्यवहारः यतः परोक्षवृत्त्या शरीरस्थितान्तःकरणपरिणामरूपयाऽसत्त्वापादकेऽज्ञाने प्रमातृगते घटादिविषयावच्छिन्नचैतन्यविषयके नाशिते सति विषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकोऽज्ञानाभावो भवति घटावच्छिन्न चिष्ठः, अपरोक्षया तु वृत्त्या विषयावच्छिन्न चिन्निष्ठया विषयदेशप्राप्तान्तःकरणपरिणामरूपया विषयावच्छिन्नचिदाश्रितेऽभानापादकेऽज्ञाने नाशिते तदभावोऽपि भवति विषयावच्छिन्नचिन्निष्ठ इति विरोधिनो विरहात् 'अस्ति भाति' इत्युभयविधो व्यवहार उपपद्यते । साक्षिभास्यपदार्थानामभावबुद्धौ तु तादृशपदार्थसत्त्वमेव विरोधीति न तत्राज्ञानकल्पनावकाशः । एकाज्ञानपक्षे तु तूलाज्ञानसमानस्वभाविका मूलाज्ञाननिष्ठाऽनन्तैवास्ति शक्तिः । तदभाव एव च भातत्वादिशरीरे प्रवेश्य इति । ब्रह्मणो वस्तुतो निर्विभागेऽपि अविद्या स्वकल्पितविभागवन्तं पूर्णानन्दांशमेवावृणोति साक्षिचैतन्यं विहाय कल्पितभेदविशिष्टमन्यं च चैतन्यांशम् साक्षिण आवृतत्वे जगदान्ध्यप्रसङ्गाद्, सदंशमपि नावृणोत्यन्यथा 'सन् घट' इत्यादिप्रतीत्यनुपपत्तेरित्यवधातव्यम् ।

यत्तु **शतदूषणीकारेण** ब्रह्मस्वरूपमविद्यातिरोहितमित्यद्वैतिनां मतमभिधाय तिरोधानस्य चेन्द्रियसम्बन्धनिवारणमर्थं परिकल्प्य तस्याशक्यत्वमभिहितं तदेतत्कलुषिता-

### विकासः

न्तःकरणविजृम्भणमात्रम्, न हि ब्रह्मस्वरूपं तिरोऽधात्यविद्येति ब्रह्मवादिभिरुपेयते ब्रह्मणः सदैकरूपत्वेन तस्य तिरोधानासम्भवात् अपि तु यथा भासमानोऽपि भास्करो नेत्रनिमीलने मेघाच्छादने च नावलोक्यते, न च तावता सूर्यस्य कश्चिद्विकारः तथैव जीवनिष्ठेनाज्ञानेन न ब्रह्मणि किञ्चित्तिरोधानादिकं भवति अपि तु अविद्यया भेदादिकं सर्वं कल्प्यते। नच तावता ब्रह्मणः स्वरूपे काचित्प्रच्युतिरिति सत्ख्यात्यणुवादखण्डनेनैव भगवदुपासनादिकं विद्यात् तदीयः स्वकपोलकल्पितः सर्व एव सिद्धान्तो निराकृतो भवतीत्यवगन्तव्यम्।

### भामती

तस्मादनाद्यविद्यालब्धकर्तृत्वभोक्तृत्वब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधिनिषेधशास्त्रं प्रवर्तते। एवं वेदान्ता अप्यविद्यावत्पुरुषविषया एव। नहि प्रमात्रादिविभागादृते तदर्थाधिगमः। ते त्वविद्यावन्तमनुशासन्तो निर्मृष्टनिखिलाविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेषः। तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम्।

स्यादेतत्। यद्यपि विरोधानुपयोगाभ्यामौपनिषदः पुरुषोऽधिकारे नापेक्ष्यते तथाप्युपनिषद्भ्योऽवगम्यमानः शक्नोत्यधिकारं निरोद्धुम्। तथा च परस्परापहतार्थत्वेन कृत्स्न एव वेदः प्रमाण्यमपजह्यादित्यत आह "प्राक् च तथाभूतात्मेति" सत्यमौपनिषदपुरुषाधिगमोऽधिकारविरोधी, तस्मात्तु पुरस्तात् कर्मविधयः स्वोचितं व्यवहारं निर्वर्तयन्तो नानुपजातेन ब्रह्मज्ञानेन शक्या निरोद्धुम्। न च परस्परापहतिः, विद्याविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेः। यथा 'न हिंस्यात् सर्वा

### प्रकाशः

ननु यागादीनि कर्माणि कर्मकाण्डोक्तविधिवाक्यैर्विधीयन्ते, उपनिषद्भिश्च कार्यकरणसङ्घातरहितोऽसङ्ग आत्मा प्रतिपाद्यते तादृशश्चात्मा कथं कर्म कुर्याद्विरोधात्, सति चैवं परस्परव्याहतार्थप्रतिपादनात्सर्व एव वेदः प्रामाण्यं परित्यजेदित्याशंकते—स्यादेतदिति। विरोधानुपयोगाभ्यामिति। ब्रह्मज्ञानिनः जात्याद्यभिमानशून्यत्वात् स्वर्गादिरूपप्रयोजनविरहाच्चेति भावः। उपनिषद्भ्यः प्रतिपाद्यमानस्यात्मन उपजात एव हि साक्षात्कारो निरोद्धुमर्हति स्वविरोधिनं यावन्तमेव व्यवहारं नानुपजातोऽपीति यावन्न ब्रह्मसाक्षात्कारः प्रादु

शाङ्करभाष्यम्

पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति। एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते। अतस्समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनां च प्रसिद्धोऽविवेकपुरःसर प्रत्यक्षादिव्यवहारः। तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्काः समान इति निश्चीयते। शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते। तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते। अनुपयोगादधिकारविरोधाच्च। प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्या-

भामती

भूतानि' इति साध्यांशनिषेधेऽपि 'श्येनेनाभिचरन् यजेत' इति शास्त्रं प्रवर्तमानं न हिंस्यादित्यनेन न विरुध्यते तत् कस्य हेतोः ? पुरुषभेदादिति। अवजितक्रोधारातयः पुरुषा निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादिशास्त्र इति। अविद्यावत्पुरुषविषयत्वं नातिवर्तत इति यदुक्तं तदेव स्फोरयति तथाहीति। वर्णाध्यासः राजा राजसूयेन यजेतेत्यादिः। आश्रमाध्यासः गृहस्थः सदृशीं भार्यां विन्देदित्यादिः।

प्रकाशः

रविषयत् तावत्सर्वो लौकिको वैदिकश्च व्यवहारो यथारूमयं निष्प्रत्यूहमुदपद्यत इत्याह—सत्यमिति। अप्रामाण्यशङ्कां समूलमुन्मूलयति—न च परस्परापहतिरितिसाध्यांशनिषेधेऽपीति श्येनादियागसाध्यशत्रुवधादेर्निषेधेऽपि कस्यहेतोः कस्माद्धेतोः निमित्तपर्यायप्रयोगे सर्वविभक्तेः साधुत्वान्वाख्यानात्

## शाङ्करभाष्यम् ।

वद्विषयत्वं नातिवर्तन्ते । तथा हि ब्राह्मणो यजेत इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम

## भामती

वयोऽध्यासः कृष्णकेशोऽग्नीनादधीतेत्यादिः । अवस्थाऽध्यासः अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्याग इति । आदिग्रहणं महापातकोपपातकसङ्करीकरणापात्रीकरणमलिनीकरणाद्यध्यासोपसंग्रहार्थम् । तदेवमात्मानात्मनोः परस्पराध्यासमाक्षेपसमाधानाभ्यामुपपाद्य प्रमाणप्रमेयव्यवहारप्रवर्तनेन च दृढीकृत्य तस्यानर्थहेतुतामुदाहरणप्रपञ्चेन प्रतिपादयितुं तत्स्वरूपमुक्तं स्मारयति "अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" । 'स्मृतिरूपः परत्र पूर्वदृष्टावभास' इत्यस्य

## प्रकाशः

पुरुषभेदमेव दर्शयति—अपजितेति । महापातकेत्यादि । महापातकं ब्रह्मवधादि, उपपातकं गोवधादि । 'संङ्करीकरणादीनि मनुनोक्तानि (अ०११ श्लो०६८)

'खराश्वोष्ट्रवराहाणा मजाविकवधस्तथा ।  
संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ।  
निन्दितेभ्यो धनाऽऽदानं वाणिज्यं शूद्रसेवनम् ।  
अपात्रीकरणं ज्ञेयमसत्यस्याभिभाषणम् ॥  
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।  
फलैधः कुसुमस्तेयमधैर्यं च मलावहम् ॥' इति ।

आदिपदाज्जातिभ्रंशकारादयो गृह्यन्ते ।

'ब्राह्मणस्य रुजः कृत्यं घ्रातिरघ्रेयमद्ययोः ।  
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंसकरं हि तत् ॥'इति ।

स्मृतिरूप इत्यादिभाष्यविरोधमाशङ्क्य परिहरति—स्मृतिरू

## शाङ्करभाष्यम्।

तद्यथा—पुत्रभार्यादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति तथा देहधर्मान् स्थूलोऽहं, कृशोऽहं, गौरोऽहं. तिष्ठामि, गच्छामि, लङ्घ-

## भामती

संक्षेपाभिधानमेतत्। तत्राहमिति धर्मितादात्म्याध्यासमात्रं ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुरिति धर्माध्यासमेव ममकारं साक्षादशेषानर्थसंसारकारणमुदाहरणप्रपञ्चेनाह तद्यथा पुत्रभार्यादिष्विति। देहतादात्म्यमात्मन्यध्यस्य देहधर्मं पुत्रकलत्रादिस्वाम्यं च कृशत्वादिवदारोप्याह अहमेव विकलः सकल इति। स्वस्य खलु साकल्येन स्वाम्यसाकल्यात् स्वामीश्वरः सकलः सम्पूर्णो भवति। तथा स्वस्य वैकल्येन स्वाम्यवैकल्यात् स्वामीश्वरो विकलोऽसम्पूर्णो भवति। बाह्यधर्मा ये वैकल्यादयः स्वाम्यप्रणालिकया संचारिताः शरीरे तानात्मन्यध्यस्यतीत्यर्थः। यदा च परोपाध्यपेक्षे देहधर्मे स्वाम्ये इयं गतिस्तदा कैव कथाऽनौपाधिकेषु देहधर्मेषु कृशत्वादिष्वित्याशयवानाह तथा देहधर्मानिति। देहादेरप्यन्तरङ्गाणामिन्द्रियाणामभ्यस्तात्मभावानां

## प्रकाशः

इत्यादि। ननु भाष्ये उपजीव्यत्वाद्धर्मितादात्म्याध्यास एव प्रथमं वक्तुमुचित इत्याशङ्क्याह—तत्राहमिति। पुत्रादिभिर्विवेकग्रहात्तद्धर्माणामात्मन्यध्यासासम्भवमाशङ्क्याह—देहतादात्म्यमिति। देहधर्ममिति। यद्यपि पुत्रादिस्वामित्वं पुत्राद्यधीनभोगवत्त्वमेव तच्च न देहे, तथापि तदधीनपोषणादिभाक्त्वमेव तत्स्वामित्वमतो नानुपपत्तिः। ननु देहगतस्य स्वामित्वस्यात्मन्यारोपे कथं साकल्यवैकल्यारोपसिद्धिरत आह—स्वस्य खल्विति।

## शाङ्करभाष्यम्

यामि चेति, तथेन्द्रियधर्मान् मूकः काणः क्लीवः बधिरः अन्धो ऽहमिति, तथाऽन्तःकरणधर्मान् कामसंकल्पविचिकित्सा- ध्यवसायादीन्, एवमहम्प्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षि

## भामती

धर्मान् मूकत्वादीन् ततोऽप्यन्तरङ्गस्यान्तःकरणस्याध्यस्तात्मभा... धर्मान् कामसङ्कल्पादीन् आत्मन्यध्यस्यतीति योजना तदनेन प्रपञ्चेन धर्माध्यासमुक्त्वा तस्य मूलं धर्म्यध्यास... एवमहम्प्रत्ययिनम्—अहंप्रत्ययो वृत्तिर्यस्मिन्नन्तः करणादौ सो... हंप्रत्ययी तं स्वप्रचारसाक्षिणि—अन्तःकरणप्रचारसाक्षिणि चै... दासीनताभ्याम्,प्रत्यगात्मन्यध्यस्य, तदनेन कर्तृत्वभोक्तृत्वे उ... दिते। चैतन्यमुपपादयति तं च प्रत्यगात्मानं सर्वसाक्षि... तद्विपर्ययेण—अन्तःकरणादिविपर्ययेण, अन्तःकरणाद्यचेतनं ...

## प्रकाशः

स्वस्य स्वामित्वनिरूपकस्य। ननु देहधर्मयोरेव सकलत्वविकलत्वयो... न्यारोपे भाष्ये 'बाह्यधर्मान्' इत्युक्तिरसङ्गता स्वदेहगतस्य बाह्यधर्मत्वाभा... दत आह—बाह्यधर्मा इति। पुत्रकलत्रादिधर्मा इत्यर्थः। शरीर ... अध्यस्ता इति शेषः। ननु पुत्रादिगता अपि साकल्यवैकल्यादयो धर्माः ... प्रणालिकया शरीरे सञ्चारिताः शरीरसम्बद्धाः सन्तः आत्मन्यध्य... सर्वानर्थकारिणो भवन्तीति प्रथमोदाहरणेनाधिगता एवातस्तथा देहधर्मत्वे... भाष्यमसङ्गतमतो वैलक्षण्यमाह—यदा चेति। अन्तःकरणादावित... आदिपदेन देहेन्द्रियपरिग्रहः। भाष्ये 'स्वप्रचारेत्यत्र स्वपदमन्तःकर... रम्। तथा चाशेषो योऽन्तःकरणस्य प्रचारः कामसङ्कल्पादिस्तत्साक्षिणि... साक्षिशब्दार्थमाह—चैतन्योदासीनताभ्यामिति। साक्षिशब्दो हि 'साक्षा...

## शाङ्करभाष्यम्

तद्विपर्ययेणान्तः करणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकः--अध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृ-

## भामती

विपर्ययः चैतन्यं तेन, इत्थंभूतलक्षणे तृतीया । अन्तःकरणादिष्वध्यस्यति । तदनेनान्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता भोक्ता कार्यकारणाविद्याद्वयाधारोऽहंकारास्पदं संसारी सर्वानर्थसम्भारभाजनं जीवात्मा इतरेतराध्यासोपादानस्तदुपादानश्चाध्यास इत्यनादित्वाद्बीजाङ्कुरवन्नेतरेतराश्रयत्वमित्युक्तं भवति । प्रमाणप्रमेयव्यवहारदृढीकृतमपि शिष्यहिताय स्वरूपाभिधानपूर्वकं सर्वलोकप्रत्यक्षतयाऽध्यासं सुदृढीकरोति एवमयमनादिरनन्तः तत्त्वज्ञानमन्तरेणाशक्यसमुच्छेदः अनाद्यनन्तत्वे हेतुरुक्तो नैसर्गिक इति ।

## प्रकाशः

रे संज्ञायाम् इति सूत्रेण व्यवहारफलासंस्पर्शिन्युदासीने तद्द्रष्टरि व्युत्पादितः । भाष्ये—अन्तःकरणादिष्वध्यस्यतीति ।ननु शरीरेन्द्रियाणामध्यस्तत्वेऽइन्द्रियेण शरीरस्य ग्राह्यत्वं न स्यादपि तु शुक्तिरजतादिवत् केवलसाक्षिवेद्यत्व स्यात् एवमात्मनोऽधिष्ठानत्वे 'यस्य पृथिवी शरीरम्' इति श्रुत्या प्रतिपादितः पृथिव्यां शरीरलयोऽप्युपरुध्येत अध्यस्तानामधिष्ठान एव लयादितिचेत् ? उच्यते-विशिष्टचैतन्येऽध्यस्तानां प्रातीतिकानामेव केवलसाक्षिवेद्यत्वं नतूपहितेऽध्यस्तानां, तेषां तु व्यावहारिकतया भवतोन्द्रियग्राह्यत्वमिति नानुपपत्तिः, नापि लयश्रुतिविरोधः पृथिवीद्वारेणात्मन्येव शरीरस्य लयेतात्पर्यादिति । इत्थंभूतलक्षणे तृतीयेति । तत्त्वाश्च वैशिष्ट्यमर्थः । भाष्ये 'साक्षिणीत्युक्तत्वाच्छुद्धेऽध्यास इति भ्रममपनुदति तदनेनेति, इत्युक्तं भवतीत्यनेन सम्बन्धः । कार्यकारणाविद्येति । कार्याविद्या पूर्वपूर्वविभ्रमजन्यः संस्कारः वासनाऽपरपर्यायः कारणाविद्या मूलाविद्यापदव्यपदेश्या । नेतरेतराश्रयत्वमिति । अत्र यद्वक्तव्यं तदवादि पूर्वमेव भूयः । अनन्तपदस्य ध्वंसाप्रतियोगित्वमर्थं व्यवच्छेत्तुमाह—

## शाङ्करभाष्यम्

त्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाया-त्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते ।

## भामती

मिथ्याप्रत्ययरूपः मिथ्याप्रत्ययानां रूपमनिर्वचनीयत्वं तद्यस्य स तथोक्तः, अनिर्वचनीय इत्यर्थः । प्रकृतमुपसंहरति—"अस्यानर्थहेतोः प्रहाणाय, विरोधिप्रत्ययं विना कुतोऽस्य प्रहाणमित्यत उक्तम्-आत्मैकत्वविद्याप्रतिपत्तये । प्रतिपत्तिः प्राप्तिः तस्यै, न तु

## प्रकाशः

तत्त्वज्ञानमन्तरेणेति । प्रकृतमिति । ननु प्रकृतशब्दस्य तदादिशब्दवद् बुद्धिविषयतावच्छेदकावच्छिन्नार्थकत्वात्प्रकृतशब्दप्रयोगोऽत्र नोचित इति चेन्न पूर्वमनिर्दिष्टे अपि हि विषयप्रयोजने उपोद्घातरूपेणाध्यासं वर्णयतः भाष्यकृतो बुद्धिस्थत्वादुचितमेव प्रकृतशब्दोपादानम् । भाष्ये- आत्मैकत्वविद्याप्रतिपत्तये इति एतेन जीवब्रह्मैक्यमेतच्छास्त्रस्य विषय इति सिद्ध्यति । यत्तु परपक्षगिरिवज्रनामके वैष्णवग्रन्थे—'जीवब्रह्मैक्यमध्यस्त-मनध्यस्तं वा ? आद्ये अध्यस्तानामवश्यबाध्यत्वेन भेदस्य तात्त्विकत्वापत्तेः । द्वितीये ऐक्य तियोगिभेदस्य पारमार्थिकत्वप्रसङ्गात्' इत्युक्तम्, तदज्ञान-विजृम्भितम्; ऐक्यस्य धर्मस्य बाध्यत्वेऽपि धर्मिणोऽखण्डानन्दचैतन्यस्य स्वप्रकाशस्य स्वयंसिद्धस्य बाधकाप्रसिद्ध्या बाधनासम्भवात्, नहि धर्मस्य बाधे धर्मिणोऽपि भवत्यवश्यम्बाधः, दृश्यते च स्थाणौ पुरुषत्वबाधेऽपि धर्मिणः स्थाणो-रबाध्यत्वमिति । न चैवमप्यैक्यस्य बाध्यत्वे भेदस्य सत्यत्वं विरुद्धयोरेकमिथ्यात्वे-ऽपरस्य सत्यत्वनियमादिति वाच्यम्, तत्रैव हि एकनिषेधेऽपरस्यसत्यत्वं यत्र निषेध्यतावच्छेदकमुभयवृत्ति न भवेत् प्रकृते च ब्रह्मभिन्नत्वादेर्निषेध्यतावच्छेदकस्योभयत्रसत्त्वान्नैकस्यापि सत्यत्वम् नहि गजे गोत्वाश्वत्वयोर्विरुद्धयोर्मध्ये गोत्वस्य निषेधेऽश्वत्वस्य सत्यत्वम्, निषेध्यतावच्छेदकस्य गजभिन्नत्वादेरुभयत्र समानत्वात् तस्मान्नाद्ये दोषः द्वितीयं तु अनभ्युपगमपराहतम् नहि ऐक्यं भेदाभावः येन तत्प्रतियोगिनो भेदस्याप्यनध्यस्तता स्यात् अपितु तत्स्वरूपं

## भामती

जपमात्राय, नापि कर्मसु प्रवृत्तये, आत्मैकत्वं विगलितनिखिलप्रपञ्चत्वमानन्दरूपस्य सतस्तत्प्रतिपत्तिं निर्विचिकित्सां भावयन्तो वेदान्ताः समूलघातमध्यासमुपघ्नन्ति। एतदुक्तं भवति। असमत्प्रत्ययस्यात्मविषयस्य समीचीनत्वे सति ब्रह्मणो ज्ञातत्वान्निष्प्रयोजनत्वाच्च न जिज्ञासा स्यात्। तदभावे च न ब्रह्मज्ञानाय वेदान्ताः पठ्येरन्। अपि त्वविवक्षितार्थाः जपमात्रे उपयुज्येरन्। नहि तदौपनिषदात्मप्रत्ययः प्रमाणतामश्नुते। न चासावप्रमाणमभ्यस्तोऽपि वास्तवं कर्तृत्वभोक्तृत्वाद्यात्मनोऽपनेतुमर्हति। आरोपितं हि रूपं तत्त्वज्ञानेनापनोद्यते न तु वास्तवमतत्त्वज्ञानेन, नहि रज्ज्वा रज्जुत्वं सहस्रमपि सर्पधाराप्रत्यया अपवदितुं समुत्सहन्ते।

## प्रकाशः

न कश्चिद्दोषः। एवमन्येऽपि तदीयाक्षेपाः गुरुचरणसेवामहत्कृतश्रमपूर्वकाध्ययनलब्धन्याय शास्त्रपाण्डित्यैः कोविदैरधीतभाष्यभामतीखण्डनखण्डखाद्याद्वैतसिद्ध्यादिग्रन्थनिचयैःप्रतिक्षेपणीयाः। 'विद्याप्रतिपत्तये' इत्यत्रैकतरशब्दोपादानमफलमुभयोः समानार्थकत्वादतो विभजते—प्रतिपत्तिः प्राप्तिरिति। तत्प्रतिपत्तिम् तत्साक्षात्कारम्। भावयन्तः जनयन्तः। नन्वात्मतत्त्वसाक्षात्काराय वेदान्ता आरभ्यन्त इत्युक्तमयुक्तम्, साक्षात्कारे शब्दाजन्यत्वस्य व्यवस्थापयिष्यमाणत्वादिति चेत्? अत्रेदमवगन्तव्यम्—शब्दतो ब्रह्मणः परोक्षनिश्चये जात एव मननादिद्वारा मनस्तत्साक्षात्कारं कर्तुमर्हति नान्यथेति मनः सहकारितया वेदान्तवाक्यानामात्मसाक्षात्कारं प्रति परम्परया कारणत्वं भामतीकृतामभिमतम्। अन्येषां तु शब्दादप्यपरोक्षानुभवस्य 'दशमस्त्वमसि' इत्यादिवाक्याद्दर्शनेन परिशोधिततत्त्वंपदार्थाच्छब्दादेव करणात् साक्षात्कारोदय इति तदग्रे विवेचयिष्यते। प्रहाणायेति भाष्यस्थप्रशब्दार्थनिर्वक्तिसमूलघातमिति। एवमध्यासे समर्थिते सति 'आत्मनः प्रसिद्धत्वादजिज्ञास्यत्वमित्यध्यासाक्षेपावसरे पूर्वपक्षिणोक्तस्मरन्समादधाति—एतदुक्तमिति तदा अविवक्षितार्थत्वे। सर्पधाराप्रत्यया इति सर्पधारयोः प्रत्ययाः सर्पप्रत्ययाः धाराप्रत्यया श्चेत्यर्थः। अपवदितुमिति। एवञ्च तात्पर्यवतीश्रुतिरितरत्प्रमाणं

## भामती

मिथ्याज्ञानप्रसञ्जितं च स्वरूपं शक्यं तत्त्वज्ञानेनापवदितुम्। मिथ्याज्ञानसंस्कारश्च सुदृढोऽपि तत्त्वज्ञानसंस्कारेणादरनैरन्तर्यदीर्घकालतत्त्वज्ञानाभ्यासजन्मनेति। स्यादेतत्। प्राणाद्युपासना अपि वेदान्तेषु बहुलमुपलभ्यन्ते तत्कथं सर्वेषां वेदान्तानामात्मैकत्वप्रतिपादनमर्थ इत्यत आह–**यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः** शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मा, तस्य त्वंपदाभिधेयस्य तत्पदाभिधेय परमात्मरूपता मीमांसा या सा तथोक्ता। एतावानत्रार्थसंक्षेपः। यद्यपि च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितं, यद्यपि च **अविशिष्टस्तु वाक्यार्थ (अ० २ पा० ४० सू० जैमि)** इतिन्यायान्मन्त्राणामिव वेदान्तानामर्थपरत्वमौत्सर्गिकं, यद्यपि च वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वभोक्तृत्वरहितो निष्प्रपञ्च एकः प्रत्यगात्माऽवगम्यते, तथापि कर्तृत्वभोक्तृत्वदुःखशोक

### प्रकाशः

निरोद्धुमुत्सहते अस्ति च प्रकृते उपक्रमोपसंहारादितात्पर्यग्राहकप्राहिताद्वितीयब्रह्मतात्पर्या भगवती बलवती श्रुतिस्तज्जनितश्च निखिलानर्थ सम्भार निवर्त्तको ब्रह्मसाक्षात्कारो बलवान्, अहं प्रत्ययस्यैव याथार्थ्यमपवदतीति। आदरः श्रद्धान्वितत्वम्। नैरन्तर्यम् प्रत्ययान्तरव्यवधानराहित्यम्। अभ्यासजन्मनेति। अस्य तत्त्वज्ञानेनापवदितुं शक्यइति लिङ्गव्यत्ययेन पूर्वतनेन सम्बन्धः। तथा च प्रबलतम सहकारिसमवधानसम्पन्ननिदिध्यासनरूपोपासनानिचयजन्मना सम्प्रतितनेनापि विरोधिना साक्षात्कारेण नितरां निवर्त्तत एव मिथ्याज्ञानवासनेत्यर्थः प्राणादीत्यादिना उद्गीथादिपरिग्रहः। प्रदर्शयिष्याम इति। तत्तदुपासनादेशना चित्तैकाग्र्य द्वाराऽऽत्मसाक्षात्कारयोग्यतामासादयन्ती अध्यारोपापवादन्यायं वाऽऽश्रयन्तो

## भामती

मोहमयमात्मानमवगाहमानेनाहंप्रत्ययेन सन्देहबाधविरहिणा विरुध्यमाना वेदान्ताः स्वार्थात्प्रच्युता उपचरितार्था वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथा च तदर्थविचारात्मिका चतुर्लक्षणी शारीरकमीमांसा नारब्धव्या । न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा येन जिज्ञास्यः सन् विचारं प्रयुञ्जीतेति पूर्वः पक्षः ।

सिद्धान्तस्तु भवेदेतदेवं यद्यहंप्रत्ययः प्रमाणं, तस्य तूक्तेन क्रमेण श्रुत्यादिबाधकत्वानुपपत्तेः । श्रुत्यादिभिश्च समस्ततीर्थकरैश्च प्रामाण्यानभ्युपगमादध्यासत्वम् । एवं वेदान्ता नाविवक्षितार्थाः, नाप्युपचरितार्थाः, किन्तूक्तलक्षण[illegible] प्रत्यगात्मैव तेषां मुख्योऽर्थः । तस्य च वक्ष्यमाणेन क्रमेण संदिग्धत्वात्प्रयोजनत्वाच्च युक्ता जिज्ञासा, इत्याशयवान्सूत्रकारः तज्जिज्ञासामसूत्रयत्—

## प्रकाशः

अद्वितीये ब्रह्मण्येव महातात्पर्यमवगमयन्तीति भावः । अधिकरण रचना प्रकार मादर्शात एतावानिड्ति अधिकरण नाम—

विषयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् ।
सिद्धान्तश्चेत्यमी पञ्च शास्त्रेऽधिकरणं स्मृतम् ॥

इति पञ्चात्मकसमुदाये पारिभाषिकम् । तत्र विषयपदेन संशयः प्रत्येतव्यः । प्रकृते च वेदान्त शास्त्रविषयः, विषयप्रयोजनासम्भवसम्भवाभ्यामनारम्भणीय मारम्भणीयं वेति संशयः । तत्र संशयापत्तयपूर्वकं पूर्वपक्षमाह—यद्यपीति ।

उत्तरमाह पूर्वपक्षी तथापीति। प्रमाणस्वरूपपर्यालोचनया मीमांसाया अनारभ्यत्वमुक्त्वा प्रमेयस्वरूपपर्यालोचनयाऽपि तदाह नचेति । एवञ्चोक्तयुक्तिभिश्शास्त्रस्यानारभ्यत्वे प्राप्ते सिद्धान्त्याह—सिद्धान्तस्त्विति । अध्यासत्वमिति एतेन अहंकार एवात्मा अत एव 'सुखमहमस्वाप्सं न कचिदवेदिषम्, इत्यहंकारस्यैव परामर्शादित्यपि परास्तम् इच्छादिगुणविशिष्टएवाहंकारः प्रतिभासतेइत्याद्ययोः समानम् सुषुप्तौ च नेच्छादयोऽवभासन्तेऽतो नाहंकार एवात्मा अहंकारस्यात्मत्वे च तदानीमिच्छादिविशिष्टोऽहंकारोऽ

## प्रकाशः

वभासेत । न चेच्छादिगुणविशिष्ट एवाहमर्थोऽवभासते इति नास्माभिरुपेयत इति वाच्यम् गुणिग्रहणस्य गुणग्रहणव्याप्तत्वात् अन्यथा रूपादिहीनोऽपि घटः प्रतीयेत । न च रूपादिरहितानां घटादीनामसत्त्वादेव न तथा प्रतीतिरिति वाच्यम् पूर्वरूपनाशाग्निमरूपानुत्पत्तिक्षणे आद्यक्षणे च रूपादिकं विनापि घटादेः सद्भावात् सति चैवमहंकारस्यात्मत्वोपगमे गुणाग्रहणे गुणिनस्तस्य सुषुप्तौ ग्रहणं न स्यात् अतो निर्गुण एवात्मा सुषुप्तौ प्रकाशते इति स्वीकार्यम् । न चाहंकारोऽपि निर्गुणो येन स आत्मा स्यात्, तदानीमहंकाराभावे च न जागरेऽपि तत्परामर्शः तस्मादज्ञानाश्रयत्वेनानुभूयमानादात्मनोऽन्य एवाहंकारः । नन्वेवं कथं जागरे सुखमहमस्वाप्समिति प्रतीतिरुपपद्यते इति चेत् सुषुप्ताववस्थितायामविद्यायां लीनस्यान्तःकरणस्य प्रबोधे पुनराविर्भवितुः स्मर्तृत्वात् उपादानगतस्योपादेये प्रसरादिति । उक्तलक्षणः चैतन्यानन्दघनः । वक्ष्यमाणेनेति ।

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वेत्यादिनेतिशेषः । अत्रैतदधिकरणस्य श्रुत्यर्थविचारकत्वाभावेऽपि श्रुत्याक्षिप्तत्वात् श्रुतिसङ्गतिः । एतदधिकरणं हि अध्ययनविध्युपात्तैर्वेदान्तैः सामान्यतः प्रयोजनवदर्थपर्यवसायितां नीतैर्विशेषतः संदिह्यमानार्थकतया विचाराकाङ्क्षैराक्षिप्यते एवमस्याधिकरणस्य शास्त्रप्रतिपाद्यसमन्वयाविरोधसाधनफलान्यतमप्रतिपादकत्वाभावेऽपि समन्वयाद्यशेषविचारहेतुत्वाच्छास्त्रप्रथमाध्यायप्रथमपादसङ्गतयोऽध्यवसेयाः ।

सदसद्भ्यामनिर्वाच्यं विश्वं यस्मिन् प्रसूयते ।
विद्यते लीयते तस्मै कस्मै चिन्महसे नमः ।

श्री साम्ब शिवार्पणमस्तु



ॐ

# अथातो ब्रह्मजिज्ञासा ॥१॥

शाङ्करभाष्यम्।

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्

भामती

इति। जिज्ञासया संदेहप्रयोजने सूचयति। तत्र साक्षादिच्छाव्याप्यत्वाद्ब्रह्मज्ञानं कण्ठोक्तं प्रयोजनम्। न च कर्मज्ञानात्पराचीनमनुष्ठा-

प्रकाशः

यदत्र द्वैतवाद्याक्षिपति किं सगुणं ब्रह्म जिज्ञास्यं निर्गुणम्वा आद्ये तज्ज्ञानादविद्यानिवृत्त्यसंभवः समानविषयकयोरेव ज्ञानाज्ञानयोर्निवर्त्यनिवर्त्तकभावस्य भवद्भिः स्वीकृतत्वात् अविद्या निर्गुणं ब्रह्म विषयीकरोतीति भवद्भिरुपगतत्वाच्च तस्मान्नाद्यः पक्षः, नापि द्वितीयः जन्माद्यस्य यत इत्यनेन सविशेषस्यैव ब्रह्मणो लक्षणाभिधानस्यकृतस्यासङ्गतिप्रसङ्गात् इति, तन्न निर्गुणमेव जिज्ञास्यं सगुणलक्षणं तु सगुणज्ञानं विना निर्गुणज्ञानासंभवादेव कृतम् निर्विकल्पज्ञाने सविकल्पज्ञानस्य कारणत्वात्, सम्प्रज्ञातस्यैव हि समाधेः प्रकर्षावस्थाऽसम्प्रज्ञातः समाधिः तत्र शब्दादितो यत्किञ्चिद्गुणविशिष्टमेव ब्रह्म ज्ञायतेऽनन्तरं निदिध्यासने समाधिप्रकर्षाज्जायमानेऽविद्यानिवर्तके निर्विकल्पसाक्षात्कारे न कश्चिदुपाधिरवभासतेऽतोयुक्तमेव सूत्रकृतः सगुणलक्षणाभिधानम्। अविद्यापि उपहितमेव ब्रह्म गोचरी करोतीति स्पष्टीभविष्यति यत्तु निर्गुणे प्रमाणाभावान्नास्ति निर्गुणं ब्रह्मेति रामानुजादयः प्रलपन्ति तन्न अलंकारोह्ययमस्माकं निर्गुणे मानाभाव इति, सति हि प्रमाणगोचरत्वे निर्गुणत्वमेव व्याहन्येत, अतएवाहश्रुतिः यतो वाचोनिवर्त्तन्तेऽप्राप्य मनसा सह, यन्मनसा न मनुते, विज्ञातारमरे केन विजानीयात्, इत्यादिकमिति। संशयप्रयोजनयोः सत्त्वे एव जिज्ञासा स्यात् कार्यकारणस्य सूचनादत आह जिज्ञासयेति। तत्रेति तयोर्मध्ये। इच्छाव्याप्यत्वात् इच्छाविषयत्वात्। ब्रह्मज्ञानमिति नन्वत्र ब्रह्मस्वरूपं ज्ञानं विवक्षितं वृत्तिरूपं वा नाद्यः तस्य स्वस्वरूपतया प्राप्तत्वेन पुरुषार्थत्वाभावात्, न द्वितीयः वृत्तिज्ञानस्यानन्दरूपत्वाभावेनापुरुषार्थत्वात् इतिचेन्न वृत्त्यभिव्यक्तब्रह्मस्वरूपज्ञानस्य विवक्षितत्वात् संसारदशायां

## भामती

नमिव ब्रह्मज्ञानात्पराचीनं किञ्चिदस्ति, येनैतदवान्तरप्रयोजनं भवे किंतु ब्रह्ममीमांसाख्यतर्केतिकर्तव्यतानुज्ञातविषयैर्वेदान्तैराहितं निर्विचि कित्सं ब्रह्मज्ञानमेव समस्तदुःखोपशमरूपमानन्दैकरसं परमं प्रयोजनम् तमर्थमधिकृत्य हि प्रेक्षावन्तः प्रवर्तन्तेतराम् । तच्च प्राप्तमप्यनाद्यविद्या वशादप्राप्तमिवेति प्रेप्सितं भवति । यथा स्वग्रीवागतमपि ग्रैवेयकं कु श्चिद्भ्रमान्नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोति जिज्ञासा तु संशयस्य कार्यमिति स्वकारणं संशयं सूचयति । संशयश्च मीमांसारम्भं प्रयोजयति । तथा च शास्त्रे प्रेक्षावत्प्रवृत्तिहेतुसंशयप्रयो नसूचनाद् युक्तमस्य सूत्रस्य शास्त्रादित्वमित्याह भगवान् भाष्यकारः— वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य अस्माभिः इद मादिमं सूत्रम् पूजितविचारवचनो मीमांसाशब्दः । परपुरुषार्थहेतु

## प्रकाशः

स्वरूपज्ञानस्य सत्त्वेऽपि तस्य वृत्त्यनभिव्यक्तत्वम् । कर्मज्ञानवद् ब्रह्मज्ञानं न साक्षात्प्रयोजनमित्याशंकां निराकरोति नचेति । पराचीनम् पश्चाद्भावि इष्यमाणत्वेन ज्ञानं प्रयोजनमित्युपपाद्य संशयसूचनमुपपादयति जिज्ञासा मीमांसारम्भम् विचारारम्भम्, संशयस्य हि कार्यद्वयम् जिज्ञासा विचारश्च च्छासामग्र्या बलवत्वात् विचारं प्रति हेतुत्वाच्च प्रथमं जिज्ञासैवोदेति विचारः, तथाच साधनचतुष्टयसम्पन्नस्य प्रमातुः प्रयोजनमपेक्षमाणस्य देह व्यतिरिक्ते आत्मनि संशयस्ततो ब्रह्मजिज्ञासा भवति ततो विचारः, अतो जिज्ञासां सूत्रयतो भगवतो बादरायणस्य युक्तो जन्माद्यस्य यत इत्यादिना विचा रम्भ इति । एतेन प्रतिज्ञायते ब्रह्मणोजिज्ञासा क्रियते तु तद्विचारस्तस्मा जिज्ञासापदस्य विचारलक्षकत्वमेव युक्तमित्यपि प्रत्युक्तम् विनापि लक्षणां संशयादिवत् विचारस्य सूचनेनैवोपपत्तौ लक्षणाया अनावश्यकत्वात् । जिज्ञासापदस्य 'तस्मात् ब्रह्मजिज्ञासितव्यम्' इत्युत्तरभाष्यानुसारेण विचारलक्षणां विवरणकारादिभिरन्वमानि तन्न जिज्ञासापदसूचितविचारस्य कर्तव्यतासम्भ दग्रिमभाष्ये जिज्ञासितव्यमित्यस्य विचार्यमित्यर्थकत्वेऽपि प्रकृते मुख्यार्थ स्यागे बीजाभावात्, अन्यथा जिज्ञासापदलक्ष्यस्य विचारस्याधिकार्यत्वसं

शाङ्करभाष्यम्

इति। तत्राऽथशब्द आनन्तर्यार्थः परिगृह्यते। नाधिकारार्थः। ब्रह्मजिज्ञासाया अनधिकार्यत्वात्। मङ्गलस्य

भामती

भूतसूदनतमार्थनिर्णयफलता विचारस्य पूजितता। तस्या मीमांसायाः शास्त्रम्। सा ह्यनेन शिष्यते शिष्येभ्यो यथावत्प्रतिपाद्यत इति। सूत्रं च बह्वर्थसूचनाद्भवति। यथाहुः—

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥ इति।

तदेवं सूत्रतात्पर्यं व्याख्याय तस्य प्रथमपदमथेति व्याचष्टे तत्राथशब्द आनन्तर्यार्थः परिगृह्यते। तेषु सूत्रपदेषु मध्ये योऽयमथशब्दः स आनन्तर्यार्थ इति योजना। नन्वधिकारार्थोऽप्यथशब्दो

प्रकाशः

ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति प्रकृतं भाष्यं न सामंजस्यं लभेत, जिज्ञासापदस्य स्वार्थपरत्वे तु तत्कार्यस्य विचारस्यापि प्रदर्शितयुक्त्या लाभात् वेन विचारे समन्वेतुं योग्यं भाष्यादिवाक्यं तद्विचारार्थकं यच्चेच्छायां समन्वेतुं योग्यं तदिच्छापरमिति भवत्यग्रिमं जिज्ञासितव्यमिति भाष्यवाक्यं विचारपरमिति सर्वमवदातम्।

विचारस्य न्यायकलापस्य। शास्त्रं हितप्रवर्त्तकमहितनिवर्त्तकं च तच्च विधिनिषेधवाक्यप्रचयरूपं नत्वेवं वेदान्त इतिकथमस्य शास्त्रत्वमित्याशंक्याह शास्त्रमिति मीमांसा हि अनेनग्रन्थेन विशिष्यते इत्यर्थः। भाष्ये आदिमं सूत्रमितियदुक्तं तत्राह सूत्रं चेति विषयप्रयोजनब्रह्मस्वरूपप्रमाणयुक्तिसाधनफलविचाराणां च प्रतिज्ञानाद्बह्वर्थसूचनम्। स्वल्पाक्षरपदानीति पृथगुपादानात् लघूनीत्यस्यासन्दिग्धार्थानीत्यर्थः। इतः पूर्वं कस्यचिदनुपादानात्तत्रेत्यत्र निर्धारणार्थत्वायोगमाशंक्याह तेषु सूत्रपदेष्विति अत्र निर्द्धारणार्थत्वमभिव्यञ्जयितुं मध्ये इत्युक्तम्। अत्राथशब्दस्याधिकारार्थकत्वम् 'आरम्भार्थकत्वं, वदन् प्रष्टव्यः किमिह इच्छाया ज्ञानस्य ब्रह्मणो वाऽऽरम्भः नाद्यः उत्तरत्र सर्वत्र सूत्रे विचारस्यैव क्रियमाणत्वेन इच्छाया अनधिकार्यत्वात् इच्छायां अधिकारेतु इच्छैवोत्तरैः सूत्रैः संपादनीया

## भामती

दृश्यते. यथा 'अथैष ज्योति' रिति वेदे, यथा वा लोके अथ शब्दानुशासनम्' अथ योगानुशासनम्' इति। तत्किमत्रार्थाधिकारार्थो न गृह्य इत्यत आह नाधिकारार्थः। कुतः? ब्रह्मजिज्ञासाया अनधिकार्यत्वात्। जिज्ञासा तावदिह सूत्रे ब्रह्मणश्च तत्प्रज्ञानाच्च शब्दतः प्रधानं प्रतीयते। न च यथा 'दण्डीप्रैषानन्वाह' इत्यत्राप्रधानमपि दण्डशब्दार्थो विवक्ष्यते एवमिहापि ब्रह्मतज्ज्ञाने इति युक्तम्. ब्रह्ममीमांसाशास्त्रप्रवृत्त्यङ्गसंशयप्रयोजनसूचनार्थत्वेन जिज्ञासाया एव विवक्षि

### प्रकाशः

भवेत् न विचारः क्रियते तु विचारोऽतो विचारस्य अधिकार्यत्वम् एवमपि तस्य सूचितत्वेन सूत्रावयवार्थत्वा भाव पदवृत्त्योपस्थापितस्यैवार्थस्य शाब्दबोधे भानात्, लक्षणयोपस्थि संभवेऽपि प्रदर्शितरीत्या लक्षणाया इहानावश्यकत्वात् न विचारेण सहाथशब्दा र्थान्वयः, नापि द्वितीयः ज्ञानस्य प्रमाणसाध्यत्वेन कृत्याऽसाध्यत्व अधिकारो हि आरम्भः सचाद्यकृतिविषयत्वरूपः। नापि तृतीयः ब्रह्मणो नि त्वेनारम्भासंभवात् तस्मान्नारम्भार्थकोऽयमथशब्द इत्येतत्सर्वं भाष्यतात्पर्यवि माक्षेपसमाधानाभ्यां बोधयति नन्वित्यादिना। अथैष ज्योतिरिति अत्र अथैषज्योतिरथैषविश्वज्योतिरथैष सर्वज्योतिरितिवाक्येन विधास्यमान संज्ञायोगिकर्मप्रारम्भार्थकोऽथशब्दः। परमप्रयोजनरूपत्वेनार्थतो ब्र प्राधान्येऽपि शब्दतस्तस्य ज्ञानेच्छाविशेषणतया प्रतीयमानत्वेन मुख्यवि त्वाभावान्न प्राधान्यमित्याह जिज्ञासेति। ननु चतुर्ष्वध्यायेषु सपरिकरब्रह्म प्रतिपादनमुखेन प्राप्तव्यब्रह्मस्वरूपस्यैव प्रतिपादनात् शब्दतो जिज्ञासा प्राधान्येऽपि तस्याः शास्त्रेणानारभ्यमाणत्वात् तत्प्रारम्भार्थको माभूदथश ब्रह्मज्ञानप्रारम्भार्थकोऽस्त्वित्याशंक्याह नचेति इष्टिषु प्रैषत्याध्वयुः क नुवचनस्य होता, तद्विकृतौ पशुयागे प्रैषानुवचनयोरुभयोरपि मैत्रावरुणः क भिधीयते 'मैत्रावरुणः प्रेष्यतिचान्वाह' इति वाक्येन, अनेन च मैत्रावरुणकर्तृ प्रैषानुवचनयोः प्राप्तत्वात्, दण्डी प्रैषानन्वाह इति वाक्यतस्तयोर्विध्यन्वयितं विवक्षा किंतु प्रैषानुवचनाङ्गे दण्डग्रहणे, तद्वदिहापि जिज्ञासाया अवि स्यादिति शंकाग्रन्थार्थः। परिहरति ब्रह्ममीमांसेति अस्तु तत्राविवक्षा

## भामती

क्षितत्वात् ।) तदविवक्षायां तदसूचनेन काकदन्तपरीक्षायामिव ब्रह्ममीमांसायां न प्रेक्षावन्तः प्रवर्तेरन् । नहि तदानीं ब्रह्म वा तज्ज्ञानं वाऽभिधेयप्रयोजने भवितुमर्हतः, अनध्यस्ताहंप्रत्ययविरोधेन वेदान्तानामेवंविधेऽर्थे प्रामाण्यानुपपत्तेः । कर्मप्रवृत्त्युपयोगितयोपचरितार्थानां वा जपोपयोगिनां वा 'हुमि'त्येवमादीनामविवक्षितार्थानामपि स्वाध्यायाध्ययनविध्यधीनग्रहणत्वस्य संभवात् । तस्मात्सन्देहप्रयोजनसूचनी जिज्ञासा इह पदतो वाक्यतश्च प्रधानं विवक्षितव्या । न च तस्या अधिकार्यत्वम्, अप्रस्तूयमानत्वात्, येन तत्समभिव्याहृतोऽथशब्दोऽधिकारार्थः स्यात् । जिज्ञासाविशेषणं तु ब्रह्म तज्ज्ञानमधिकार्यं भवेत् । न च तदप्यथशब्देन संबध्यते, प्राधान्याभावात् । न च जिज्ञासा मीमांसा, येन योगानुशासनवदधिक्रियेत । नान्तत्वं निपात्य 'माङ् मान' इत्यस्माद्वा 'मान पूजायामि'त्यस्माद्वा धातो 'र्मान्बधे'त्यादिनाऽनिच्छार्थे सति व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात् ।

## प्रकाशः

त्वविवक्षायाः कारणं नास्ति प्रत्युत तदविवक्षायां शास्त्रप्रवृत्त्यंगविषयप्रयोजने न सूचिते स्यातां तदसूचने च न कश्चित्पुमानिह प्रवर्तेतेत्यर्थः । अनध्यस्ताहंप्रत्ययविरोधेनेति अयमाशयः यदि जिज्ञासा न विवक्ष्येत तदा ब्रह्मज्ञानमस्तीति सूत्रार्थः सम्पद्येत एवं च न कश्चिदेतच्छास्त्रे प्रवर्तेत प्रयोजनालाभात् न्यायादिमतसिद्धात्मप्रत्ययविरोधेन वेदान्तप्रतिपाद्येऽर्थे प्रमाण्यग्रहासंभवात्, नहि वेदान्तवाक्यार्थविचारात्पूर्वं तर्कसमयेऽहम्प्रत्ययस्य भ्रान्तत्वं प्रत्येति कश्चिद्विपश्चित् तस्मादनध्यस्ताहंप्रत्यय विरोधात् वेदान्तार्थज्ञानस्यैवाप्रामाण्यं स्यात् तथासति न कोऽप्यस्मिन् शास्त्रे प्रवर्तेत अतः प्रवृत्त्यङ्गसंशयप्रयोजनसूचनी जिज्ञासाऽवश्यं विवक्षणीयेति भवति शास्त्रस्यार्थवत्वमिति । अप्रस्तूयमानत्वात् अनारभ्यमाणत्वात्, नहि प्रत्यधिकरणं जिज्ञासा संपाद्यते, किंतु विचारः । जिज्ञासाविशेषणं तु जिज्ञासापदघटकसन्नर्थे च्छाविशेषणं तु । ब्रह्मतज्ज्ञानमिति ब्रह्मज्ञानमिति प्रामाणिकः पाठः । जिज्ञासामीमांसयोरैक्यमाशंक्य निषेधति नचेति इतोऽपि जिज्ञासामीमांसयोर्भेद इत्याह

शाङ्करभाष्यम्

च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव ह्यथ-शब्दः श्रुत्या मङ्गलप्रयोजनो भवति। पूर्वप्रकृतापेक्षायाश्च

भामती

(ज्ञानेच्छावाचकत्वाज्जिज्ञासा पदस्य प्रवर्तिका हि मीमांसायां जिज्ञासा स्यात्। न च प्रवर्त्यप्रवर्तकयोरैक्यम् एकत्वे तदभावानुपपत्तेः। न च स्वार्थपरत्वस्योपपत्तौ सत्यामन्यार्थपरत्वकल्पना युक्ता, अतिप्रसङ्गात्। तस्मात्सुष्ठूक्तं जिज्ञासाया अनधिकार्यत्वादिति। (अथ मङ्गलार्थोऽथशब्दः कस्मान्न भवति? तथा च मङ्गलहेतुत्वात्प्रत्यहं ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः संपद्यत इत्यत आह "मङ्गलस्य च वाक्यार्थे समन्वयाभावात्"। पदार्थ एव हि वाक्यार्थे समन्वीयते स च वाच्यो वा लक्ष्यो वा न चेह मङ्गलमथशब्दस्य वाच्यं वा लक्ष्यं वा, किन्तु मृदङ्गशङ्खध्वनिवदथशब्दश्रवणमात्रकार्यम्। न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थः। तत्किमिदानीं मङ्गलार्थोऽथशब्दस्तेषु तेषु न प्रयोक्तव्यः। तथा च

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥

इति स्मृतिव्याकोप इत्यत आह "अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति"। अर्थान्तरेषु आनन्त-

प्रकाशः

प्रवर्तिका हीति नन्वस्तु तयोर्भेदः जिज्ञासापदस्य मीमांसालक्षणायां तु अधिकारार्थं उपपद्यतेतरामित्याशंक्यां निराकरोति नचेति अधिगतविषयप्रयोजनस्य पुंसः समुत्कण्ठितस्य स्वयमेव मीमांसायां प्रवृत्त्याऽन्वयानुपपत्त्याद्यभावेन लक्षणाया अनावश्यकत्वादिति भावः। नियामकाभावेऽपि लक्षणोपगमे विवक्षितस्वार्थकेऽपि पदे लक्षणा प्रसज्येतेत्याह अतिप्रसङ्गादिति। अथाधिकारे इत्यत्राथशब्दस्यानान्तर्यमर्थः तद्धि पूर्वप्रकृतादथशब्दादानन्तर्यमुत व्यवहितादान-

## भामती

र्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या श्रवणमात्रेण वेणुवीणाध्वनिवद् मङ्गलं कुर्वन्मङ्गलप्रयोजनो भवति, अन्यार्थमानीयमानोदकुम्भदर्शनवत् । तेन न स्मृतिव्याकोपः । न चेहानन्तर्यार्थस्य सतो न श्रवणमात्रेण मङ्गलार्थतेत्यर्थः । स्यादेतत् पूर्वप्रकृतापेक्षोऽथशब्दो भविष्यति विनैवानन्तर्यार्थत्वम्, तद्यथेममेवाथशब्दं प्रकृत्य विमृश्यते—किमयमथशब्द आनन्तर्येऽधिकारे—इति, अत्र विमर्शवाक्येऽथशब्दः पूर्वप्रकृतमथशब्दमपेक्ष्य प्रथमपक्षोपन्यासपूर्वकं पक्षान्तरोपन्यासे, न चास्यानन्तर्यमर्थः, पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवायात्, न च प्रकृतानपेक्षा, तदनपेक्षस्य तद्विषयत्वाभावेनासमानविषयतया विकल्पानुपपत्तेः, नहि जातु भवति किं नित्य आत्मा, अथानित्या बुद्धिरिति, तस्मादानन्तर्यं विना पूर्वप्रकृतापेक्ष इहाथशब्दः कस्मान्न भवतीत्यत आह—"पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्" अस्यार्थः न वयमानन्तर्यार्थतां

### प्रकाशः

न्तर्यपक्षात् तत्र नाद्य इत्याह पूर्वप्रकृतस्येति किमयमथशब्द इति विमर्शवाक्यस्थाथशब्दस्य प्रथमपक्षोपन्यासेन आनन्तर्यपक्षोपन्यासेन । व्यवायात् व्यवधानात् । द्वितीये किमयमथशब्द इत्यत्र पूर्वं प्रकृतो योऽथशब्दस्तमपेक्षते अथाधिकारेऽन्यत्र्योऽथशब्दः उत न, यद्यपेक्षते तदाऽथशब्दस्यानन्तर्यार्थानन्तरमधिकारोऽर्थ इति वाक्यार्थः सम्पद्येत सच न युक्तः एकस्मिन्नर्थे निश्चिते पुनन्यस्यार्थस्यान्याय्यत्वात्, यदि प्रकृतमथशब्दं नापेक्षते तदाऽप्याह नच प्रकृतेति । एकधर्मिकमेव पक्षद्वयं विकल्प इत्याख्यायते इत्याह तदनपेक्षस्येति । पूर्वपक्षभाष्याभिप्रायमुपसंहरति—तस्मादिति अयमत्र निष्कर्षः यद्धर्मिणि किंचिदर्थसम्पत्त्यनन्तरं तद्धर्मिकस्यैव किंचित्प्रकारकज्ञानस्य जनकं वाक्यमथशब्दघटितं यत्र प्रयुज्यते तत्रत्योऽथशब्दः पूर्वप्रकृतापेक्षार्थको भवति अस्ति च प्रकृते तथा पुरुषे हि साधनचतुष्टयसम्पत्त्यनन्तरं तस्मिन् जिज्ञासाबोधकमथशब्दघटितं वाक्यं प्रयुज्यतेऽतोऽस्तु पूर्वप्रकृतापेक्षार्थकोऽथ शब्द इति । फलत आनन्तर्याव्यतिरेकादिति भाष्यं न पूर्वप्रकृतापेक्षया आनन्तर्यरूपतामभिधातुं प्रववृते पूर्वप्रकृतापेक्षास्थले विकल्पः प्रतिभासते आनन्तर्यं तु नेति । विकल्पप्रतिभासाप्रतिभासाभ्यामुभयोर्भेदात् किंतु पक्षद्वयेऽप्यत्र जिज्ञासाहेतुसाध-

भामती

व्यसनितया रोचयामहे किन्तु ब्रम्हजिज्ञासाहेतुभूतपूर्वप्रकृतमिद्धये। सा च पूर्वप्रकृतार्थापेक्षत्वेऽप्यथशब्दस्य सिध्यतीति व्यर्थ आनन्तर्यार्थत्वावधारणाग्रहोऽस्माकमिति । तदिदमुक्तं "फलत" इति । परमार्थतस्तु कल्पान्तरोपन्यासे पूर्वप्रकृतापेक्षा, न चेह कल्पान्तरोपन्यास इति परिशेष्यादानन्तर्यार्थ एवेति युक्तम् । भवत्वानन्तर्यार्थः किमेवं सतीत्यत आह—सति चानन्तर्यार्थत्व इति, न तावद्यस्य कस्यचिदत्रानन्तर्यमिति वक्तव्यं, तस्याभिधानमन्तरेणापि प्राप्तत्वात् । अवश्यं हि पुरुषः किंचित्कृत्वा किंचित्करोति । न चानन्तर्यमात्रस्य दृष्टमदृष्टं वा प्रयोजनं पश्यामः । तस्मात्तस्यात्रानन्तर्यं वक्तव्यं यद्विना ब्रह्मजिज्ञासा न भवति, यस्मिन् सति तु भवन्ती भवत्येव, तदिदमुक्तम् "यत्पूर्ववृत्तं नियमेनापेक्षत" इति । स्यादेतत् । धर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि योग्यत्वात्स्वाध्यायानन्तर्यं, धर्मवद्ब्रह्मणोऽप्याम्नायैकप्रमाणगम्यत्वात्, तस्य चागृहीतस्य स्वविषये विज्ञानाजननाद्, ग्रहणस्य च स्वाध्यायोऽध्येतव्य इत्यध्ययनेनैव नियतत्वात्, तस्माद् वेदाध्ययनानन्तर्यमेव ब्रम्हजिज्ञासाया अप्यथशब्दार्थ इत्यत आहस्वाध्यायानन्तर्यं तु समानं धर्मब्रम्हजिज्ञासयोः। अत्र च स्वाध्यायेन विषयेण तद्विषयमध्ययनं लक्षयति, तथा चा'थातो धर्मजिज्ञासे'त्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम्।

प्रकाशः

नचतुष्टयरूपप्रकृतसिद्धिरस्ति प्रयोजनमेकमेवातः फलद्वारेणाव्यतिरेक इत्यर्थं स्फोरयति अस्यार्थ इति । सा च आनन्तर्यार्थता च । ननु पक्षद्वयेऽपि फलैक्ये किमित्यानन्तर्यपक्षे आग्रह इत्यतो भाष्याशयमाविः करोति परमार्थतस्त्विति अदृष्टादिकमन्यदप्यपेक्ष्य भवन्ती जिज्ञासा यस्मिन् सति भवत्येवेत्यर्थः स्वाध्यायाध्ययनान्तर्यस्य धर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि भवितुं योग्यत्वात्तदानन्तर्यमत्र वक्तुं युक्तमिति शकते स्यादेतदिति। योग्यत्वे हेतुमाह ब्रह्मणोऽपीति स्वाध्यायपदवाच्यस्य वेदराशेर्नित्यत्वात् तदानन्तर्यं न विवक्षणार्हमित्याह अत्र चेति । अथातो धर्मजिज्ञासेति सूत्रे

शाङ्करभाष्यम्

फलत आनन्तर्याऽव्यतिरेकात् । सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षत एवं ब्रह्मजिज्ञासापि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यन्तु समानम् नन्विह कर्मावबोधानन्तर्यं विशेषः न

भामती

धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद्ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थः ।

चोदयति—नन्विह कर्मावबोधानन्तर्यं विशेषः, धर्मजिज्ञासातो ब्रह्मजिज्ञासायाः । अस्यार्थः—'विविदिषन्ति यज्ञेन' इति तृतीयाश्रुत्या यज्ञादीनामङ्गत्वेन ब्रह्मज्ञाने विनियोगात्, ज्ञानस्यैव कर्मतयेच्छां प्रति प्राधान्यात्, प्रधानसंबन्धाच्चाप्रधानानां पदार्थान्तराणाम् । तत्रापि च न वाक्यार्थज्ञानोत्पत्तावङ्गभावो यज्ञादीनाम्, वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तेः । नच वाक्यं सहकारितया कर्माण्यपेक्षत इति—युक्तम् । अकृतकर्मणामपि विदितपदतदर्थसंगतीनां समधिगतशाब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासंनिधियोग्यतानुसन्धानवतामप्रत्यूहं वाक्यार्थप्रत्ययोत्पत्तेः । अनुत्पत्तौ वा विधिनिषेधवाक्यार्थप्रत्ययाभावेन

प्रकाशः

धर्मपदं वेदार्थमात्रोपलक्षकमन्यथा निषेधवाक्यार्थविचारस्यासङ्ग्राह्यत्वापत्तिः सति चैवं तस्मादेव सूत्राद्वेदार्थविचारमात्रस्य वेदाध्ययनानन्तर्यबोधनात् जैमिनिना मुनिना कर्मविरोधितया परित्यक्ते वेदार्थब्रह्मविचारेऽपि वेदाध्ययनानन्तर्ये निश्चिते एतत्सूत्रणं बादरायणस्य व्यर्थतामाप्नुयादित्याह—तथा चेति । उपदेशसाम्यादिति धर्मब्रह्मणोरिति शेषः । पूर्वपक्षभाष्यभावमाविर्भावयति—अस्यार्थ इति । प्राधान्यादिति । ज्ञाने एव यज्ञादीनामुपयोग इत्यतिदूरतरेण सम्बन्धः । ननु प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायेन इच्छायाः प्रत्ययार्थत्वेन प्राधान्यात् तस्यामेव यज्ञादीनां विनियोगो युक्त इति चेन्न, उक्तसामान्यन्यायमपेक्ष्य इच्छेष्यमाणबोधकपदयोः समभिव्याहारे इष्यमाणं प्रधानमिति स्वर्गकामपदादिषु क्लृप्तस्य विशेषन्यायस्य बलवत्त्वात् इच्छायामन्वयायोगात् । 'स्वर्गकामो यजेत्' इत्यादौ हि इच्छाबोधककामपदसत्त्वेऽपि 'यागेन स्वर्गं भावयेत्

भामती

तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः । तद्बोधतस्तु तदर्थानुष्ठानपरिवर्जने परस्पराश्रयः, तस्मिन् सति तदर्थानुष्ठानपरिवर्जनम्, ततश्च तद्बोध इति नव–वेदान्तवाक्यानामेव स्वार्थप्रत्यायने कर्मापेक्षा, न वाक्यान्तराणामिति साम्प्रतम्; विशेषहेतोरभावात् । ननु तत्त्वमसि' तिवाक्यात् त्वंपदार्थस्य कर्तृभोक्तृरूपस्य जीवात्मनो नित्यशुद्धबुद्धोदासीनस्वभावेन तत्पदार्थेन परमात्मनैक्यमशक्यं द्रागित्येव प्रतिपत्तुम्, आपाततोऽशुद्धसत्त्वैर्योग्यता विरहनिश्चयात् । यज्ञतपोदानतनूकृतान्तर्मलास्तु विशुद्धसत्त्वाः श्रद्दधाना योग्यतावगमपुरःसरं तादात्म्यमवगमिष्यन्तीति–चेत्, तत्किमिदानीं प्रमाणकारणं योग्यतावधारणमप्रमाणात्कर्मणोवक्तुमध्यवसितोऽसि ? प्रत्यक्षाद्यतिरिक्तं वा कर्मापि प्रामाणम् । वेदान्तविरुद्धतन्मूलन्यायबलेन योग्यतावधारणे, कृतं कर्मभिः । तस्मात् 'तत्त्वमसि' इत्यादेः श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा तन्मूलयाचोपपत्त्या व्यवस्थाप्य

प्रकाशः

इत्यादिरेव भवति बोधो न तु स्वर्गेच्छां भावयेदिति । ब्रह्मोपासनायाः कर्माणि सहकारीणीत्यतस्तत्कालेऽपि कर्माण्यनुष्ठेयानीति ज्ञानकर्मसमुच्चयं वदता कर्मज्ञानं तदनुष्ठानासंभवमभिदधता कर्मज्ञानानन्तर्यमथशब्दार्थमुरीकुर्वता कर्मणामुपासनाजन्यसाक्षात्कारे उपयोगं स्वीचिकीर्षताऽभिधीयते–तत्रापीति । तदर्थानुष्ठानपरिवर्जनमिति । अत्र द्वन्द्वैकवद्भावः । परस्पराश्रय इति । ज्ञप्तौ हि तस्य दोषत्वमनिवार्यमेव । तस्मिन् सति तद्बोधे सति । विशेष हेतुं साधयति–नन्विति । इत्येव प्रतिपत्तुं द्रागशक्यमित्यन्वयः । ननु योग्यताऽवधारणमेव कर्मणः फलमित्याशङ्क्य योग्यताऽवधारणे अप्रमाणं प्रमाणं वा कर्म अभिमतम् ? नाद्यः, कर्मणोऽप्रमाणत्वेन ततः प्रमाकार्यानुत्पत्तेरित्याह तत्किमिति । प्रमाणकारणम् प्रमाणं कारणं यस्य तत्तथा । न द्वितीयः, कर्मणः प्रमाणत्वस्य कैरपि तीर्थकरैरनभ्युपगमादित्याह–प्रत्यक्षादीतिपरिशेषे साक्षात्कारे एवोपयोग इत्येतदुपसंहरति पूर्वपक्षी–तस्मादिति । श्रवणमननयोः स्वरूपमाह—श्रुतमयेनेति । श्रुतिजन्येन, तथा च तत्त्वमस्यादिश्रुतिजन्यं जीवपरमात्मनोरभेदविषयकं ज्ञानं श्रवणमिति लभ्यते । तन्मूलयेति । 'तत्त्वमस्यादिश्रुतिमूलकयुक्त्या जायमानं ज्ञानं मननम्' । दीर्घकालनैरन्तर्यवान् समानाकार

भामती

तदुपासनायां भावनापराभिधानायां दीर्घकालनैरन्तर्यवत्यां ब्रह्मसाक्षात्कारफलायां यज्ञादीनामुपयोगः । यथाहुः—'स तु दीर्घकालनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिः' इति । ब्रह्मचर्यतपःश्रद्धायज्ञादयश्च सत्कारः । अतएव श्रुतिः—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति । विज्ञाय तर्कोपकरणेन शब्देन प्रज्ञां भावनां कुर्वीतेत्यर्थः । अत्र च यज्ञादीनां श्रेयःपारपन्थिकल्मषनिबर्हणद्वारेणोपयोग इति केचित् । पुरुषसंस्कारद्वारेणेत्यन्ये । यज्ञादिसंस्कृतो हि पुरुष आदरनैरन्तर्यदीर्घकालैरासेवमानो ब्रह्मभावनामनाद्यविद्यावासनां समूलकाषं कषति । ततोऽस्य प्रत्यगात्मा सुप्रसन्नः केवलो विशदीभवति । अत एव स्मृतिः—

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' ।

'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः' इति च । अपरे तु ऋणत्रयापाकरणे ब्रह्मज्ञानोपयोगं कर्मणामाहुः । अस्ति हि स्मृतिः—

प्रकाशः

वृत्तिप्रवाहो निदिध्यासनमिति लभ्यते । यद्यप्येतत्पूर्वपक्षग्रन्थान्तर्गतं तथाप्यप्रतिषिद्धं परमतमनुमतं भवतीति न्यायात् ज्ञाने कर्मापेक्षाया एव निराकरणेन एतेषां श्रवणादिरूपत्वं वाचस्पतिमिश्राणामप्यनुमतमिति प्रत्येतव्यम् । ननु ब्रह्मसाक्षात्कारस्य निदिध्यासनफलत्वेनोपासनाफलत्वमसङ्गतमत आह—भावनापराभिधायाम् निदिध्यासनरूपायाम् । यथाऽऽहुः योगसूत्रकाराः । अत्र सूत्रे स इत्यनेन चित्तवृत्तिनिरोधः परामृश्यते 'दृढभूमिः, तत्त्वसाक्षात्कारे दृढ उपायः । धीरः फलाभिसन्धिरहितेन कर्मणा नितान्तनिर्मलीकृतान्तःकरणः । शब्देन विज्ञायेत्यन्वयः । कर्मणामुपयोगमभिधाय तत्र मतभेदं दर्शयति—अत्र चेति । श्रेयः परिपन्थीति तत्त्वसाक्षात्कारविरोधीत्यर्थः । निबर्हणं निवृत्तिः । पुरुषसंस्कारेति साक्षात्कारजननयोग्यताऽऽधानलक्षणसंस्कारेत्यर्थः । ब्रह्मभावनाम् सेवमानः इत्यन्वयः । महायज्ञैः ब्रह्मयज्ञादिभिः पञ्चभिः, यज्ञैः ज्योतिष्टोमादिभिः ब्रह्मभावपरिस्फूर्तियोग्यो देहः क्रियत इत्यर्थः । ऋणत्रयम्, देवर्षिपितृसम्बन्धि, तद्धि ब्रह्मज्ञानप्रतिबन्धकम् । कर्मणां ब्रह्मभावनाङ्गत्वमभिदधतां पूर्वपक्षिणां मध्ये ये नित्यानामेव कर्मणां भावनाङ्गत्वमाचक्षिरे तेष्वपि परस्परं विगानात्तत्तन्मतभेदो दर्शितः । सम्प्रति स्वर्गादिफलाय विहितानां सर्वेषां काम्यानामपि कर्मणां ब्रह्मभावनाङ्गत्वमुपगच्छतां

## भामती

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्,इति ॥

अन्ये तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतिभ्यस्तत्तत्फलाय चोदितानामपि कर्मणां संयोगपृथक्त्वेन ब्रह्मभावनां प्रत्यङ्गभावमाचक्षते, क्रत्वर्थस्यैव खादिरत्वस्य वीर्यार्थताम्, 'एकस्य तूभयार्थत्वे संयोगपृथक्त्वम्' इति न्यायात् । अत एव पारमर्षं सूत्रम्- 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति । यज्ञतपोदानादि सर्वं तदपेक्षा ब्रह्मभावनेत्यर्थः । तस्माद्यदि श्रुत्यादयः प्रमाणं यदि वा पारमर्षं सूत्रं सर्वथा यज्ञादिकर्मसमुचिता ब्रह्मोपासना विशेषणत्रयवती अनाद्यविद्याद्वासनासमुच्छेदक्रमेण ब्रह्मसाक्षात्काराय मोक्षापरनाम्ने कल्पत इति तदर्थं कर्माण्यनुष्ठेयानि । नचैतानि दृष्टादृष्टसामवायिकारादुपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्परविभिन्नकर्मस्वरूप-तदधिकारिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुम् । न च धर्ममीमांसां

## प्रकाशः

मतं दर्शयति-अन्ये त्विति । एकस्य त्विति एकस्य वस्तुन उभयत्वे अनेकसम्बन्धे संयोग उभयसम्बन्धबोधकवाक्य तस्य पृथक्त्वं (भेदः) अपेक्ष्यते इति शेषः । तत्तत्फलाय विहितानामपि कर्मणां फलान्तरसम्बन्धबोधकं वाक्यान्तरं चेत्तदोभयमपि फलमवगन्तव्यमितितात्पर्यार्थः । यथा खादिरो यूपो भवति खादिरं वीर्यकामस्येत्यादौ क्रत्वर्थतया विहितं यूपनिष्ठखादिरत्वं वीर्यफलकमपि भवति, यथा वा 'दध्ना जुहोति, दध्नेन्द्रिय कामस्य जुहुयात्, इत्यत्र होमाङ्गत्वेन विधीयमानस्य दध्नः इन्द्रियप्राबल्यार्थत्वमपि भवति तथा स्वर्गादिफलोद्देशेन विहितान्यपि कर्माणि ब्रह्मोपासनाङ्गानि भवन्तीति । सर्वम् सूत्रस्य सर्वं पदार्थः । पूर्वपक्षी स्वमतमुपसंहरति-तस्मादिति । विशेषणत्रयवती आदरनैरन्तर्यदीर्घकालत्ववती । कर्मसापेक्षायां ब्रह्मभावनायां कर्मावबोधापेक्षामुपपादयन् कर्मावबोधानन्तर्यम्इति भाष्यं घटयति न चेति नहीत्यर्थः दृष्टेत्यादि । दृष्ट उपकारस्तुषविमोकादिरदृष्ट उपकारः प्रोक्षणादिः प्रयाजादि स चासौ सामवायिकः क्रतुस्वरूपसमवायी क्रतुस्वरूपानुप्रविष्टः, आरादुपकारः परम्परयोपकारः तस्य हेतुभूतानि औपदेशिकानि प्रत्यक्षविहितानि, अ

## शाङ्करभाष्यम्

**धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः**

## भामती

सापरिशीलनं विना तत्परिज्ञानम् । तस्मात्साधूक्तं 'कर्मावबोधानन्तर्यं विशेषः, इति 'कर्मावबोधेन हि कर्मानुष्ठानसाहित्यं भवति ब्रह्मोपासनाया इत्यर्थः । तदेतन्निराकरोति–न । कुतः ? **कर्मावबोधात् प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः** इदमत्राकूतम्—ब्रह्मोपासनया भावनापराभिधानया कर्माण्यपेक्ष्यन्त इत्युक्तम्, तत्र ब्रूमः—क पुनरस्याः कर्मापेक्षा ? किं कार्ये यथाऽऽग्नेयादीनां परमापूर्वे चरमभाविफलानुकूले जनयितव्ये समिदाद्यपेक्षा । स्वरूपे वा यथा तेषामेव द्रवत्पुरोडाशादिद्रव्याग्निदेवताद्यपेक्षा । न तावत् कार्ये, तस्य विकल्पासहत्वात् । तथाहि–ब्रह्मोपासनाया ब्रह्मस्वरूपसाक्षात्कारः कार्यमभ्युपेयः, स चोत्पाद्यो वा स्याद्, यथा संयवनस्य पिण्डः । विकार्यो वा, यथाऽवघातस्य व्रीहयः । संस्कार्यो वा, यथा प्रोक्षणस्योलूखलादयः । प्राप्यो वा, यथा दोहनस्य पयः ।

## प्रकाशः

देशिकानि प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशतः प्राप्तानि क्रमपर्यन्ताङ्गानि क्रमवन्त्यङ्गानि तेषां ग्रामः समूहः तत्सहितं यत्परस्परभिन्नं कर्मस्वरूपं तदपेक्षितवाधिकारिविशेषश्च तयोः परिज्ञानं विना न शक्यानि कर्माण्यनुष्ठातुमित्यभिसम्बन्धः । **अस्याः** उपासनायाः । **भाविफलानुकूले** भाविफलं यत्स्वर्गादिकं तज्जनके । **समिदाद्यपेक्षा** 'समिधो यजति इडो यजती'त्यादिवाक्यविहितप्रयाजाद्यङ्गापेक्षा । यागस्य रूपद्वयं द्रव्यं देवता च तदिदमाह–**यथेति** । किमिदं कर्मकार्यत्वं कर्मोत्पाद्यत्वं वा कर्मविकार्यत्वं वा कर्मसंस्कार्यत्वं वा कर्मप्राप्यत्वं वेति विकल्प्य क्रमेण श्रौतोदाहरणप्रदर्शनपूर्वकं प्रकृतासम्भवं दर्शयति–**न तावत्कार्ये** इत्यादिना । **संयवनस्येति** 'पिण्डं संयौती'ति वाक्यविहितमिश्रणस्य पिण्ड उत्पाद्यः । **अवघातस्येति** 'व्रीहीनवहन्ती'ति वाक्यविहितस्यावघातस्य व्रीहयो विकार्याः । **प्रोक्षणस्येति** 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती'ति विहितप्रोक्षणस्य उलूखलः संस्कार्यः । **दोहनस्येति** 'गां दोग्धी'ति वाक्यविहितदोहनस्य प्राप्यं पयः । ब्रह्मसाक्षात्कारो ब्रह्मस्वरूपस्तद्भिन्नो वाऽत्र विवक्षित इति विकल्प्याद्यं

भामती

न तावदुत्पाद्यः, न खलु घटादिसाक्षात्कर इव जडस्वभावेभ्यो घटादिभ्यो भिन्न इन्द्रियाद्याधेयो ब्रह्मसाक्षात्कारो भावनाधेयः संभवति, ब्रह्मणोऽपराधीनप्रकाशतया तत्साक्षात्कारस्य तत्स्वाभाव्येन नित्यतयोत्पाद्यत्वानुपपत्तेः। ततो भिन्नस्य वा भावनाधेयस्य साक्षात्कारस्य प्रतिभाप्रत्ययवत्संशयाक्रान्ततया प्रामाण्यायोगात् तद्विधस्य तत्सामग्रीकस्यैव बहुलं व्यभिचारोपलब्धेः। न खल्वनुमानविबुद्धं वह्निं भावयतः शीतातुरस्य शिशिरभरमन्थरतरकायकाण्डस्य स्फुरज्ज्वालाजटिलानलसाक्षात्कारः प्रमाणान्तरेण संवाद्यते, विसंवादस्य बहुलमुपलम्भात्, तस्मात्प्रमाणिकसाक्षात्कारलक्षणकार्याभावान्नोपासनाया उत्पाद्ये कर्मापेक्षा। नच कूटस्थनित्यस्य सर्वव्यापिनो ब्रह्मण उपासनातो विकारसंस्कारप्राप्तयः संभवन्ति।

स्यादेतत्। मा भूत्ब्रह्मसाक्षात्कार उत्पाद्यादिरूप उपासनायाः, संस्कार्यस्तु अनिर्वचनीयानाद्यविद्याद्वयपिधानापनयनेन भविष्यति,

प्रकाशः

दूषयितुमाह—नखल्विति। अनुपपत्तेरिति। तथा च न तत्र कर्मापेक्षितमिति भावः द्वितीयं निरस्यति—ततो भिन्नस्येति। ब्रह्म हि नेन्द्रियजन्यग्रहणगोचरः शब्दश्च परोक्षामेव प्रमां जनयति न साक्षात्कारं येन तत्र कर्मापेक्षा घटेत अतः केवलं भावना सहकृतेन मनसैव कामिनीसाक्षात्कार इव ब्रह्मसाक्षात्कारो वाच्यः, स च व्यभिचरति प्रमात्मकतामतो न ततोऽभिमतसिद्धिरिति कृतं तत्र कर्मसाहित्येनेत्यर्थः। प्रतिभाप्रत्ययेति यत्किञ्चिदेतदिति सामान्याकारको विशेषानवगाही प्रत्ययः प्रतिभाप्रत्यय इत्युच्यते। व्यभिचारमेव स्फुटयति—न खल्विति। अनुमानविबुद्धम् अनुमित्या विषयीकृतम्। मन्थरः स्तिमितः। स्फुरन्त्यो ज्वाला जटाकारा अस्य सन्तीति स स्फुरज्ज्वालाजटिलः। उत्पाद्यत्वपक्षं विघटय्यावशिष्टं पक्षत्रयं विघटयति—नच कूटस्थनित्यस्येति। अत्र कूटस्थनित्यत्वोक्त्या पूर्वस्वरूपापायलक्षणो विकारोऽभिनवगुणोत्पत्तिरूपः संस्कारश्च निवारितः सर्वव्यापित्वोक्त्या च प्राप्तिर्निवारिता एवं च न कर्मापेक्षा घटते। कूटस्थनित्यत्वाविरुद्धं कर्मसापेक्षमविद्यारूपदोषापनयरूपं संस्कारमुपासनायाः कार्यमुपेत्य समुच्चयवादी पुनः प्रत्यवतिष्ठते—स्यादेतदिति। अनाद्यविद्याद्वयेति एका-

## भामती

प्रतिसीरापिहिता नर्तकीव प्रतिसीरापनयद्वारा रङ्गव्यापृतेन । तत्र च कर्मणामुपयोगः । एतावांस्तु विशेषः—प्रतिसीरापनये पारिषदानां नर्तकीविषयसाक्षात्कारो भवति, इह तु अविद्यापिधानापनयमात्रमेव नापरमुत्पाद्यमस्ति, ब्रह्मसाक्षात्कारस्य ब्रह्मस्वभावस्य नित्यत्वेनानुत्पाद्यत्वात् ।

अत्रोच्यते— का पुनरियं ब्रह्मोपासना ? किं शाब्दज्ञानमात्रसन्ततिः ? आहो निर्विचिकित्सशाब्दज्ञानसन्ततिः ? । यदि शाब्दज्ञानमात्रसन्ततिः, किमियमभ्यस्यमानाप्यविद्यां समुच्छेत्तुमर्हति । तत्त्वविनिश्चयस्तदभ्यासो वा सवासनं विपर्यासमुन्मूलयेत्, न संशयाभ्यासः, सामान्यमात्रदर्शनाभ्यासो वा । नहि स्थाणुर्वा पुरुषो वेति वा, आरोहपरिणाहवद् द्रव्यमिति वा शतशोऽपि ज्ञानमभ्यस्यमानं पुरुष एवेति निश्चयाय पर्याप्तमृते विशेषदर्शनात् । नन्वुक्तं—श्रुतमयेन ज्ञानेन जीवात्मनः परमात्मभावं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य इति । तस्मान्निर्विचिकित्सशाब्दज्ञानसन्ततिरूपोपासना कर्मसहकारिण्यविद्याद्वयोच्छेदहेतुः । न चासावनुत्पादितब्रह्मानुभवा तदुच्छेदाय पर्याप्ता । साक्षात्काररूपो

## प्रकाशः

मूलाविद्याऽपरा पूर्वपूर्वसंस्कारः, अनादित्वं संस्कारे प्रवाहानादित्वम् । प्रतिसीरा तिरस्करणी सरकीत्यस्मद्देशे मिथिलायां प्रसिद्धा । रङ्गव्यापृतः नटः । तत्र अविद्याद्वयविधानापगमे । स्यादेतदित्यादिनोक्तं पूर्वपक्षमपाक्षिपति-अत्रोच्यत इति । आपातज्ञानरूपस्य अप्रमाण्यशंकाकलंकपंकप्रक्षालनरहितस्य शाब्दज्ञानस्य, निर्धूताखिलाप्रामाण्यशंकाकलंकपंकस्य वा शाब्दज्ञानस्याभ्यास इति विकल्पयति-किं शाब्दज्ञानमात्रेति । उक्तेऽर्थे हेतुमाह—नहीति । आरोह उच्छ्रयः विस्तारपरिमाणं परिणाहः । विशेषदर्शनादिति तथा चैतादृश्या उपासनाया निष्प्रयोजनाया न कर्मापेक्षा युक्तेति भावः । द्वितीयमाशंकते—नन्विति । असौ उपासना । पर्याप्तेति तस्माद्ब्रह्मसाक्षात्कारोऽवश्यमपेक्षणीयः तत्र न कर्मणामपेक्षा न ह्यन्तःकरणकरणके प्रत्यक्षे भावनाप्रभवे कर्मापेक्षा क्वचिदपि

## भामती

हि विपर्यासः साक्षात्काररूपेणैव तत्त्वज्ञानेनोच्छिद्यते न तु परोक्षावभासेन, दिङ्मोहालातचक्रचलद्वृक्षमरुमरीचिसलिलादिविभ्रमेष्वपरोक्षावभासिषु अपरोक्षावभासिभिरेव दिगादितत्त्वप्रत्ययैर्निवृत्तिदर्शनात्,

## प्रकाशः

दृष्टचरीतिभावः। साक्षात्काररूपो हीति। अनेन जीवे कर्तृत्वाद्यध्यासः स्वविरुद्धं यदकर्त्रभोक्तृब्रह्म तत्साक्षात्कारनिवर्त्यः साक्षात्कारविपर्यासत्वादित्यनुमानं सूचितम्। ननूक्तानुमानमप्रयोजनकमपरोक्षा अपि हि रज्जुसर्पादिभ्रमाः आप्तवाक्यजन्यपरोक्षज्ञानैर्निवर्तन्तेऽत आह-दिङ्मोहेति अयमाशयः रज्जुसर्पादिभ्रमा निरुपाधिकाः सन्तो वचनमात्रेणापि निवर्त्तितुं क्षमन्ते कर्तृत्वादिविभ्रमास्तु अन्तःकरणमुपाधिं कृत्वा जायमानाः सोपाधिकाः न वचनमात्रेण निवर्त्तितुमुत्सहन्ते दिङ्मोहादिवत् तस्मादुपदर्शितेऽनुमाने सोपाधिकसाक्षात्कारविपर्यासत्वं हेतुरतो न व्यभिचारः दिङ्मोहेऽपरिशीलितप्रदेशविशेषप्राप्तिरुपाधिः चलन्नौकादिस्थितस्य पुंसो या वृक्षादौ चलनप्रतीतिस्तत्र नौकादिगतिरुपाधिरेवमन्यत्राप्यूहनीयम्। नान्यथेति। एवं चावश्यकेऽन्तःकरणपरिणामरूपे ब्रह्मसाक्षात्कारे मन एव करणम्, तत्र न कर्मापेक्षेति न समुच्चयवादः प्रामाणिकतामर्हतीति भावः।

## विकासः

नान्यथेति। अत्रेदं बोध्यम्- श्रवणजन्ये प्राथमिके ब्रह्मज्ञाने शाब्दे शब्दस्य करणत्वमतो ब्रह्मज्ञाने क्लृप्तकरणभावस्य तस्यैवाविद्यानिवर्त्तके चरमे ब्रह्मसाक्षात्कारेऽपि करणत्वमुपगन्तुमुचितम् न मनसः, दृश्यते चान्यत्रापि दशमस्त्वमसीत्यादौ शब्दस्यापरोक्षज्ञानजनकत्वं मनसस्तु कर्तृतया न करणत्वं क्वचिदपि दृष्टचरं येन ब्रह्मज्ञानेऽपि तस्य करणत्वं संभाव्येत 'यन्मनसा न मनुते' इत्यादिश्रुतिश्च विशेषतो ब्रह्मज्ञाने करणत्वं प्रतिषेधति, अपरोक्षत्वं चार्थनिष्ठं ज्ञाननिष्ठं च तत्राभिव्यक्तचैतन्याभिन्नत्वमर्थनिष्ठम्, भवति हि घटाद्याकारवृत्त्या घटाद्यवच्छिन्नचैतन्येऽभिव्यक्ते तदभिन्नत्वस्याघटस्तस्य सत्त्वात् घटः प्रत्यक्ष इति व्यवहारः। ज्ञानस्य चापरोक्ष्यमपरोक्षार्थव्यवहारानुकूलज्ञानत्वम्, तच्च घटादिज्ञाने चाक्षुषादिवृत्त्यभिव्यक्ते स्वाभाविकम्। चाक्षुषादिवृत्तिषु च चैतन्याभिव्यञ्जकत्वेनौपाधिकम्। सुखादिप्रकाशरूपे साक्षिचैतन्येऽपि अपरोक्षार्थव्यवहारानुकूलज्ञानत्वमस्त्येवेति सर्वत्रैतदनुगतम्। अपरोक्षज्ञानविषयत्वं तु नार्थापरोक्ष्यं 'सोऽयं देवदत्त' इत्यादि प्रत्यभिज्ञाविषये तत्तांशेऽतिप्रसक्तेः, एवं च तत्त्वमस्यादिवाक्यजन्यमपरोक्षजीवाभिन्नब्रह्मज्ञानमप्यपरोक्षमिति शाब्दापरोक्षवादिनां प्रक्रिया।

## विकासः

तामेनां प्रक्रियां भामतीकृतस्तदनुवर्त्तिनश्च नानुमन्यन्ते, एषां त्वयमभिसन्धिः यदि ब्रह्म स्वतोऽपरोक्षमतस्तद्विषयकं शब्दजन्यमपि ज्ञानमपरोक्षं भवेत् तदा श्रवणजन्यमपि ज्ञानमपरोक्षं स्यात् एवं सति न स्यात् श्रुतवेदान्तस्य तस्मिन् पारोक्ष्यभ्रमानुवृत्तिः, स्याच्च श्रवणस्योपरिमननादिविधानवैयर्थ्यम्, तस्मान्न शब्दादपरोक्षज्ञानम्, अपि तु क्लृप्तापरोक्षज्ञानजननसामर्थ्यवतो मनस एव, क्लृप्तं हि मनसस्तत्सामर्थ्यं ब्रह्मभोगानुभवे, मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके मनोऽस्य दैवं चक्षुः, मनसैवेदमाप्तव्यमित्यादिश्रुतेः, अहंकाराद्युपहितात्मसाक्षात्कारे सुखदुःखादिप्रत्यक्षेऽपि च तस्य 'करणत्वं क्लृप्तमेवेति तस्यैव निर्विकल्परूपेऽप्यात्मसाक्षात्कारे करणत्वम् । यदि हि तत्र शब्दः करणमुपेयेत तदा शब्दज्ञानयोग्यताज्ञानादीनि यावन्ति शाब्दकरणत्वेन सम्प्रतिपन्नानि कारणानि तेषां सर्वेषामेव तदानीं स्थितिरावश्यकी स्यात्, नच ब्रह्माकारवृत्तितरङ्गमग्नमानसस्य पुरुषधौरेयस्य साक्षात्कारात्पूर्वक्षणे ज्ञानान्तरं शक्यते सम्भावयितुम्, समाधिभङ्गप्रसङ्गाद् तस्मात् तत्र शब्दस्य करणत्वं युक्तिविरुद्धं गौरवग्रस्तमक्लृप्तकल्पनं चेति प्रत्यक्षं प्रतीन्द्रियस्यैव करणत्वस्य क्लृप्तत्वादिति ।

नन्वेवं तत्त्वमस्यादिवाक्यश्रवणमन्तरेणापि मनोऽपरोक्षज्ञानं प्रसवीतेति चेत् ? न, शब्दजनितजीवब्रह्मैक्यपरोक्षधीवासनावासितमेव हि मनस्तदुत्पादयितुं प्रभवति न केवलं मनः अक्षमिव पूर्वानुभवजनितसंस्कारसहकृतं तत्तेदंतोपलक्षितैक्यविषयप्रत्यभिज्ञानम् । शब्दस्तु नापरोक्षां कामपि प्रमां कदाचिदपि जनयितुमुत्सहते तथाविधसामर्थ्यवैधुर्यात्, प्रमेयापरोक्ष्ययोग्यतया प्रमाया अपरोक्षत्वे देहात्मभेदानुमित्यादेरपि तदापत्तेः । 'दशमस्त्वमसि' इत्यादौ च शब्दसहकृतादक्षादेव साक्षात्कारः । अन्धस्य च तत्र शब्दज्ञानोत्तरमनुमितिः शब्दज्ञानसहकृतान्मनसः प्रत्यक्षं वा बधिरस्यापि चेष्टादिसहकृतान्मनसः प्रत्यक्षमेवेति न दशमत्वमसीति दृष्टान्तभावं प्रतिपद्यते। 'दशमो देवदत्तः' इत्यादौ पुरुषान्तरविषयकशाब्दज्ञानमेव । न च मनसःकरणत्वमपसिद्धान्तः गीताभाष्ये शास्त्राचार्योपदेशशमदमादिसंस्कृतम्मन आत्मदर्शने करणमिति प्रतिपादयता भगवता भाष्यकृता मनसःकरणताऽभ्युपगमेन, एवं 'शक्तिविपर्ययात्' इति सूत्रयता बादरायणेन तत्सूत्रं विवृण्वता भाष्यकृता च मनसःकरणताऽभ्युपगता, तथा च तत्रत्यं भाष्यम् 'यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत, इति । तदयमत्र निष्कर्षः—अन्तःकरणोपरक्ते चैतन्ये जीवे कर्तृत्वम्, केवले चान्तःकरणे करणत्वमिति । अत एव 'कामः सङ्कल्पो विचिकित्सा' इत्यादिश्रुत्याऽन्तःकरणधर्मत्वेन कामादिरभिधीयमानो न विरुध्यते । केवलस्य हि तस्य करणतया कामाद्यपरिणामित्वेऽपि चेतनतादात्म्यापन्नत्वेन कामादिपरिणामित्वमक्षतम् । अथवा मनस्त्वेन करणत्वमन्तःकरणत्वेन कामादि

विकासः

परिणामित्वम्, यथैकस्यैवाज्ञानस्य दोषतया निमित्तत्वं परिणामितयोपादानत्वमतोऽपि न कश्चिद्विरोधः, प्रादर्शि चैतदस्माभिः पूर्वमपि ।

तस्मात्सिद्धमेतन्मन एवात्मदर्शने करणम् न शब्द इति । नच 'यं मनसा न मनुते' इत्यादि श्रुतिविरोधः, 'मनसैवानुद्रष्टव्यम्' इत्याद्येवकारघटितश्रुतिविरोधेन 'दृश्यते त्वग्र्या बुद्ध्या' इत्यादि श्रुतिविरोधेन च तादृश्याः श्रुतेरनवहितमनोविषयकत्वात् शुद्धब्रह्मविषयकत्वाद्वा। नचायं भावनाजन्यो ब्रह्मसाक्षात्कारः कामिनीसाक्षात्कार इव भ्रमो भवितुमर्हति वेदान्तरागमजन्यप्रमामूलकत्वेन वैषम्यात् । तदुक्तं कल्पतरुकारैः—

'वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥' इति ।

तस्माद्बलवत्तरागमजन्यप्रमाजन्यभावनासहकृतेनान्तःकरणेन (मनसा) जायमानः साक्षात्कारः प्रमैव न भ्रम इति ।

## भामती

नो खल्वाप्तवचनलिङ्गादिनिश्चितदिगादितत्त्वानां दिङ्मोहादयो निवर्तन्ते । तस्मात् त्वम्पदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः । एतावता हि त्वम्पदार्थस्य दुःखशोकित्वादिसाक्षात्कारनिवृत्तिर्नान्यथा। न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमात्, अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात् । तस्मान्निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थ-

प्रकाशः

प्रत्यक्षस्य मनोरूपेन्द्रियस्य, प्रत्यक्षशब्दस्य प्रत्यक्षात्मिकायां प्रमायां तत्करणे च वृत्तेः । तस्यैव प्रत्यक्षस्यैव । तत्फलत्वेति प्रत्यक्षफलत्वेत्यर्थः तत्फलं यस्येति बहुव्रीहिः । अन्यथा कारणमर्यादातिक्रमे । यद्यत्र शब्दस्य करणत्वं भवेत्तदा तस्य स्वतः सामर्थ्यविरहेण कर्मापेक्षा तदेव न सिद्धमपि त्वन्तःकरणस्यैव तत्करणत्वम्, तस्य च नोपासनाकाले यज्ञादिकर्मापेक्षा येन कर्मोपासनसमुच्चयः स्यात् किन्तु ततः प्रागेव विविदिषोत्पत्तयेऽन्तःकरणशोधने इत्यभिसन्धिमानन्तःकरणस्यैव करणत्वमुपसंहरति—तस्मादिति । वृत्तिभेदः वृत्तिविशेष

## भामती

र्धतामनुभावयतीति युक्तम् । न चायमनुभवो ब्रह्मस्वभावो येन न जन्येत, अपि त्वन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः । न चैतावता ब्रह्मणो नापराधीनप्रकाशता । नहि शाब्दज्ञानप्रकाश्यं ब्रह्म स्वयंप्रकाशं न भवति सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते, न तूपहितमपि । यथाह स्म भगवान् भाष्यकारः—'नायमेकान्तेनाविषयः' इति । न चान्तःकरणवृत्तावस्य साक्षात्कारे सर्वोपाधिविनिर्मोकः, तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् ।

## प्रकाशः

यत्तु 'निर्विकल्पबोध एव न भवति' इत्याचक्षते रामानुजादयः तद् बहिर्मुखानामनधीतयोगशास्त्राणामसेवितगुरुचरणानामकृतसमाधीनामेव शोभते, न तेषां, भवति हि सविकल्पसमाधिसम्पत्त्युत्तरे निर्विकल्पे समाधौ वैशिष्ट्यानवगाहि निर्विकल्पज्ञानमिति भवति च 'सोऽयं देवदत्तः प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ सविकल्पकबोधोत्तरं तात्पर्यवशान्निर्विकल्पको बोधः ।

तार्किकैस्तु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वमुपगम्य तन्निर्वाहाय निर्विकल्पकबोधोऽङ्गीक्रियते, तदपि न विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणतया सर्वाभ्युपगतयैव निर्वाहे विशेषणज्ञानस्य कारणतया अनावश्यकत्वस्य दर्शितत्वादिति । ननु वृत्तिविषयत्वे ब्रह्मणः स्वप्रकाशत्वं हीयेतेत्यत आह—नचेति । एतावता वृत्तिविषयत्वेन । अपराधीनेति अपरेणाधीनेत्यर्थः । यदि हि वृत्तिविषयत्वेनास्वप्रकाशत्वं भवेत् भवेद्भवन्मतेऽपि शाब्दज्ञानप्रकाश्यत्वेन(शाब्द वृत्तिविषयत्वेन) स्वप्रकाशत्वविरह इत्याह— नहीति । न भवतीति, अपि तु भवत्येवेत्यर्थः । शब्दकरणत्वमनःकरणत्वपक्षयोः परिहारसाम्यमाह-सर्वेति । तथा च उपहिते वृत्तिविषयत्वमनुपहिते च स्वप्रकाशत्वमिति मदीयमतमेव भवताऽप्याश्रयणीयं तथा च न कश्चिद्विरोध इति भावः । अखण्डाकारवृत्तिविषयीकृतस्यापि ब्रह्मणस्तदानीमुपहिततैवेत्याह—नचेति । योऽयमखण्डाकारः साक्षात्कारः स्वपरोपाधिनिवृत्तिहेतुरुदयते सोऽपि स्वयमुपाधिरूप एवेत्यतस्तदानीमुपहितमेव ब्रह्मेति नानुपहितस्य विषयता परन्त्वयमुपाधिर्विद्यमानोऽपि वृत्त्या न विषयीक्रियतेऽपि तु केवलं ब्रह्मैवेत्यतोऽस्य भवत्यखण्डाकारत्वमिति भावः । तस्यैव ब्रह्मण एव । तदुपाधेः वृत्तिरूपस्योपाधेः ।

## प्रकाशः

एतस्याश्च वृत्तेरज्ञानतत्कार्यविरोधिन्या बाधकान्तरापेक्षायामनवस्थाप्र- स्वस्या अप्यज्ञानकार्यत्वाविशेषात् स्वबाधकत्वं सम्भवतीत्यभिप्रायेण स्वपरोपाधिविरोधिन इति ।

## विकासः

स्वपरोपाधिविरोधिन इति । इदमत्रावधेयम्—ज्ञानाज्ञानयोर्विरुद्धयोरेकदा अ- संभवेन वृत्त्युत्पत्तिक्षणे एव वृत्त्युत्पादकसामग्रीतोऽविद्यानाशस्तदनन्तरक्षणे च वृ- नाशो भवति, यथा समवायिनाशाधीनकार्यनाशस्थले नैयायिकानां उपादानं विहाय कार्यस्य क्षणं भवत्यवस्थानम्, तथोपादानमज्ञानं विहाय वृत्तेरवस्थानसम्भवात् । नन्वेवं 'नश्यत्यविद्यया सार्धम्' इत्यनेन विरोधस्तेन हि वृत्- वृत्त्यज्ञानयोः सहैव नाशाभिधानात् सहभावस्य चैकक्षणोत्पत्तिकत्वरूपस्यैवैतादृशा- प्रत्ययात्, अन्यथा दिवसादिविलम्बेन घटनाशोत्तरं पटनाशे घटेन सह पटो नश्यतीति स्याद् व्यवहार इति वाच्यम्—सहनाशो हि प्रकृते न वृत्त्युत्पत्तिक्षणे, वृत्तेरुत्पत्तिनि- रेकक्षणेऽसम्भवात्, जनकस्यैव नाशकत्वे जन्मासम्भवात्, अतो विरोधिवृत्त्युत्पादकसाम- वृत्तेरुत्पत्तिस्तस्मिन्नेव च क्षणेऽविद्यानाशः तदनन्तरं वृत्तिनाश इत्यगत्याऽप्युभ- सहोक्तिस्तु अतितीक्ष्णेयं सूची यत्सममेव शतपत्रं भिनत्तीतिवदुपपद्यते । यद्वा घटवद्भू- तलमित्यादिविरोधिज्ञानोत्पत्तिक्षणे समवहितया घटचक्षुः सन्निकर्षादिघटितया सामग्र्या- ग्रिमक्षणे जायमानस्य घटवद्भूतलमित्यादिप्रत्यक्षस्य सत्यामुत्पत्तौ न्यायादिनये विरो- रेतयोर्ज्ञानयोः क्षणमेकत्रावस्थानमिव भावरूपयोर्विरोधिनोर्ज्ञानाज्ञानयोरपि क्षणमेकत्राव- स्थानं न विरुध्यतेऽतः स्वोत्पत्त्यनन्तरक्षणेऽज्ञानं नाशयन् साक्षात्कारस्तस्मिन्नेव क्षणे स्वयं नश्यतीत्यभिप्रायेणोक्तं स्वपरोपाधिविरोधिन इति ।

अथ तत्त्वज्ञानसमकालिकस्तदुत्तरकालिको वाऽविद्याविनाशस्तत्त्वज्ञानस- जन्यस्तत्त्वज्ञानजन्यो वा नोपपत्तुमर्हति जन्यस्य तस्य ब्रह्मरूपत्वासम्भवेनाविनाशे- भङ्गापत्तेः विनाशे चाविद्योन्मज्जनापत्त्याऽद्वैतभङ्गापत्तेरिति चेत् ? अत्राहुः—

अविद्यानाशस्यानाशेऽपि नाद्वैतहानिः परमार्थसत्त्वस्य तत्रानुपगमेन परमार्थ- द्वितीयराहित्यस्याद्वितीयत्वस्याभिप्रेतत्वात्, घटसत्त्वकाले घटस्यात्यन्ताभावस्येवाविद्यानाश- ऽप्यविद्यानाशात्यन्ताभावस्योपगमेन स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपस्य मिथ्यात्व- नाशेऽपि सत्त्वात् । नन्वेवं तस्यानन्तत्वे कल्पितत्त्वं न स्यादिति वाच्यम्, यथा ब्रह्म- जीवत्वेश्वरत्वादीनां न कल्पितत्वविरोधि, तथाऽनन्तत्वमपि न नाशस्य कल्पितत्वविरो- विरोधि च परमार्थसत्त्वम्, तच्च नानादित्वेन कल्पिते नाप्यनन्तत्वेन कल्पितेऽस्ति प्रामाणि- एकेनैव हि सता सकलसद्व्यवहारोपपत्तौ तदतिरिक्तस्य सतोऽप्रामाणिकत्वात् । न च कल्प- नाया अविद्याया मोक्षावस्थायामभावात् कथमविद्यादिध्वंसस्य कल्पितत्वं स्यादिति वा-

## विकासः

न हि तत्पदार्थसमकालिकयैव कल्पनया भवति कल्पितत्वम्, तथासति वियदादीनामुत्पत्तिपूर्वकालिकया मायावृत्तिरूपया ईश्वरीयया कल्पनया कल्पितत्वमिदानीं न स्यात् नहि वियदादयुत्पत्त्यनन्तरं वियदादयउत्पद्यन्तामितीश्वरस्य कल्पनाऽस्ति, किन्तूत्पत्तेः पूर्वमेव, नचेश्वरस्य सा वृत्तिर्न कल्पना कल्पना हि नाम सा यां भ्रम इत्याचक्षते लौकिकाः। ईश्वरस्य च कल्पनावत्त्वे भ्रान्तत्वं स्यादिति वाच्यम्, बाधितविषयकत्वेनेश्वरीयवृत्तेरपि भ्रमत्वस्य दुर्वारत्वात् ।

नचैतावता ईश्वरस्य भ्रान्तत्वम्, भ्रान्ति भ्रान्तत्वेनाविदुष एव भ्रान्तत्वात् नहि भवन्मतेऽपि सर्वज्ञस्येश्वरस्य जीवनिष्ठां भ्रान्तिं भ्रान्तित्वेन जानतो भवति भ्रान्तत्वम्, अतएव न स्वस्मिन् सुन्दरीत्वमारोपयतन्तास्तास्तीक्ष्णकटाक्षभ्रूविक्षेपविलक्षणसमीक्षणादिचेष्टाः कुर्वतो नटस्य न कश्चिद्भ्रान्तत्वं व्यपदिशति, तस्मादीश्वरस्य जीवादृष्टादुत्पद्यमानाया वृत्तेः भ्रमात्मिकायाः सत्त्वेऽप्यभ्रान्तत्वोपपत्तेरध्यासः कल्पना भ्रान्तिरित्यनर्थान्तरमेव अतश्च कल्पनाशून्यकालेऽपि कल्पितस्य सत्त्वे बाधकाभावान्मोक्षदशायामज्ञानादिनाशस्य कल्पितत्व सत्त्वेऽपि सति विरहः। इत्थञ्च यथा 'इदं रजतम्' इत्यादौ बाधात्प्राक्सत्तया गृहीतेदमर्थादिविशेष्यिका रजतादेर्या कल्पना सैवच रजतादेः सिद्धिः, तथा सती अविद्या सन् घट इत्यादियां प्रतीतिर्विचारग्राह्यभ्रान्तित्विका कल्पनाऽविद्यादीनां बाधात् प्राक् यदा कदाऽपि भवन्ती तेषां सैव सिद्धिरभिधीयतेऽतो भवति कल्पनाविषयत्वरूपं कल्पितत्वं तेषामविद्यादीनां सर्वेषां ब्रह्मव्यतिरिक्तानां पदार्थानाम्, यदि सत्प्रतीतिरेषामभ्रान्ता स्यात् तदा कल्पितत्वं न स्यात् नत्वेवमस्ति, सति चैवं सत्सम्बन्धावगाहितया सर्वस्यैव सविकल्पप्रत्ययस्य भ्रान्तत्वमेव, 'न ह्ययं घटः अयं पटः' इत्यादिप्रत्यये जायमाने घटपटादीनां सत्त्वे केचिदपि विप्रतिपद्यन्तेऽतोऽसति घटपटादौ सत्त्वावगाहितया भ्रमत्वमेव तत्तत्प्रत्ययानाम् अतएवोक्तं मण्डनमिश्रचरणैः ब्रह्मसिद्धौ घटादिकं, सद्रूपे कल्पितं, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्, इति ।

नच प्रत्यक्षस्य सत्तावगाहित्वे स्वाभाविकयैव सत्ताऽवगाह्यताम्, तेनैव तद्विषयमिथ्यात्वग्राहकागमस्य बाधः किन्न स्यादिति वाच्यम् सदोषत्वेन संदिग्धप्रामाण्यात्प्रत्यक्षाद्विदोषत्वेन निश्चितप्रामाण्यस्यागमस्यैव प्रबलत्वेन विषयमिथ्यात्वग्राहकाद्वैतश्रुत्या मिथ्यात्वानुमित्या च प्रत्यक्षस्यैव बाधात्। तस्मात् विषयाणां स्वतः सत्त्वविरहेणौपाधिकसत्त्वस्यैव सिद्धतया सर्वेषामेवानात्मज्ञानानामसति सत्तावगाहित्वेन भवति भ्रमत्वमिति। तदेतदनुमोदितं नवाम्भोदश्यामलपरमाभिरामकामकोटिकमनीयरामदर्शनसमुपजातविशुद्धविज्ञानैः निरस्तसमस्तरागादिदोषैः भक्तिरससमुद्रायमाणरामायणनिर्माणजनितोपकारभारवाहकभारतीयजनताकैः भक्तिब्रह्मविद्याभ्यां परमानन्दप्रत्युपायतामादधतीभ्यां समालिङ्गितैः रामकथाप्रचारसदाचारविचारसारसंरक्षितसनातनधर्मस्तम्भैः तुलसीदासचरणैरपि ध्वस्तसत्वादमृषेष

## विकासः

भातिसकलं रज्जौ यथाऽहेर्भ्रमः, इति मङ्गलमाचरद्भिः, अतः कल्पनाशून्यकालेऽविद्याध्वंसादेः पारमार्थिकस्य विद्यमानत्वेऽपि पारमार्थिकस्य कस्यचिद् द्वैतस्याभावान्नाद्वैतवादिनं काचिदनुपपत्तिराश्लिष्यति। अपि च मिथ्यात्वविरोधि त्रिकालाबाध्यत्वरूपं सत्त्वमतीतानागतकालघटितमयोग्यं न प्रत्यक्षं क्षमते ग्रहीतुम् अपि तु सर्वानुगतसद्रूपस्य स्वत एव प्रत्यक्षयोग्यस्य यदाध्यासिकं तादात्म्यरूपं सत्त्वं तदेव ग्रहीतुमुत्सहते तच्च तादात्म्यं न मिथ्यात्वस्य विरोधि अपि तु साधकमेवेति। न काचित् क्षतिः।

अपिचेदमपि विदांकुर्वन्तु भवन्तः प्रपञ्चसत्त्वनिरुक्तिमभिवाञ्छन्तः एकंसद्विप्राबहुधा वदन्तीत्यादिकं वेदमपि तिरस्कुर्वन्तः 'एकमेवाद्वितीयं' 'मृत्योः समृत्युमाप्नोति य इह नानेव पश्यति' इत्यादि श्रुतिमुपमर्दयन्तः 'असत्त्वादात्मनोऽन्येषां भावानां तत्कृताभिदा इत्यादि श्रीमद्भागवतीय(११ स्कं १२ अ) भगवद्वाक्यमवहेलयन्तः दुस्तर्कोद्भावनचातुर्यमाश्रयन्तः! नाश एव तावन्न निरुक्तिपथमवतितीर्षति येनोक्तरीत्या द्वैतापादनं स्यात् अत्यन्ताभावस्यैव नाशकाभिमतोत्तरकालावच्छिन्नकपालभूतलादिस्वरूपसम्बन्धेन कपालभूतलादौ वर्त्तमानस्य नश्यतीत्यादिप्रत्ययविषयत्वसम्भवात् घटानयनापसरणस्थलेऽत्यन्ताभावस्य तत्तत्कालघटितस्वरूपे सम्बन्धतायास्तार्किकैरप्युपगमात्, नाशं नात्यन्ताभावतो भिन्नतया व्यवस्थापयितुं शक्नुवन्ति केचिदपीति गतं नाशेनाननन्तेनोत्पत्तिमत्तया गौरवग्रस्तेन, एवं पूर्वकालावच्छिन्नस्वरूपसम्बन्धेन कपाले वर्त्तमानस्यात्यन्ताभावस्यैव 'कपाले घटो भविष्यति' इत्यादिप्रतीतिविषयत्वसम्भवात्, स्वयमपि च तार्किकशिरोमण्यादिभिः सामान्यलक्षणाग्रन्थे प्रागभावस्य खण्डितत्वाच्चेति प्रस्थीयते प्रागभावेनाप्यनन्तेन ध्वंसप्रतियोगिना गुरुभूतेन, एवं घटात्यन्ताभावस्थले भूतलादावेव घटप्रतियोगिकत्वमुपेयं न त्वत्यन्ताभावरूपोऽपि धर्मो कपालभूतलाद्यतिरिक्तो धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात्। नचैवं घटत्वाद्यवच्छिन्नप्रतीयोगितानिरूपकस्य भूतलादेः स्वस्मिन्नवृत्त्या भूतले घटो नास्तीत्याधाराधेयभावप्रतीत्यनुपपत्तिरिति वाच्यम्, घटाभावे घटो नास्ति, प्रमेयत्वे प्रमेयत्वमस्तीत्यादिप्रतीत्या भवद्भिः स्वस्मिन्नप्याधाराधेयभावस्य प्रतीत्यनुसारेणोपगमात्। तदुक्तम्—'वादिविनोदे' शंकरमिश्रैः—

प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः' इति,

अत्र भिन्नाभिन्नते भिन्नत्वमभिन्नत्वं च तस्मात्सामान्यतः स्वस्य च स्वाधारत्वं नेत्यस्य वक्तुमशक्यत्वात् येन रूपेण यस्मिन्नाधेयत्वं येन रूपेण यस्मिन्नाधारत्वं च प्रतीतिसिद्धं तेन तेन रूपेण तयोराधाराधेयभावो नापलपितुं शक्यः तथाच भूतले भूतलमित्यप्रत्ययात्तेन रूपेणाधाराधेयभावविरहेऽपि भूतले घटो नास्तीतिप्रतीतेः भूतलत्व घटप्रतियोगितानिरूपकत्वरूपाभावत्वाभ्यामेकस्यैव भूतलस्याधाराधेयभावः शक्यत एवाभ्युपगन्तुम्, प्रतियोगितायाः स्वरूपसम्बन्धरूपत्वे 'प्रतियोगितावान् घटः' इत्यादिप्रतीत्या घटत्वेन प्रतियोगितात्वेनैकस्यैव घटस्याधाराधेयभाववत्। न चैवं जलादौ गन्धाभावोऽ

## विकासः

पि गन्धप्रतियोगिको जलादिरूप एवेति गन्धाभावोऽपि हि चाक्षुषः स्यादिति वाच्यम्, भवन्मतेऽपि हि चक्षुःसंयुक्तविशेषणतायाः सन्निकर्षस्य सत्त्वेन तस्य चाक्षुषत्वं तदिन्द्रियायोग्यतयैव वारणीयम्, एवमस्मन्मतेऽपि जलस्य जलत्वादिना चक्षुर्ग्राह्यत्वं गन्धप्रतियोगिकत्वेन रूपेण चक्षुरयोग्यत्वं घ्राणयोग्यत्वञ्च स्वीक्रियते अतोऽधिकरणस्वरूपत्वेऽप्यापत्त्यनुपपत्तिपरिहारात् गतमधिकरणातिरिक्तेनात्यन्ताभावेनापि तस्मात्तार्किकप्रवरैरभावस्य निर्वचनं दुर्घटमेवेति नाविद्यानाशादिना द्वैतमापादयितुं शक्यते इति। अत एवानुपदमेव वक्ष्यत्याचार्यः—'नच तत्तदुपाधिविरहोऽपि ततोऽतिरिच्यते' इति।

नन्वस्तूक्तरीत्या घटाद्यभावस्याधिकरणात्मकत्वं परन्तु भूतलादेर्घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वेऽभ्युपगम्यमाने तत्प्रतियोगितावच्छेदकीभूत घटत्वादिज्ञानं विना भूतलादिज्ञानासम्भवः, एवमखिलप्रपञ्चाभावस्याधिकरणात्मकत्वेन ब्रह्मणः स्वरूपत्वे तस्य घटत्वाद्यखिलधर्मावच्छिन्नप्रतियोगताकत्वापत्त्या सखण्डत्वं तत्तद्धर्मपरिज्ञानं विना ब्रह्मणोज्ञानासंभवश्च स्यादिति चेत्? न, अभावस्याभावत्वेनैव हि रूपेण ज्ञाने प्रतियोगितावच्छेदकज्ञानमपेक्ष्यते। नत्वभावत्वानवच्छिन्नविषयताशून्ये भूतलमित्यादिज्ञाने, अतएव प्रमेयमित्यादिज्ञाने भासमानस्याभावस्य प्रतियोगितावच्छेदकज्ञानं नापेक्ष्यते अतो ब्रह्मसाक्षात्कारेणाभावत्वावच्छिन्नविषयताशून्येन न प्रतियोगितावच्छेदकादिज्ञानमपेक्ष्यते अतो नोक्तापत्तिरिति।

नन्वस्त्वविद्याध्वंसस्थानाभिषिक्तोऽविद्याऽत्यन्ताभावः परन्तु तस्यापि ब्रह्मरूपत्वेऽभावत्वधर्मो न ब्रह्मणि निवर्त्तेतेति न द्वैतापत्तिर्वारयितुं शक्यते इति चेच्छृणु! घटाभाववद्भूतलमित्यादिप्रतीति सिद्धस्य घटाद्यभावत्वेन भूतलत्वेनाधाराधेयभावस्योपपत्त्यर्थं प्रदर्शितरीत्या भूतलादावभावत्वधर्मस्य भवति कल्पनम्, ब्रह्मणि तु साक्षात्कारेणाविद्यानिवृत्तिस्थानापन्नस्याविद्याऽत्यन्ताभावस्य शुद्धब्रह्मरूपत्वे मोक्षदशायामाधाराधेयभावस्य प्रतीतिरेव न भवति, यथाऽभावत्वरूपो धर्मो ब्रह्मणि कल्प्येत, संविदेव हि भगवती वस्तूपगमे नः शरणम्। इदानीं बद्धपुरुषेण ब्रह्मणि अविद्यानाशस्याविद्यात्यन्ताभावरूपस्य शब्दानुमानादिनाऽविद्यानाशवद्ब्रह्मेत्यादिप्रतीत्या कल्पनेऽपि तत्प्रतीतिविषयस्य ब्रह्मणः सोपाधिकतया तत्राधाराधेयभावस्याभावत्वस्य च कल्पनेऽपि क्षतिविरहः, मुक्तिदशायां प्रतीतिविरहेण शुद्धे ब्रह्मण्यभावत्वाकल्पनात् अविद्यात्यन्ताभावस्य शुद्धब्रह्मरूपत्वेऽपि शुद्धस्य ब्रह्मणोऽविद्याप्रतियोगिकत्वं न भवति येन शुद्धस्य ब्रह्मणः सप्रतियोगिकत्वं सखण्डत्वमापतेत्, अभावत्वेन विशिष्टे एवाभावे सप्रतियोगिकत्वं भवति न तु तद्रहिते निर्विशेषे इति न काचिदापत्तिरनुपपत्तिर्वेति, अपिच ध्वंसस्यात्यन्ताभावातिरिक्तत्वे तस्य जन्यत्वं ध्वंसत्वेनैव रूपेण, नत्वधिकरणात्मकत्वेनातोऽविद्याध्वंसस्य ब्रह्मरूपत्वेऽपि ध्वंसत्वधर्मशून्ये ब्रह्मणि नजन्यत्वादिकमापतति अतोऽपि न काचिदापत्तिरनुपपत्तिर्वेति।

विकासः

एतेन घटादिभेदस्यापि ब्रह्मणि सत्त्वात्तस्यापि ब्रह्मरूपत्वे ब्रह्मणो घटादिप्रतियोगिकत्वापत्तिरित्यपि परास्तम्, भेदत्वेनैव हि भेदे तत्तत्प्रतियोगिकत्वाद्यपेक्षणादिति विभावयन्तु विद्वांसः पक्षपातरहिताः विशुद्धान्तःकरणाः ।

केचित्तु अज्ञाननाशस्य नाशासम्भवेन द्वैतापत्तिं परिहर्तुं भावाद्वैत एवाद्वैतश्रुतितात्पर्यं वर्णयाम्बभूवुः, सोऽपि पक्षः उपादानस्याज्ञानस्याविद्यमानत्वेऽपि कार्यस्य ध्वंसस्य भवति स्थितिः भावकार्यस्यैवोपादानेन सहभावनियमाङ्गीकारेण नेतव्यः, अथवा समवायिनाशाधीनकार्यनाशस्थले यथा नैयायिकैः उपादानं विहाय क्षणं कार्यस्यावस्थानमाश्रीयते तथा सद्वैतोपादानं विहायाविद्याध्वंसस्यावस्थानमुपेयमन्यमितिरीत्या नेतव्यः परंत्वयंपक्षो न सिद्धान्तोऽद्वैतश्रुतिसंकोचापत्तेः तस्मात् पूर्वस्यैव विचारस्य भवति समीचीनत्वम् ।

## भामती

अन्यथा चैतन्यच्छायापत्तिं विनाऽन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगात् । न चानुमितभावितवह्निसाक्षात्कारवत्प्रतिभात्वेनास्याप्रामाण्यं, तत्र वह्निस्वलक्षणस्य परोक्षत्वात् इह तु ब्रह्मरूपस्योपाधिकलुषितस्य जीवस्य प्रागप्यपरोक्षत्वात् । नहि

प्रकाशः

भाष्ये या हि चोदनाधर्मस्य लक्षणमित्यादि अस्यायमक्षरार्थः लक्षयति बोधयतीति लक्षणं वाक्यम् धर्मस्य लक्षणं, धर्मस्य प्रतिपादकं स्वर्गकामो यजेतेत्यादिविधिवाक्यम्, तद्रूपया चोदनया स्वर्गकामनियोज्यताकयागानुकूलभावनां बोधयन्त्या प्रतिपाद्यो भवति भावनारूपः पुरुषव्यापारो यागादिश्च सा चेयं चोदना स्वविषये, स्वप्रतिपाद्ये, भावनाभिधे पुरुषव्यापारे यागादौ च पुरुषं नियुञ्जानैव स्वार्थं बोधयति, ब्रह्मचोदनातु, ब्रह्मप्रतिपादक वाक्यं तु, ब्रह्मज्ञानमात्रमुत्पादयति नतु प्रवर्तयति एवं च प्रवृत्तिरहितमेव ज्ञानं वेदान्तवाक्यमुत्पादयति, यथेन्द्रियार्थसंन्निकर्षो ज्ञानं जनयति नतु पुरुषंनियोजयति नियोगस्त्विष्टसाधनाज्ञानात् तद्वदित्युभयोर्विधिवाक्यवेदान्तवाक्योर्भेद इति ।

नन्वाज्ञाऽभ्यर्थनाऽनुज्ञानां विधिरूपाणां प्रयोक्तृपुरुषसम्बन्धिनीनां प्रतिपादकेषु शब्देषु लोके चोदनापदव्यपदेशत्वर्मित कथमपौरुषेये वेदे चोदनापदप्रयोग इत्याशंकां चोदनापदस्योपदेशपरतया समादधाति आज्ञादीनामिति । अत्रायं विवेकः कल्पतरुकृद्भिः कृतः, उत्कृष्टस्य पुंसो हीनम्प्रति स्वाभिलषितो-

प्रकाशः

विद्यमानत्वादिति । अतो न तदानीं सर्वोपाधिविनिर्मोकः । तथाचाविद्याया अन्तःकरणस्य तद्वृत्तेश्च विद्यमानत्वेन न तदानीं निरुपाधिकं ब्रह्मास्ति किन्तु स्वरूपतो विद्यमानान्यप्येतानि तदानीं न ब्रह्मसाक्षात्कारात्मिकायां वृत्तावभासन्तेऽपि तु केवलं ब्रह्मैव यथा घटादौ विद्यमानान्यपि द्रव्यत्वादीनि घट इत्यादि शाब्दादिप्रतीतौ नावभासन्ते तद्वत्, अतोऽस्य साक्षात्कारस्य भवति निर्विकल्पतेति भावः ।

विकासः

विद्यमानत्वादिति । नन्वियं साक्षात्कारात्मिका वृत्तिरात्मनो विशेषणमुपलक्षणं वा ? आद्ये विशेषणाग्रहे विशिष्टग्रहासंभवः वृत्तिविशिष्टस्य ब्रह्मणो विषयत्वे वृत्तेरपि विषयतापत्त्या निर्विकल्पत्वं च तस्या वृत्तेर्व्याहतम्, द्वितीयेऽविद्यमानस्यैव धर्मस्योपलक्षणतया वृत्त्युपहितस्य विषयत्वमयुक्तं वृत्तेरविद्यमानत्वविरहादिति चेत्, अत्रेदमवधारणीयम्—त्रिविधो भवति धर्मो विशेषणमुपाधिरुपलक्षणं च । तत्र विशेषणमनेकविधम्—विद्यमानं सद्विधेयान्वयि व्यावर्त्तकमेकम् यथा दण्डिनं पुमांसमानयेत्यादौ अदण्डव्यावर्त्तको वर्तमान आनयनान्वयी दण्डादिः । अपरं च विद्यमानं सद्विधेयान्वय्यव्यावर्त्तकम् यथा रूपविशिष्टो घटोऽनित्य इत्यत्राव्यावर्त्तकमपि रूपं विधेयेनानित्यत्वेनान्वितं भवति विशेषणम् । एवं विशेष्यं यदन्वयि तदन्वय्यपि भवति विशेषणम् अतएव गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति विशिष्टवैशिष्ट्यावगाहिनी बुद्धिर्भवति भ्रान्तिः, सत्तायां गुणकर्मान्यत्वस्य सामानाधिकरण्यसम्बन्धेन भाने विशेष्यीभूतसत्तान्वयिनि गुणे गुणकर्मान्यत्वस्य भानात्, यदा तु गुणकर्मान्यत्वं स्वरूपसम्बन्धेन सत्तायां सम्बध्नाति तदा तूपलक्षणं तत् विशेष्यीभूतसत्तान्वयिनि गुणे तदनन्वयात्, अत एतादृशी बुद्धिरुपलक्षितवैशिष्ट्यावगाहिनीत्युच्यमाना विशेष्ये विशेषणं तत्रापि विशेषणान्तरमितिरीत्या जायमाना गुणादावपि प्रमैव भवति ।

विद्यमानः सन् विधेयानन्वयी व्यावर्त्तक उपाधिः—यथा कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र विधेयस्य श्रोत्रत्वस्य कर्णशष्कुल्यामनन्वितत्वात् विद्यमानत्वात् शुद्धनभसो व्यावर्त्तकत्वाच्च कर्णशष्कुली भवत्युपाधिः । यथा वा दण्डिनं भोजयेत्यादावदण्डिनं व्यावर्त्तयन् भोजनानन्वयी दण्डो भवत्युपाधिः ।

उपलक्षणं तु अविद्यमानं सद् व्यावर्त्तकम्—यथा काकवन्तो देवदत्तस्य गृहा इत्यादौ काकस्याविद्यमानतादशायामपि गृहान्तरव्यावर्तकत्वादुपलक्षणत्वम् । एवं विद्यमानं सदव्यावर्त्तकमपि भवत्युपलक्षणम्—यथा प्रमेयो घटो नास्तीत्यादौ प्रमेयत्वं भवत्युपलक्षणम् । तत्रोपलक्षणमपि उपाधिशब्देन व्यपदिशन्ति केचित् । प्रकृते चैकस्मिन्नपि अन्तःकरणतादात्म्यवति चैतन्ये 'जीवः कर्त्ता भोक्ता, इत्यादिप्रतीतौ प्रतीयमानस्य कर्तृत्वभोक्तृत्वादिरूपान्तःकरणधर्मसंबन्धस्यापेक्षणेनान्तःकरणं भवति विशेषणम् । 'जीवो नित्य' इत्यादिप्रतीतौ प्रती-

विकासः

यमानस्य नित्यत्वादिधर्मसम्बन्धस्यापेक्षणेन चोपाधिरिति एकत्रैकदाऽवस्थितोऽपि पदार्थो विधेयान्वयानन्वयाभ्यां विशेषणमुपाधिश्च संकीर्त्यते, अतएव घटो नश्यति, तिष्ठतीत्यत्र विनाशसम्बन्धे घटत्वमुपाधिः स्थितिसम्बन्धे च तद्विशेषणम्। सतिचैवं प्रकृते वृत्तिविषयतामा- नाप्युपाधितया न साक्षात्कारविषयतामापद्यते किंतु केवलं ब्रह्मैवेति बोध्यम्।

भामती

शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते, जीव एव तु तत्तदुपाधिरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते। नच तत्तदुपाधिविरहोऽपि ततोऽ- तिरिच्यते। तस्माद्यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिव- श्रोत्रेन्द्रियेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षमनुभवति, एवं वेदान्त-

प्रकाशः

इतोऽपि न तदानीं सर्वोपाधिविनिर्मोको यतो निरुपाधिकस्य वृत्तौ 'छाया' प्रतिबिम्बं न संभवतीत्याह—अन्यथेति। अत्रापि बिम्बप्रतिबिम्बभावोऽभिव्यङ्ग्याभिव्य- ञ्जकत्वलक्षणः। नन्वस्य साक्षात्कारस्य भ्रमत्वमेव संसारदशायामप्रकाशमानस्य हि ब्रह्मण्यापरोक्ष्यस्य स्वरूपव्यतिरिक्तस्यावगाहनादित्याशंकां परिहरति-नचेति। वह्नित्वलक्षणस्येति। वह्नित्वं लक्षणमसाधारणधर्मो यस्य तादृशस्य वह्नेरित्यर्थः तत्र विषयविसंवादाद्भ्रमत्वं नात्र तथेति भावः। जीवचैतन्यमात्रस्यापरोक्षत्वेऽपि शुद्धानन्दादेः पारोक्ष्यात्तदाकारसाक्षात्कारोऽनुमितभावितवह्निसाक्षात्कारवद- थार्थ एवेत्याशंकां परिहरति—नहीति। यद्यपि शुद्धानन्दादिस्वरूप एव जीवस्तथापि संसारदशायामुपाधिना तिरोहितत्वाद् घनच्छन्नार्क इव न तथा विभाव्यते, यदा च समीरणेनापसारिते मेघे सूर्योऽभिव्यज्यते तथा तत्तदुपाध्य- पगमे जीवो ब्रह्मात्मतयाऽभिव्यज्यते इति भावः। नन्वेवं चरमतत्त्वसाक्षात्कारे निरुपाधिकं ब्रह्म विषयीकुर्वाणे उपाध्यभावोऽपि भासेत, तथा च कथमस्य निरु- कल्पत्वमित्याशङ्क्याह-नचेति अभावस्याधिकरणस्वरूपत्वादुपलक्ष्यत्वाद्वेति भावः। अत्र यद्वक्तव्यं तत् 'स्वपरोपाधिविरोधिन' इत्यस्य विकासे उक्तम्। ननु यदि चैतन्याभिन्ना एवानन्दादयस्तदा चैतन्यमिव तेऽपि संसारदशायामवभासेरन्, यदि चोपाधिरुद्धास्ते नेदानीमवभासन्ते इत्युच्यते तदा चैतन्यमपि तथा स्यात्तद्भेदो वा स्यादित्याशङ्कां निरस्यन्नुपसंहरति—तस्मादिति यथा गान्धर्वशास्त्राभ्यासात् प्राक् स्फुरन्तोऽपि षड्जादयः न श्रोत्रेणाभिव्यज्यन्ते, तच्छास्त्रवासनावासितान्तःकरण- स्य तु श्रोत्रेणाभिव्यज्यन्ते, एवं वेदान्तवाक्यजन्यब्रह्मात्म्यैक्यज्ञानवासनावतोऽन्तः-

## भामती

र्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेनेति। अन्तःकरणवृत्तौ ब्रह्मसाक्षात्कारे जनयितव्येऽस्ति तदुपासनायाः कर्मापेक्षेति चेत्? न, तस्याः कर्मानुष्ठानेन सहभावाभावेन तत्सहकारित्वानुपपत्तेः। न खलु 'तत्त्वमसि' इत्यादेर्वाक्यान्निर्विचिकित्सं शुद्धबुद्धोदासीनस्वभावमकर्तृत्वाद्युपेतमपेतब्राह्मणत्वादिजातिं देहाद्यतिरिक्तमेकमात्मानं प्रतिपद्यमानः कर्मस्वधिकारमवबोद्धुमर्हति। अनर्हश्च कथं कर्ता वाऽधिकृतो वा।

यद्युच्येत—निश्चितेऽपि तत्त्वे विपर्यासनिबन्धनो व्यवहारोऽनुवर्तमानो दृश्यते, यथा गुडस्य माधुर्यविनिश्चयेऽपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिरास्वाद्य थूत्कृत्य त्यागात्। तस्मादविद्यासंस्कारानुवृत्त्या कर्मानुष्ठानं, तेन च विद्यासहकारिणा तत्समुच्छेद उपपत्स्यते।

### प्रकाशः

करणेन तद्भावोऽभिव्यज्यते न तु ततः प्राक् यथा जीवेशादिभेद एकस्मिन्नेवास्मिन् चैतन्ये कल्प्यते तथा चैतन्यानन्दाद्यंशभेदोऽपीति भवति संसारदशायामखण्डानन्दांशस्याभानम्। षड्जादीति। निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्च स्वराः, एषां समुदायो ग्रामः मूर्च्छना तु तेषामारोहावरोहौ। नन्वस्तु ब्रह्मसाक्षात्कारो मनःकरणक एव तथापि कर्मसहकृतैवोपासना एनं साक्षात्कारं प्रसोतुमर्हतीति पुनः समुच्चयपक्ष एवापततीत्याशङ्कते,—अन्तःकरणवृत्ताविति। नेति। अपि च यदा ब्रह्मोपासनायाः यज्ञादिकर्मणश्चैककालावस्थायित्वं स्यात् स्यात्तदैनयोः समुच्चयस्तदेव तु न संभवति योऽहि यदा ऐहिकात्प्राग्भवीयाद्वा कर्मणो विशुद्धसत्त्वोऽनन्यव्यापार उपासनाजनितब्रह्मप्रमोदार्णवतरङ्गमनुभवन्नास्ते स तदा कथङ्कारं यागादिकं बाह्यसाधनबहुलं तत्तत्साधनव्यग्रतासंपादककर्मानुतिष्ठेत्, तस्मादपि न सहकारित्वमिति। तस्याः उपासनायाः। तत्सहकारित्वेति। कर्मसहकारित्वेत्यर्थः। तदेतदुपपादयति—नखल्विति। अर्हतीत्यनेन सम्बन्धः। प्रतिपद्यमानः जानानः। अवबोद्धुमर्हतीति। सम्पादनं तु दूरापेतमिति भावः। निश्चितेऽपीति। औपाधिकभ्रमो हि उपाधिनिवृत्तिमन्तरेण न निवर्तते इति भवेद्विपर्यासानुवृत्तिरिति भावः। तत्समुच्छेदः

## भामती

न च कर्माविद्यात्मकं कथमविद्यामुच्छिनत्ति ? कर्मणो वा तदुच्छेदकस्य कुत उच्छेद इति वाच्यम्, सजातीयस्वपरविरोधिनां भावानां बहुलमुपलब्धेः, यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति । यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति । यथा वा कतकरजो रजोऽन्तराविले पाथसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति । एवं कर्माविद्यात्मकमपि अविद्यान्तराणि अपगमयत्स्वयमप्यपगच्छतीति ।

अत्रोच्यते सत्यम् 'सदेव सोम्येदम्'इत्युपक्रमात् 'तत्त्वमसि' इत्यन्ताच्छब्दाद् ब्रह्ममीमांसोपकरणादसकृदभ्यस्ताद् निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे जातेऽपि अविद्यासंस्कारानुवृत्तावनुवर्तन्ते सांसारिकाः प्रत्ययास्तद्व्यवहाराश्च, तथापि तानप्रव्यवहारप्रत्ययान् मिथ्येति मन्यमानो विद्वान्न श्रद्धत्ते पित्तोपहतेन्द्रिय इव गुडं थूत्कृत्य त्यजन्नपि तस्य तिक्तताम् । तथा चायं क्रियाकर्तृकरणेतिकर्तव्यताफलप्रपञ्चमतात्त्विकं विनिश्चिन्वन् कथमधिकृतो नाम, विदुषो ह्यधिकारोऽन्यथा पशुशूद्रादीनामप्यधिकारो दुर्वारः स्यात् । क्रियाकर्त्रादिस्वरूपविभागं च विद्वस्यमान इह विद्वानभिमतः कर्मकाण्डे । अत एव भगवानविद्वद्विषयत्वं शास्त्रस्य वर्णयाम्बभूव भाष्यकारः । तस्माद्यथा राजजातीयाभिमानकर्तृके राजसूये न विप्रवैश्यजातीयाभिमानि...

### प्रकाशः

अविद्या समुच्छेदः । तदुच्छेदकस्य कर्मण इति । समानाधिकरणे षष्ठ्यौ । सजातीयेति । सजातीयाश्च ते स्वयं परे च तेषां विरोधिनस्तथोक्ताः ... अवगतेऽपि तत्त्वे विपर्यासदर्शनेन तन्निवृत्तये कर्माण्यनुष्ठेयानीति समुच्चयं वदतां पक्षं निराकरोति -अत्रोच्यत इति । सत्यमिति तद्व्यवहाराश्चेत्यन्तेन सम्बन्धाति । विदुष इति क्रियाकर्त्रादिर्वास्तव इति निश्चयवतः । ननु ...

## भामती

नोऽधिकारः, एवं द्विजातिकर्तृक्रियाकरणादिविभागाभिमानिकर्तृके कर्मणि न तदनभिमानिनोऽधिकारः । नचानधिकृतेन समर्थेनापि कृतं वैदिकं कर्म फलाय कल्पते वैश्यस्तोम इव ब्राह्मणराजन्याभ्याम्, तेन दृष्टार्थेषु कर्मसु शक्तः प्रवर्तमानः प्राप्नोतु फलं दृष्टत्वात् । अदृष्टार्थेषु तु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति नोपासनाकार्ये कर्मापेक्षा ।

स्यादेतत्—मनुष्याभिमानवदधिकारिके कर्मणि विहिते यथा तदभिमानरहितस्यानधिकारः, एवं निषेधविधयोऽपि मनुष्याधिकारा इति तदभिमानरहितस्तेष्वपि नाधिक्रियेत पश्वादिवत् । तथा चायं निषिद्धमनुतिष्ठन् न प्रत्यवेयात् तिर्यगादिवदिति भिन्नकर्मतापातः ।

मैवम्,—न खल्वयं सर्वथा मनुष्याभिमानरहितः, किन्त्वविद्यासंस्कारानुवृत्त्याऽस्य मात्रया तदभिमानोऽनुवर्ततेऽनुवर्तमानं च मिथ्येति मन्यमानोन श्रद्धत्त इत्युक्तम् । किमतः ? यद्येवम् एतदतो भवति—विधिषु श्राद्धो

### प्रकाशः

विदुषो न क्रियाकर्त्रादौ वास्तवत्वस्य निश्चयोऽपि तु बाधितत्वस्येत्याशङ्क्य यादृशो विद्वानत्रापेक्ष्यते तादृशमाह—क्रिया कर्त्रादीति । विद्वस्यमान इति विद्वान् विद्वानिवाचरतीत्यर्थे विहितेन क्यङा विद्वदाभासो ब्रह्मज्ञानशून्य इत्यर्थो लभ्यते । 'अत एवेति' यतोऽविद्वान् कर्मकाण्डेऽभिमतोऽधिकारी अतएवेत्यर्थः । वर्णयाम्बभूवेति । प्राक् च तथाभूतात्मविज्ञानादित्यादिनेत्यर्थः । नन्वेवं लौकिकेऽपि कर्मणि न प्रवर्त्तेतेत्यत आह—तेनेति । वैदिके कर्मणि श्रद्धाया अप्यपेक्षणात्तदभावे न प्रवृत्तिः, न त्वेवं लौकिकेऽपीत्यर्थः । यदि ब्राह्मणत्वादौ मिथ्यात्वप्रत्ययवन्तमश्रद्दधानं पुमांसं नाधिकरोति विधिशास्त्रं तदा निषेधशास्त्रमपि तं नाधिकुर्यात्तथाचातिप्रसङ्ग इत्याशङ्कते—स्यादेतदिति । भिन्नकर्मतपात इति । भिन्नमुल्लङ्घितं शास्त्रनिषिद्धं कर्म येन स तथा तस्य भावस्तत्ताऽतिक्रान्तनिषेधतापात इत्यर्थः । समाधत्ते—मैवमिति मात्रया—संस्कारांशेना । श्राद्धः श्रद्धावान् । मनुष्याद्यभिमानेनेति । "इत्थंभूतलक्षणे" तृतीयया

भामती

धिकारी नाश्राद्धः । ततश्च मनुष्याद्यभिमानेन श्रद्दधानो न विधिशास्त्रे-
णाधिक्रियते । तथा च स्मृतिः—'अश्रद्धया हुतं दत्तम्' इत्यादिका ।
निषेधशास्त्रं तु न श्रद्धामपेक्षते, अपि तु निषिध्यमानक्रियोन्मुखो नर
इत्येव प्रवर्तते । तथाच सांसारिक इव श्रद्धावगतब्रह्मतत्त्वोऽपि निषेधमति-
क्रम्य प्रवर्तमानः प्रत्यवैतीति न भिन्नकर्मदर्शनाभ्युपगमः । तस्मान्नो-
पासनायाः कार्ये कर्मापेक्षा । अत एव नोपासनोत्पत्तावपि निर्विचिकि-
त्सशाब्दज्ञानोत्पत्त्युत्तरकालमनधिकारः कर्मणीत्युक्तम् । तथा च श्रु-
तिः' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । तांस्त्विदा-
नीमनुपयोग एव सर्वथेह कर्मणाम्, तथा च विविदिषन्ति यज्ञेनेत्या-
द्याः श्रुतयो विरुध्येरन्, न आरादुपकारकत्वात् कर्मणां यज्ञादीनाम्

प्रकाशः

तदुपलक्षितोऽर्थः । न श्रद्दधान इति—अत्र नञो लोपप्रसङ्गेन नञ् समासा-
भावेऽपि नशब्देन 'सुप्सुपा इतिसमासः, क्वचित् 'अश्रद्दधान' इत्यपि पाठः। इद-
नरस्याः कर्मापेक्षेत्यादिनोपस्थापितयोः पक्षयोः प्रथमः कार्योपयोगपक्षो निराकृतः
सम्प्रति-'उपासनोत्पत्तौ कर्मापेक्षा' इति द्वितीयं पक्षं कक्षीकरोति अतएवेति।
यतोऽवगतब्रह्मभावं पुरुषं न कथंचिदधिकर्तुमर्हन्ति कर्मविधयोऽतो
ब्रह्मज्ञानानन्तरं कर्मानुष्ठानासंभवात् नोपासनोत्पत्तौ कर्मापेक्षेत्यत
न द्वितीयोऽपि कल्प इत्यर्थः । स्पष्टी करोति ।
निर्विचिकित्सेति । न कर्मणेत्यादि । पितृमनुष्यदेवलोकप्राप्तिहेतुभिः यथा-
क्रमं कर्मप्रजाधनशब्दवाच्यैर्नामृतत्वमासादितवन्तः किन्तु त्यागसाध्य-
ज्ञानेनैवेत्यर्थः । भवति चात्र श्रुत्यन्तरं 'पुत्रेणैवायं लोको जय्यो विद्यया देवलोकः
कर्मणा पितृलोकः इति ( अत्र विद्यया देवतोपासनया ) तस्मान्न कर्मसाध्यो
मोक्षः तदुक्तं स्वाराज्यसिद्धौ

आविद्यो ह्येष बन्धो विरमति न विना वेदनं कर्मजालैः ।
मालोद्भूतोऽहिरस्तं व्रजति किमु नमस्कारमन्त्रौषधाद्यैः ॥
एवं निश्चित्य नागस्त्वचमिव विधिना कर्मबन्धं विधूय ।
ज्ञानोपाये गुरुश्रीचरणमधिगतः सेवमानो यतेत ॥ इति ।

"एष बन्धो विना ज्ञानं न नश्यति नहि मालायां प्रतीयमानः सर्पो नमस्कार-

## भामती

तथाहि—'तमेतमात्मानं वेदानुवचनेन' नित्यस्वाध्यायेन 'ब्राह्मणा विविदिषन्ति' वेदितुमिच्छन्ति, न तु विदन्ति। वस्तुतः प्रधानस्यापि वेदनस्य

## प्रकाशः

रादिना नश्यति किंत्वधिष्ठानज्ञानेनैवेत्यवधार्य यथा नागः सर्पः, त्वचम् कञ्चुकं परित्यजति तथा संन्यासविधिपूर्वकं कर्मबन्धनं विधूय, त्यक्त्वा ज्ञानलाभाय गुरुचरणमेव सेवेतेति भावः।

इह जन्मनि जन्मान्तरे वाऽनुष्ठितं कर्म स्वजन्यसत्त्वशुद्धिसमुपजातविविदिषाद्वारेण परम्परया ज्ञानमुपकरोतीति सिद्धान्तयितुं भूमिकामारचयति—तत्किमिति। आराच्छब्दोऽत्र दूरार्थकः परम्परयोपकारकत्वमित्यर्थः। एतदुपपादयति—तथाहीत्यादिना। नतु विदन्तीति—विदन्तीत्यस्य श्रुतावनुक्तत्वान्न वेदनेन यज्ञादीनामन्वयः, तस्मान्न साक्षात् कर्मणां ब्रह्मज्ञानं फलं! किन्तु विविदिषैवेत्यर्थः

## विकासः

न तु विदन्तीति। अयमाशयः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतौ विविदिषन्तीत्याख्यतेन भावना प्रतीयते तत्र करणाकाङ्क्षायां वेदानुवचनेन यज्ञेन दानेनेत्यादितृतीयाऽभिहितकरणभावा यज्ञादयः सम्बध्नन्ति, भाव्याकाङ्क्षायां च शब्दतः प्राधान्यादिच्छैवान्वेति, इच्छायां च विषयतया वेदनम् तथाच यज्ञादिकरणिकया भावनया विविदिषां 'वेदनेच्छां, भावयेयुरित्युक्तवाक्यार्थः सम्पद्यते, इत्थं च यजेतेत्यादौ धात्वर्थयागादेः करणत्वेनान्वयवदिहेच्छाया धात्वर्थीभूतायाः न करणत्वेनान्वयः न वा वेदनस्य भाव्यत्वेन, यदि हि—'करणान्तरं न श्रूयेत' तदेच्छैव करणत्वेन वेदनं च भाव्यत्वेन, फलत्वेनान्वियात् न त्वेतदस्ति, अपि तु श्रूयन्त एव वेदानुवचनयज्ञादयस्तृतीयया करणभावं प्रतिपाद्यमानाः योग्यतादिमन्तः प्रधानीभूतेच्छान्वयमपेक्षमाणाः पदार्थाः अतस्त एवान्वेतुमर्हन्ति तस्मात्प्रत्यक्षं यज्ञादीनां करणत्वमुपेक्ष्येच्छायाः करणत्वमुपेत्य मत्वर्थलक्षणामङ्गीकृत्य च यज्ञादिमत्या विविदिषया वेदनं भावयेदित्येवंरूपोऽर्थो न युक्तः श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्, तस्मात् विविदिषाऽन्वय पक्ष एव श्रेयान्। भाष्यकारोऽपि विविदिषान्वयपक्षमेवाभिप्रैति अतएव सर्वापेक्षाधिकरणे—'विद्या सम्प्रयोगात् प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनि' इति वक्ष्यति तु शब्देन पूर्वस्मिन् पक्षेऽरुचिं द्योतयन्। नचेच्छायाः विषयसौन्दर्यलभ्यतया तदर्थं कर्मवैफल्यम्, ब्रह्मविचारप्रवृत्तिपर्यन्तायास्तस्याः प्रतिबन्धक-

## विकासः

दुरितनिवर्हणमन्तरेणाशक्यतया दुरितनिवर्हणद्वारा कर्मणामिच्छायामुपयोगात् तदेतद-नुपदमेव वक्ष्यति—'नित्यकर्मानुष्ठानाद्धर्मोत्पाद' इत्यादिना।

अत्र विविदिषायाः कृते न कर्मानुष्ठानं संभवति उद्देश्यरूपां ताम्विना तत्साधनेषु कर्मसु प्रवृत्त्यसम्भवेनेच्छायाः कर्मादिभ्यः पूर्वसिद्धत्वात् इत्याशङ्क्य, इच्छा द्विविधा— तत्राद्या औन्मुख्यलक्षणा साधारणी प्रथमं जायते यदनन्तरं यज्ञादिकमनुतिष्ठति यज्ञादेः साधनीभूता, द्वितीया तु यज्ञाद्यनुष्ठानानन्तरं तत्फलभूतोत्कटेच्छारूपा यत्र यज्ञादयो भवन्ति कारणानीति इच्छायाः द्वैविध्यं परिकल्प्य परिमले सिद्धान्तलेशे च समाधानं कृतमप्ययदीक्षितैः, तन्न मनोरमम्; नहि विविदिषामुद्दिश्य कर्माण्यनुतिष्ठति कश्चित् विपश्चित् अपितु नित्यनैमित्तिकान्येवानुष्ठीयमानानि फलाभिसन्धिरहितानि ईश्वरार्पणबुद्ध्या वा' क्रियमाणानि तानि कर्मान्तराणि वा तथाविधानि उपात्तदुरितनाशान्तःकरणशुद्धिद्वारा विविदिषोत्पत्तिपर्यवसानानि भवन्ति तस्मात् अप्ययदीक्षितानां पूर्वत्र समाधाने उभे असंगते एव इत्यवधेयम्।

## भामती

प्रकृत्यर्थतया शब्दतो गुणत्वादिच्छायाश्च प्रत्ययार्थतया प्राधान्यात् प्र-धानेन च कार्यसम्प्रत्ययात्। नहि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधान-

## प्रकाशः

**शब्दतो गुणत्वादिति** प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यमितिनियमात्। **प्रधानेन चेति**। प्रत्ययार्थतया प्रधानेनेच्छया आख्यातोपात्तभावनारूपस्य कार्यस्य संप्रत्ययात् समन्वयादित्यर्थः। तत्र पुरुषस्य। **प्राधान्यादिति**। नचेच्छेष्यमाणवाचकपदयोः समभिव्याहारे इष्यमाणे एव भवति प्रत्ययार्थस्य करणत्वादेरन्वयः, दृश्यते हि अश्वेन जिगमिषतीत्यादाविष्यमाणे धात्वर्थे गमनादौ करणत्वान्वयः तस्मादिहापि वेदनान्वय एव युक्त इति वाच्यम्, तत्र हि योग्यताविरहान्नेच्छायामन्वयः सम्भवति इह तु योग्यतासत्त्वात्कुतो नेच्छायामन्वयः? नहि वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वस्य बाधादन्वयबोधविरहे जलेन सिञ्चतीत्यादावपि नान्वयबोध इति कश्चिदभ्युपैति। तस्मादत्र योग्यतासत्त्वात्प्रधानीभूतायामिच्छायामेव यज्ञादिकरणकत्वान्वयो युक्त इति।

## विकासः

प्रधानेन चेति। वेदनान्वयवादिनो विवरणानुसारिणस्तु अश्वेन जिगमिषतीत्यादौ गमनेऽश्वकरणत्वान्वयदर्शनात्, विविदिषन्तीत्यत्र वेदने एव यज्ञादीनामन्वयः, तर्हि

## विकास:

यावद्विद्योदयं कर्मानुष्ठानापत्त्या 'त्यजतैव हि तज्ज्ञेयम्' 'न कर्मणा न प्रजया धनेन' इत्यादि श्रुतिप्रसिद्ध कर्मत्यागरूपसन्यासस्य विद्यार्थत्वविरोधः एवम्

यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ इति मन्वादिवचनविरोधः

एवम्—
प्रत्यग्विविदिषा सिद्धयै वेदानुवचनादयः ।
ब्रह्मावाप्त्यै तु तत्त्याग ईप्सन्तीतिश्रुतेर्बलात् । इति वार्तिकविरोधः

एवम्—
प्रत्यक् प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ इति ।

नैष्कर्म्यसिद्धिविरोधश्चेति वाच्यम् चेतःशुद्धिविविदिषापर्यन्तं कर्मानुष्ठानं ततः सन्यास इति क्रमेण कर्मसंन्यासाभ्यां विद्योत्पत्तेरुपगमात् । अथोक्तरीत्यैतत्पक्षेऽपि विविदिषापर्यन्तमेव कर्माण्यनुष्ठेयानि भवन्तीति पक्षद्वयं समानमिति वृथा वेदनान्वयकथा युक्तिविरुद्धाऽऽश्रीयते इति चेदत्राहुः—यदा विविदिषाद्वारा कर्मणां ब्रह्मज्ञानजनकत्वमुपेयते तदा विविदिषानन्तरं कर्माकरणेऽपि पूर्वानुष्ठितान्येव कर्माणि विशिष्टगुरुलाभनिर्विघ्नश्रवणमननसाधनानि सम्पाद्यावश्यं विद्योत्पादकानि भवन्ति, विविदिषाऽन्वयपक्षे तु श्रवणादिप्रवृत्तिजननसमर्थोत्कटेच्छासम्पादनमात्रेण कर्मणां कृतार्थतेति नावश्यं विद्योत्पत्तिरिति विशेषस्तस्माद्वेदनान्वयपक्ष एव युक्त इति ।

अत्रेदं समीक्ष्यतेऽस्माभिः—प्रतिबन्धकीभूतैनो निवृत्तावन्तःकरणशुद्धौ संसारासारतादर्शने विरतौ सत्यामुत्कटेच्छारूपायां विविदिषायां सम्पन्नायां ब्रह्मसाक्षात्कारस्योत्पत्तिः पक्षद्वयेऽपि समानैव, नहि कर्मणां ब्रह्मज्ञानजनकत्वस्वीकारमात्रेण ब्रह्मज्ञानजनकत्वं स्यात् अस्वीकारे तु न स्यात इति शक्यते वक्तुम्, सामग्री हि कार्यं जनयति, तत्र स्वीकारास्वीकारावप्रयोजनकौ नहि स्वीकारमात्रेण वस्तुस्वभावो विपरिवर्त्तते तथासति मतभेदेनात्मापि वस्तुतोऽनेकविधो भवेत्, एवं च वेदनान्वयपक्षेऽपि विविदिषोत्पत्तेः प्राग्जातानि नित्यनैमित्तिकानि कर्माणि यानि चेतो विशुद्धिद्वारा विविदिषाब्रह्मज्ञानयोर्जनकानि तान्येव कर्माणि विविदिषान्वपक्षेऽपि चेतोविशुद्धिद्वारा विविदिषोत्पादकत्वेनावस्थितानीति कुतो न ब्रह्मसाक्षात्कार उदीयात् ? नहि कर्मणां ज्ञानं कारणं येन कर्मज्ञानाभावे न ब्रह्मसाक्षात्कारः स्यात् किंतु दाहं प्रति वह्न्यादेरिव स्वरूपसन्त्येव तानि कर्माणि कारणानि पक्षद्वयेऽपि संवृत्तानीति पक्षद्वयेऽपि न फलभेदः, प्रत्युत वेदनान्वयपक्षे प्रदर्शितसर्वापेक्षाधिकरणोक्तभाष्यस्वारस्य विरोधः प्रत्यक्षं यज्ञादीनां करणत्वमुत्सृज्येच्छायाः करणत्वकल्पनायामनुभवविरोधः शब्दमर्यादाभङ्गश्च; नहि अश्वेन जिगमिषतीत्यादौ

## विकासः

क्वचित् प्रत्यक्षतः प्रधानसम्बन्धबाधेन क्वचिदप्रधानसम्बन्धेऽभ्युपगम्यमानेऽबाधितस्यापि प्रधानसम्बन्धस्य बाधः कैश्चिदानुभविकैरास्थातुं युक्तः नहि 'वह्निना सिञ्चति' इत्यादौ संक वह्निकरणकत्वबाधेनान्वयबोधविरहे 'पयसा सिञ्चति' इत्यादावपि नान्वयबोधः, एवं विविदिषायामिव ब्रह्मज्ञानेऽपि बहुतरकर्मजन्यबहुतरादृष्टजन्यत्वकल्पनेऽतिगौरवं च प्रदर्शितश्रुतहान्यादिदोषश्चेति भगवतो वाचस्पतेर्मतमेव सर्वत्र युक्तियुक्तमवगन्तव्यमिति ।

एतत्पक्षे च श्रुत्यादिषु कर्मजन्यत्वस्य मोक्षे ब्रह्मज्ञाने च यो निषेधः स निरनुपपन्नो न तु वेदनान्वयपक्षे, एवं च सति 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इत्यादि विविदिषोत्पादकत्वेन परम्परया प्रयोजकत्वार्थकं न तु कारणत्वार्थकं कर्मजन्यत्वे मोक्षस्यानित्यत्वापत्तेरिति भवति सर्वमवदातम् ।

## भामती

मपि राजा पुरुषविशेषणतया शब्दत उपसर्जनं आनीयतेऽपि तु पुरुष एव, शब्दतस्तस्य प्राधान्यात् । एवं वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधानम् । एवं तपसोऽनाशकस्य, कामानशनमेव तपः । हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति, न तु सर्वथाऽनश्नतो, मरणात् । नापि चान्द्रायणादितपःशीलस्य, धातुवैषम्यापत्तेः । एतानि च नित्यान्युपात्तदुरितनिबर्हणेन पुरुषं संस्कुर्वन्ति । तथा च श्रुतिः- 'स ह वा आत्मयाजी यो वेद इदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इति । अनेनेति प्रकृतं यज्ञादि परामृशति । स्मृतिश्च'-यस्यैतेऽष्टाचत्वारिंशत्संस्कारा' इति । नित्यनैमित्तिकानुष्ठानप्रक्षीणकल्मषस्य च विशुद्धसत्त्वस्याविदुष एव उत्पन्नविविदिषस्य ज्ञानोत्पत्तिं दर्शयत्याथर्व-

## प्रकाशः

कर्मणामुपयोगमाह—एतानि चेति । संस्कुर्वन्तीति । ततो भवति विविदिषेति भावः । उक्तार्थे शतपथश्रुतिं प्रमाणयति—सहवा इत्यादि । अनेन कर्मणा इदं ममाङ्गम् 'अन्तःकरणम्' संस्क्रियते पुण्येन चोपधीयते, उपचीयते इति विदित्वा यश्चरति करोति कर्म स आत्मशुद्ध्यर्थं यजन् आत्मयाजी स च देवयाजिनः काम्यकर्मकर्त्तुः सकाशात् श्रेयानित्यर्थः । यदुक्तं समुच्चयवादिना सर्वेषां नित्यानां काम्यानां च कर्मणां ज्ञानकार्ये मोक्षे समुच्चय इति तदपि निरस्तमिति-

## भामती

णो श्रुतिः--'विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान' इति । स्मृतिश्च--'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यादिका । क्लृप्तेनैव च नित्यानां कर्मणां नित्येहितेनोपात्तदुरितनिबर्हणेन पुरुष-संस्कारेण ज्ञानोत्पत्तावङ्गभावोपपत्तौ न संयोगपृथक्त्वेन साक्षादङ्गभावो युक्तः कल्पनागौरवापत्तेः । तथा हि नित्यकर्मानुष्ठानाद्धर्मोत्पादः ततः पाप्मा निवर्तते, स ह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्याति-लक्षणेन विपर्यासेन चित्तसत्त्वं मलिनयति, अतः पापनिवृत्तौ प्रत्यक्षो-पपत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्यानित्याशुचिदुःख-रूपतामप्रत्यूहमवबुध्यते, ततोऽस्यास्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते

### प्रकाशः

क्लृप्तेनैवेति । किं काम्यानां कर्मणां क्लृप्तेनैवोपकारेण ज्ञाने उपयोगः, उत कल्प्येन नाद्यः काम्यानां स्वर्गादिफले क्लृप्तोपकारवतां ज्ञानजनकत्वानुपपत्तेः । न द्वितीयः, उप-कारान्तरस्यापि कल्पनेऽदृष्टद्वयापत्त्या कल्पनागौरवापत्तेः, तस्मान्नित्यानामेव कर्म-णामुपात्तदुरितनिबर्हणेन ज्ञाने उपयोगो न सर्वेषां कर्मणामित्यर्थः । संयोगपृ-थक्त्वेनेति । एकस्य तूभयत्वे संयोगपृथक्त्वम् इति जैमिनीयं सूत्रम्, ( सू० ५ अ० ४ पा० ३ ) तत्प्रतिपादितयुक्त्येत्यर्थः । तत्र हि इदं विचारितम् अग्निहोत्रे श्रूयते—'दध्नेन्द्रियकामस्य जुहुयात्' इति तत्र दध्नः काम्यत्वान्न नित्याग्निहोत्रे दधि प्रयोक्तव्यम्, किन्त्वन्यदेव किञ्चिद्द्रव्य-मिति चेन्मैवम्; 'दध्ना जुहोति' इत्यस्मिन्वाक्यान्तरे कामसंयोगमनुपन्यस्य नित्यहोमसम्बन्धितया दधिविधानात् एकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं च न विरुध्यते इति । प्रकृते च नित्यानां कर्मणां ज्ञाने विनियोजकं वाक्य मस्तीत्यतोऽस्तु तेषां ज्ञाने विनियोगः, एवमपि क्लृप्तेनोपात्तदुरितध्वंसेनारादुप-कारकतयोपपद्यमानानीमानि कर्माणि न साक्षादङ्गभावं प्रतिपद्यन्ते, साक्षादङ्गत्वे हि पापक्षयः ज्ञानानुकूलमदृष्टं चेति द्वयं कल्पनीयमितिगौरवम्, पापक्षयः फलम् 'ततस्तु तं पश्यति' इत्युपदर्शितश्रुतिसिद्धं ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः, इत्यादिस्मृतिसिद्धञ्च नापह्नोतुं शक्यमिति भावः । नित्येहितेनेति सर्वदाभिमतेन । नित्यकर्मणां परम्परया ज्ञानोपयोगमुपपादयति—तथाहीति । सहि पाप्मा हि

## भामती

ततस्तज्जिहासोपावर्तते, ततो हानोपायं पर्येषते पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इत्युपश्रुत्य तज्जिज्ञासते, ततः श्रवणादिक्रमेण तज्जानातीत्यारादुपकारकत्वं तत्त्वज्ञानोत्पादं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम्। इममेवार्थमनुवदति भगवद्गीता ।

### प्रकाशः

संसारे शरीरादौ । चित्त सत्वम् चित्तगतं सत्त्वगुणम् । प्रत्यक्षोपपत्तीति प्रत्यक्षोपपत्त्योः प्रवृत्तिद्वारं यच्चित्तगतं सत्त्वं तदवरोधकस्य पापकपाटस्य निवृत्तिरुपावरणे उद्घाटने सतीत्यर्थः । दृष्टे विषये संसारस्यासारत्वं प्रत्यक्षग्राह्यमदृष्टे विवृतूपपत्त्या । आरात् परम्परया ।

### विकासः

इममेवार्थमिति । एतेन गीतायाः संक्षेपतस्तात्पर्यं प्रदर्शितम् । गीतायां हि क्रमेण कर्मोपासना(भक्ति)ज्ञानानि निःश्रेयससाधनानि प्रदर्शितानि तत्तदधिकारिणां कृते, तत्र कर्म न साक्षान्निःश्रेयससाधनं किन्तु अन्तःकरणशोधनादिद्वारा परम्परया ज्ञानोपकारकं ज्ञानस्यैव चाज्ञानतत्कार्यनिवर्तकत्वमित्युद्घोषितमिहापि पुरस्तात् । अन्येष्वपि वेदान्तग्रन्थेषु—

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥' ( श्वेताश्वतर )।

'तरति शोकमात्मवित्, 'नान्यः पन्था विद्यतेऽयनाय' इत्यादि श्रुतिस्मृतितिहासपुराणेषु च कर्मणस्तु न साक्षान्निःश्रेयससाधनत्वमज्ञानाविरोधित्वात् । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्युं ते पुनरेवापियन्ति ॥' ( मुण्डक )

अस्याः श्रुतेरयमर्थः—प्लवाः प्लवतुल्याः, यथा हि क्षुद्रनदीसंतरणार्थं काष्ठादिनिर्मिताः अदृढाः प्लवाख्याः नावः न समुद्रं पारयितुं समर्थाः भवन्ति तथाऽमी यज्ञरूपाः प्लवाः भवाब्धिं पारयितुं न प्रभवन्ति येषु यज्ञकर्मसु अष्टादश ( होत्रध्वर्युब्रह्मोद्गातृप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणाच्छावाकनेष्टाग्नीध्रप्रतिहर्तृग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्या इति षोडश ऋत्विजः पत्नी यजमानश्च ) उक्तं कर्म उक्ताः कर्मकर्तारः, एतत्कर्म अवरमपकृष्टं ये मूढा अज्ञाः 'श्रेयः' 'मोक्षसाधनं मत्वा अभिनन्दन्ति हर्षं प्राप्नुवन्ति ते किञ्चित्कालं स्वर्गे स्थित्वा भूय एव जरासहितं मरणमाप्नुवन्तीति । न कर्मणा न प्रजया धनेनेत्यादि

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥'

इत्यादि श्रुतिस्मृतिभ्यश्च, तस्मान्न कर्मणो ब्रह्मज्ञानसाधकत्वम्, फलाभिसंधिरहितकर्मणश्चेतो विशुद्धेः प्रागेव कर्तव्यतायाः आरुरुक्षोर्मुनेर्योगमित्यभिदधता परमकारुणिकवता संदेहमपनयताऽभगवताऽभिहितत्वात् ।

विकासः

कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरैः कृतम्।
न कर्मणामनारम्भान्नैःकर्म्यं पुरुषोऽश्नुते!
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥'

इत्यादीनि गीतावाक्यानि तु ब्राह्मणेतरपराणि क्षत्रियादीनां संन्यासानधिकारात्। अतएव कर्मप्रकरणे गीतायामर्जुनस्य जनकस्यैव चोल्लेखोऽकारि भगवता नान्यस्य, तस्मादधिकारिभेदेनोपपत्तेः, परम्परयोपकारकपराणि अशुद्धान्तःकरणपराणि वा भगवद्वाक्यानीत्यतश्च न गीतायाः पूर्वापरविरोधः।

उपासनारूपा भक्तिरपि न साक्षान्निःश्रेयससाधनम्, भगवतैव हि 'भक्त्या मामभिजानाति' इति ब्रुवता तस्याः ज्ञानसाधनत्वस्योक्तत्वात्, विविदिषाद्वारा कर्माणि ज्ञाने उपयुज्यन्ते-: भक्तिस्तु साक्षाज्ज्ञाने उपयुज्यतेऽतएव कर्मानन्तरं भक्तेरुपन्यासो भगवता कृतः, अतश्च साक्षान्निश्रेयससाधनस्य ज्ञानस्यैव सर्वातिशायित्वमतस्तत्रैव परमतात्पर्यम्। तदुक्तं भगवतैव— "उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्" इति गीतोपदेशानन्तरमर्जुनस्य युद्धे कर्मणि प्रवृत्तिस्तु संन्यासद्वारा ज्ञानमार्गानधिकारित्वात् युज्यते—

'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥'

इति स्मृतेः। तत्र—

'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः, इति श्रुतेः "मुखजा बाहुजा ऊरुजा ब्राह्मणाः क्षत्रियाः वैश्याः क्रमेण बोध्याः"। अथैवं तत्र कर्ममात्रमुपदिशेत् भगवान् न ज्ञानं भक्तिं चेति चेत् स्यादप्येष पर्यनुयोगो ? यदि अर्जुनमात्रमुद्दिश्य गीताशास्त्रं प्रणयेत्, न त्वेवमपि त्वन्येषामपि जीवानामुद्दिधीर्षत्येत्यतो यथाऽधिकारं कर्मोपासनाज्ञानानि त्रीण्यपि श्रेयः साधनानि प्रतिपादयन्नानुयोगमर्हति भगवानिति।

तत्र कर्मणो ज्ञानेन सहैककालिकत्वासंभवेऽपि भक्तिकर्मणोः परस्परं संभवत्येककालत्वम्, विरोधविरहात् अतएव 'भक्तोऽसि मे सखा च'इत्यभिदधतः भक्तिमन्तमर्जुनं कर्मसु प्रवर्त्तयतो भगवतो वाक्यानि न विरुध्यन्ते इति। तस्माद्गीतोपदेशानन्तरमर्जुनस्य युद्धे प्रवृत्त्या न कर्मणि परमतात्पर्यं शक्यते कल्पयितुमिति भवति सर्वमनवद्यम्।

## शाङ्करभाष्यम्

**यथा च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य विक्षितत्वान्न तथेह क्रमो विवक्षितः शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावात्।**

## भामती

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य यस्यैव शमः कारणमुच्यते ॥"

एवं चाननुष्ठितकर्मापि प्राग्भवीयकर्मवशाद् यो विशुद्धसत्त्वः संसारासारतादर्शनेन निष्पन्नवैराग्यः कृतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठानादेव तत्सिद्धेः । इममेव पुरुषधौरेयभेदमधिकृत्य प्रवृत्ते श्रुतिः—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति । तदिदमुक्तम्—कर्मावबोधात् प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति । अत एव न ब्रह्मचारिण ऋणानि सन्ति येन तदपाकरणार्थं कर्मानुतिष्ठेत् । एतदनुरोधाच्च 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति गृहस्थः संपद्यमान इति व्याख्येयम्, अन्यथा 'यदि वेतरथा ब्रह्मचर्यादेव' इति श्रुतिर्विरुध्येत । गृहस्थस्यापि च ऋणापाकरणं सत्त्वशुद्ध्यर्थमेव । जरामर्यवादो भस्मान्ततावादोऽन्त्येष्टयश्च कर्मजडानविदुषः प्रति, न त्वात्मतत्त्वपण्डितान् । तस्मात्सम्यक्

### प्रकाशः

आरुरुक्षोरिति । यो ध्यानयोगमारोढुमिच्छति परं तु तस्य मनः रततः समासक्तं न स्थिरपदं लभते तादृशस्य मुनेः कर्मफलत्यागिनः फलेच्छारहितं कर्म ध्यानसाधनम्, यदा तु ध्याने मनः स्थिरपदं लभते तदा तस्य कर्मणः कस्य चिद्भवत्यावश्यकतेत्याह-योगारूढस्येति । शमः सर्वकर्मभ्यो निवृत्तिः योगारूढत्वस्य साधनमित्यर्थः । यावत् यावत् कर्मभ्य उपरमते तावत् तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयतेऽतो विविदिषा दृढा भवति एवं सति झटिति योगारूढत्वं सम्पद्यते । तदुक्तं व्यासेन—

नैतादृशं ब्राह्मणस्यास्ति वित्तम् यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥' इति

'अत्र स्थितिः, स्थैर्यम्, दण्डनिधानम्, अहिंसनम्, आर्जवम् अवक्रत्वम्' ।

## भामती

न्तर्यमथशब्दार्थो तद्विना ब्रह्मजिज्ञासा न भवति यस्मिंस्तु सति भवन्ती भवत्येव, 'न चेत्थं कर्मावबोधः, तस्मान्न कर्मावबोधानन्तर्यमथशब्दार्थ इति सर्वमवदातम् ।

स्यादेतत्—मा भूदग्निहोत्रयवागूपाकवदार्थः क्रमः श्रौतस्तु भविष्यति, 'गृही भूत्वा वनी भवेत्' 'वनी भूत्वा प्रव्रजेत्' इति जाबालश्रुतिर्गार्हस्थ्येन हि यज्ञाद्यनुष्ठानं सूचयति । स्मरन्ति च—

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥

निन्दन्ति च—

अनधीत्य द्विजो वेदाननुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ।

इति, अत आह—यथा च **हृदयाद्यवदानानामानन्तर्यनियमः,** कुतः ? 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इत्यथाग्रशब्दाभ्यां **क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः ।** श्रुत्या तथैवानियमप्रदर्शनात् 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा

## प्रकाशः

ब्रह्मचर्यं समाप्य गृही भवेदित्यादिक्रममपहाय पक्षान्तरं श्रुतिः परिगृह्णाति—यदि वेति । इतरथा उत्कटवैराग्ये सति । ऋणानि देवर्षिपितृसम्बन्धीनि । ननु ! जरामर्यं वा एतत्सत्रं यदग्निहोत्रम्, 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिश्रुत्या जरामरणपर्यन्तं कर्मणोऽनुष्ठेयत्वावगमात् कर्मत्यागोनोचित इत्याशङ्क्य पूर्वोदाहृतकर्मत्यागश्रुतिबलात् एतच्छ्रुतेरविद्वद्विषयकत्वमिति समादधाति—जरामर्यवाद इत्यादि 'एतद्वै जरामर्यं यदग्निहोत्रम्, इति श्रुतिबोधितोऽग्निहोत्रविधिः जरामर्यवादः यावज्जीवमग्निहोत्रं जुहोतीति अग्निहोत्रस्य यावज्जीवसम्बन्धबोधको विधिः भस्मान्ततावादः, तं यज्ञपात्रैर्दहन्तीति अग्निहोत्रिणां दाहबोधकोविधिरन्त्येष्टिविधिः । उपसंहरति तस्मादिति ।

## भामती

वनाद्वा' इति । एतावता हि वैराग्यमुपलक्षयति । अत एव 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतिः । निन्दावचनं चाविशुद्धसत्त्वपुरुषाभिप्रायम् । अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन् प्रतिक्षणमुपचीयमानपाप्माऽधोगतिं गच्छतीत्यर्थः ।

स्यादेतत्—मा भूच्छ्रौत आर्थो वा क्रमः पाठस्थानमुख्यप्रवृत्तिप्रमाणकस्तु कस्मान्न भवतीत्यत आह——

### प्रकाशः

पूर्वोक्तयुक्त्या धर्मब्रह्मज्ञानयोर्हेतुहेतुमद्भावे निराकृतेऽपि क्त्वाप्रत्ययबलात् पौर्वापर्यमाशङ्कते— स्यादेतदिति । आर्थः क्रम इति-क्रमो नाम पौर्वापर्यं तन्नियामकानि षट् प्रमाणानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि मीमांसाशास्त्रे प्रसिद्धानि सोदाहरणानि प्रसङ्गात्प्रदर्श्यन्ते, तत्र अग्निहोत्रयवागूपाकयोरार्थः क्रमः, यद्यपि अग्निहोत्रं जुहुयादिति पूर्वमस्ति वाक्यं यवागूं पचतीति पश्चात् अतोऽग्निहोत्रानन्तरं यवागूपाकोऽनुष्ठातुमुचितः, तथाऽपि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमेवानुष्ठीयते, नहि होमानन्तरं क्रियमाणस्य यवागूपाकस्य किञ्चित्प्रयोजनं दृष्टमुपलभ्यतेऽतस्तत्र श्रौतक्रममपहायार्थक्रमः आश्रीयते, प्रकृते श्रौतक्रमप्रयोजकस्यार्थक्रमप्रयोजकस्य च प्रमाणस्याभावेन माऽस्तु तथा क्रमः पाठादिप्रमाणकस्तु स्यादिति पूर्वपक्षिणामभिप्रायः । पाठस्थानेत्यादि । पदार्थबोधक वाक्यानां यः क्रमः स पाठक्रमः, येन क्रमेण वाक्यानि पठितानि तानि तेनैव क्रमेणार्थं प्रत्याययन्ति यथा प्रत्ययं च पदार्था अनुष्ठीयन्ते, सच पाठो द्विविधः मन्त्रपाठो ब्राह्मणपाठश्च तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमाद्यः क्रम आश्रीयते स मन्त्रपाठात् । प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधायकवाक्याद्यः क्रम स ब्राह्मणपाठात् । प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ अतिदेश वचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये, यस्य देशे तेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चात्, 'अयं यः क्रमः स स्थानक्रमः, स्थानं नाम उपस्थितिः यस्य हि देशे यदनुष्ठीयते तत्पूर्वतने पदार्थे कृते तद्देशस्थ एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । प्रधानक्रमेण योऽङ्गानां क्र

## शाङ्करभाष्यम्

धर्मब्रह्मजिज्ञासयोः फलजिज्ञास्यभेदाच्च अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षम्, निःश्रेयसफलं तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम्, चोदनाप्रवृत्तिभेदाच्च या हि

## भामती

शेषशेषित्वे प्रमाणाभावात् शेषाणां समिदादीनां शेषिणां चाग्नेयादीनामेकफलवदुपकारोपनिबद्धानामेकफलावच्छिन्नानामेकप्रयोगवचनोपगृहीतानामेकाधिकारिकर्तृकाणामेकपौर्णमास्यमावस्याकालसंबद्धानां युगपदनुष्ठानाशक्तेः सामर्थ्यात्क्रमप्राप्तौ तद्विशेषापेक्षायां पाठादयस्तद्भेदनियमाय प्रभवन्ति । यत्र तु न शेषशेषिभावो नाप्येकाधिकारावच्छेदो यथा सौर्यार्यमणप्राजापत्यादीनां, तत्र क्रमभेदापेक्षाऽभावान्न पाठादिः क्रमविशेषनियमे प्रमाणम् अवर्जनीयतया तस्य तत्रागतत्वात् । न चेह धर्मब्रह्मजिज्ञासयोः शेषशेषिभावे श्रुत्यादीनामन्यतमं प्रमाणमस्तीति । ननु शेषशेषिभावाभावेऽपि क्रमनियमो दृष्टो

## प्रकाशः

स मुख्यक्रमः, महप्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः इति । शेषशेषित्वे अङ्गाङ्गिभावे । भाष्योक्तं प्रमाणाभावं व्युत्पादयति शेषाणामित्यादिना । शेषशेषिणोः क्रमापेक्षायां हेतुमाह युगपदनुष्ठानाशक्तेरिति । युगपदनुष्ठानप्रसक्तौ क्रमः स्यात्तत्प्रसक्तिरेव कुतोऽत आह एकपौर्णमासीति— आग्नेयादीनां षण्णाम्मध्ये आग्नेयाग्नीषोमीयोपांशुयाजास्त्रयो यागाः पूर्णमास्या सम्बद्धाः आग्नेयपयोदधियागास्तु त्रयोऽमावास्यया सम्बद्धाः । कालैक्येऽपि यदि कर्ता भिन्नः स्यान्न क्रमः स एव तु नास्तीत्याह—एकाधिकारीति—स्वामि-

## भामती

यथा गोदोहनस्य पुरुषार्थस्य दर्शपौर्णमासिकैरङ्गैः सह, यथा वा 'दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेन यजेत इति दर्शपौर्णमाससोमयोरशेषशेषिणो-रित्यत आह—अधिकृताधिकारे वा प्रमाणाभावात् इ... योजना, स्वर्गकामस्य हि दर्शपौर्णमासाधिकृतस्य पशुकामस्य ... दर्शपौर्णमासक्रत्वर्थापूप्रणयनाश्रिते गोदोहनेऽधिकारः। नो खलु गोदो...

## प्रकाशः

त्वेनाधिकारित्वं तस्यैवानुष्ठातृत्वेन कर्तृत्वम्। एकाधिकारिकर्तृकत्वे हेतुमाह-एकप्रयोगवचनेति प्रयाजादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं ... यजेतेति यदेकं प्रयोगवचनं तेनोपगृहीतानाम्। एकप्रयोगवचनप्र... हेतुमाह-एकफलवदिति एकश्चासौ फलवतः प्रधानस्योपकारस्तस्मिन्, ... चित्य साधनत्वेनोपनिबद्धाः शेषाः एकेन फलेनावच्छिन्ना शेषिणोऽनस्तेषा... प्रयोगवचनोपगृहीतत्वमिति। तद्विशेषापेक्षायाम् सामर्थ्यविशेषापेक्षाया... सौर्यार्यमणेति—सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः, आर्यमणं चरुं निर्वपेत् स्वर्गकामः, प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुः कामः, इत्यादिषु ... पठितेषु क्रतुषु यथा समिदादीनामङ्गानामेकेन पुरुषेण युगपत्करणाशक्त्या क्रमा... पेक्षायां पाठात्क्रमनियमः, एवं क्रतूनामप्येषां पाठक्रमात्क्रमप्राप्तौ, अयं सिद्धा... अङ्गेषु एकप्रयोगवचनादस्ति क्रमाकाङ्क्षा क्रतुषु नानाफलेषु नैकं प्रयोगवच... मस्ति येन ते सर्वे मिलित्वा प्रयुज्येरन्, तस्मादेषामेकप्रयोगवचनाभावात्... क्रमाकांक्षाऽतस्तत्र पुरुषेच्छयैव क्रमः श्रुतौ क्रमपाठस्त्वध्ययनार्थः, ... क्रमेणाध्ययनेऽदृष्टोत्पत्तेरिति। अवर्जनीयतयेति— युगपत्पाठासंभवेनाग... क्रमस्यागतत्वात् तन्नियमोऽध्ययनार्थो नतु क्रत्वर्थ इत्यर्थः। यथा गोदोहनस्य दर्शपूर्णमासप्रकरणे चमसेनापः प्रणयेत गोदोहनेन पशुकामस्येति श्रुतम्... पात्रेण गावो दुह्यन्ते तत् पात्रं गोदोहनमुच्यते तेन पात्रेण तत्र स जलानय... येत् यो दर्शपूर्णमासस्य फलार्थी सन् पशुफलमपि कामयेतेति श्रुत्यभिप्राय... तत्र गोदोहनेनाप्प्रणयनं (जलानयनं) क्रत्वर्थः 'क्रत्वङ्गम्' पुरुषार्थो वेति चिन्ता... पुरुषार्थ एव तत्, पशुकामपदसमभिव्याहारात् काम्यमाने फले पुरुषार्थत्वा... वश्यकत्वात् क्रत्वङ्गत्वे गोदोहनेनाप्प्रणयनमन्तराऽङ्गवैकल्येन क्रतुरनुष्ठा... न निष्पद्येतेति सिद्धान्तः। एवंच दर्शपौर्णमासिकैरङ्गैः सह यस्मा... यस्माच्च पूर्वं चमसेनाप्प्रणयनं क्रियते तेनैव क्रमेण तत्स्थाने चमसेन...

## भामती

द्रव्यमव्याप्रियमाणं साक्षात् पशून् भावयितुमर्हति । न च व्यापारान्तरावेशः श्रूयते यतस्तदङ्गक्रममतिपतेत् । अप्प्रणयनाश्रितं तु प्रतीयते 'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति समभिव्याहारात् योग्यत्वाच्चास्यापां प्रणयनं प्रति । तस्मात् क्रत्वर्थाप्प्रणयनाश्रितत्वाद्गोदोहनस्य, तत्क्रमेण पुरुषार्थमपि गोदोहनं क्रमवदिति सिद्धम् । श्रुतिनिराकरणेनैवेष्टिसोमक्रमवदपि क्रमोऽप्यपास्तो वेदितव्यः ।

शेषशेषित्वाधिकृताधिकाराभावेऽपि क्रमो विवक्ष्येत, यद्येकफलावच्छेदो भवेत्, यथाग्नेयादीनां षण्णामेकस्वर्गफलावच्छिन्नानां, यदि वा जिज्ञास्यब्रह्मणोंऽशोधर्मः स्यत्, यथा चतुर्लक्षणीव्युत्पाद्यं ब्रह्म केनचित्केनचिद्-

### प्रकाशः

प्रणयनं विहाय यत्र गोदोहनपात्रेणापि आनीयन्ते तत्राङ्गाङ्गिभाववैधुर्येऽपि क्रमो यथा भवति तथा धर्मज्ञानब्रह्मजिज्ञासयोरपि स्यादिति प्रश्नार्थः । दर्शपूर्णमासाभ्यामिष्ट्वेति अत्र क्त्वा प्रत्ययेन दर्शपूर्णमासोत्तरकालीनत्वमात्रं सोमयागे गम्यते न तु तयोरस्ति अङ्गाङ्गिभाव एवमङ्गाङ्गिभावमन्तरेणापि धर्मज्ञानब्रह्मजिज्ञासयोः पौर्वापर्यं स्यादिति भावः । अप्प्रणयनाश्रितत्वमुपपादयति नोखल्विति व्यापारान्तरावेश एव कुतो न कल्प्यतेऽत आह—नचेति । अप्प्रणयनाश्रितं त्विति सन्निहितव्यापारसम्बन्धस्य लाभेऽन्यस्य कल्पनमनुचितम्, स्यादपि अप्प्रणयनानाश्रितत्वं यदि तद्योग्यत्वविरहः स्यान्नचैवमस्तीत्याह—योग्यत्वाच्चेति । श्रुतिनिराकरणेनेति यदि वा इतरथेत्युक्तश्रुत्याऽपवादरूपया गृही भूत्वा वनीभवेदित्यादिश्रुतेस्तीव्रवैराग्याभावविषयिकायाः सामान्यशास्त्ररूपाया निराकरणेनेत्यर्थः । इष्टिसोमेति दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेदिति वाक्यविहितेतिशेषः । एकफलावच्छेदः एकफलसम्बन्धः । चतुर्लक्षणीति चतुर्णां लक्षणानां (अध्यायानां) समाहारश्चतुर्लक्षणी शारीरिकमीमांसा । लक्षणेन व्युत्पाद्यत इति । तत्र प्रथमेनाध्यायेन वेदान्तानां ब्रह्मणि समन्वयः द्वितीयेनाविरोधः तृतीयेन ब्रह्मप्राप्त्युपायसाधनम् चतुर्थेन ब्रह्मप्राप्तिलक्षणं फलं व्युत्पाद्यते इत्यर्थः । आग्नेयादिषु यादृशं फलैक्यं यादृशं च शारीरकमीमांसागतानां चतुर्णामध्यायानां जिज्ञास्यैक्यं

## भामती

शेनैकेन लक्षणेन व्युत्पाद्यते, तत्र चतुर्णां लक्षणानां जिज्ञास्यभेदे
परस्परसम्बन्धे सति क्रमो विवक्षितस्तथेहाप्येकजिज्ञास्यतया धर्मब्रह्म-
जिज्ञासयोः क्रमो विवच्येत, न चैतदुभयमप्यस्तीत्याह--फलजिज्ञा-
स्यभेदाच्च। फलभेदं विभजते अभ्युदयफलं धर्मज्ञानमिति
जिज्ञासाया वस्तुतो ज्ञानतन्त्रत्वात् ज्ञानफलं जिज्ञासाफलमिति भावः।
न केवलं स्वरूपतः फलभेदः, तदुत्पादनप्रकारभेदादपि तद्भेद इत्याह-
तच्चानुष्ठानापेक्षं ब्रह्मज्ञानं च नानुष्ठानान्तरापेक्षम्
शाब्दज्ञानाभ्यासान्नानुष्ठानान्तरमपेक्षते, नित्यनैमित्तिककर्मानुष्ठान-
सहभावस्यापास्तत्वादिति भावः । जिज्ञास्यभेदमात्यन्तिकमाह--
भव्यश्च धर्म इति । भविता भव्यः, कर्तरि कृत्यः भविता
भावकव्यापारनिर्वर्त्यतया तत्तन्त्र इति ततः प्राग् ज्ञानकाले नास्ती-
त्यर्थः । भूतं सत्यं सदेकान्ततो न कदाचिदसदित्यर्थः । न के

### प्रकाशः

क्रमोपपादकं तादृशं धर्मब्रह्मजिज्ञासयोर्नास्ति येन क्रमः स्यादित्याह नचै-
तदुभयमिति । ननु ! धर्मजिज्ञासाब्रह्मजिज्ञासयोः फलभेदं प्रसक्तं
विहाय धर्मज्ञानब्रह्मज्ञानयोः फलभेदविवेचनं भाष्यकृतामनुचितमित्याशङ्कां प-
जिहीर्षति—जिज्ञासाया इति । ज्ञानतन्त्रत्वात्—जिज्ञासाया ज्ञानपरार्थत्वा-
ज्ज्ञानफलमेव जिज्ञासाफलमित्यर्थः । फलभेदे वक्तव्ये कारणभेदाभिधानं भा-
सङ्गतमित्याशंकामपाकरोति न केवलमिति । अनुष्ठानान्तरेत्यत्रान्तरशब्दार्थ
शाब्दज्ञानेति । भव्यशब्दस्य भावप्रत्ययान्तत्वे नपुंसकत्वं स्यादत आ
कर्तरीति । भव्यगेयेतिपाणिनिसूत्रेण हि कृत्यप्रत्ययान्ताः भव्यादिशब्दाः क
निपात्यन्ते । भविता यागादिः । भाष्यस्थभूतशब्दस्यातीतार्थकत्वभ्रमं नु-
स्यति भूतं सत्यमिति । ननु मीमांसकैः चोदनाशब्दो विधिवाक्ये एव प्रयु-
तत्कथं ब्रह्मप्रतिपादकस्य सिद्धार्थकस्य वाक्यस्य चोदनाशब्दबोध्यत्वमित्या-

## भामती

स्वरूपतो जिज्ञास्ययोर्भेदो ज्ञापकप्रमाणप्रवृत्तिभेदादपि भेद इत्याह—चोदनाप्रवृत्तिभेदाच्च चोदनेति वैदिकं शब्दमाह विशेषेण सामान्यस्य लक्षणात् । प्रवृत्तिभेदं विभजते—या हि चोदनाधर्मस्येति । आज्ञादीनां पुरुषाभिप्रायभेदानामसम्भवादपौरुषेये वेदे चोदना उपदेशः । अत एवोक्तं 'तस्य ज्ञानमुपदेश' इति । सा च स्वसाध्ये

### प्रकाशः

चोदनापदेनेह वैदिकं शब्दमात्रं लक्ष्यते इत्याह चोदनेति । विशेषेणचोदनाशब्देन । भाष्ये या हि चोदना धर्मस्य लक्षणमित्यादि अस्यायमक्षरार्थः लक्षयति बोधयतीति लक्षणं वाक्यम्, धर्मस्य लक्षणं धर्मस्य प्रतिपादकं स्वर्गकामो यजेतेत्यादि विधिवाक्यम्, तद्रूपया चोदनया स्वर्गकामनियोज्यताकयागानुकूलभावनां बोधयन्त्या प्रतिपाद्यो भवति भावनारूपः पुरुषव्यापारो यागादिश्च सा चेयं चोदना स्वविषये स्वप्रतिपाद्ये भावनाभिधे पुरुषव्यापारे यागादौ च पुरुषं नियुञ्जानैव स्वार्थं बोधयति, 'ब्रह्मचोदना तु' ब्रह्मप्रतिपादकवाक्यं तु ब्रह्मज्ञानमात्रमुत्पादयति न तु प्रवर्तयति, एवं च प्रवृत्तिरहितमेव ज्ञानं वेदान्तवाक्यमुत्पादयति, यथेन्द्रियार्थसन्निकर्षो ज्ञान जनयति नतु पुरुषं नियोजयति नियोगस्त्विष्टसाधनताज्ञानात् तद्वदित्युभयोर्विधिवाक्यवेदान्तवाक्ययोर्भेद इति ।

नन्वाज्ञाऽभ्यर्थनाऽनुज्ञानां विधिरूपाणां प्रयोक्तृपुरुषसम्बन्धिनीनां प्रतिपादकेषु शब्देषु लोके चोदनापदव्यपदेशत्वमिति कथमपौरुषेये वेदे चोदनापदप्रयोग इत्याशंकां चोदनापदस्योपदेशपरतया समादधाति—आज्ञादीनामिति ।

अत्रायं विवेकः कल्पतरुकृद्भिः कृतः उत्कृष्टस्य पुंसो हीनम्प्रति स्वाभिलषितोपायकार्यत्वाभिधानमाज्ञा यथा देवदत्त गामानयेति, हीनस्य पुंसः उत्कृष्टं प्रति तथाऽभिधानमभ्यर्थना यथा, भगवन् माणवकमध्यापयेति, प्रवृत्तं प्रयोज्यं प्रति तद्धितोपायोक्तिरनुज्ञा यथा कुरु यथाहितमिति । नचैताः संभवन्त्यपौरुषेये वेदेऽतश्चोदनापदेनेहोपदेश एव ग्राह्यः, स हि अप्रवृत्त प्रयोज्यं प्रति प्रयोजनोपायबोधकः शब्दो लोकेऽवगतः यथा गोपालादिवचनं सुपथकथनपरम् अनेन पथा याहीत्यादिकम्, नहीदमाज्ञा प्रयोक्तुर्निकृष्टत्वात् नाप्यभ्यर्थना स्वप्रयोजनाभावात्, नाप्यनुज्ञा प्रयोज्यस्याप्रवृत्तत्वात्, सचायमप्रवृत्तस्य नियोज्यस्य हितोपायोक्तिरुपदेशोऽपौरुषेये वेदेऽपि संभवतीति स एव चोदनापदेन विवक्षित

## भामती

पुरुषव्यापारे भावनायां तद्विषये च यागादौ स हि भावनाविषयः तदधीननिरूपणत्वात् प्रयत्नस्य भावनायाः । 'षिञ् बन्धने, इत्यस्य धातोर्विषयपदव्युत्पत्तेः । भावनायास्तद्द्वारेण च यागादेरपेक्षितोपायतामवगमयन्ती तत्रेच्छोपहारमुखेन पुरुषं नियुञ्जानैव यागादिधर्ममवबोधयति नान्यथा । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं न तु प्रवर्तयन्त्यवबोधयति । कुतः ! अवबोधस्य प्रवृत्तिरहितस्य चोदनाजन्यत्वात् ।

## प्रकाशः

इत्यर्थः । अतएवेति यतो वेदे उपदेश एव चोदनाशब्दस्यार्थो अत एव । उक्तमिति । जैमिनीये तन्त्रे इति शेषः । तस्य ज्ञानमिति । तस्य 'धर्मस्य' ज्ञायतेऽनेनेति ज्ञान स्वर्गकामो यजेदित्यादिवाक्यं तदेवोपदेशो विधिरिति जैमिनिसूत्रावयवार्थः । सा स्वविषय इति भाष्ये यत् 'सा' पदं तेन सह चकारं योजयित्वाऽऽह—सा चेति चोदना च । 'स्वविषये' इति भाष्यार्थं स्फुटयति—स्वसाध्य इति । स्वमत्र चोदना स्वस्याश्चोदनायाः साध्ये प्रतिपाद्ये इत्यर्थः। प्रतिपाद्यस्वरूपं स्फोरयति—पुरुषव्यापारे भावनायामिति । पदद्वयमेतत् समानाधिकरणम्, एवमग्रेऽपि । तद्विषये च यागादाविति । अस्य पुरुषं नियुञ्जानैवार्थं बोधयतीति भाष्येणान्वयः । भाष्येण भावनाविषयत्वं यागहोमादौ गृहीतमुपपादयति-स हीति । यागहोमादिर्हि प्रयत्नस्य भावनायाः । प्रयत्नरूपायाः भावनायाः । ननु भावनायां यागादिरूपे धात्वर्थे च विधितः प्रवर्त्तनमशक्यम्, प्रमाणं हि बोधजनकं भवति न तु प्रेरकमित्याशङ्क्याह—भावनाया इत्यादि । यागाद्यनुकूलभावनायां प्रयुज्यमानो यजेदित्यादिर्विधिशब्दो भावनायां साक्षात् तद्विशेषणीभूतयागादौ च भावनाद्वारा इष्टसाधनतां बोधयित्वा यागादाविच्छामुत्पादयति, इच्छन् हि पुरुषः प्रवर्त्तते, तदनेन क्रमेण पुरुषं नियुञ्जाना चोदना धर्ममवबोधयतीत्यर्थः । तत्र—यागादौ । प्रवर्त्तयन्तीति । शत्रन्तमेतत् । चोदनाजन्यत्वात् । ब्रह्मप्रतिपादकवेदान्तशब्दजन्यत्वात् । ननु मार्जनि धर्मज्ञानवद्ब्रह्मज्ञानाद् विषये प्रवृत्तिः ब्रह्मज्ञानमेव विधितः किं न स्यादिति शङ्कते—नन्विति । विध्येकवाक्यतया सिद्धवस्तुबोधनान्न वेदान्तानां सिद्धबोधमात्रपर्यव-

## शाङ्करभाष्यम्

चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम् अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते, यथाऽक्षार्थसंनिकर्षेणावबोधे तद्वत् । तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति। उच्यते नित्यानित्यवस्तु-

## भामती

नन्वात्मा ज्ञातव्य इत्येतद्विधिपरैर्वेदान्तैस्तदेकवाक्यतयाऽवबोधे प्रवर्तयद्भिरेव पुरुषो ब्रह्मावबोध्यत इति समानत्वं धर्मचोदनाभिर्ब्रह्मचोदनानामित्यत आह—न पुरुषोऽवबोधे नियुज्यते । अयमभिसन्धिः । न तावद् ब्रह्मसाक्षात्कारे पुरुषो नियोक्तव्यः, तस्य ब्रह्मस्वाभाव्येन नित्यत्वादकार्यत्वात् । नाप्युपासनायां तस्या अपि ज्ञानप्रकर्षहेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात् । नापि शाब्द बोधे, तस्याप्यधीतवेदस्य पुरुषस्य विदितपदतदर्थस्य समधिगतशाब्द न्यायतत्त्वस्याप्रत्यूहमुत्पत्तेः । अत्रैव दृष्टान्तमाह—यथाक्षार्थेति दार्ष्टान्तिके योजयति तद्वत् इति । अपि चात्मज्ञानविधिपरेषु वेदान्तेषु नात्मतत्त्वविनिश्चयः शाब्दःस्याद्, नहि तदाऽऽत्मतत्त्वपरास्ते किन्तु तज्ज्ञानविधिपराः, यत्पराश्च ते त एव तेषामर्थाः । न च बोधस्य

## प्रकाशः

सानमित्यर्थः । किं ब्रह्मात्मके साक्षात्कारे पुरुषो नियुज्यते, किम्वा ब्रह्मण उपासनायाम, उत तस्य शाब्दज्ञाने इति विकल्प्य क्रमेण दूषयति—न तावदिति । अविधेयत्वात्—अप्राप्ते हि शास्त्रमर्थवद्भवति । ननु यथा सोमेन यजेत् इत्यादि विशिष्टविधौ विशेषणविधिरार्थो भवति न विशेषणे विध्यन्तरं वाक्यभेदापत्तेः एवं विषयविशिष्टप्रतिपत्तिविधिसामर्थ्यादस्तु ब्रह्मस्वरूपनिश्चय इत्याशङ्कते—

## भामती

बोध्यनिष्ठत्वादपेक्षितत्वादन्यपरेभ्योऽपि बोध्यतत्त्वविनिश्चयः, समारोपेणापि तदुपपत्तेः । तस्मान्न बोधविधिपरा वेदान्ता इति सिद्धम् । प्रकृतमुपसंहरति **तस्मात्किमपि वक्तव्यमिति** यस्मिन्नसति ब्रह्मजिज्ञासा न भवति सति तु भवन्ती भवत्येवेत्यर्थः । तदाह- **उच्यते नित्यानित्यवस्तुविवेक** इत्यादि । नित्यः प्रत्यगात्मा, अनित्या देहेन्द्रियविषयादयः । तद्विषयश्चेद्विवेको निश्चयः, कृतमस्य ब्रह्मजिज्ञासया, ज्ञातत्वाद् ब्रह्मणः । अथ विवेको ज्ञानमात्रं न निश्चयः, तथासत्येष विपर्यासादन्यः संशयः स्यात्, तथा च न वैराग्यं भावयेत्, अभावयन् कथं ब्रह्मजिज्ञसाहेतुः । तस्मादेवं व्याख्येयम्-नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्मः नित्यानित्ययो धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः । एतदुक्तं भवति-मा भूदिदं तद्व

## प्रकाशः

नच बोधस्येति । बोध्यनिष्ठत्वात् बोध्यविषयकत्वात्-बोध्यं विना बोधस्वरूपानिष्पत्तेः । तदाह-अपेक्षितत्वादिति । तदुपपत्तेरिति । 'सोमेन यजेत' इत्यादौ सोमविशिष्टयागक्रियायाः विधानात् युक्ता विशेषणस्य सोमस्य विशेष्यसमानसत्ताकत्वात्तदंशे प्रमा प्रतिपत्तिविधिस्तु न विशेषणसत्तामाक्षिपति, 'वाचं धेनुमुपासीत' इत्यादावारोप्यस्यापि विधिवाक्याधीनधीविषयत्वात्, तस्मान्न ज्ञानविधिपरत्वे आत्मस्वरूपविनिश्चयः स्यादिति भावः । 'नित्यानित्यवस्तुविवेक' इति भाष्यस्थं वस्तुपदं सार्थकयितुं भूमिकामाचरयति-नित्यः प्रत्यगात्मेत्यादिना । अनित्यपदार्थेभ्यो ब्रह्मणो विवेकः किं निश्चयः उत ज्ञानमात्रमिति विकल्प्याद्यं दूषयति-कृतमिति । द्वितीये विपर्यासः संशयो वा ? नाद्यः ततः शास्त्रेऽप्रवृत्त्ययोगात्, न द्वितीयः—प्रपञ्चानित्यत्वानिश्चये तद्वैराग्यायोगादित्याह-तथाचेति । समादधाति-तस्मादिति । वस्तुपदस्य धर्मपरत्वे नित्यत्वेनैव धर्मेण नित्यस्य अनित्यत्वेनैव च धर्मेणानित्यस्य स्याद्विवेकः नित्यो नानित्य एवंरूपः आत्मानात्मसमुदाये किञ्चिन्नित्यं किञ्चिच्चानित्यमस्तीत्येवं सामान्यरूपेणैव

भामती

नित्यमिदं तदनृतमनित्यमिति धर्मिविशेषयोर्विवेकः, । धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव । नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथा चास्थागोचरः। अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं, तथा चानास्थागोचरः । तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सुखं व्यवस्थास्यते तदास्थागोचरो भविष्यति,यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत् त्यक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयादैहिकाद्वा कर्मणो विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम् । न खलु

प्रकाशः

यावत् नत्विदं नित्यमिदमनित्यमिति विशेषरूपेण, क्वचिद् घटादावनित्यत्वावधारणेऽपि अनात्ममात्रे तदनवधारणात् अतो न शास्त्रारम्भो व्यर्थ इत्यभिदधाति–इदं तदृतमित्यादि । तदिदमृतं नित्यं तदिदमनृतमनित्यमित्येवं धर्मितावच्छेदकविशेषरूपेणेत्यर्थः । अत्र नित्यपदं न ऋतपदसमानार्थकं तयोरपर्यायत्वात् अपितु नित्यत्वानित्यत्वविनिश्चयः सत्यत्वासत्यत्वसुखत्वदुःखत्वनिश्चयमुखेनैवानित्येऽसुखेऽसत्ये वैराग्यहेतुः असत्यं हि न सुखं भवितुमर्हतीति स्फुटीकर्तुमृतादिपदं योजितम् । नित्यत्वानित्यत्वमात्रं हि न वैराग्यहेतुः अनित्यमपि सुखं परित्यज्य सुखेतरस्याकाशादेर्नित्यस्यानुपादानात् तप्तपरशुदृष्टान्तेन सत्याभिसन्धस्य मोक्षोऽनृताभिसन्धस्य बन्ध इति प्रतिपादनात् "यो वै भूमा तत्सुखं यदल्पं तन्मर्त्यं नाल्पे सुखमस्तीति च सत्यासत्योः सुखदुःखस्वरूपता प्रतिपादनाच्चेति बोध्यम् । विवेकम् भेदम्, अथवा विवेकं भेदनिश्चयम्, अस्मिन् द्वितीयस्मिन् पक्षे निश्चिनोत्येवेत्यस्य सम्पादयत्येवेत्यर्थः । नित्यत्वं सत्यत्वमिति । नैतयोरभेदे तात्पर्यम्, किन्तु यत्र नित्यत्वं तत्र सत्यत्वमित्यर्थे । विवेकनिश्चयस्य प्रयोजनमाह—तथाचेति । आस्थागोचरः उपादानगोचरः । सत्यासत्ययोरुपादेयत्वानुपादेयत्वे हेतुमाह—तदेतेष्विति । नित्यम् उपादेयं सुखत्वात्, अनित्यं त्याज्यं दुःखत्वादित्यर्थः । तापत्रयपरीतमिति । आध्यात्मिकमाधिदैविकमाधिभौतिकं च तापत्रयम् । तत्र ज्वरादिः प्रथमस्तापः, ग्रहभूतावेशादिर्द्वितीयः, सर्पादिस्तृतीयः, तदनेन तापत्रयेण परीतं पर्याप्तम् । अनुभवोपपत्तिभ्यामिति । दृष्टे शुक्तिरतादौ सदधिष्ठानत्वस्या-

## प्रकाशः

नुभवः, तथात्वेनास्फुटे स्वाप्निकादावुपपत्तिः, साच विगीतं सदधिष्ठानकम् अध्यस्तत्वात् गन्धर्वनगरवदित्यादिरूपा । (गन्धर्वनगरे सौरालोकादिकमधिष्ठानम्) अत्रानुमाने व्याप्यत्वासिद्धिमाशङ्क्य परिहरति—न खल्वित्ति । ननेवमध्यस्तसर्वस्यासत्त्वमेव केवलमवशिष्यमाणमधिष्ठानमेव सत्यं सुखरूपमिति पूर्वं निश्चये शास्त्रारम्भवैयर्थ्यमिति चेत् ? न, सगुणनिर्गुणविवेकस्याद्वये ब्रह्मणि वेदान्तवाक्यसमन्वयादेश्च शास्त्रमन्तरेणासिद्ध्या तदारम्भस्य सार्थक्यात्, किं तदधिष्ठानमित्यादिनिर्णयाय च तदारम्भस्य सार्थक्यात्, जातेऽपि तादृशनिश्चये संस्कारवशात्पुनरप्रामाण्यज्ञानसंभवात् तन्निवृत्तये च तत्सार्थक्यात् ।

## विकासः

न खल्वित्ति । 'अथ नित्यानित्यवस्तुविवेक' इति भाष्यम्, नित्यमनित्यं च तद्विवेक इति यथाश्रुतार्थकमेवास्तु किमर्थं नित्यानित्ययोर्वसतीति क्लिष्टव्याख्यानेन, भवति हि विनाऽपि तथाव्याख्यानं सगुणनिर्गुणादिशङ्कापरिहाराय विचारारम्भः । न ब्रह्मैव नित्यम् कर्मफलादिकमन्यत्सर्वमनित्यमित्येवं विशेषरूपेण नित्यानित्यविवेकस्य शास्त्रारम्भात्प्रागेव निश्चये सति 'असम्भवस्तु सतोऽनुपपत्तेः, (ब्र० अ० २।३।३सू०९) ब्रह्मनित्यत्वव्यवस्थापनस्य वैराग्यपादादिषु (ब्र० अ० ३ पा० १) कर्मफलानित्यत्वव्यवस्थापनस्य च वैफल्यप्रसङ्ग इति वाच्यम्, प्रागेव संसारबन्धनस्यानृतत्वे निश्चितेऽभिधायकस्य 'तद्गुणसारत्वात्तु तद्व्यपदेशः' (ब्र० अ०२ पा० ३ सू० २९) यथाच यथा (ब्र० अ०२ पा सू० ४) इत्यादि सूत्राजातस्य वैय्यर्थ्यप्रसङ्गस्य भामतीकृतां समानत्वात्, प्राङ् निश्चिते एव बन्धमिथ्यात्वे श्रुतिविरोधनिरासाय तद्गुणसारत्वादिसूत्रजातं प्रावर्त्तत इति परिहाररीतिरियती पक्षान्तरेऽपि तुल्या प्राङ् निश्चिते नित्यत्वानित्यत्वे श्रुतिविरोधपरिहाराय तथा व्यवस्थापितमित्यस्य वक्तुं शक्यत्वात् चाम्यर्णमतः शब्दव्याख्यानावसरे भाष्ये कर्मफलनित्यत्वप्रतिपादकश्रुत्यादिवाक्येभ्यो नित्यत्वाभिधायकवाक्यानामेव प्राबल्यं प्रतिपादयिष्यते न तु विपरीतमतोऽपि भाष्यस्य यथाश्रुतार्थ एव युक्तो न तु नित्यत्वं सत्यत्वमिति भामतीकृतां व्याख्यानमिति चेदत्रेदं विदाङ्कुर्वन्तु प्रेक्षावन्तो भवन्तः—

भाष्ये नित्यानित्यवस्तुविवेकानन्तरं सर्वकर्मफलविराग उक्तः स चानित्यत्वमिति व्याख्याने एव हि युज्यते, न त्वनित्यत्वं विनाशित्वमिति व्याख्याने अस्थायिनं मणीपरिरम्भणरमणादिजन्यं भोगमालक्ष्य शतशः प्रवृत्तेर्दर्शनात् रजताद्यर्थिनो रजतादौ प्रवर्त्तमानस्य रजतादावनृतत्वज्ञाने ततो निवृत्तेश्च सहस्रशो दर्शनात् नानित्यत्वं वैराग्यादिहेतुरपि त्वनृतत्वज्ञानमेव तथा, अतो नित्यानित्यवस्तुविवेकादिक्रमेण साधन

विकासः

ब्रह्मजिज्ञासाहेतुं वर्णयतो भाष्यकृतः कर्मफलानृतत्वनिर्धारणमेव वैराग्यादिक्रमेण साधनान्तराणां प्रवर्त्तकमित्यालोच्य वस्तुपदमुपाददतो भाष्यकृतोऽभिप्रायं वर्णयता भामती कृता सामान्यतः सत्यमस्तीति बन्धमात्रमनित्यमनृतमस्तीति च विवेकः प्रथमसाधनत्वेन परिगृहीत इति॥

यदपि नित्यानित्यवस्तुविवेकस्य भ्रमत्वे तज्जन्यो ब्रह्मविचारोऽनित्यफलकः स्यात्, प्रमात्वे च विवेकशङ्कितज्ञानविषयस्य भेदस्य सत्यत्वं स्यादिति माध्वचन्द्रिकाकृतोक्तम्, तन्न युक्तम्; ब्रह्मज्ञानबाध्यविषयकज्ञानत्वरूपभ्रमत्वस्य हि व्यवहारदशाऽबाध्यविषयकत्वरूपप्रमात्वेन सहाविरोधेन भेदस्य व्यावहारिकप्रमाविषयत्वेऽपि सत्यत्वासिद्धेः, न हि देहात्मज्ञानस्य व्यावहारिकप्रमात्वेऽपि देहादेर्वस्तुतो भवत्यात्मरूपत्वम्। तस्मादविदितपरसिद्धान्तो नितान्ताशान्तस्वान्तः सूर्यस्योपरि धूलीप्रक्षेपमिवाद्वैतवादिपक्षमुपक्षेप्तुकामो न कथं भवान् भवत्युपहासास्पद इति स्वयमेवावधारयतु।

## भामती

सत्यं नाम न किंचिदस्तीति वाच्यम्, तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः, शून्यवादिनामपि शून्यताया एव सत्यत्वात्। अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयत आ च सत्यलोकाद् आ चावीचेः 'जायस्व म्रियस्व' इति विपरिवर्तमानं क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं तापत्रयपरीतमात्मानं च जीवलोकं

प्रकाशः

नित्यानित्यविवेकमात्रं न वैराग्यहेतुः किन्तु तदभ्यास इत्याह-अथास्येति। पुरुषधौरेयस्य पुरुषश्रेष्ठस्य संसारमण्डलेऽनित्याशुचिदुःखात्मकम् (अनित्यादिविषयकम्,) प्रसंख्यानम् ( समानाकार प्रत्ययप्रवाहः ) उपावर्तते इत्यन्वयः।

अवीचिः। नरकविशेषः, जायस्व म्रियस्वेति। पुनः पुनर्जायते म्रियते चेत्यर्थः। क्रियासमभिहारे लोट् लोटो हि स्वौ च इति पाणिनीय सूत्रेण हि क्रियायाः पौनः पुन्यविवक्षायां सर्वलकारापवादो लोट् तस्य स्वादेशश्च विहितः। ब्रह्मलोकमारभ्यावीचिपर्यन्तं जननमरणाभ्यामावर्त्तमानं क्षणाद्यवान्तरसर्गपर्यन्तैः कालैः संसारसागरस्योर्मिभूतैः (तरङ्गभूतैः) अनिशमुह्यमानम् (इतस्ततो नीयमानम्) आत्मानमन्यञ्च जीवलोकम् ( जीव समूहम् ) अवलोकयेति योजनीयम्।

## विकासः

अथास्येत्यादि ननु,

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादि वचनात्सत्यलोकादागमनोक्तिरयुक्ता एवं महाप्रलयानन्तरं सृष्टेरभावा त्तरावर्तनमप्ययुक्तम्, महाप्रलयो–हि सर्वमोक्षाधारः कालः, सर्वाज्ञाननिवृत्तिर्वा, न महाप्रलयः जीवानामुत्पत्तिविनाशशून्यत्वात् मुक्तस्य पुनरागमनाभावादपरिमि चास्मिन् काले कदाचिदेकस्य मोक्षः कदाचिच्चान्यस्येत्येवं क्रमेण सर्वेषु च जीवेषु मु सम्पद्यते तदुत्तरं तु न सृष्टिः यदि हि तदनन्तरमपि कश्चिदुपाभोक्ष्यत् तदर्थं क पुनः प्रादुरभविष्यन्नत्वेवमतो न महाप्रलयोत्तरं भवति सर्गस्तस्मादसमञ्जसमिदमिति चे मवधारणीयम् ।

प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो भगवतो हिरण्यगर्भस्य यदा ब्रह्मा धिकारलक्षणप्रारब्धकर्मफलसमाप्तौ विदेहकैवल्यात्मकः परमोमोक्षस्तदा तल्लोकवा मप्युत्पन्नब्रह्मसाक्षात्काराणां केवलं प्रारब्धकर्मभोगार्थमेव तल्लोकं गतानां तेन ब्र सहैव भवति परमोमोक्षः, तदभिप्रायकमेव "ब्रह्मणा सह ते सर्वे" इति वचनम् । ये त्व त्पन्ननिर्गुणब्रह्मसाक्षात्काराः भोगमेवाभिलष्यन्तः सत्यलोकं गतवन्तस्ते पुनरावर्तन्ते ए अतएव भगवता गीतायामुक्तम्—

आ ब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ इति ॥

तस्माद्युक्तमुक्तमासत्यलोकादिति ।

एवं च सत्यलोकसहितकार्यब्रह्मणो निधनसमयो महाप्रलयोऽत्र वि न तु सर्वाज्ञाननिवृत्तिः सोऽपि हि नित्यनैमित्तिकप्रलयापेक्षया महान् अतो महा इत्युच्यते अतएव तत्त्ववैशारद्यां योगभाष्यव्याख्यायामेभिरेवाचार्यवाचस्पतिमिश्रैः म ऽपि प्रलये महाप्रलयपदं प्रायोजि ।

नन्वहोरात्रमहोरात्रपूर्वकं कालत्वात् एतदहोरात्रवदित्याद्यनुमानादस्य रात्रिंदिवयोः स्थितौ न कश्चिदपि प्रलयः संभवति, कर्मणां हि विषमविपाकसमयत्वा चित्कस्यचित्सहकारिलाभेन फलजनकतया युगपद् वृत्तिनिरोधासंभवेन कर्मफलभो संभवात्सर्वेषामेकदा भोगनिवृत्तेरनुपपत्तिः ब्राह्मणादीनां ब्राह्मणादिमातापितृ सर्गादौ तदसंभवाद्वर्णादिव्यवस्थानुपपत्तिः, तदानीं ( सर्गादौ ) प्रयोज्यप्रयोजकवृ हाराभावात् शब्दानामर्थैः सह संकेतग्रहानुपपत्तिः तथाच शाब्दव्यवहारविलोपप्र शिष्यशिक्षकयोरभावात्तदानीं वेदादिसम्प्रदायभङ्गप्रसङ्गश्च स्यात् तस्मान्न प्रलयः ऽभ्युपगन्तुमिति चेत् ? अत्रेदं भवान् पृष्टो व्याचष्टाम् विवादाध्यासितस्य त कालीनस्य अहोरात्रस्याहोरात्रपूर्वकत्वमात्रं साध्यतेऽन्यत्रहिताहोरात्रपूर्वकत्वं वा

## विकासः

पूर्वसर्गीयाहोरात्रपूर्वकत्वेन साध्यसिद्धया सिद्धसाधनात्, नान्त्यः अप्रयोजकत्वात् यथाहि वर्षादिदिनस्याव्यहितवर्षादिदिनपूर्वकत्वं न भवति तथैव सर्गादिदिनस्य सर्गादिदिनपूर्वकत्वं न स्यात् इत्यस्याभिधातुं शक्यत्वात्, नचास्य जगतो ऽनुत्पन्नत्वमनश्वरत्वं वा संभवतः येन प्रलयो न स्यात् सावयवत्वेन तयोरसंभवात्।

नच वृत्तिनिरोधस्यासंभवः सुषुप्त्यवस्थायांसंभवात् यथा तदानीं नानाविध-सुखदुःखरूपविषमविपाकसमयानि कर्माणि असंख्यान्येव भोगविमुखानि युगपन्निरुद्धानि भवन्ति तथा प्रलयकालेऽपीति कोऽसंभवः।

ननु सुषुप्तौ भोगविरहे कस्तदानीं शरीरस्योपयोगः, तं प्रति न किंचित् किमर्थं तर्हि तदनुवर्तते उत्तरभोगार्थम्, एकस्यैवैष नियतसमयविपाकादृष्टविरहः कथञ्चिदुपपद्यते न विश्वस्येति चेत् कर्मणामनन्ततयाऽनियतविपाकसमयतया उपमर्द्योपमर्दकस्वभावतया विश्वस्यैकस्य वा को विशेषो येन तन्न भवेत् यदा हि सर्वस्यानियतसमयविपाकान्येव कर्माणि सम्मिलितान्यवशिष्टानि न तु तदुपमर्दकानि नियतसमयविपाकानि कानिचित् कर्माणि तदा भवति प्रलयः। भवति च रात्र्यर्धसमयेऽसंख्यानां भोगविमुखकर्मवतां (अनियतसमयविपाककर्मवताम्) सुस्वापः, यथाच कदाचिच्चन्द्रमण्डलस्यैकदेशे राहूपरागः कदाचिच्च सम्पूर्णस्यैव चन्द्रमण्डलस्य एवं च कालानलानिलमहार्णवानां सन्निपाते ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनाः स्युरिति को विरोधः। वृश्चिक-तण्डुलीयकादिवद् वर्णादिव्यवस्थाप्युपपद्यते यथा हि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमया-द्यः तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य (गेनहारिसाग) तण्डुलकणाद्यः वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः तथा मनुष्यगोत्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकास्तत्त-त्कर्मोपनिबद्धभूतभेदहेतुका एव ततः परं सर्वेषां तत्तत्सान्तानिकानां समानजातीयत्वमिति किमसङ्गतम्। गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिकयाऽनुमानकथया, न गतम् योनिजेष्वेव व्यवस्थापनात् मानसास्त्वन्यथाऽपि संभवन्तीति। गोमयवृश्चिकादिवदिदानीमपि किं न स्यादिति चेन्न कालविशेषनियतत्वात्कार्याणाम् नहि वर्षासु गोमयाच्छालूक इति हेमन्ते ऽपि किं न स्यात्। समयोऽपि (संकेतोऽपि) मायाविनेव भवति व्युत्पाद्यः यथा हि मायावी सूत्रसंचाराधिष्ठितं दारुपुत्रकमिदमाहरेति प्रयुंक्ते सच दारुपुत्रकस्तथा करोति तदा चेतनव्यवहारवत् तद्दर्शी बालो व्युत्पाद्यते तथा सर्गादावपि भगवान् शिष्यशिक्षक-भावापन्ननानाविध (कुम्भकारादि) शरीरमास्थाय व्यवहरन् तद्दर्शिनं व्युत्पादयतीति। तदुक्तं वेदे 'नमः कुलालेभ्यः कर्मारेभ्यश्च वो नम, इत्यादि तस्मान्न शब्दव्यवहारविलोपो न वा पटादिसम्प्रदायभङ्गः अतो न प्रलयोपगमे काचिदनुपपत्तिरापत्तिर्वा। अवनिसलि-लानलानिलानां सावयवतयाऽवश्यविनाशत्वाचाकामेनापि प्रलयोऽङ्गीकार्य इति। तदेत-न्न्यायकुसुमाञ्जलिमधीतवतां सुगमम्।

## शाङ्करभाष्यम्

विवेकः, इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च। तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते। अतः शब्दो

## भामती

चायं लोकयास्मिन् संसारमण्डलेऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपासीने, ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात् प्रसंख्यानाद् इहामुत्रार्थभोगविरागो भवति। अर्थ्यते प्रार्थ्यत इति अर्थः फलमिति यावत्, तस्मिन् विरागोऽनाभोगात्मिकोपेक्षाबुद्धिः, ततः शमदमादिसाधनसंपत्। रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्तयत् विविधाश्च प्रवृत्तीः पुण्यापुण्यफला भावयत् पुरुषमतिघोरे विविधदुःखज्वालाजटिले संसारहुतभुजि जुहोति। प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदं तु मनः पुरुषेणावजीयते वशीक्रियते। सोऽयमस्य वैराग्यहेतुको मनोविजयः शम इति वशीकारसंज्ञ इति चाख्यायते। विजितं च मनस्तत्त्वविषयविनियोगयोग्यतां नीयते, सेयमस्य योग्यता दमः। यथा दान्तोऽयं वृषभयुवा हलशकटादिवहनयोग्यः कृत इति गम्यते। आदिग्रहणेन च विषयतितिक्षातदुपरमतत्त्वश्रद्धाः संगृह्यन्ते। अत एव श्रुतिः 'तस्मात् शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्, सर्वं

## प्रकाशः

उक्तभावनाया वैराग्यहेतुत्वमाह—तत्तोऽस्येति। एतादृशादिति। अनित्यस्य संसारस्य किञ्चिदस्त्यधिष्ठानमित्येतादृशाद्विवेकादित्यर्थः। अनाभोगात्मिका। अनादरात्मिका। वैराग्यस्य शमादिहेतुतामाह—तत इति। ज्वालाजटिल इति ज्वालाः जटाः अस्य सन्तीति तथोक्तः। श्रद्धावित्त इति तत्त्वविषया श्रद्धैव वित्तमस्य न गवादीत्यर्थः। ननु

शाङ्करभाष्यम्

हेत्वर्थः। यस्माद्वेद एवाग्निहोत्रादीनां श्रेयः साधनानामनित्यफलतां दर्शयति, तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते(छान्दो० ८।१।२) इत्यादिः। तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति ब्रह्मविदाप्नोति परम्, इत्यादिः तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं

भामती

मात्मनि पश्यति इति। तदेतस्य शमदमादिरूपस्य साधनस्य संपत् प्रकर्षः शमदमादिसाधनसंपत्। ततोऽस्य संसारबन्धनान्मुमुक्षा भवतीत्याह— मुमुक्षुत्वं च तस्य च नित्यशुद्धमुक्तसत्यस्वभावब्रह्मज्ञानं मोक्षस्य कारणमित्युपश्रुत्य तज्जिज्ञासा भवति धर्मजिज्ञासायाः प्रागूर्ध्वं च, तस्मात्तेषामेवानन्तर्यं न धर्मजिज्ञासाया इत्याह तेषु हीति। न केवलं जिज्ञासामात्रमपि तु ज्ञानमपीत्याह-ज्ञातुं च। उपसंहरति तस्मादिति

क्रमप्राप्तमतःशब्दं व्याचष्टे अतः शब्दो हेत्वर्थः। तमेवातः शब्दस्य हेतुरूपमर्थमाह यस्माद्वेद एवेति। अत्रैवं परिचोद्यते—सत्यं यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा भवति सैव त्वनुपपन्ना, इहामुत्र फलोपभोगविरागस्यानुपपत्तेः। अनुकूलवेदनीयं हि फलम्, इष्टलक्षणत्वात् फलस्य। न चानुरागहेतावस्य वैराग्यं भवितुमर्हति दुःखानुषङ्ग-

प्रकाशः

सत्यामपि मुमुक्षायां कुतो ब्रह्मजिज्ञासेत्यत आह—तस्य चेति। ननु नित्यानित्यविवेकादिहेतुकत्वस्य जिज्ञासायामथशब्दादेव लाभात् किमतः शब्देनेत्याशङ्क्य यद्यनेनातः शब्देन साधनचतुष्टयस्य जिज्ञासाहेतुताऽभिधीयेत, स्यात्तदाऽतःशब्दस्य वैयर्थ्यम् नत्वेवं किन्तु साधनचतुष्टयसम्पत्तिरेव न संभवतीत्याशङ्कापरिजिहीर्षयैव अतः शब्दस्याभिधानमिति समाधानमाह—अत्रैवमिति।

## भामती

दर्शनात् सुखेऽपि वैराग्यमिति चेत्, हन्त भोः सुखानुषङ्गाद्दुःखेऽप्यनुरागो न कस्माद्भवति। तस्मात्सुख उपादीयमाने दुःखपरिहारे प्रयतितव्यम्। अवर्जनीयतया दुःखमागतमपि परिहृत्य सुखमात्रं भोक्तव्यं। तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते, स यावदादेयं तावदादाय विनिवर्तते। यथा वा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावदुपादाय निवर्तते। तस्माद् दुःखभयान्नानुकूलवेदनीयमैहिकं वाऽऽमुष्मिकं वा सुखं परित्यक्तुमुचितम्। नहि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। अपि च दृष्टं सुखं चन्दनवनितादिसङ्गजन्म क्षयितालक्षणेन दुःखेनाघ्रातत्वादतिभीरुणा त्यज्येतापि, न त्वामुष्मिकं स्वर्गादि, तस्याविनाशित्वात्। श्रूयते हि 'अपाम सोमममृता अभूम' इति। तथाच 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, इति। न च कृतकत्वहेतुकं विनाशित्वानुमानमत्र संभवति, नरशिरः कपालशौचानुमानवदागमबाधितविषयत्वात्। तस्माद्यथोक्तसाधनसंपत्त्यभावान्न ब्रह्मजिज्ञासेति प्राप्तम्। एवं प्राप्ते आह भगवान् सूत्रकारः अत इति। तस्यार्थं व्याचष्टे भाष्यकारः यस्माद्वेद एवेति। अयमभिसन्धिः सत्यं मृगभिक्षुकादयः शक्याः परिहर्तुं पाचककृषीवलादिभिः, दुःखं त्वनेकविधानेककारणसंपातजमशक्यपरिहारम्, अन्ततः साधनपारतन्त्र्यक्षयितालक्षणया

### प्रकाशः

शल्कम् शकलम्। तावदादाय निवर्तते इति न तु किञ्चित्क्लेशकरेऽपि प्रवर्तत एवेत्यर्थः। नरशिरः कपालं शुचि प्राण्यङ्गत्वात् शङ्खवदित्यनुमानं नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेदित्यागमबाध्यत्वमिव स्वर्गसुखं विनाशि कृतकत्वादित्यनुमानस्यापि अपाम सोममित्यागमबाध्यत्वमाह— नच कृतकत्वहेतुकमिति। अपाम सोममित्यादिवाक्यमापेक्षिकामृतत्व

## भामती

दुःखयोः समस्तकृतकसुखाविनाभावनियमात् । नहि मधुविषसंपृक्तमन्नं विषं परित्यज्य समधु शक्यं शिल्पिवरेणापि भोक्तुम् । क्षयितानुमानोपोद्बलितं च "तद्यथेह कर्मचित' इत्यादि वचनं क्षयिताप्रतिपादकम् 'अपाम सोमम्' इत्यादिकं वचनं मुख्यासंभवे जघन्यवृत्तितामापादयति । यथाहुः पौराणिकाः—'आ भूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति । अत्र च ब्रह्मपदेन तत्प्रमाणं वेद उपस्थापितः । स च योग्यत्वात 'तद्यथेह कर्मचित' इत्यादिरत इति सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यते । स्यादेतत् यथा स्वर्गादेः कृतकस्य सुखस्य दुःखानुषङ्गस्तथा ब्रह्मणोऽपीत्यत आह—तथा ब्रह्मविज्ञानादपीति तेनायमर्थः—अतः स्वर्गादीनां क्षयिताप्रतिपादकाद् ब्रह्मज्ञानस्य च परमपुरुषर्थताप्रतिपादकादागमाद् यथोक्तसाधनसंपत् ततश्च जिज्ञासेति सिद्धम् । ब्रह्मजिज्ञासापदव्याख्यानमाह ब्रह्मण इति षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः ।

### प्रकाशः

भिघत्ते इत्याह—क्षयितेत्यादि । उपोद्बलितम् सहितम । आ भूतसंप्लवमिति । भूतानां पृथिव्यादीनां यः संप्लवः प्रलयस्तत्पर्यन्तस्थायी पदार्थोऽपि गौणो नित्योऽभिधीयत इत्यर्थः । यत्तु भास्करेण नित्यानित्यविवेकादेरप्रकृतत्वात्तदानन्तर्यमथशब्दो न वक्तुमर्हति, अप्रकृतत्वादेव च कर्मणः क्षयिष्णुफलकत्वं ब्रह्मज्ञानस्य मोक्षफलत्वं चातः शब्दो नाभिधातुमर्हतीति प्रतिपादितं तत्प्रत्युच्यते अत्र चेति । ब्रह्मजिज्ञासाकारणानां नित्यानित्यवस्तुविवेकादीनां सूत्रकारस्य बुद्धिस्थत्वात्तदानन्तर्याभिधानमथशब्देन युक्तमेव, ब्रह्मशब्दस्य वेदोऽर्थोऽतो वेदस्यापि ब्रह्मपदेन स्मरणात्तस्याप्यतः शब्देन परामर्शो युक्त एवेति भावः । नन्वेवमविशेषात्सर्वे वेदाः कुतो न परामृश्यन्तेऽत आह—योग्यत्वादिति । अन्यस्य वेदभागस्य प्रकृतानुपयुक्तत्वान्नातः शब्देन ग्रहणमित्यर्थः । अयमर्थ इति । अथातो ब्रह्मजिज्ञासेति सम्पूर्णसूत्रस्येति शेषः । इत्येवमादौ

## शाङ्करभाष्यम्

ब्रह्मजिज्ञासा कर्तव्या । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाणलक्षणम्, यन्माद्यस्य यतः, इति । अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम्।

## भामती

तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्त्तव्यमिति कात्यायनीयवचने यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृति-विकारभूत इत्येवमादौ तन्निषेधात्, 'अश्वघासादयः षष्ठीसमासा भवन्ती'त्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्, षष्ठीसमासेऽपि च ब्रह्मणो वास्तवप्राधान्योपपत्तेरिति । स्यादेतत् ब्रह्मणो जिज्ञासेत्युक्ते तत्रानेकार्थत्वात् ब्रह्मशब्दस्य संशयः–'कस्य ब्रह्मणो जिज्ञासेति । अस्ति ब्रह्मशब्दो विप्रत्वजातौ यथा ब्रह्महत्येति, अस्ति च वेदे यथा ब्रह्मोज्झमिति, अस्ति च परमात्मनि यथा ब्रह्मवेद ब्रह्मैव भवतीति, तमिमं संशयमपाकर्तुं ब्रह्म च वक्ष्यमाणलक्षणमिति यतो ब्रह्मजिज्ञासां प्रतिज्ञाय तदुपपनाय परमात्मलक्षणं प्रणयति ततोऽवगच्छामः परमात्मजिज्ञासैवेयं न विप्रत्वजात्यादिजिज्ञासेत्यर्थः । 'षष्ठीसमासपरिग्रहेऽपि नेयं कर्मषष्ठी, किं शेषलक्षणा, संबन्धमात्रं च शेष इति ब्रह्मणो जिज्ञासेत्युक्ते ब्रह्मसंबन्धिनी जिज्ञासेत्युक्तं भवति, तथा च ब्रह्मस्वरूपप्रमाणयुक्तिसाधनप्रयोजन-जिज्ञासाः सर्वा ब्रह्मजिज्ञासार्था ब्रह्मजिज्ञासाऽवरुद्धा भवन्ति, साक्षा-

## प्रकाशः

ब्रह्मजिज्ञासेत्येवमादौ । तन्निषेधादिति । अत एव पूर्वतन्त्रेऽपि भट्टपादैः धर्माय जिज्ञासेति शवरस्वामिवचनं षष्ठीसमासलब्धार्थप्रदर्शनपरं न तु विग्रहप्रदर्शनपरमिति व्याख्यातमिति । ननु चतुर्थीसमासपक्षे ब्रह्मण उद्देश्यत्वेन प्राधान्यं लभ्यते न च तत् षष्ठीसमासपरिग्रहे घटते तथा च प्राधानपरिग्रहे इत्यग्रिमं भाष्यमनुपपन्नमत आह—षष्ठी समासेऽपीति वास्तवप्राधान्येति इच्छाविषयत्वात् । ब्रह्मोज्झम्, वेदत्यागः अनध्य-

## शाङ्करभाष्यम्

ब्रह्मण इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च। ननु शेषषष्ठीपरिग्रहे-

## भामती

त्पारम्पर्येण च ब्रह्मसम्बन्धात्, कर्मषष्ठ्यां तु ब्रह्मशब्दार्थः कर्म, स च स्वरूपमेवेति तत्प्रमाणादयो नावरुध्येरन्, तथा चाप्रतिज्ञातार्थचिन्ता प्रमाणादिषु भवेदिति ये मन्यन्ते तान्प्रत्याह ब्रह्मण इति। कर्मणीति। अत्र हेतुमाह जिज्ञास्येति। इच्छायाः प्रतिपत्त्यनुबन्धो ज्ञानं, ज्ञानस्य च ज्ञेयं ब्रह्म, न खलु ज्ञानं ज्ञेयं विना निरूप्यते, न च जिज्ञासा ज्ञानं विनेति प्रतिपत्त्यनुबन्धत्वात् प्रथमं जिज्ञासा कर्मैवापेक्षते, न तु संबन्धिमात्रम्, तदन्तरेणापि सति कर्मणि तन्निरूपणात्, नहि चन्द्रमसमादित्यं चोपलभ्य कस्यायमिति सम्बन्ध्यन्वेषणा भवति, भवति तु ज्ञानमित्युक्ते विषयान्वेषणा किंविषयमिति, तस्मात्प्रथममपेक्षितत्वात् कर्मतयैव ब्रह्मसम्बध्यते न संबन्धितामात्रेण तस्य जघन्यत्वात्, तथा च कर्मणिषष्ठीत्यर्थः। ननु सत्यं न जिज्ञास्यमन्तरेण जिज्ञासा निरूप्यते, जिज्ञास्यान्तरं त्वस्या

## प्रकाशः

संगृहीताः। इच्छायाः प्रतिपत्त्यनुबन्ध इति ब्रह्मजिज्ञासेतिवाक्यजन्या हि शाब्दबुद्धिरिहेच्छायाः प्रतिपत्तिस्तद्विषयीभूते इच्छांशे ज्ञानं विषयतासम्बन्धेन प्रकारः ज्ञाने च विषयतासम्बन्धेन ब्रह्मप्रकारः। अनुबध्यते विषयीक्रियतेऽस्मिन्नित्यनुबन्धः। एवञ्चोक्तशाब्दबुद्धिविषयरूपायाः प्रतिपत्तेर्विषयरूपा जिज्ञासा प्रथमं स्वरूपनिष्पादकं कर्मैव, विषयमेव, अपेक्षते सा हि स्वरूपेण निष्पन्ना सती केनचित्सम्बध्नीयात् ब्रह्म च स्वविषयकज्ञानद्वारा जिज्ञासायाः स्वरूपं निष्पादयत् प्रथमोदिताकाङ्क्षावशेन कर्मतयैव सम्बन्धार्हमिति भावः। ज्ञानजिज्ञासयोर्विषयाधीनस्वरूपनिरूपणे वैधर्म्यदृष्टान्तमाह—नहीति। जघन्यत्वात्, प्रथममनपेक्षितत्वात्। नन्वस्तु ब्रह्मणः सम्बन्धितयैव निर्देशः प्रमाणयुक्त्यादिकमेव च कर्म-

शाङ्करभाष्यम्

ऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, सम्बन्धसामान्यस्य विशेषनिष्ठत्वात् । एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् । न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञाना-

भामती

भविष्यति ब्रह्म तु शेषतया संभन्त्स्यत इत्यत आह—जिज्ञास्यान्तरेति। निगूढाभिप्रायश्चोदयति—ननु शेषषष्ठीपरिग्रहेऽपीति। सामान्यसम्बन्धस्य विशेषसम्बन्धाविरोधेन कर्मताया अविघातेन जिज्ञासानिरूपणोपपत्तेरित्यर्थः। निगूढाभिप्राय एव दूषयति—एवमपि प्रत्यक्षं ब्रह्मण इति। वाच्यस्य कर्मत्वस्य जिज्ञासया प्रथममपेक्षितस्य प्रथमसम्बन्धार्हस्य चान्वयपरित्यागेन पश्चात्कथंचिदपेक्षितस्य सम्बन्धिमात्रस्य सम्बन्धे जघन्यः प्रथमः प्रथमश्च जघन्य इति सुव्याहृतं न्यायतत्त्वम् । प्रत्यक्ष-

प्रकाशः

तया सम्बन्धात्वित्याशङ्क्य निर्दिष्टकर्मलाभेऽन्यकर्मकल्पनानुपपत्त्या नैतदु-मित्याह ननु सत्यमिति । सम्भन्त्स्यते । सम्बद्धं भविष्यति । ननु श्रुतकर्मणः स्यायुक्तत्वे व्यवस्थापिते शेषषष्ठी शङ्कितुमप्यनर्हेत्यतआह— निगूढाभिप्राय इति। प्रमाणादिबहुप्रतिज्ञानां सौत्रत्वलाभोऽभिप्रायस्य निगूढता । ननु ब्रह्म सम्बन्धिनी जिज्ञासेत्युक्ते विषयरूपस्य कर्मणो निर्देशाभावाज्जिज्ञासास्वरूपमेव न निरूप्यते-त्यत आह—सामान्येति । निगूढाभिप्रायइति । एकस्याऽपि मुख्यस्य सौत्रत्वं नतु गौणानां बहूनामपीति निगूढता । उपहसति वाच्यस्येति । अत्र शब्दोपात्तः साक्षात्सन्निधिरभिधीयते प्रथमापेक्षितस्येत्याकाङ्क्षा प्रथमसम्बन्धार्हस्येति योग्यता तथा चैतैर्युक्तस्य कर्मत्वस्य सम्बन्धोयोग्यः सन्नपि जघन्यः त्याज्यः, एतैरहितस्य सम्बन्धिमात्रस्य सम्बन्धो जघन्यः सन्नपि प्रथमः मुख्यः संग्राह्य इति यावत् सुव्याहृतमिति तथा चैतत्कल्पनं व्याहतमितिभावः । न्यायतत्त्वम् इ-

र्थत्वादिति चेन्न, प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम्। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते, यैर्जिज्ञासितैर्विना ब्रह्मजिज्ञासितं न भवति, तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि। यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत्। श्रुत्यनुगमाच्च। 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति० ३।१) इत्याद्याः श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्माद्ब्रह्मण इति कर्मणि षष्ठी। ज्ञातुमिच्छा जिज्ञासा। अवगतिपर्यन्तं

भामती

रोक्षाभिधानं च प्राथम्याप्राथम्यस्फुटत्वास्फुटत्वाभिप्रायम्। चोदकः स्वाभिप्रायमुद्घाटयति—न व्यर्थो ब्रह्माश्रितःशेषेति व्याख्यातमेतदधस्तात्। समाधाता स्वाभिसन्धिमुद्घाटयति—न प्रधानपरिग्रह इति। वास्तवं प्राधान्यं ब्रह्मणः। शेषं सनिदर्शनमतिरोहितार्थम्, श्रुत्यनुगमश्चातिरोहितः। तदेवमभिमतं समासं व्यवस्थाप्य जिज्ञासापदार्थमाह—ज्ञातुमिति। स्यादेतत्, न ज्ञानमिच्छाविषयः, सुखदुःखावाप्तिपरिहारौ वा तदुपायौ वा तद्द्वारेणेच्छागोचरः, न चैवं ब्रह्मविज्ञानम्, न खल्वेतदनुकूलमिति वा प्रतिकूलनिवृत्तिरिति वाऽनुभूयते, नापि तयोरुपायः, तस्मिन् सत्यपि सुखभेदस्यादर्शनात्, अनुवर्तमानस्य च

प्रकाशः

त्त्वम्। ब्रह्मजिज्ञासेत्यत्र 'कर्मणि च, इति सूत्रेण समासो न निषिध्यते, तत्सूत्रस्य हि "उभयप्राप्तौ कर्मणि" इति सूत्रविहितषष्ठीविषयकत्वमेव न तु "कर्तृकर्मणोः कृति" इति सूत्रविहितषष्ठीविषयकत्वमिति न तिरोहितं शाब्दप्रक्रियां विदुषां केषामपि। ननु कर्मत्वस्य शाब्दज्ञानविषयत्वेन परोक्षत्वात् तस्य भाष्ये प्रत्यक्षत्वाभिधा-

शाङ्करभाष्यम्

ज्ञानं सन्वाच्याया इच्छायाः कर्म; फलविषयत्वादिच्छायाः । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः

भामती

दुःखस्यानिवृत्तेः, तस्मान्न सूत्रकारवचनमात्रादिषिकर्मता ज्ञानस्येत्यत आह—अवगतिपर्यन्तमिति । न केवलं ज्ञानमिष्यते किन्त्ववगतिसाक्षात्कारं कुर्वदवगतिपर्यन्तं सन्वाच्याया इच्छायाः कर्म । कस्मात्? फलविषयत्वादिच्छायाः तदुपायं फलपर्यन्तं गोचरयतीच्छेति शेषः । ननु भवत्ववगतिपर्यन्तं ज्ञानं, किमेतावतापीष्टं भवति, नह्यनपेक्षणीयविषयमवगतिपर्यन्तमपि ज्ञानमिष्यत इत्यत आह—ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । भवतु ब्रह्मविषयावगतिः, एवमपि कथमिष्टेत्यत आह—ब्रह्मावगतिर्हि पुरुषार्थः । किमभ्युदयः ? न,

प्रकाशः

नमसङ्गतमत आह—प्रत्यक्षेति । सुखभेदस्य सुखविशेषस्य । तस्मान्नेति युक्तिविरुद्धे सूत्रकारवचनेऽविश्वासात् । गुरुमुखात् ब्रह्मस्वरूपं शृण्वतो जायमानं शाब्दज्ञानं निदिध्यासनद्वारा साक्षात्कारजनकमित्याह साक्षात्कारमिति ।

नन्वेवं साक्षात्कारजनकं ज्ञानमिच्छाविषयः ( फलविषयत्वादिच्छायाः ) इच्छाविषयफलत्वादित्यनुमानेनात्र भवितव्यं, तच्च न सम्भवति तस्य फलीभूतज्ञानस्योपायरूपत्वेन फलत्वाभावादित्याशंकां स्वयमेव भाष्यकृत्परिहरति—अवगतिपर्यन्तमिति । फलेच्छैव हि उपायपर्यन्तं प्रसरन्ती, संनिकृष्टमप्युपायमपि फलत्वेन विषयी करोति । तथाच ब्रह्मसाक्षात्कारत्वेनैव फलताऽभिमताऽतो नानुपपत्तिरिति भावः । भाष्ये ज्ञानेन हि प्रमाणेनेति । ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानं प्रमाणं तत्त्वमस्यादिवाक्यं तदात्मकेन प्रमाणेनावगतीच्छाविषयो ब्रह्मेत्यर्थः । अथवा परोक्षज्ञानद्वाराऽपरोक्षज्ञानेच्छा विषयो ब्रह्मेत्यर्थः । तदुक्तं भाष्यभावप्रकाशिकायां चित्सुखाचार्यैः "ज्ञानावगतिशब्दाभ्यां साधकफलयोरभिधानान्न दोषः, इति ।

ब्रह्मविषयावगतिरिति । यद्यपीयं ब्रह्मस्वरूपावगतिः न स्वविषया भवितुमर्हति

## शाङ्करभाष्यम्

निःशेषसंसारबीजाविद्याद्यनर्थनिवारणात् तस्माद्ब्रह्म विजिज्ञासितव्यम् ।

## भामती

किन्तु निःश्रेयसं विगलितनिखिलदुःखानुषङ्गपरमानन्दघनब्रह्मावगतिर्ब्रह्मणः स्वभाव इति सैव निःश्रेयसं पुरुषार्थ इति । स्यादेतत्, न ब्रह्मावगतिः पुरुषार्थः, पुरुषव्यापारव्याप्यो हि पुरुषार्थः, न चास्या ब्रह्मस्वभावभूताया उत्पत्तिविकारसंस्कारप्राप्तयः संभवन्ति, तथासत्यनित्यत्वेन तत्स्वाभाव्यानुपपत्तेः, न चोत्पत्त्याद्यभावे व्यापारव्याप्यता, तस्मान्न ब्रह्मावगतिः पुरुषार्थ इत्यत आह—**निःशेषसंसारबीजाविद्याद्यनर्थनिवारणात्** । सत्यं, ब्रह्मावगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः सम्भवन्ति, तथाप्यनीर्वचनीयानाद्यविद्यावशाद् ब्रह्मस्वभावोऽपराधीनप्रकाशोपि प्रतिभानपि न प्रतिभातीव पराधीनप्रकाश इव देहेन्द्रियादिभ्यो भिन्नोप्यभिन्न इव भासत इति संसारबीजाविद्याद्यनर्थनिवर्हणात्, प्रागप्राप्त इव तस्मिन्सति प्राप्त इव भवतीति पुरुषेणार्थ्यमानत्वात्पुरुषार्थ इति युक्तम् । अविद्यादीत्यादिग्रहणेन तत्संस्कारोऽवरुध्यते ।

## प्रकाशः

असंभवात् दृश्यत्वापत्तेश्च, तथाऽपि स्वविषयव्यवहारहेतुत्वेनौपचारिकं विषयत्वमादायोक्तम् । ब्रह्मापि धर्मवदसुखमेवेति न तदवगतिः पुरुषार्थ इत्याशंकां निराकर्त्तुमाह—**एवमपीति** । ब्रह्मावगतिरित्यस्य ब्रह्मस्वरूपावगतिरित्यर्थं स्फुटयितुमाह— **किमभ्युदय इत्यादिना** । **अभ्युदयः** विषयसम्पर्कजन्यं सुखम् संभवन्तीति । पुरुषव्यापारेण हि एतावत्य एव निष्पाद्यन्ते इति भावः । **प्रतिभानपि** । भासमानोऽपि । **अर्थ्यमानत्वात्** प्रार्थ्यमानत्वात् । **अवरुध्यते** संगृह्यते । ब्रह्मस्वरूपचैतन्यं यदि स्वतोऽविद्यां निवर्तयेत् तदा कदाचिदपि नाविद्या स्थितिपदं लभेत विरोधिनः स्वरूपचैतन्यस्य सर्वदा विद्यमानत्वात्, किन्तु अन्तःकरणवृत्तिरूपनिर्विकल्पसाक्षात्कारः तदभिव्यक्तं वा चैतन्यमविद्या-

## भामती

अविद्यादिनिवृत्तिस्तूपासनाकार्यादन्तःकरणवृत्तिभेदात् साक्षात्कारादिति द्रष्टव्यम् उपसंहरति—तस्माद् ब्रह्म जिज्ञासितव्यम् उक्तलक्षणेन मुमुक्षुणा। न खलु तज्ज्ञानं विना सवासनविविधदुःखनिदानमविद्योच्छिद्यते। न च तदुच्छेदमन्तरेण विगलितनिखिलदुःखानुषङ्गानन्दघनब्रह्मात्मतासाक्षात्काराविर्भावो जीवस्य। तस्मादानन्दघनब्रह्मात्मतामिच्छता तदुपायो ज्ञानमेषितव्यम्। तच्च न केवलेभ्यो वेदान्तेभ्योऽपि तु ब्रह्ममीमांसोपकरणेभ्य इति इच्छानिभेन ब्रह्ममीमांसायां प्रवर्त्यते, न तु वेदान्तेषु तदर्थविवक्षायां वा। तत्र फलवदर्थावबोधपरतां

### प्रकाशः

निवर्तकम्, यथा केवलस्य सूर्यरश्मेस्तृणादिभासकत्वेऽपि सूर्यकान्तमणिमुपारूढस्य तस्य तृणादिदाहकत्वम् तदुक्तम्—

> तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत्।
> सूर्यकान्तमुपारुह्य तन्न्यायं तत्र योजयेत् ॥ इति।

उपासनाकार्यात् निदिध्यासनकार्यात्। उक्तलक्षणेन भाष्योक्तसाधनचतुष्टयसम्पन्नेन। ननु ब्रह्मविजिज्ञासितव्यमिति भाष्यमसङ्गतमिच्छायां तव्यप्रत्यार्थस्य कृतिसाध्यत्वस्य बाधात् इच्छया हि पुमान् प्रवर्त्तते नतु कृत्या इच्छतीत्याशंक्य जिज्ञासितव्यमित्यस्य विचार्यमित्यर्थकतामुपपादयन् निराकरोति नखल्वित्यादिना। प्रथमं वृत्त्यात्मकः साक्षात्कारस्ततोऽविद्योच्छेदस्ततो ब्रह्मात्मकसाक्षात्काराविर्भाव इत्याह नच तदुच्छेदमन्तरेणेति। तस्मादिति यस्मान्नाविद्योच्छेदं विना ब्रह्मात्मताऽऽविर्भावस्तस्मादित्यर्थः। एषितव्यम् इच्छाविषयः। विचारं विना उपनिषन्मात्रेणात्मतत्त्वनिश्चयरूपं ज्ञानं न भवतीत्याह तच्चेति। न केवलेभ्य इति संशयादिना प्रतिबन्धादितिभावः। मीमांसोपकरणेभ्यः मीमांसा विचारः सहितेभ्यः, अतो ब्रह्मविजिज्ञासितव्यमित्युक्तं भाष्यकृतेति शेषः। नन्विच्छायामलंकर्तव्यतोपदेशेन तस्याः कृत्ययोग्यत्वादित्याशंकामिच्छासाध्ये विचारे तदन्वयोपगमेन परिहरति—इच्छानिभेनेत्यादिना अत्रेदंबोध्यम् संदिग्धे विषये जिज्ञासा निर्णयाय भवति निर्णयश्च विचारसाध्योऽतो विचारस्य कर्तव्यताऽर्थाल्लभ्यते इत्थंच जिज्ञासाविचारयोरुभयोरेवाभिमतत्वेन साधनचतुष्टयसम्पत्त्य-

## शाङ्करभाष्यम्

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धम् न जिज्ञासितव्यम् । अथाप्रसिद्धम् नैव शक्यं जिज्ञासितु-

## भामती

स्वाध्यायाध्ययनविधेः सूत्रयताऽथातो धर्मजिज्ञासेत्यनेनैव प्रवर्त्तितत्वात्, धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवद् ब्रह्मणोऽप्युपलक्षणाच्च। यद्यपि धर्ममीमांसावद् वेदार्थमीमांसया ब्रह्ममीमांसाप्याक्षेप्तुं शक्यते, तथापि प्राच्या मीमांसया न तद्व्युत्पाद्यते, नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यानंन्तर्यप्रदर्शनाय चेदं सूत्रमारम्भणीयमित्यपौनरुक्त्यम् ।

## प्रकाशः

नन्तरं ब्रह्मजिज्ञासा भवतीत्येकः सूत्रस्याक्षरार्थः, जिज्ञासापदस्य विचारे लक्षणामुरीकृत्य कर्तव्यपदं चाध्याहृत्य उक्तसम्पत्त्यनन्तरं ब्रह्मविचारः कर्तव्य इत्यपरश्च विवक्षितोऽर्थः एवंच यथा जिज्ञासा पुमांसं विचारे प्रवर्त्तयति तथा विचारकर्तव्यतोपदेशकम् अथाऽतो ब्रह्मजिज्ञासा इति सूत्रमपीतीच्छासूत्रयोर्द्वयोः समानं प्रवर्त्तकत्वमायातमित्यभिप्रेत्येच्छानिभ ( सदृश ) त्वमस्य सूत्रस्योक्तमिति । नच प्रदर्शितलक्षणापक्षो द्वितीय एव सूत्रस्यार्थ इति वाच्यम, जिज्ञासापदस्य स्वार्थ विवक्षायाः प्रयोजनस्य 'ब्रह्मजिज्ञासाया अनधिकार्यत्वात, इति भाष्यव्याख्याने प्रागेव भामत्यां प्रदर्शितत्वेन वाच्यार्थस्याप्यावश्यकत्वात् । एवं सति यत्र जिज्ञासितव्यमिति भाष्याद्युक्तिस्तत्र मीमांसितव्यमित्यर्थोबोध्योऽतो भवति सर्वमवदातमिति ।वेदान्तेषु वेदान्ताध्ययनेषु। नन्वथातो धर्मजिज्ञासेत्यत्र धर्मग्रहणाद्विधिवाक्यार्थ एव तत्सूत्रस्य विषयो नतु वेदान्तवाक्यार्थ इत्यत आह-धर्मग्रहणस्य चेति । वेदार्थोपलक्षणत्वेनेति । अन्यथा निषेधवाक्यार्थविचार तत्रासङ्गतः स्यात्। उपलक्षणाच्चेति । ब्रह्मणोऽपि वेदार्थत्वाविशेषात्। ननु तर्हि ब्रह्मविचार प्रतिज्ञाऽपि तत्रैवास्तु किमर्थमेतत् ब्रह्मजिज्ञासासूत्रमित्याशङ्क्ते यद्यपीत्यादिना। ब्रह्मविचारप्रतिज्ञा तत्सूत्रेणावरोद्धुं शक्याऽपि न तत्र कृतो विचारोऽतः पृथक्सूत्रं सूत्रकृता कृतमिति समाधाय, सम्प्रति सम्भव एव नास्तीति समाधानान्तरमाह नापीति अविरक्तस्य ब्रह्मविचारेऽप्रवृत्तेः । अपौनरुक्त्यम् पूर्वमीमांसोक्तप्रथम

## शाङ्करभाष्यम्

मिति। उच्यते—अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि

## भामती

स्यादेतत्, एतेन सूत्रेण ब्रह्मज्ञानं प्रत्युपायता मीमांसायाः प्रतिपाद्यत इत्युक्तम्, तदयुक्तं, विकल्पासहत्वादिति चोदयति—तत्पुनर्ब्रह्मेति। वेदान्तेभ्योऽपौरुषेयतया स्वतःसिद्धप्रामाण्येभ्यः प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं वेदान्तवाक्यसमुत्थेन निश्चयज्ञानेन विषयीकृतं ततो न जिज्ञासितव्यम्, निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात्। अथाप्रसिद्धं वेदान्तेभ्यः, तर्हि न तद्वेदान्ताः प्रतिपादयन्तीति सर्वथाऽप्रसिद्धं नैव शक्यं जिज्ञासितुम्। अनुभूते हि प्रिये भवतीच्छा नतु सर्वथाऽननुभूतपूर्वे। न चेष्यमाणमपि शक्यं ज्ञातुं, प्रमाणाभावात्। शब्दो हि तस्य प्रमाणं वक्तव्यम्। यथा वक्ष्यति 'शास्त्रयोनित्वा' दिति। स चेत्तन्नावबोधयति, कुतस्तस्य तत्र प्रामाण्यम्। न च प्रमाणान्तरं ब्रह्मणि प्रक्रमते। तस्मात्प्रसिद्धस्य ज्ञातुं शक्यस्याप्यजिज्ञासनाद्, अप्रसिद्धस्येच्छाया अविषयत्वाद्, अशक्यज्ञानत्वाच्च न

## प्रकाशः

सूत्रेणेहत्य प्रथमसूत्रस्य। युष्मदस्मदित्यादिनाऽऽदावहम्प्रत्ययसिद्ध एव जीवो नतु तदतिरिक्तोऽतो न तद्विचाराय शास्त्रारम्भोयुक्त इत्याक्षिपे, सम्प्रति जीवस्य ब्रह्मात्मभावमुपगम्य वेदान्तेभ्यस्तत्सिद्ध्यसिद्धिभ्यामाक्षिप्यते इति विभजते वेदान्तेभ्य इति। निर्दोषत्वाद्वेदान्तानामनिश्चायकत्वं न सम्भवतीत्याह अपौरुषेयतयेति। प्रसिद्धपदार्थं विवृणोति—वेदान्तेति। निष्पादितक्रिये निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणः 'विषयस्य, तस्मिन्। कर्मणि विषये अविशेषाधायिन इति। कार्यं यदि पूर्वमेव निष्पन्नं तदा किमन्यथागतेन कारणेन येन न भवति किमपि विशेषाधानम्, तस्मात्कारणमेव तत्र भवतीति भावः। ज्ञातुं प्रमातुम्। शुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः सर्वदा एकरूपेणैवावस्थीयमानस्यापौरुषेयात् सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवेदान्तवाक्यात् विचारात्पूर्वमेव

## भामती

ब्रह्म जिज्ञास्यमित्याक्षेपः । परिहरति—उच्यते अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावम् । अयमर्थः प्रागपि ब्रह्ममीमांसाया अधीतवेदस्य निगमनिरुक्तव्याकरणादिपरिशीलनविदितपदतदर्थसम्बन्धस्य 'सदेव सोम्येदमग्र आसीदि'त्युपक्रमात् 'तत्वमसीत्यन्तात्' सन्दर्भान्नित्यत्वाद्युपेतब्रह्मस्वरूपावगमस्तावदापाततो विचाराद्विनाऽप्यस्ति ।

### प्रकाशः

वास्ति ज्ञानं परंतु तत्र पुरुषदोषवशाज्जायमानेनाप्रमाण्यज्ञानेनाक्रन्दितं तन्न स्थिति पदं लभते, नचैतावता ब्रह्म न गृहीतमिति शक्यतेऽभिधातुम् अतो नाप्रसिद्धं ब्रह्मेतिपरिहारग्रन्थाभिप्रायमाह—**प्रागपीति** तथाच नाप्रसिद्धं ब्रह्मेत्यतो नाप्रसिद्धपक्षोक्तदोषः । आपातत इति स्वोक्तं पदं विवृणोति विचाराद्विनापीति । अयमत्र निष्कर्षः वेदान्तेभ्यो जायमानस्याद्वैतज्ञानस्य निश्चयरूपत्वेऽपि यस्य पुंसः स्वदोषवशात्तत्राप्रामाण्यज्ञानं समुदेति तत्कृते विचारस्यावश्यकता, यस्य तु पुरुषधौरेयस्याप्रामाण्यशङ्कैव नोन्मिषति, न तत्कृते वेदान्तो विचारणीय इति ।

### विकासः

भाष्ये शुद्धबुद्धेत्यादि यदत्र केनचिदंशेन केनचिद्धर्मेण वा ज्ञातेऽशान्तरेण धर्मान्तरेण चाऽज्ञाते भवति जिज्ञासेत्यतो निरंशे निर्विशेषे च ब्रह्मणि जिज्ञासैव नोदेतुमर्हतीत्यतो न विचारोऽपि प्रादुर्भवितुं शक्नोति, तस्माद् ब्रह्मविचारे प्रवर्त्तमानैर्न निर्गुणं ब्रह्म शक्यते स्वीकर्तुमिति वैष्णवाः प्रलेपुस्तत्राहुः माध्वचन्द्रिकाखण्डनकृतः यद्विषयकं ज्ञानं संशयरूपं जायते तन्निर्णयफलिका भवति जिज्ञासेति सार्वजनीनम्, तत्र संशयत्वं संदेह्मीत्यनुभवसिद्धो विषयिताविशेषः सचायं संशयत्वेन प्रसिद्धे विरुद्धकोटिद्वयावगाहिज्ञान इव विचाराद्विना जायमाने आपातज्ञानेऽप्यस्त्येव, साक्षात्करोमि अनुमिनोमीत्याद्यनुभवसिद्धविषयिताविशेषप्रत्यक्षत्वादिवत् जातौ मानाभावस्य प्रदर्शितत्वात् संशयत्वमपि हि न विरुद्धानेकप्रकारकैकधर्मिविशेष्यकज्ञानत्वरूपं तथात्वे मनइन्द्रियायोग्यपदार्थवर्तितं तदिदं संशयत्वं कथं प्रत्यक्षं क्षमेत वीक्षितुम् तस्मादुक्तविषयिताविशेष एव तत् । सति चैवं केवलो निर्गुणश्च, यस्यामतं तस्य मतम्, अविज्ञातं विजानताम्, विज्ञातारमरे केन विजानीयात्, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते, नात्र काचन भिदाऽस्ति एकधैवानु द्रष्टव्यमित्यादिनिर्विशेषब्रह्मप्रतिपादकैरुपनिषद्वाक्यैर्जायमानं यस्य यदापातज्ञानं तस्य तदपि संशय एव इत्यतस्तन्निर्णयाय भवति जिज्ञासेति सर्वं सुस्थम् ।

## शाङ्करभाष्यम्

**व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातोरर्थानुगमात्। सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः।**

## भामती

अत्र च ब्रह्मेत्यादिनावगम्येन तद्विषयमवगमं लक्षयति, तदस्तित्वस्य सति विमर्शे विचारात्प्रागनिर्णयात्। नित्येति क्षयितालक्षणं दुःखमुप- क्षिपति। **शुद्धेति** देहाद्युपाधिकमपि दुःखमपाकरोति। **बुद्धेत्य**परा- धीनप्रकाशमानन्दात्मानं दर्शयति, आनन्दप्रकाशयोरभेदात्। स्यादे- तत्, मुक्तौ सत्यामस्यैते शुद्धत्वादयः प्रथन्ते, ततस्तु प्राग् देहाद्यभेदेन तद्धर्मजन्मजरामरणादिदुःखयोगादित्यत उक्तम् **मुक्तेति।** सदैव मुक्तः सदैव केवलोऽनाद्यविद्यावशात्तु भ्रान्त्या तथाऽवभासत इत्यर्थः। तदेवमनौपाधिकं ब्रह्मणो रूपं दर्शयित्वाऽविद्योपाधिकं रूपमाह **सर्वज्ञं सर्वशक्तिसमन्वितम्।** तदनेन जगत्कारणत्वमस्य दर्शितं, शक्ति- ज्ञानभावाभावानुविधानात् कारणत्वभावाभावयोः। कुतः पुनरेवम्भूत- ब्रह्मस्वरूपावगतिरित्यत आह—**ब्रह्मशब्दस्य हीति।** न केवलं

## प्रकाशः

भाष्ये ब्रह्मास्तित्वप्रतिज्ञा भाति तत् कथमवगमपरत्वेन व्याख्येय- आह अत्र चेति। मुख्यार्थ एव कुतो नेत्यत आह तदस्तित्वस्येति। विमर्शः संसये। **देहाद्यभेदेनेति** जीवब्रह्मणोः भेदाभेदवादिमतेनेयमाशङ्का, नहि चार्वाकमतेन सम्भवति, तन्मते मुक्तौ शुद्धत्वादेरभावात्। **अनौपाधिकम्** ईश्वरादपि परं निर्गुणम्। **अविद्योपाधिकम्।** अविद्यावच्छिन्नमीश्वरम् आचा- र्यवाचस्पतिमिश्राणां हि अवच्छेदवाद एव सिद्धान्तो न तु प्रतिबिम्बवाद इ- भूयः प्रदर्शितमधस्तात्, एतस्य च सगुणस्य ब्रह्मण ईश्वरस्य उपाधिभूताऽवि- मायापदाभिलप्या शुद्धसत्त्वप्रधाना तत्तदन्तःकरणावच्छिन्नचैतन्यरूपतत्तज्जीव- निष्ठाभिर्मलिनसत्त्वांशाभिरविद्याभिर्भिन्नैव अतो जीवे एवाज्ञत्वं नत्वीश्वरे तत्र मायित्वमेव, एतादृशीभिर्जीवनिष्ठाभिरविद्याभिरीश्वरो विषयीक्रियते द-

## भामती

'सदेव सोम्येदम्' इत्यादीनां वाक्यानां पौर्वापर्यालोचनया इत्थम्भूतब्रह्मावगतिः, अपि तु ब्रह्मपदमपि निर्वचनसामर्थ्यादिममेवार्थं स्वहस्तयति। निर्वचनमाह **बृहतेर्धातोरर्थानुगमात्**। वृद्धिकर्मा हि बृहतिरतिशायने वर्तते। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वाद्यस्याभ्यनुजानातीत्यर्थः। तदेवं तत्पदार्थस्य शुद्धत्वादेः प्रसिद्धिमभिधाय त्वंपदार्थस्याप्याह—**सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्वस्य** पांसुलपादकस्य हालिकस्यापि ब्रह्मा-

## प्रकाशः

शुद्धं ब्रह्म एवञ्चैकस्यैवेश्वरस्य सर्वजीवनिष्ठाज्ञानविषयत्वसम्भवान्नैतन्मतेऽपि जीवभेदेनेश्वरभेद इत्याकलयामः।

शक्तीति शक्तिज्ञानाभ्यां कर्तृरूपं कारणं लक्ष्यते यो हि जानाति शक्नोति च स एव करोति नेतर इत्यस्यानुविधानादित्यर्थः। कुतः पुनरिति सदेवेत्यादिवाक्यात् प्रसिद्धस्य पुनरपि कुतो हेत्वन्तरात्प्रसिद्धिरित्यर्थः। वृद्धिकर्मा-हीति वृद्धिः कर्म 'क्रिया' यस्य स तथा। नन्वस्तु बृहधातोरतिशायनमर्थः वृक्षादाविवापेक्षिकं तद्भविष्यतीत्याशंकां निराकर्तुमाह—अनवच्छिन्नमिति संकोचकारणस्य प्रकरणादेरभावादिति शेषः। **पदान्तरम्** साक्षान्नित्यत्वादिविशिष्टबोधकनित्यादिपदम्। **अभ्यनुजानाति** अन्वाचष्टे, नहि अनित्यस्य देशतः कालतो वस्तुतश्चेति त्रिविधपरिच्छेदशून्यत्वरूपमनवच्छिन्नमतिशायित्वं संभवति यतो देशतः परिच्छेदोनाम किंचिद्देशासम्बन्धित्वे सति किंचिद्देशसम्बन्धित्वम्, कालतः परिच्छेदोनाम किंचित्कालासम्बन्धित्वे सति किंचित्कालसम्बन्धित्वम्, वस्तुपरिच्छेदश्च भेदीयं प्रतियोगित्वमनुयोगित्वं वा एतत् त्रयमपि घटादौ प्रसिद्धं न नित्ये विभौ सर्वदेशकालवर्त्तिनि सर्वैराध्यासिकतादात्म्यवति ब्रह्मणि संभवतीति। **तत्पदेति** तत्त्वमस्यादिवाक्यघटकेति शेषः। अत्र तत्पदार्थस्य शुद्धत्वादेरिति समानाधिकरणे षष्ठ्यौ। **प्रसिद्धिम्** निश्चयम्। सर्वस्यात्मत्वादिति भाष्ये संनिहिततमस्याप्यात्मत्वस्य हेतोर्न सर्वस्येतिविशेषणं वैयर्थ्यात् पक्षालाभाच्च किंतु व्यवहितेनान्वेतीत्यभिप्रेत्याह—**सर्वस्य पांसुलपादुकस्येति** पांसुमन्तौ

## शाङ्करभाष्यम्

सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मा स्तित्वप्रसिद्धिः स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात्

## भामती

स्तित्वप्रसिद्धिः। कुतः! आत्मत्वात् । एतदेव स्फुटयति सर्वो हीति प्रतीतिमेवाप्रतीतिनिराकरणेन द्रढयति न नेति । न न प्रत्येत्यहमस्मीति, किन्तु प्रत्येत्येवेति योजना । नन्वहमस्मीति च ज्ञास्यति मा च ज्ञासीदात्मानमित्यत आह यदीति । अहमस्मीति न

## प्रकाशः

पादौ यस्य स तथा, हलं वहतीतिहालिकः । सर्वोलोकः ब्रह्मास्तित्वप्रसिद्धिमान् आत्मत्वात् यथाऽहमित्यनुमानप्रयोगः, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे दृष्टान्ते साध्यसिद्धिर्न सिद्धसाधनदोषतामावहतीति । एतदेव आत्मत्वहेतुकं ब्रह्मास्तित्वानुमानमेव । स्फुटयति साध्याप्रसिद्धिनिराकरणेनावगमयति । सर्वस्य ब्रह्मास्तित्वप्रसिद्धिः सर्वो हि तत्प्रेतीति साध्यसाधनयोरविशेषः स्यादत आह—प्रतीतिमेवेति । अप्रतीतिनिराकरणेन अहमस्मीति प्रतीत्यभावनिराकरणेन अहमस्मीतिप्रतीत्यभावाभावेन अहमस्मीति प्रतीतिं द्रढयति भाष्यकृदित्यर्थः । अत्र अहं न नास्मीति सर्वः प्रत्येतीति यथाश्रुतार्थोऽनुपपन्न एव यतो नैतादृशाकारा प्रतीतिः सर्वेषां भवति अपितु कस्यचित् कदाचित् सर्वेषां तु अहमस्मीत्येव एवं कादाचित्कीं सत्तामादायापि ननाहमस्मीतिप्रतीतिरुपपद्यमाना नात्मनः स्वाभाविकीं सार्वदिकीं सत्तां साधयितुमुत्सहेत तस्मात् अहमस्मीति न प्रत्येतीति न अपितु प्रत्येत्येवेत्येवं व्याख्यानं कृतम् एवं च सर्वः ब्रह्मास्तित्वप्रसिद्धिमान् अहमस्मीतिप्रतीत्यभावाभावात् यथाऽहमित्यनुमानप्रयोगोऽत्र भवति । यद्यप्येवमपि अभावाभावस्य प्रतियोगिरूपत्वेन हेतुसाध्ययोरैक्यम् तथापि हेतुतावच्छेदकसाध्यतावच्छेदकभेदान्न कश्चिद्दोष इति बोध्यम् । अहमितिप्रतीतिरहंकारमात्रं विषयीकुर्वती न तद्व्यतिरिक्तमात्मानं साधयितुं क्षमत इत्याशंकते नन्विति अस्तित्वप्रसिद्ध्यभावो नाभावप्रतीतिमापादयति सुषुप्तौ व्यभिचारादतो व्यवहितेन नकारस्य सम्बन्धमाचष्टे—अहमस्मीति न प्रतीयादिति । शंकितुरभिप्रायमपाकरोति

## भामती

प्रतीयात् । अहंकारास्पदं हि जीवात्मानं चेन्न प्रतीयादहमिति न प्रतीयादित्यर्थः । ननु प्रत्येतु सर्वो जन आत्मानमहंकारास्पदं ब्रह्मणि तु किमायातमित्यत आह आत्मा च ब्रह्म । तदस्त्वमा सामानाधिकरण्यात्, तस्मात्तत्पदार्थस्य शुद्धबुद्धत्वादेः शब्दतः, त्वंपदार्थस्य च

## प्रकाशः

अहंकारास्पदमिति । अहमितिप्रत्ययस्य चिदचिद् ( अन्तःकरणावच्छिन्नचैतन्य ) विषयकत्वमध्यासभाष्ये समर्थितमेवं च अहमिति प्रतीतावात्माऽपि भासत एवेत्यर्थः । भाष्ये आत्मा च ब्रह्मेत्यत्र चोऽवधारणे । तदस्त्वमेति । तत्त्वमसीत्यत्र प्रकृतसच्छब्दवाच्यब्रह्मपरामर्शिनस्तत्पदस्य त्वंपदेन सामानाधिकरण्यात् ।

## विकासः

तदस्त्वमेत्यादि ननु यथाऽऽदित्यमनः प्रभृतिषु ब्रह्मबुद्धिराद्रियते यथा च लोके प्रतिमादिषु विष्णुशिवादिबुद्धिस्तथा तत्त्वमसीत्यत्र त्वंपदवाच्येऽर्थे सद्बुद्धिरुपासनारूपाऽऽद्रियते ननु वस्तुतः सदेव त्वमिति चेन्न ब्रह्मोपसनाप्रतिपादकेभ्योऽस्य वाक्यस्य वैलक्षण्यात् तेषु हि सर्वेषु इति शब्दो दृश्यते यथा आदित्यो ब्रह्मेत्युपासीत मनोब्रह्मेत्युपासीतेत्येवमादौ नचात्र इति शब्दो दृश्यते तस्मान्नोपासनापरत्वमस्य वाक्यस्य युक्तम्, रूपादिमत्त्वाच्च युक्तमादित्यादीनामब्रह्मत्वमिह तु सदेव सोम्येदमग्र आसीदित्यादिनोपक्रान्तस्य सत एव तत्सृष्ट्वा तदेवानुप्राविशत्, इति प्रवेशं दर्शयित्वा निरङ्कुशं सदात्मभावमुपदिशति तस्माद्वस्तुतत्त्वनिर्णायकमेवेदं नोपसनापरमिति ।

ननु पराक्रमादिगुणाभिधित्सया यथा सिंहस्त्वमित्यौपचारिको भवति प्रयोगस्तथाऽयमपि तत्त्वसीतिप्रयोगोऽस्त्विति चेन्न औपचारिकप्रयोगस्थले नोभयोः शक्यलक्ष्ययोर्मैत्र-लैक्यम् नहि माणवको वस्तुतः सिंहः सम्पद्यते इह तु, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये, इतिसत्सम्पत्तिरभिधीयते तस्मादौपचारिकोऽयं प्रयोग इति न शक्यतेऽभिधातुम् । अत्र विमोक्ष्ये इत्यत्र विमोक्ष्यते इति पुरुषव्यत्ययेनान्वयोबोध्यः एवं सम्पत्स्ये इत्यत्रापि ।

नन्वस्त्विदंवाक्यं स्तुतिरेवेति चेत् कस्येयं स्तुतिः स्यात् श्वेतकेतोः सतोवा नाद्यः यतस्तत्र श्वेतकेतुरुपास्यत्वेनाभिहितो येन तस्य स्तुतिःस्यात्, नापि द्वितीयः निकृष्टं हि उत्कृष्टेन स्तूयते नतूत्कृष्टं निकृष्टेन नहि राजा दासस्त्वमिति स्तूयते तस्मान्न सत् श्वेतकेतुरूपेण निकृष्टेनोपदिश्यमानं स्तूयते इति शक्यते वक्तुमिति ।

शाङ्करभाष्यम्

आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् न, तद्विशेषं प्रति विप्रतिपत्तेः ।

भामती

जीवात्मनः प्रत्यक्षतः प्रसिद्धेः, पदार्थज्ञानपूर्वकत्वाच्च वाक्यार्थज्ञानस्य त्वंपदार्थस्य ब्रह्मभावावगमस्तत्त्वमसीतिवाक्याद् उपपद्यत इति भावः। आक्षेप्ता प्रथमकल्पाश्रयं दोषमाह यदि तर्हि लोक इति। अध्यापकाध्येतृपरम्परा लोकः । तत्र तत्त्वमसीतिवाक्याद् यदि ब्रह्मात्मत्वेन प्रसिद्धमस्ति, आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेदविवक्षया गमयितव्यम् । परिहरति 'न' कुतः तद्विशेषं प्रति विप्रतिपत्तेः। तदनेन विप्रतिपत्तिः साधकबाधकप्रमाणाभावे सति संशयबीजमुक्तम्, ततश्च संशयाज्जिज्ञासोपपद्यत इति भावः ।

प्रकाशः

ननु ब्रह्मात्मैकत्वस्याप्रसिद्धत्वेन श्रुतिप्रतिपाद्यत्वं न संभवतीत्याशङ्क्य पदार्थप्रसिद्धमात्राभिधानं नोपयुज्यतेऽत आह—तस्मादिति । गृहीतशक्तिकयोस्तत्त्वंपदयोः समभिव्याहारे वाक्यार्थः सुघट इत्यर्थः । प्रथमकल्पाश्रयम् प्रसिद्धमप्रसिद्धंवेत्यत्र प्रसिद्धकल्पाश्रयम । पण्डितपामरसाधारणलोकमात्रे ब्रह्मण आत्मत्वेन न प्रसिद्धिरस्तीत्यतोऽत्र लोकशब्दार्थं निर्वक्ति—अध्यापकेति तत्रापि न लौकिकी प्रसिद्धिरस्तीत्यतो वाक्यीयप्रसिद्धिमनुवदति—तत्र तत्त्वमसीति । आत्मत्वेनेति । वैशिष्ट्यं तृतीयार्थः । प्रसिद्धमस्तीति । अतःपरं ततो ज्ञातमेवेति भाष्येणान्वयः । ननु ब्रह्म आत्मत्वेन प्रसिद्धिमिति भाष्यमनुपपन्नं नहि ब्रह्मानुवादेनात्मत्वं महावाक्याद्विधातुमुचितं सिद्धस्यैवोद्देश्यत्वात्, अपितु लोकप्रसिद्धजीवानुवादेन ब्रह्मत्वमित्याशंक्य समादधाति आत्मा ब्रह्मत्वेनेत्यादि गमयितव्यमित्यन्तेन, तथाच वस्तुनोऽभेदे आत्मपदे प्रयोक्तव्ये ब्रह्मपदं ब्रह्मपदे प्रयोक्तव्ये चात्मपदं प्रयुज्यमानं न दुष्यति । भाष्ये अजिज्ञास्यत्वं पुनरिति संशयविरोधिनो निश्चयस्य विद्यमानत्वात्संशयाभावान्न जिज्ञासा स्यादिति भावः । विप्रतिपत्तिर्नाम एकधर्मिकतत्तद्विरुद्धार्थप्रतिपत्तिजनकं पर्वतो वह्निमान्

## भामती

विवादाधिकरणं धर्मी सर्वतन्त्रसिद्धान्तसिद्धोऽभ्युपेयः। अन्यथा-अनाश्रया भिन्नाश्रया वा विप्रतिपत्तयो न स्युः। विरुद्धा हि प्रतिपत्तयो विप्रतिपत्तयः। न चानाश्रयाः प्रतिपत्तयो भवन्ति, अनालम्बनत्वापत्तेः; न च भिन्नाश्रया विरुद्धाः। न ह्यनित्या बुद्धिर्नित्य आत्मेति प्रतिपत्तिविप्रतिपत्ती। तस्मात्तत्पदार्थस्य शुद्धत्वादेर्वेदान्तेभ्यः प्रतीतिस्त्वंपदार्थस्य च जीवात्मनो लोकतः सिद्धः सर्वतन्त्रसिद्धान्तः तदाभासत्वानाभासत्वतत्तद्विशेषेषु परमत्र विप्रतिपत्तयः। तस्मात्सामान्यतः प्रसिद्धे धर्मिणि विशेषतो विप्रतिपत्तौ युक्तस्तद्विशेषेषु संशयः।

## प्रकाशः

त्यादिवाक्यं ( विरुद्धा प्रतिपत्तिः 'संशयो' यस्मादिति बहुव्रीहिः ) तत्र वाक्यं न साक्षात्संशयस्य जनकं तस्य शाब्दत्वानभ्युपगमेन मानसप्रत्यक्षरूपत्वात् सिद्धान्ते च साक्षिप्रत्यक्षरूपत्वात्। किंतु संशयजनकीभूतविरुद्धकोटिद्वयज्ञानस्य जनकं तच्च ज्ञानं सिद्धिबाधयोरभावे सति संशयमुत्पादयति संशयश्च विचाराङ्गमिति सर्वमुपपन्नमित्याह—तदनेनेति। नन्वत्रैकधर्मिका तत्तद्विरुद्धार्थप्रतिपत्तिरेव नास्ति नहि देहेन्द्रियक्षणिकविज्ञानादावस्त्येको धर्मीत्याशंक्य आत्मनि धर्मिणि विरुद्धा प्रतिपत्तिरस्त्येवेत्युपपादयति—**विवादाधिकरणमिति**। आत्मा देह उत इन्द्रियाणीत्यादिविवादस्याश्रयो धर्मी आत्मा सर्वतन्त्रेपूपगत एव 'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इत्युक्तत्वादिति मन्तव्यम्। तत्र हेतुमाह - **अन्यथेति**। यदि धर्मी न भासेत भासमानोऽपि वा धर्मी भिन्न एव भवेत् तदा विप्रतिपत्तिस्वरूपमेव न निष्पद्येतातस्तज्ज्ञानमावश्यकमेवेत्यर्थः। आश्रयशब्दोऽत्र विशेष्यवाची यतोऽधर्मिकाः विभिन्नधर्मिका वा विप्रतिपत्तयो न भवन्तीत्यतो विवदमानैरस्माभिरेको धर्मी अवश्यमुरीकरणीय इत्यत्र तात्पर्यम्। विरुद्धा प्रतिपत्तिर्यस्मादिति विग्रहनिष्पन्नविप्रतिपत्तिशब्दघटकपदार्थयोः विरुद्धप्रतिपत्त्योरभेदेनान्वयादाह—**विरुद्धा हीति**। सेयं विरुद्धा प्रतिपत्तिः प्रतिपत्तिविरोधिनी तदैव स्यात् यदा उभयत्रैक एव धर्मी भासेत नान्यथा, अतो न अनित्या बुद्धिरिति ज्ञानस्य नित्य आत्मेति ज्ञानं विरुद्धा प्रतिपत्तिर्भवति धर्मिणोर्भेदात्, एवं चानित्या बुद्धिरित्य-

## शाङ्करभाष्यम्

देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायति-
काश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन
इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे ।
अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव
केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः

## भामती

तत्र त्वंपदार्थे तावद्विप्रतिपत्तीर्दर्शयति देहमात्रम् इत्यादिना, भोक्तैव
केवलं न कर्ता इत्यन्तेन । अत्र देहेन्द्रियमनःक्षणिकविज्ञानचैतन्य-
पक्षे न तत्पदार्थनित्यत्वादयस्त्वंपदार्थेन सम्बध्यन्ते, योग्यताविरहात् ।
शून्यपक्षेऽपि सर्वोपाख्यारहितमपदार्थः कथं तत्त्वमोर्गोचरः । कर्तृभोक्तृ-
स्वभावस्यापि परिणामितया तत्पदार्थनित्यत्वाद्यसंगतिरेव ।

## प्रकाशः

स्यान्यत्र प्रतिपत्तिरूपत्वेऽपि विप्रतिपत्तिपरिपन्थिप्रतिपत्तिरूपत्वाभावादत्राप्रति-
पत्तिरूपतोक्तिरिति बोध्यम् । ननु तर्हि क्व विगानमत आह—तदिति । तत्पदं प्रतीतिं
परामृशति । लौकायतिकानां देहात्मत्वप्रतीतौ, आस्तिकानां तत्पदार्थस्य ब्रह्मणः
त्वंपदार्थेन जीवेनैक्यप्रतीतौ, एवमन्यस्यामपि प्रतीतौ, आभासत्वानाभासत्वलक्षणो
यो विशेषस्तत्र विगानमित्यर्थः । एवमुपपन्नायां विप्रतिपत्तौ संशयस्ततो जिज्ञासेति
सर्वमिदमवदातमित्युपसंहरति—तस्मादिति । विशेषतः विशेषे । त्वंपदार्थवि-
प्रतिपत्तिप्रदर्शनस्य वाक्यार्थविप्रतिपत्तौ पर्यवसानमित्यभिसंधायाह—अत्रे-
त्यादि । देहेन्द्रियमनःक्षणिकविज्ञानानां चैतन्यम् ( आत्मत्वम ) इति पक्षे
न्यायमतं दूषयति कर्तृभोक्त्रिति । परिणामितयेति । अयमाशयः—समवायस्य
खण्डितत्वात् आत्मना सह सुखदुःखादेराध्यासिकतादात्म्यस्यैवोपगन्तव्यत्वे वेदा-
न्तिमतप्रवेशः आरम्भवादस्य दूषितत्वात् (दूषितश्चास्माभिरधस्तात् विकासे) परि-
णामवादस्यैवागत्योपेयतया सुखादेरात्मपरिणामत्वे आत्मनो विनाशित्वप्रसङ्ग

भामती

अकर्तृत्वेऽपि भोक्तृत्वपक्षे परिणामितया नित्यत्वाद्यसङ्गतिः । अभोक्तृत्वेऽपि नानात्वेनावच्छिन्नत्वाद् अनित्यत्वादिप्रसक्तावद्वैतहानाच्च तत्पदार्थसङ्गतिस्तदवस्थैव । त्वंपदार्थविप्रतिपत्त्या च तत्पदार्थेऽपि विप्रतिपत्तिर्दर्शिता । वेदाप्रामाण्यवादिनो हि लौकायतिकादयस्तत्पदा

प्रकाशः

सुखदुःखादिभिरात्मनो वास्तविकतादात्म्योपगमेऽप्ययमेव प्रसङ्गः । भाष्ये भोक्तैव केवलमिति इत्थं हि सांख्या मेनिरे कर्तृत्वं क्रियाविशेषरूपं तदेतन्न निरवयवस्य विभोर्नित्यस्य पुरुषस्य स्वाभाविकं भवितुमर्हति तथात्वे न कर्तृत्वमात्मप्रतिभासं व्यभिचरेत् प्रस्फुरेच्च सुषुप्तावपि तत्, नच तदानीमिदानीमिव कर्तृत्वं परिस्फुरति, नाप्येतदागन्तुकं पुरुषस्यापरिणामित्वात्, नापि बुद्ध्यात्मनोः परस्परतादात्म्याध्यासनिमित्तकं सत्यत्वेनोपलम्भात् अपसिद्धान्तापाताच्च प्रपञ्चस्य सत्यत्वाङ्गीकारात् तस्मान्न पुरुषस्य कथंचिदपि कर्तृत्वम्, एवंविधस्यापि पुरुषस्याचेतनायां बुद्धौ चैतन्यप्रतिबिम्बसम्पादकत्वेन भवत्यावश्यकता, न ह्यन्तरेण चेतनप्रतिबिम्बं चेतनोऽहंकरोमीतिबुद्धिवृत्तिरुदेतुमर्हतीति, नन्वेवमात्मप्रतिभासव्यभिचाराद्भोक्तृत्वमपि न स्यादिति चेत् ? सिद्ध्येदयं भवन्मनोरथो यदि सुखदुःखान्वयित्वं भोक्तृत्वमभिमतं स्यात् नत्वेवमपि तु दृश्यावभासमात्र भोक्तृत्वम्, अवस्थात्रये च दृश्यावभासो न पुरुषं व्यभिचरति सुषुप्तावपि हि जायमानाया निद्रावृत्तेरनुभवादिति ॥ तदेतत् भोक्तृत्वं किं सुखदुःखादिविक्रिया उत कर्तृत्वभोक्तृत्वादिरहितं केवलं चिदात्मत्वम् इति सांख्यमतं विकल्प्याद्यं निराकरोति—अकर्तृत्वेऽपीति । द्वितीयं प्रत्याह—अभोक्तृत्वेऽपीति सक्रियत्वविशेषरूपभोक्तृत्वाभावेऽपीत्यर्थः । नापि दृश्यावभासरूपं भोक्तृत्वं दृश्येन सह चैतन्यरूपस्य पुरुषस्य वास्तविकसम्बन्धे दृश्यसम्बद्धमेव पुरुषस्य स्वरूपं स्यात् तथासति दृश्यस्य घटादेर्नाशे पुरुषोऽपि स्वरूपात्प्रच्यवेत काल्पनिकतादात्म्योपगमे वेदान्तिमतप्रवेशः स्यादिति भावः । नानात्वेनेत्यादि । सांख्यैर्हि प्रतिदेहं भिन्न एवात्मा व्यापकः पुरुषशब्दाभिधेय आस्थीयते भिन्नश्च घटपटादिवज्जडत्वविनाशित्वादिधर्ममापद्यमानो न तन्मते तत्पदार्थेन चैतन्येन नित्येनाद्वितीयेनैकतां लब्धुमर्हतीति । लौकायतिकादिनिरीश्वरमतोल्लेखनेनैव तत्पदार्थे ईश्वरेऽपि विप्रतिपत्तिः सूचिताऽतो ब्रह्मात्मैक्यप्रतिपादकवाक्यार्थेऽपि विप्रतिपत्तिरर्थादागतेत्याह त्वं पदार्थेति । वेदप्रामाण्यवादिनः तार्किकमीमांस-

शाङ्करभाष्यम्

सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे । एवंबहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः । तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चेयात् । तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ।

इति जिज्ञासाऽधिकरणम् ॥१॥

भामती

र्थंप्रत्ययं मिथ्येति मन्यन्ते । वेदप्रामाण्यवादिनोऽप्यौपचारिकं तत्पदार्थमविवक्षितं वा मन्यन्त इति । तदेवं त्वंपदार्थविप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा साक्षात्तत्पदार्थे विप्रतिपत्तिमाह—अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । तदिति जीवात्मानः परामृशति । न केवलं शरीरादिभ्यः, जीवात्मभ्योऽपि व्यतिरिक्तः । स च सर्वस्यैव जगत ईष्टे । ऐश्वर्यसिद्ध्यर्थं स्वाभाविकस्य रूपद्वयमुक्तम्—सर्वज्ञः सर्वशक्तिरिति । तस्यापि जीवात्मभ्योऽतिव्यतिरेकात् न त्वंपदार्थेन सामानाधिकरण्यमिति स्वमतमाह—आत्मा स भोक्तुरित्यपरे । भोक्तुर्जीवात्मनोऽविद्योपाधिकस्य स ईश्वरस्तत्पदार्थ आत्मा, तत ईश्वरादभिन्नो जीवात्मा, परमाकाशादिव घटाकाशादय इत्यर्थः । विप्रतिपत्तीरुपसंहरन् विप्रतिपत्तिबीजमाह—एवं बहव इति । युक्ति युक्त्याभासवाक्यवाक्याभास—समाश्रयाः सन्त इति योजना । ननु सन्तु विप्रतिपत्तयस्तन्निमित्तश्च संशयस्तथापि किमर्थं ब्रह्ममीमांसाऽऽरभ्यत इत्यत आह—तत्राविचार्येति । तत्त्वज्ञानाच्च निःश्रेयसाधिगमो नातत्त्वज्ञानाद्भवितुमर्हति ।

प्रकाशः

कादयः । शरीरादिभ्यः शरीरादिशून्यपर्यन्तेभ्यः । जीवात्मभ्यः कर्तृभोक्तृभाष्यस्थतदाभासेत्यत्र तत्पदस्य युक्तिवाक्याभ्यामुभाभ्यां सम्बन्धमं

## शाङ्करभाष्यम्

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनस्तद्ब्रह्मेत्यत आह भगवान् सूत्रकारः—

**जन्माद्यस्य यतः ॥२॥**

## भामती

अपि च अतत्त्वज्ञानान्नास्तिक्ये सत्यनर्थप्राप्तिरित्यर्थः । सूत्रतात्पर्यमुपसंहरति— **तस्मादिति** । वेदान्तमीमांसा तावत्तर्क एव, तदविरोधिनश्च येऽन्येपि तर्का अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिषूक्तास्त उपकरणं यस्याः सा तथोक्ता । तस्मात्परमनिःश्रेयससाधनब्रह्मज्ञानप्रयोजना ब्रह्ममीमांसाऽऽरब्धव्येति सिद्धम् ॥ १ ॥ इति जिज्ञासाधिकरणम् । जन्माद्यस्य यतः ।

तदेवं तावत् प्रथमेन सूत्रेण मीमांसारम्भमुपपाद्य ब्रह्ममीमांसामारभते—

**जन्माद्यस्य यतः ॥ २ ॥**

## प्रकाशः

**युक्तियुक्त्याभासेति** । आत्मा स भोक्तुरिति वेदान्तसिद्धान्तपक्षे युक्तिवाक्ये स्तः अन्यत्र तु तदाभासाववगन्तव्यौ । अनर्थं चेयादिति भाष्यार्थमाह—**अपि चेति** । ननु भाष्यकारैस्तर्कोपकरणेत्यभिहितत्वाद्वेदान्तमीमांसा न तर्क इति प्रतिभासेतात आह-**वेदान्तमीमांसेति** ।

तारायाश्चरणद्वन्द्वसमाराधनतत्परः ।
प्राचीकटमिमां व्याख्यां "लक्ष्मीनाथाभिधः" सुधीः ॥ १ ॥
यदत्र निर्दुष्टतया प्रतीयते गुरोस्तदेतत्सकलं विभाव्यम् ।
यदत्र दोषाश्रितमेव भासते ममैव तन्नैव गुरोः कथंचित् ॥ २ ॥
सविकासप्रकाशोऽयं विदुषां तोषकारकः ।
काश्यां श्रमेण रचितः शिवयोरर्प्यते मया ॥ ३ ॥

इति सर्वतन्त्रस्वतन्त्रधर्मदत्तापरनामधेयप्रसिद्ध 'बच्चाझा' गुरुचरणपाथोजसेवनसमुपजातविद्येन मैथिलेन दरभंगामण्डलान्तर्गतसीमाग्रामनिवासिना 'काशी हिन्दू विश्वविद्यालयीयसंस्कृतमहाविद्यालयदर्शनविभागाध्यक्षेण 'लक्ष्मीनाथझा' शर्मणा विरचितः प्रथमसूत्रीयभामतीप्रकाशः समाप्तः ।

## विकासः

तर्क एवेति । तर्कोऽत्रार्थापत्तिरनुमानं च तद्रूपा या वेदान्तमीमांसा तस्या श्रविरोधे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिधाः पूर्वमीमांसायास्तृतीयाध्याये निरूपिताः श्रुति-पाठस्थानमुख्यप्रवृत्त्याख्याश्च तस्यामेव च मीमांसायां पञ्चमाध्याये विचारिताः वेदार्थ-शोधकाः यानि च न्यायशास्त्रोक्तानि लक्षणादीनि वेदान्तार्थविचारे सहायभूतानि प्रमाणानुग्राहकत्वेन तर्का अत्राभिमता इति बोध्यम् ।

सप्रकाशविकासोऽयं 'लक्ष्मीनाथेन' धीमता ।
काश्यां श्रमेण रचितः शिवयोरर्प्यते मया ॥ १ ॥

इति सर्वतन्त्रस्वतन्त्रधर्मदत्तापरनामधेयप्रसिद्ध 'बच्चाझा' गुरुचरणपाथोजसेवनसमुपजातबोधेन मैथिलेन दरभंगामण्डलान्तर्गतसीमाग्रामनिवासिना 'काशी हिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयदर्शनविभागाध्यक्षेण 'लक्ष्मीनाथझा' शर्मणा विरचितः प्रथमसूत्रीयभामतीविकासः समाप्तः ।



श्रीगणेशाय नमः

विकासः

# जन्माद्यस्य यतः ॥२॥

इति यद्यपि लक्षणमेव न कस्यचित्पदार्थस्योपपत्तुमर्हति तथाहि पृथिव्याः यद्गन्धवत्त्वं लक्षणं तत् किं लक्ष्यज्ञानपूर्वकं तदज्ञानपूर्वकं वा ? आद्ये यदीतरव्यावृत्तलक्ष्यज्ञानं पूर्वमेव जातं पृथिवीत्वेनाभिमतेषु सर्वेषु पृथिवीति तदा वृथा लक्षणोपन्यासेन तत्कृत्यस्येतरव्यावृत्त-लक्ष्यस्वरूपाधिगमस्य पूर्वमेव सम्पन्नत्वात् । यदि च एतावन्त्येव लक्ष्याणीति पूर्वं ज्ञानं नास्ति अपि तु लक्षणज्ञानोत्तरमेव लक्ष्यज्ञानमित्युच्यते तदा गन्धवत्त्वमेव कुतो लक्षणं द्रव्यत्वादिकमेव कुतो नेति पर्यनुयोगवाणवारणानिवृत्तिरेव ।

अपि च गन्धवत्सर्वं पृथिवीत्वेन व्यवहर्त्तव्यमिति व्यवहारसाधनम्, पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादिति इतरभेदसाधनं वा भवति लक्षणस्य प्रयोजनम् । तच्चेदं गन्धवत्त्वादिकं स्वयमितरव्यावृत्तं सदेव स्वकार्यं साधयितुं क्षमेत अन्यथा जलादिव्यावृत्ततयाऽज्ञाते गन्धवत्त्वे कथमितरभेदव्याप्त्यादिर्गृह्येतेति अकिंचित्करमेव सर्वं लक्षणं स्यादतो लक्षणस्यापीतरव्यावृत्ततया गन्धवत्त्वं पृथिवीमात्रवृत्तीति ज्ञानमेषितव्यम् । तथा च पृथिव्या इतरव्यावृत्ततया ज्ञाने गन्धवत्त्वमपेक्षितं तस्य चेतरव्यावृत्ततया यज्ज्ञानं गन्धवत्त्वं जलादिभ्यो व्यावृत्तं पृथिवीमात्रवृत्तीत्याद्याकारकं तत्र पृथिव्यपेक्षितेत्यन्योऽन्याश्रयः केन शक्यो निवारयितुम् ? यदि चान्येन लक्ष्यभिन्नेनैव तत्तलक्षणानामितरव्यावृत्ततया ज्ञानमुपेयेत तदा तदपि स्वयमितरव्यावृत्ततया ज्ञातमेव इतरस्माद्व्यावर्त्तयेत् गन्धवत्त्वादिलक्षणानीति चक्रकम् । तत्राप्यन्यस्य व्यावर्त्तकत्वेऽनवस्थैव स्थितिपदं लभते, तस्मात् कश्चिदपि लक्ष्यलक्षणभावो नोपपत्तुमर्हति, तथापीयमनुपपत्तिरद्वैतवादिनां यथाकामं प्रमोदमनुभावयन्ती जगदनिर्वचनीयत्वव्यवस्थितौ साहाय्यमाचरन्ती सोत्कण्ठं मनांसि समाकर्षन्ती प्रियतमैव नितराम्, सुतरांतु तार्किकादीनां पारमार्थिकीमेव लक्ष्यलक्षणभावादिव्यवस्थानुकामानां मनांस्युद्वेजयन्ती तत्तन्मतं कवलीकुर्वती सूत्रकारभगवत्पादादिभिः प्रदर्श्यमाने व्यावहारिके लक्ष्यलक्षणभावे न कामपि क्षतिमासादयतीति बोध्यम् ।

## भामती

सङ्गति एतस्य सूत्रस्य पातनिकामाह भाष्यकारः—"ब्रह्म जिज्ञासितव्यमित्युक्तम्, किंलक्षणं पुनस्तद्ब्रह्म"। अत्र यद्यपि ब्रह्मस्वरूपज्ञानस्य प्रधानस्य प्रतिज्ञया तदङ्गान्यपि प्रमाणादीनि प्रतिज्ञातानि, तथापि स्वरूपस्य प्राधान्यात् तदेवाक्षिप्य प्रथमं समर्थ्यते। तत्र यद्यावदनुभूयते तत्सर्वं परिमितम् अविशुद्धमबुद्धं विध्वंसि, न तेनोपलब्धेन तद्विरुद्धस्य नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम् । नहि जातु कश्चित् कृतकत्वेन नित्यं लक्षयति । न च तद्धर्मेण नित्यत्वादिना तल्लक्ष्यते, तस्यानुपलब्धचरत्वात् । प्रसिद्धं हि लक्षणं

## प्रकाशः

प्रारिप्सिताखिलविचारस्य प्रथमाधिकरणेन सङ्गतिमभिदधाति-तदेवमिति। विषयादिसद्भावाद् विचारारम्भः समर्थितः तमुपजीव्य चेतरो विचारः प्रवर्तते इति भवत्युपपाद्योपपादकभावः सम्बन्धः। जिज्ञासितव्यमिति भाष्यस्य विचार्यमित्यर्थं स्फोरयितुमाह—मीमांसेति । प्रथमेन सूत्रेण द्वितीयसूत्रस्य प्रसङ्गलक्षणां सङ्गतिमाह—एतस्येति । पातनिकाम् । अवतरणम्। ब्रह्मज्ञानाय मुमुक्षुणा वेदान्तार्थविचारः कर्तव्य इति प्रतिज्ञायां ब्रह्मस्वरूपविचारवत् प्रमाणयुक्तिसाधनफलविचारा अपि प्रथमेन सूत्रेणावरुद्धा इत्यभिहितम्, तत्र सर्वेषां विचार्यत्वे प्राप्ते कथं प्रथमं ब्रह्मैव विचार्यतेऽत आह—अत्रेति । ब्रह्मस्वरूपज्ञानस्य ब्रह्मणो यत्स्वरूपं तद्विषयकज्ञानस्य वृत्तेः । सजातीयविजातीयव्यावृत्तिफलको धर्मो भवति लक्षणम्, तदिह किं परिदृश्यमानं जगदेव कारणतासम्बन्धेन ब्रह्मणि विद्यमानं लक्षणम् उत नित्यशुद्धत्वादिकमिति विकल्पाद्यं निराकुरुते—तस्येत्यादि ।

## विकासः

तेनोपलब्धेनेत्यादि । ननु यथाऽनित्येन शब्देन नित्य आकाशो लक्ष्यते तथा ब्रह्माप्यनित्येन जगता लक्ष्यतामितिचेत् ? 'एतस्मादात्मन आकाशः संभूत' इत्यादिश्रुतिसिद्धान्ते आकाशस्याप्युत्पादध्वंसयोः स्वीकारेण दृष्टान्ताभावात् । नन्वाकाशस्योत्पादध्वंसं तदैवोपपद्येत यदाकाशस्योत्पत्तेः पूर्वं ध्वंसस्य चोत्तरं मूर्त्तेनैव जगदवारोत्स्यत् नचैतत्संभवतीति चेत् ? अत्रेदं विदांकुर्वन्तु बहिर्मुखतामपरित्यजन्तः श्रुतिप्रामाण्यमुपगच्छन्तोऽपि कुतर्कशतमवलम्ब्य स्वानुकूल्येन यथाकथंचिदर्थं कल्पयन्तो भवन्तो वेदान्तरहस्यम्, यथा सुषुप्त्यवस्थायामहंकारादयः स्वकारणे (अविद्यायाम्)मीनाः अप्रतिभासमानाः सुषुप्त्युत्तरं प्रतिदिनं प्रादुर्भवन्तः

## विकासः

पुनः प्रतिभासन्ते, एवमेव महासुषुप्तिस्थानीये प्रलये पृथिव्यादिविविक्ततयाऽननुभूयमाना गगनाद्य उच्चावचप्रपञ्चाः स्वकारणेऽविद्यायां लीनाः सृष्ट्यादौ व्यवहारयोग्यतां नयन्तः प्रादुर्भवन्तीत्युच्यन्ते । दृष्टिसृष्टिवादे तु ब्रह्मातिरिक्ता आकाशादयः सर्व एव पदार्थाः अविद्या-वशात्तैस्तैर्जीवैः कल्प्यमानाः प्रतिजीवं भिद्यमानाः जागरेऽनुभूयमाना अदृष्टसंस्कारादिभिन्नाः यथाऽनुभवं तदानीमेव कल्प्यमानाः पूर्वं पश्चाद्वा स्थितिमलभमानाः स्वप्नेऽप्यननुवर्त्तमानाः सुषुप्तौ सुतरां लीयमानाः मनागपि विद्यमानतां नाश्रयन्ते, यदा पुनर्भोगोन्मुखकर्मवशान्निवर्तते सुषुप्तिस्तदा जायमाने जागरणे यथाऽनुभवमाकाशादयस्ते ते पदार्था आविर्भवन्तः प्रातिभा-सिका एवेति भवत्याकाशस्यापि प्रातिभासिकस्योत्पत्तिः । तदेतदाह—श्रुतिः 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीत्यादिः ।

ननु त्वङ् मनः संयोगस्य ज्ञानसामान्यं प्रति कारणतामुपेत्य वर्तमानस्यापि जगतः सुषुप्तौ पुरीतति प्रविष्टेन मनसा त्वक्संयोगाभावादेव ज्ञानादीनामनुत्पत्तिसिद्धौ तदानी-मन्तः करणादेः समस्तस्य जगतो लयो नोचितः स्वीकर्तुम् यथाऽग्नेरित्यादिश्रुतिस्तूपच-रितार्था भविष्यतीति चेत्

अत्र वदामः ज्ञानेच्छादीनामन्तः करणधर्मत्वस्यैव बहुतरश्रुतिस्मृतिपूर्वोक्तयुक्तिभिः प्रदर्शितत्वेनान्तः करणस्य पुरीतति प्रविष्टस्यापि तदानीं लयाभावे जाग्रद्दशायामिव संस्का-रादियावत्कारणसत्त्वात्तदानीमपि स्मृत्यनुमित्यादेरिच्छाद्वेषादेश्च प्रसक्तौ सुषुप्तेरेवानुदयः प्रसज्येत, तस्मात् सुषुप्त्युपपत्त्यर्थमाकाशादिकल्पनामूलस्य तत्तत्पुरुषीयान्तः करणस्य तदानीं लयोऽवश्यं वाच्य इति प्रतिदिनमाकाशादेरुत्पत्तिविनाशाववश्यं भवतः किमु वक्तव्यं प्रलये इति, तस्मान्न वैशेषिकादिसम्मतमाकाशस्य नापि ब्रह्मातिरिक्तस्य कस्यचिदन्यस्य अतोऽ-न्यदार्तमित्यादिश्रुतिविरुद्धं नित्यत्वं शक्यं व्यवस्थापयितुमाविद्यकस्य जगत इति ।

सति चैवं नित्यद्रव्येष्वाकाशादिषु विशेषपदार्थकल्पनमपि वैशेषिकाणां नैयायिकानां च न युक्तियुक्तं प्रतीमः, तथाहि विशेषं स्वीचिकीर्षव इत्थमाहुः घटादीनां द्व्यणुकपर्यन्ताना-मवयवस्वरूपकारणभेदादेव भेदः परमाण्वाकाशादीनां निरवयवानां नित्यानां तु को भेदक इत्यस्यां चिन्तायां न कश्चिद्भेदकोऽनुभवपथमारोहति विना विशेषम्, नहि परमाणु-गताः पृथिवीत्वादयो जातयः संभवन्ति भेदिकाः तथासति जलीयादिपरमाणुतः पार्थिव-परमाणूनां भेदस्य सिद्धावपि पार्थिवादिपरमाणूनामसंख्यानां परस्परं को भेदकः स्यात् नहि परमाणुरूपं तथा, तस्य च भेदकस्तन्निष्ठोगन्धस्तस्य च भेदकस्तन्निष्ठः स्पर्शस्तस्य च भेदकं तन्निष्ठं रूपमित्येवंक्रमेण तत्तत्परमाणुनिष्ठा गुणा आवर्तमाना न भेदकाः संभवन्ति अन्यो-न्याश्रयचक्रकयोरापत्तेः नापि तन्निष्ठं तद्व्यक्तित्वं तस्यापि भेदकचिन्तायामाश्रयीभूतःपरमाणुरेव भेदकः स्यादित्यन्योन्याश्रयो न निवार्येत अतो नित्यद्रव्येषु विशेषः स्वीकार्यः नित्यद्रव्याणां च भेदसिद्धौ तन्मूलाः सर्व एव पदार्थाः भवन्ति भिन्नाः, विशेषस्य च भेदकचिन्तायां

## विकासः

नास्ति कश्चिदन्यो भेदकोऽनवस्थाप्रसङ्गात् अपि तु स स्वतो व्यावृत्त एवेत्यनायत्याम-श्रयोदोषः सोढव्यौ भवति तथाच अयं विशेषस्तद्विशेषाद्भिन्नः स्वसमादित्यनुमानमपि प्रसरतीति ।

अत्रेदं समालोचनीयम् स्वस्य स्वभेदकत्वे यथा विशेषपदार्थे आत्माश्रयो दोषः सोढव्यो भवति भवता तथा परमाणोरेव स्वतो व्यावर्त्तकत्वमुपगम्यात्माश्रयो दोषः कुतो न सह्यते व्यर्थमाकाशादिषु परमाणुषु चासंख्येष्वसंख्याः विशेषास्तेषां कालादिसम्बन्धाः संख्या अभावप्रतियोगित्वादयो धर्मास्तत्सम्बन्धाश्चासंख्याः गौरवग्रस्ताः सूक्ष्ममतिभि-र्वद्भिर्लाघवान्वेषिभिः कल्प्यते, महच्चित्रमेतत्

नच जातिमत्पदार्थानां जात्यैव व्यावर्तनमिति नियमात् जातिरेव भवति व्यावर्त-कतावच्छेदिका (अतएव न विशेषत्वं जातिरूपेयते स्वतो व्यावर्तकत्वहान्यापत्तेः) जातिश्च व्यक्त्यन्तरसाधारणी व्यभिचारिणी कथं स्वाश्रयाणां परस्परं व्यावर्तयितुमुत्सहेतेत्यतो न परमाण्वादयो भवन्ति स्वतो व्यावृत्ता इति वाच्यम् एतादृशनियमे मानाभावात्, मिथ्याभूतानां परमाण्वाकाशादीनां नित्यत्वस्यैवासिद्धतया तद्व्यावृत्तये विशेषाणां कल्पयितुमयुक्तत्वाच्च, तस्मात् घटादीनां पटादिभ्यो जात्या स्वस्वकारणविशेषेण च व्यावृत्तिः नित्यत्वेन भवदुपगतानां परमाण्वाकाशादीनां च स्वतो व्यावृत्तिरेव भवद्भिरप्युपगन्तुमुचिता अस्मन्मते चाकाशादी-नामपि कारणविशेषेण स्वस्वासाधारणधर्मविशेषेणैव च व्यावृत्तिरतो न विशेषपदार्थः कल्प-नामर्हति तस्माद् बालोपज्ञाननं तदिति मन्तव्यम् ।

## शाङ्करभाष्यम्

जन्म उत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते, (तैत्ति० ३।१) इत्यस्मिन् वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । अस्येति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः । षष्ठी

## भामती

भवति, नात्यन्ताप्रसिद्धम्। एवं च न शब्दोऽप्यत्र प्रक्रमते, अत्यन्ताप्रसिद्धतया ब्रह्मणोऽपदार्थस्यावाक्यार्थत्वात्। तस्माल्लक्षणाभावाद् न ब्रह्म जिज्ञासितव्यमित्याक्षेपाभिप्रायः। तमिममाक्षेपं भगवान् सूत्रकारः परिहरति—'जन्माद्यस्य यतः' इति। मा भूदनुभूयमानं जगत् तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं तदुत्पत्त्या तु

## प्रकाशः

द्वितीयं निरस्यति नचेत। ननु लोकासिद्धमपि वेदेनैव ज्ञाप्यतामत आह—एवं चेति। माभूदिति। अयमभिसन्धिः यदिदं लक्षणमाक्षिप्यते भवता तत्किं शुद्धस्य किं वा सविशेषस्य 'ईश्वरस्य' आद्ये शुद्धस्य 'निर्गुणस्य' निर्धर्मकत्वादिष्टापत्तिरेव द्वितीये तु जन्मादिकारणत्वरूपमेव लक्षणं संभवतीति न काचिदनुपपत्तिरिति।

ननु भवत्वेवं सविशेषस्य लक्षणं परंतु अथातोब्रह्मजिज्ञासेत्यत्र निर्गुणमेव ब्रह्म जिज्ञासितम् न तु सविशेषं निर्विशेषब्रह्मसाक्षात्कारस्यैवाविद्यानिवर्तकत्वात् अतएव मुण्डकोपनिषदि 'नान्तः प्रज्ञं न वहिः प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं. शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा विज्ञेयः; इति श्रुतौ निर्विशेषस्यैव विज्ञेयत्वाभिधानात् तल्लक्षणमेवाकाङ्क्षितमिति चेत्।

अत्रेदमवधारयन्तु प्रणिहितमानसाः शास्त्रतत्त्वं वुभुत्सन्तो भवन्तः! द्विविधं ब्रह्म शास्त्रेणावगम्यते तत्र यत् नामरूपविकारोपाधिविशिष्टं सगुणं ब्रह्म 'ईश्वरः' 'यः सर्वज्ञः स सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, तदैक्षत एकोऽहं वहु स्याम्प्रजायेय. इत्यादि श्रुतिप्रतिपाद्यं तदुपास्यम् 'उपासनया लभ्यं भवति। यच्च 'अशब्दमस्पर्शमरूपमव्ययम्' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, निःकलं निःक्रियं शान्तं निरवद्यं निरञ्जनम्, नेतिनेतीत्यादिश्रुतिप्रतिपाद्यं निर्गुणं ब्रह्म तत् श्रवणमनननिदिध्यासनैः साक्षात्करणीयं ज्ञेयमित्युच्यते यदभिधीयते गीतायां भगवता ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना-( १३-१२ ). एवं च यः सोपाधिकब्रह्मध्यानार्चनाद्यभ्यासपरिपाकसंजातविशुद्धसत्त्वः संसारासारतामवलोकमानो निरुपाधिकं ब्रह्मानुसन्दधानोऽद्वेष्टृत्वादिगीताद्वादशाध्यायोक्तगुणविशिष्टभक्तिमार्गीयमुख्याधिकारी सोऽपि श्रवणमननिदिध्यासनान्यावर्तयन् निर्विशेषं ब्रह्म साक्षात्करोतीति द्विविधं वेदान्तार्णवस्य स्रोतः प्रवर्तते इत्यभिप्रेत्य निरुपाधिकसोपाधिकयोरुभयोरेव जिज्ञास्यत्वेऽपि

## शाङ्करभाष्यम्

जन्मादिधर्मसम्बन्धार्था । यत इति कारणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य

## भामती

भविष्यति, देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः । सूत्रावयवान् विभजते—जन्मोत्पत्तिरादिरस्येति । लाघवाय सूत्रकृता जन्मादीति नपुंसकप्रयोगः कृतस्तदुपपादनाय समाहारमाह—जन्मस्थितिभङ्गमिति । जन्मनश्च इत्यादिः 'कारणनिर्देश' इत्यन्तः सन्दर्भो निगदव्याख्यातः । स्यादेतत्—प्रधानकालग्रहलोकपालक्रियायदृच्छास्वभावाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभावं ब्रह्म जगज्जन्मादिकारणमिति कुतः सम्भावनेत्यत आह—अस्य जगत इति । अत्र नामरूपाभ्यां व्याकृतस्येति चेतनभावकर्तृकत्वसम्भावना

## प्रकाशः

निरुपाधिकलक्षणासंभवस्योक्तश्रुत्यापि प्रदर्शितत्वेन सोपाधिकमेव ब्र संभवति लिलक्षयिषितमतस्तल्लक्षणमेव प्रदर्शितं सूत्रकृता । अतएव च प्रथमसूपान्ते, 'अस्ति तावन् नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति' त्यादि निर्विशेषसविशेषयोरुभयोरुपादानं कृतं गूढाभिप्रायवता भगवता भाष्यकृ मिश्रैरपि पूज्यचरणैर्मैथिलानां गौरवसम्पादकैष्टीकाकारैः 'तदेवमनोपाधि ब्रह्मणो रूपं दर्शयित्वाऽविद्योपाधिकं रूपमाह सर्वज्ञं सर्वशक्तिसमन्वितम्, इ प्रकटीकृतोऽभिप्रायस्तत्र भामत्याम्, तस्मात्कल्पितविशेषवतोऽपि ब्रह्मणोऽविशे शाविषयकस्य जायमानस्य निर्विकल्पसाक्षात्कारस्याज्ञानकल्पितान्तःकरणा खिलदृश्योन्मूलकत्वमिति भवति सविशेषमपि ब्रह्म जिज्ञास्यमिति । देशान्त प्राप्तिरिति । देशान्तरप्राप्तिः सवितृकर्तृकायाः व्रज्यायाः 'गमनस्य' यथानु मापिका तथा जगदपि स्वकारणमनुमापयति तदेव कारणं ब्रह्म ईश्वरः इ भावः । जन्मआदिर्ययोः स्थितिभङ्गयोः तौ जन्मादी इति यदि विवक्ष्येत त प्रकृतिभावेन यणादेशाभावात् जन्मादी अस्येति सूत्रस्वरूपं स्यात् न च तथाऽ तस्मात्समाहारद्वन्द्व एव सूत्रकृतोऽभिमत इत्याह—लाघवायेति जगतो विशेषण भाष्योक्तानां कृत्यं प्रदर्शयितुं भूमिकामारचयति स्यादेतदिति । तत्र स्वभाव

## भामती

प्रधानादृयचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं यथा घटादि, विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं संभाव्यते। चेतनो हि बुद्धावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। अत एव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो–घटं करोतीति। यथाहुः–बुद्धिसिद्धं तु न तदसत् इति। तथा चाचेतनो बुद्धावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः। स्यादेतत्–चेतना ग्रहा लोकपाला वा नामरूपे बुद्धावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह–अनेककर्तृभोक्तृसंयुक्तस्येति। केचित् कर्तारो भवन्ति, यथा सूदर्त्विगादयो, न भोक्तारः। केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयो न कर्तारः तस्मादुभयग्रह-

### प्रकाशः

न कश्चिदन्यो नियन्ता पदार्थानाम्, किंतु स्वभाव एव, यदृच्छावादे तु स्वभावोऽपि न नियामकः। उपप्लवमानेषु ब्रह्मणः कारणत्वं निराकुर्वाणेषु। व्यासेधति प्रतिषेधति। उत्पत्तेः प्रागसतः बुद्धावालेखने युक्तिमाह–अतएवेति। निर्वर्त्यस्य सम्पादनीयस्य, कार्यमुत्पत्तेः प्राक्सत्त्वेनाप्रतीयमानमपि बुद्ध्यारूढरूपेण सदेव न त्वसत् कथमन्यथा घटंकरोतीति घटादेः कर्मत्वनिर्देश उपपद्यत इत्यर्थः। अत्र सत्कार्यवादिनामनुमतिमाह–यथाऽऽहुरिति। सूदः पाचकः यः पाचकः केवलं वेतनमेव गृह्णाति न स्वयमपि स्वपाचितं भुङ्क्ते सोऽत्र विवक्षितः। यजमानस्य यज्ञंसम्पादयन्तोऽपि ऋत्विजो न तत्फलं स्वर्गादिकमाप्नुवन्तीति कर्तार एव ते न भोक्तारः। श्राद्धवैश्वानरीयेति श्राद्धस्य पित्रादिगतस्वर्गोद्देशेन पुत्रादिना क्रियमाणस्य फलं पित्रादावेव न कर्तरि, एवं वैश्वानरं द्वादश कपालं निर्वपेत्पुत्रे जाते इत्युपक्रम्य यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति, इतिश्रुत्या पित्रा सम्पादनीयस्य वैश्वानरीयेष्ट्यादेः पूतत्वादिकं फलं पुत्रे एव भवतीत्यर्थः।

## विकासः

सर्वमेतदाकस्मिकापरनाम्तीति तदेतदुपपादि न्यायकुसुमाञ्जलौ मैथिल कमलभास्करैरुदयनाचार्यैः अकस्मादेव भवतीति चेन्न

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैव अवधेर्नियतत्वतः ॥

इत्यादिना, एतत्कारिकाया अयमभिप्रायः अकस्मादेव भवतीतिवदतः पाखण्डस्य तत्र संसारः कस्मादपि हेतोर्न भवतीति हेतुनिषेधोऽभिमतस्तदा कारणानपेक्षणात् सर्वदा का भवनं प्रसज्येत, यदि च भवननिषेधः तदा कदाऽपि कार्यं न स्यात्, यदिच स्वस्मादेव भ त्यर्थोऽभिमतस्तदापि उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वात् कदाचिदपि कार्यं न स्या पूर्वोक्त एव दोषः, यदि चानुपाख्यात् गगनकुसुमादेर्भवतीत्यर्थस्तदा प्रागपि सत्त्व कार्याणां सदातनत्वप्रसङ्गः तस्मान्नाकस्मिकत्वमस्य संसारस्य ।

अथास्तु तर्हि स्वाभाविक एवायं संसारः यथा हि नियतदेशस्वभावाः भावाः त नियतकालस्वभावा अपीति संभवत्येतत्पक्षे सर्वापत्त्यनुपपत्त्योः परिहार इति चेन्नैवम् संसारः कारणानपेक्षः स्वभावादेव स्यात्तदा सर्वदैव स्यात् न स्यादेव वा न तु कदाचित् ये हि कारणानपेक्षास्ते निरवधयः सन्तो नियमेन कादाचित्कत्वस्वभावविरहिणो यथा आत्मा, इत्थं च यदि घटपटादीनां कारणानपेक्षत्वं स्यान्निरवधित्वमपि स्यात् तथा सति कादाचित्कत्वं तेषां न स्यात् तस्मात्कार्यकारणपरम्पराऽभ्युपगम आवश्यक इति।

अपि च स्वभावः प्रत्येकं घटादीनां धर्मो न घटादिकं विनाऽवतिष्ठेत अतो घ द्युत्पत्तेरनन्तरं तस्य स्वभाव उत्पद्येत तत्समकालं वा उभयथाऽपि न स्वभावस्य कार कार्यपूर्ववृत्तित्वविरहात् घटादेरुत्पत्तेः पूर्वं तु तत्स्वभावः कथमाश्रयं विना स्थितिपदं यमाश्रयेत स एव घटः स्यात् न वस्त्वन्तरं, न च जात्यादिवदाश्रयं विनाऽवस्थि अनिर्वचनीयवादिनां दृष्टान्तासिद्धेः जातेरपि खण्डितत्वात् तस्मादप्यनु स्वभाववाद इति ।

## शाङ्करभाष्यम्

प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप चिन्त्यरचनारूपस्य जन्मस्थिति भङ्गं यतः सर्वज्ञात्सर्वशक्ते कारणाद्भवति तद्ब्रह्मेति वाक्य शेषः । अन्येषामपि भाव विकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु 'जायतेऽस्ति, इत्यादी

भामती

णम्। "देशकालनिमित्तक्रियाफलानि" इतीतरेतरद्वन्द्वः। देशादीनि च प्रतिनियतानि चेति विग्रहः। तदाश्रयो जगत् तस्य। केचित् खलु प्रतिनियतदेशोत्पादा यथा कृष्णमृगादयः। केचित् प्रतिनियतकालोत्पादाः यथा कोकिलरवादयः। केचित्प्रतिनियतनिमित्ताः यथा, नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः केचित्प्रतिनियतक्रियाःयथा ब्राह्मणानां याजनादयो नेतरेषाम्। एवं प्रतिनियतफलाः यथा केचित्सुखिनः केचिद् दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद् दुःखिनः। सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते, परिमितज्ञानशक्तिभिर्ग्रहलोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात्। तदिदमुक्तम् मनसाप्यचिन्त्यरचनारूपस्येति। एकस्या अपि हि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुनः कर्त्तुमित्यर्थः। सूत्रवाक्यं पूरयति— तत्ब्रह्मेति वाक्यशेषः। स्यादेतत्, कस्मात् पुनर्जन्मस्थितिभङ्गमात्रमिहादिग्रहणेन गृह्यते, न तु वृद्धिपरिणामापक्षया अपीत्यत आह— अन्येषामपि भावविकाराणां वृद्ध्यादीनां त्रिष्वेवान्तर्भाव इति। वृद्धिस्तावदवयवोपचयः। तेनाल्पावयवादवयविनो द्वितन्तुकादेरन्य एव

प्रकाशः

वाक्यशेष इति तस्माज्जगत्कारणत्वादिकं ब्रह्मणो लक्षणं सम्पन्नमिति भावः। ननु न ब्रह्मणः किमपि लक्षणं भवति संभावनार्हम् सजातीयविजातीयव्यावृत्तिफलकस्यैव धर्मस्य लक्षणत्वात् ब्रह्मणः सजातीयस्य कस्य चिदभावात् साजात्याभावे च तत्सापेक्षस्य वैजात्यस्याप्यभावादिति चेन्न जगत्कारणत्वेन-पराभिमतं प्रधानादिकमेव सजातीयं तच्च कल्पितं पारमार्थिकं वेत्यन्यदेतत्, एवं सति विजातीयमपि नाप्रसिद्धं घटादेरखिलकारणत्वविरहिण एव विजातीयत्वादित्यवगन्तव्यम्।

## शाङ्करभाष्यम्

ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशंक्येत

## भामती

महान् पटो जायत इति जन्मैव वृद्धिः। परिणामोऽपि त्रिविधो धर्मलक्षणावस्थालक्षण उत्पत्तिरेव। धर्मिणो हि हाटकादेर्धर्मलक्षणः परिणामः कटकमुकुटादिस्तस्योत्पत्तिः। एवं कटकादेरपि प्रत्युत्पन्नत्वादिलक्षणः परिणाम उत्पत्तिः। एवमवस्थापरिणामो नवपुराणत्वाद्युत्पत्तिः अपक्षयस्त्ववयवह्रासो नाश एव। तस्माज्जन्मादिषु यथास्वमन्तर्भावात् वृद्ध्यादयः पृथङ्नोक्ता इत्यर्थः। अथैते वृद्ध्यादयो न जन्मादिष्वन्तर्भवन्ति तथाप्युत्पत्तिस्थितिभङ्गमेवोपादातव्यम्, तथासति हि तत्प्रतिपादके यतो वा इमानि भूतानीति वेदवाक्ये बुद्धिस्थीकृते जगन्मूलकारणं ब्रह्म लक्षितं भवति, अन्यथा तु जायतेऽस्ति वर्धत इत्यादीनां ग्रहणे तत्प्रतिपादकं नैरुक्तवाक्यं बुद्धौ भवेत्, तच्च न मूलकारणप्रतिपादनपरम्, महासर्गादूर्ध्वं स्थितिकालेऽपि तद्वाक्योदितानां जन्मादीनां भावविकाराणामुपपत्तेः, इति शङ्कानिराकरणार्थं वेदोक्तोत्पत्तिस्थिति-

## प्रकाशः

धर्मलक्षणावस्थेति। एतान् त्रिविधानपि परिणामान् पातञ्जला व्यवहरन्ति तथाच तदीयं सूत्रम् 'एतेन भूतेन्द्रियधर्मलक्षणावस्था परिणामा व्याख्याताः' इति तज्ज्ञानफलं तत्रैव प्रदर्शितम्, परिणामत्रयसंयमादतीतानागतज्ञानमिति। तानेतान् परिणामान् क्रमेण विवेचयति—धर्मिणो हीति। हाटकादेः। सुवर्णादेः। यः खलु हाटकादेर्धर्मिणः कटकमुकुटादिधर्मरूपः परिणामः सोऽपि निरूप्यमाणः हाटकादितः कटकादेरुत्पत्तिरेव पर्यवस्यतीत्यर्थः। प्रत्युत्पन्नत्वम् वर्तमानत्वम् आदिपदादतीतत्वभविष्यत्त्वयोः परिग्रहः कटकादेः कार्यस्य वर्तमानत्वातीतत्वभविष्यत्वरूपो लक्षणपरिणामोऽपि निरूप्यमाणः उत्पत्तिरेव

## शाङ्करभाष्यम्

तन्माशङ्कीति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते न यथोक्तविशेषणस्य जगतो यथोक्तविशेष-

## भामती

भङ्गग्रहणमित्याह— यास्कपरिपठितानां त्विति। नन्वेवमप्युत्पत्ति-मात्रं सूच्यतां, तन्नान्तरीयकतया तु स्थितिभङ्गं गम्यत इत्यत आह योत्पत्तिर्ब्रह्मणः कारणादिति। त्रिभिरस्योपादानत्वं सूच्यते उत्पत्ति-मात्रं तु निमित्तकारणसाधारणमिति नोपादं सूचयेत्। तदिदमुक्तं

## प्रकाशः

त्यर्थः। लक्षणपरिणाममुदाहरति एवमिति। भाष्ये जायतेऽस्तीत्यादीनामिति जायतेऽस्ति वर्धते परिणमतेऽपक्षीयते विनश्यतीति यास्केन निरुक्तौ षड् भाव-विकारा उक्ताः यथा वृक्षस्योत्पत्तिः ततः स्थितिस्ततो वर्धनं 'उच्छ्रायः' ततो वृद्धावस्थारूपः परिणामस्ततः शाखादेरपक्षयस्ततो विनाश इति, तेऽमी विकारा सृष्ट्यादौ जायमानानां गगनादीनां न संभवन्ति नहि गगनादयो वृद्धिमन्तो भवन्ति किंतु सृष्ट्युत्तरं जायमाना वृक्षादय एव तथा तत्कारणत्वमेव ब्रह्मणि लभ्येतानेन सूत्रेण न तु गगनादिकारणत्वमपि मूलकारणे तस्मिन् अतोऽखिलजगत् कारणत्वसंग्रहाय त्रयाणामेव ग्रहणमिति भावः। भाष्ये या उत्पत्तिर्ब्रह्मणइति ब्रह्मणः सकाशात् या जगत उत्पत्तिरित्यर्थं स्फोरयितुमाह कारणादिति उत्प-त्तिमात्रमिति। तावतैवालक्ष्यव्यावृत्तिसिद्धौ स्थितिलयोपादानमफलमित्यर्थः। नान्तरीयकतया व्यापकतया।

## विकासः

नोपादानं सूचयेदिति। ननु निमित्तकारणत्वमपि यथोर्णनाभिः सृजते गृह्णते च, कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् 'तदैक्षत' इत्यादिश्रुतिप्रतिपाद्यमानमस्त्येव, अतएव अभिन्ननिमित्तोपादानं ब्रह्मेति सिद्धान्तोऽपि सङ्गच्छते इति चेदस्तु ईश्वरत्वेन निमित्त-कारणत्वमपि, न तत्प्रतिषेधामः परन्तूपादनत्वमपि 'यतो वेत्यादि श्रुत्या जन्मस्थिति-लयकारणत्वोक्त्या प्रदर्श्यमानं जन्मादिसूत्रेणानेन समर्थ्यते इति।

नच लोके एकत्र कर्तृत्वमुपादानत्वञ्च न दृष्टमिति वाच्यम्, न ह्ययमर्थो लौकि-को येन लौकिकं निदर्शनमपेक्षेत, अपितु निर्णीतस्वार्थतात्पर्यकवेदैकसमधिगम्यः स च

### विकासः

यथावैदिकं प्रमाणमास्थेयः, लोकेऽपि विरुद्धयोर्धर्मयोरवच्छेदकभेदेनावस्थानं दृश्यमानं न विरोधमावहति, किमङ्ग भोः ! आम्नायैकप्रतिपाद्यमाने, अतोमायोपाधिकत्वेन ब्रह्मणः अधिष्ठानतयोपादानता च निरुच्यमाना न मनागपि विरोधलेशमाश्लिष्टुमीहते इति। नन्वेवमप्युपादानत्व सिद्धये लयाधारत्वमेव लक्षणं कुतो नासूचि। 'नहि निमित्त-कारणे भवति लयः कार्याणामिति चेन्मैवम्, तथासत्युपादनत्वसिद्धावपि उत्पत्तिः क्रमात् स्थितिश्च ब्रह्मणि वाऽन्यत्र वेति विचिकित्सा ऽशक्यसमुच्छेदा स्यात् दृश्यते हि घटादेः कुलालादिगृहादावुत्पत्तिः स्थितिश्च क्रेतुर्गृहे, अतोऽस्ति त्रयाणा-मुपादानं श्रुतौ सूत्रे च, सति चैवं ब्रह्मण्येवावतिष्ठमानस्य प्रपञ्चस्य नेहनानास्ति किञ्चनेत्यादि श्रुत्या निषिद्ध्यमानस्यान्यत्र सत्तासंभावनारहितस्य निःशङ्कमध्या-रोपापवादन्यायं स्वस्यां प्रवेशयन्ती श्रुतिः स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वमपि जगतो निराबाधं साधयतीति विदन्त्येव वेदान्तसिद्धान्तमध्यवस्यन्तो ब्रह्म-त्वमधिजिज्ञासन्तः संसारासारसागरादुत्तितीर्षन्तो मोक्षमार्गमाश्रयन्तोऽद्वैतवादिन इति।

## भामती

तत्रैवेति। पूर्वोक्तानां कार्यकारणविशेषणानां प्रयोजनमाह—न यथो क्तेति। तदनेन प्रबन्धेन प्रतिज्ञाविषयस्य ब्रह्मस्वरूपस्य लक्षणद्वारेण संभावनोक्ता। तत्र प्रमाणं वक्तव्यम्। यथाहुर्नैयायिकाः—

### प्रकाशः

नन्वनेनैव लक्षणाख्येन केवलव्यतिरेकिणा हेतुना प्रतिज्ञातब्रह्मवि-षयप्रमाणलाभात् शास्त्रयोनित्वसमन्वयाधिकरणयोर्वैयर्थ्यमित्याशंक्याह— तदनेनेति। प्रतिज्ञाविषयस्येति। ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्यार्थि-कप्रतिज्ञायां हि भवति ज्ञानविशेषणतया विषयो ब्रह्म। संभावनोक्तेति। लक्षणं तु न ब्रह्मप्रमापकं तद्धि स्वयमेव प्रमापकमनुमानविधया वा नाद्यः, लक्षणं हि सिद्धस्य वस्तुनः इतरस्मात् सजातीयाद्विजातीयाच्च भेदमवगमयति। नतु लक्ष्यं साधयति अतिप्रसङ्गात्, नापि द्वितीयः कार्यं हि लिङ्गं स्वकारण-मनुमापयदपि तत्कारणमेकमनेकं वेत्यत्र न प्रमाणतामासादयति एकत्वनि-श्चये एव च तत्र सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च सम्भवति नेतरथा तस्मात्तदेकत्वा-दिसिद्ध्यर्थं लिङ्गान्तरमेवाश्रयणीयमिति भवत्येकत्वादिसाधनायोत्तराधिकर-णयोः सार्थक्यम्। नच केवलस्यानुमानस्यैकत्वाद्यनिर्णायकत्वेऽपि कल्पना-लाघवतर्कानुगृहीतस्य तस्यैकत्वादिनिर्णायकत्वं स्यादितिवाच्यम् विचित्रप्रासा-

### शाङ्करभाष्यम्

णमीश्वरंमुक्त्वाऽन्यतः प्रधानाद्चेतनादणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम् । नच स्वभावतः विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः । नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे न वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् । वेदान्तवाक्यानि हि

### भामती

संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥

यथा च 'वन्ध्या जननी' इत्यादिरिति ।

इत्थं नाम जन्मादि संभावनाहेतुः, यदन्ये वैशेषिकादय इत एवानुमानादीश्वरविनिश्चयमिच्छन्तीति संभावनाहेतुतां द्रढयितुमाह एतदेवेति चोदयति–नन्विहापीति । एतावतैवाधिकरणार्थे समाप्ते वक्ष्यमाणाधिकरणार्थमनुवदन् सुहृद्भावेन परिहरति–न । वेदान्तेति ।

### प्रकाशः

दादीनां बहुकर्तृकत्वस्य प्रायेण दृष्टत्वात् दृष्टविरुद्धस्य च तर्कस्य दुर्बलत्वेनोत्कटकोटिकसंशयरूपसंभावनामात्रसम्पादकत्वात् । नच दुर्बलस्य तर्कस्य कथमत्र संभावनापादकत्वमपीतिवाच्यम् स्वप्नविनिर्मितानां प्रासादादीनामेककर्तृकत्वस्यापि दृष्टत्वात्, तथाच दृष्टविरुद्धत्वादिभिराकुलीकृतस्तर्कों न शक्नोत्येकत्वादिकं निश्चाययितुम्, अपितु श्रुतिप्रामाण्यावष्टम्भे सत्येव तथा, तस्मात्सुष्टूक्तं लक्षणद्वारेण संभावनोक्तेति । तत्रेत्यादि संभावनायामुक्तायां सत्यामनुपदं वक्ष्यमाणाधिकरणद्वयेन प्रमाणं वक्तव्यमित्यर्थः । एतदेवेति भाष्येण युक्तीनामासां संभावनाहेतुत्वमेव दृढीक्रियते नत्वाभिर्युक्तिभिर्निश्चय इत्याह–इत्थंनामेति । सुहृद्भावेनेति उत्तराधिकरणारम्भात्प्राक् क्षणमपि शिष्याणामनुपपत्तिशंका माभूदिति कृपयेत्यर्थः । परिहरतीति । नावेदविन्मनुते तं बृहन्तम्,

शाङ्करभाष्यम्

सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता। सत्सु तु वेदान्तवाक्येषु जगतः जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्। तथा हि 'श्रोतव्यो मन्तव्यः' (बृह० २।४।५) इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान्

भामती

वेदान्तवाक्यकुसुमग्रथनार्थतामेव दर्शयति— वेदान्तेति। विचारस्याध्यवसानं सवासनाविद्याद्वयोच्छेदः। ततो हि ब्रह्मावगतेर्निर्वृत्तिराविर्भावः। तत्किं ब्रह्मणि शब्दादृते न मानान्तरमनुसरणीयम्, तथा च कुतो मननं, कुतश्च तदनुभवः साक्षात्कारः? इत्यत आह—सत्सु तु वेदान्तवाक्येष्विति अनुमानं वेदान्ताविरोधि

प्रकाशः

नैष। तर्केण मतिरापनेया, इत्यादिश्रुतेर्वेदैकसमधिगम्यत्वं ब्रह्मण इत्याशङ्क्य समाधत्ते इत्यर्थः। ननु वाक्यार्थविचारणाशब्देन उपासनासहितः शाब्दबोधोऽभिहितः परस्ताच्च तत्फलमवगतिरुक्ता। मध्ये ज्ञानवचनोऽध्यवसानशब्दोऽयुक्त इत्याशंक्य नायं ज्ञानवचनोऽपि तु संस्कारसहिताविद्याविनाशवचन इत्याह—विचारस्येत्यादि। विचारस्याध्यवसानं चरमं फलम्, तदाह—सवासनेत्यादि अत्राध्यवसानशब्दस्य वृत्तिरूपः साक्षात्कारस्तु नार्थः तदुत्तरक्षणे ब्रह्मस्वरूपावगतेरलाभात् मध्येऽविद्योच्छेदेन व्यवधानादिति हृदयम्। भाष्ये—नानुमानादीति। अनुमानेन तु नात्मस्वरूपं यथावदधिगन्तुं शक्यमिति भावः। विमतं चेतनपूर्वकम् कार्यत्वादित्यादिकमनुमानं नोपेक्षणीयमित्याह-सत्सु वेदान्तवाक्येष्विति। पण्डितो मेधावीत्यादि। तस्य तावदेव चिरं यावन्न विमोक्ष्ये- अथ संपत्स्ये इत्यन्तस्य छान्दोग्योपनिषद्वाक्यस्य व्याख्यान

## प्रकाशः

प्रायेण भाष्यकारीयैर्वाक्यैः स्पष्टार्थकैरिह क्रियते, यथाऽयं दृष्टान्तो वर्णितः स्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मूढोऽशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्रवेशितो दुःखार्तो विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति स कथं चिदेव कारुणिकेन केनचिन्मोक्षितः स्वदेशान्गन्धारानेवापन्नो निर्वृतः सुख्यभूत् । एवमेवायमात्मा तेजोऽबवन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमि-मूत्रपूरीषवत्, शीतोष्णाद्यनेकद्वन्द्वदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्या-पुत्रमित्रपशुबन्ध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः प्रवेशितोऽहममुष्य पुत्रो, ममैते बान्धवाः सुख्यहं दुःखी मूढः पण्डितो धार्मिको बन्धुमान् जातो मृतो जीर्णः पापी धनं मे नष्टं हा ! हतोऽस्मि कथं जीविष्यामि का मे गतिः किं मे त्राणमित्यनेकशतसहस्रानर्थज्ञानवान् विक्रोशन् कथंचिदेव पुण्यातिशयात्परमकारुणिकं कंचित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदाऽऽ-सादयति—तेन च ब्रह्मविदा कारुण्याद् दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः संसारविषयेभ्यो 'नासित्वं संसारी अमुष्य पुत्रत्वादिधर्मवान् किं तर्हि सत् यत् तत्त्वमसीत्यविद्यामोहपटाभिनहनात्, मोक्षितो, गंधारपुरुषवच्च स्वं सदात्मानमुप-संपद्य सुखी निर्वृत इति एतमेवार्थमाह आचार्यवान् पुरुषो वेदेति तस्यैवाचार्यवतो

मुक्ताविद्याऽभिहननस्य तावानेव कालश्चिरं क्षेपः सदात्मस्वरूपसम्पत्तेरिति वाक्यशेषः, कियान् कालश्चिरमित्युच्यते यावन्न विमोक्ष्ये विमोक्ष्यते इति एतत्पु-रुषव्यत्ययेन सामर्थ्यात् येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद्देहपातो यावदित्यर्थः अथ तदैव सम्पत्स्ये सम्पत्स्यते इति पूर्ववत् नहि देहमोक्षस्य सत्सम्पत्तेश्च कालभेदोऽस्ति येनाथशब्द आनन्तर्यार्थः स्यात् । ननु यथा सद्वि ज्ञानानन्तरमेव देहपातः सत्सम्पत्तिश्च न भवति कार्यशेषवशात् तथाऽप्रवृत्तफला-नि प्राग् ज्ञानोत्पत्तेः जन्मान्तरसञ्चितान्यपि कर्माणि सन्तीति तत्फलोपभोगार्थं पतितेऽस्मिन् शरीरे शरीरान्तरमारब्धव्यम् । उत्पन्ने ज्ञाने यावज्जीवं विहितानि प्रतिषिद्धानि वा कर्माणि करोत्येवेति तत्फलोपभोगार्थं चावश्यं शरीरान्तरमा-रब्धव्यं ततश्च कर्माणि, ततः शरीरान्तरमिति ज्ञानानर्थक्यं कर्मणां फलवत्त्वात् । अथ ज्ञानवतः क्षीयन्ते कर्माणि तदा ज्ञानप्राप्तिकालमेव ज्ञानस्य सत्सम्पत्ति हेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात् तथा चाचार्याभाव इति, न ब्रह्मज्ञानिन आचार्यस्याभावात् आचार्यवान् पुरुषो वेदेत्यनुपपत्तिः ज्ञानान्मोक्षाभावप्रसङ्गश्च;

### प्रकाशः

देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य, न कर्मणां प्रवृत्ता- प्रवृत्तफलत्वस्त्वविशेषोपपत्तेः, यदुक्तमप्रवृत्तफलानां कर्मणां ध्रुवफलत्वस्त्वात् ब्रह्मविदः शरीरे पतिते शरीरान्तरमारब्धव्यमप्रवृत्तकर्मफलोपभोगार्थमिति एतदसत् विदुषस्तस्य तावदेव चिरमिति श्रुतेः प्रामाण्यात् । प्रवृत्तफलानां कर्म- णामुपभोगेनैव क्षयः अप्रवृत्तफलानां तु ज्ञानान्नाशोऽग्रेऽनुत्पादश्च, ननु, पुण्यं वै पुण्येन कर्मणा भवतीत्यादि श्रुतेरपि प्रामाण्यमेव तथा चाग्रेऽपि पुण्यापुण्ये स्याताम्, सत्यमेवम, तथाऽपि प्रवृत्तफलानामप्रवृत्तफलानाञ्च कर्मणां विशेषोऽ- स्ति, कथम यानि प्रवृत्ति फलानि कर्माणि यैर्विद्वच्छरीरमारब्धं तेषामुपभोगेनैव क्षयः यथाऽऽरब्धवेगस्य लक्ष्यमुक्तेष्वादेर्वेगक्षयादेव स्थितिः न तु लक्ष्यवेध- समकालमेव प्रयोजनं नास्तीति तद्वत्, अन्यानि स्वप्रवृत्तफलानि प्राग्ज्ञानोत्पत्ते- रूर्ध्वं च कृतानि वा क्रियमाणानि वाऽतीतजन्मान्तरकृतानि वाऽप्रवृत्तफलानि ज्ञानेन दह्यन्ते प्रायश्चित्तेनेव, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति स्मृतेश्च 'क्षीयन्ते चास्य कर्माणीति चाथर्वणे' अतो ब्रह्मविदो जीवनादिप्रयो- जनाभावेऽपि प्रवृत्तफलानां कर्मणामवश्यमेव फलभोगः स्यादिति मुक्तेपुवत्, 'तस्य तावदेवचिरम्' इति युक्तमेवोक्तमिति यथोक्तदोषचोदनानुपपत्तिरिति।

### शाङ्करभाष्यम्

पुरुषोवेद, (छान्दो० ६।१४।२) इति च पुरुषबुद्धिसाहाय्य- मात्मनो दर्शयति न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणम् अनुभवावसानत्वाद्भूतवस्तुविषय- त्वाच्च ब्रह्मज्ञानस्य। कर्तव्ये हि विषये नानुभवापेक्षास्तीति

### भामती

तदुपजीवि चेत्यपि द्रष्टव्यम् । शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम् । युक्तिश्चार्थापत्तिरनुमानं वा । स्यादेतत् यथा धर्मे न पुरुषबुद्धिसाहाय्यम्, एवं ब्रह्मण्यपि कस्मान्न भवतीत्यत आह-

## भामती

न धर्मजिज्ञासायामिवेति, श्रुत्यादय इति। श्रुतीतिहासपुराणस्मृतयः प्रमाणम्। अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारस्तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम्। तच्च फलमिव फलमिति गमयितव्यम्। यद्यपि धर्मजिज्ञासायामपि सामग्र्यां प्रत्यक्षादीनां व्यापारस्तथापि साक्षान्नास्ति, ब्रह्मजिज्ञासायां तु साक्षादनुभवादीनां संभवोऽनुभवार्था च ब्रह्मजिज्ञासेत्याह—अनुभवावसानत्वात्। ब्रह्मानुभवो ब्रह्मसाक्षात्कारः परमपुरुषार्थः, निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वादिति। ननु भवतु ब्रह्मानुभवार्था जिज्ञासा, तदनुभव

### प्रकाशः

भाष्ये—पुरुषबुद्धिः मननम् आत्मनः स्वस्याः। ब्रह्मणो मानान्तराविषयत्वे कुतो मननमित्यतआह—शब्दाविरोधिन्येति। सामान्यतः कारणमात्रं सम्भावयन्ती युक्तिः न कारणस्य सर्वज्ञत्वैकत्वादिसिद्धौ स्वतन्त्रा, अपि तु, तत्र शब्दमपेक्षत इत्यर्थः। भाष्यस्थानुभवशब्दस्यार्थमाह—अनुभव इत्यादि। ननूक्तवृत्तेः कथं प्रमाणत्वं सम्भवति? प्रमाणस्य हि फलं प्रमा भवति न च वृत्त्यात्मकस्य साक्षात्कारस्यास्ति किञ्चित्फलं प्रमेत्याशङ्क्य तत्कृताविद्यानिवृत्तिद्वारा स्वरूपाभिव्यक्तिरौपचारिकं फलमस्तीत्याह—तस्याविद्येति। ननु धर्मजिज्ञासायां श्रुत्यादय एव प्रमाणमिति भाष्योक्तमनुपपन्नं वेदस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वेन श्रोत्रस्यापि प्रमाणस्यापेक्षणादित्याशङ्क्य शब्दग्रहणे श्रोत्रस्यापेक्षणेऽपि तदर्थस्य धर्मस्य यागादेः श्रोत्रेन्द्रियाग्राह्यस्य ज्ञानं न साक्षात् श्रोत्रमपेक्षतेऽतस्तत्र श्रुत्यादय एव मानम्, ब्रह्मजिज्ञासा तु साक्षात्कारपर्यन्ताऽभिमताऽतस्तदुपयोगिनीं युक्तिमियमपेक्षत इत्याह—यद्यपीत्यादिना। न केवलं ब्रह्मजिज्ञासायामनुभवादीनां सम्भव एवापितु अपरोक्षसंसारभ्रमनिवर्त्तकेन ब्रह्मसाक्षात्कारेण विना जिज्ञासाया अपर्यवसानं चेत्याह—अनुभवेति। भाष्ये—अनुभवावसानत्वादिति। अनुभवोऽवसाने समाप्तौ फलत्वेन यस्याः साऽनुभवावसाना तस्या भावस्तत्त्वम्। 'ब्रह्मजिज्ञासाय'मिति पूर्वोक्तं सप्तम्यन्तं पदमिहानुवर्त्तमानं षष्ठ्यन्तत्वेन विपरिणमय्य अनुभवावसानत्वाद्

## भामती

एव त्वशक्यः, ब्रह्मणस्तद्विषयत्वायोग्यत्वादित्यत आह—भूतवस्तुवि-
षयत्वाच्च ब्रह्मविज्ञानस्य व्यतिरेकसाक्षात्कारस्य विकल्पयोः
विषयविषयिभावः, नत्वेवं धर्मज्ञानमनुभवावसानं, तदनुभवस्य स्वय-
मपुरुषार्थत्वात्, तदनुष्ठानसाध्यत्वात् पुरुषार्थस्य, अनुष्ठानस्य च विना-
प्यनुभवं शाब्दज्ञानमात्रादेव सिद्धेरित्याह—कर्तव्ये हीत्यादिना।

## प्रकाशः

ब्रह्मजिज्ञासायाः भूतविषयत्वाच्च ब्रह्मज्ञानस्येत्येवमत्र योजनीयम्। प्रकृतभाष्य-
स्थानुभवपदस्य ब्रह्मस्वरूपानुभवार्थकत्वमाह—ब्रह्मानुभव इति। तत्र युक्ति-
माह निर्मृष्टेति। फलमेव हि निरुपाधीच्छाविषयः, फलत्वं त्वस्याविभाग-
मात्रेण बोध्यम्। तदनुभव एव त्विति। अत्र प्रस्तुतोऽपि ब्रह्मस्वरूपानुभवं
न विवक्षितः ब्रह्मणस्तदविषयत्वशङ्कासमाधानयोरसङ्गतत्वापत्तेरतो वृत्तिस्वरूपा-
नुभव एव त्वशक्य इत्यर्थो बोध्यः। एवकारेण च तत्कृताविद्यानिवृत्तिद्वारेण
स्वरूपाभिव्यक्तिस्तु दूरतरेति सूचितम्। तद्विषयत्वेति वृत्तिविषयत्वेत्यर्थः।
भाष्ये—भूतवस्त्विति। अत्र भूतशब्दः पारमार्थिकार्थः, चकारः शङ्कानिवृत्त्यर्थः।
व्यतिरेकसाक्षात्कारस्येति। अत्र व्यतिरेकपदस्य प्रपञ्चाभावोपलक्षितस्व-
रूपमर्थः। तादृशब्रह्मविषयकसाक्षात्कारस्य वृत्तिरूपस्य ब्रह्मणा सह विकल्पत्वम्
'आध्यासिकम्' विषयत्वं न तु तात्त्विकम्, तावत्कालपर्यन्तं ब्रह्मणः सोपाधिक-
त्वेन काल्पनिकधर्मसत्त्वे बाधकाभावात्। तदेतत्प्रथमसूत्रे वृत्तिविषयत्वमपि
तयैवोपहितस्य न निरुपाधेरिति प्रतिपादितम्। यदपि कैश्चिदुक्तम् फलव्याप्यत्व-
मेवास्य शास्त्रकृद्भिर्निवारितम्, ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते' इति
तदपि वृत्तिव्याप्यत्वं वृत्तिविषयत्वरूपं भामतीकृन्मते वृत्त्युपहितस्यैवावगन्तव्यं
नतु शुद्धस्य। उक्तश्लोके—फलव्याप्यत्वमिन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्यविषयत्वं
तद्घटादावेव न ब्रह्मणि चैतन्ये चैतन्यविषयत्वासंभवात् चैतन्यद्वयाभावादिति
बोध्यम्। 'अन्यथा कर्त्तुमिति भाष्ये कर्त्तुमित्यस्याध्याहारः कार्यः किंचिदपेक्ष्य
हि अन्यथाकरणं भवति, तथाच कर्म कर्त्तुं तत् कर्म अन्यथा कर्त्तुं वा शक्यमिति
द्वितीयविकल्पार्थः। एतदभिप्रेत्याह—कर्त्तुमन्यथा वेति। 'उदिते जुहोति'
इति विधिप्राप्त उदितकालीनो होमः कर्तुं शक्यः, 'अनुदिते जुहोति' इति विधि-
विहितः समयान्तरे क्रियमाण उदितकालीनहोमापेक्षयाऽन्यथा भवतीत्यर्थः। भाष्ये

शाङ्करभाष्यम्

श्रुत्यादीनामेव प्रामाण्यं स्यात्, पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथाऽश्वेन गच्छति, पद्भ्यामन्यथा वा न वा गच्छतीति तथा 'अतिरात्रे षोडशिनं गृह्णाति' नातिरात्रे षोडशिनं गृह्णाति । 'उदिते जुहोत्यनुदिते जुहोति' इति विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः,

भामती

न चायं साक्षात्कारविषयतायोग्योऽपि अवर्तमानत्वात्, अवर्तमानश्चानवस्थितत्वादित्याह— पुरुषाधीनेति । पुरुषाधीनत्वमेव लौकिकवैदिककार्याणामाह—कर्तुमकर्तुमिति । लौकिकं कार्यमनवस्थितमुदाहरति—यथाऽश्वेनेति । लौकिकेनोदाहरणेन सह वैदिकमुदाहरणं समुच्चिनोति—तथाऽतिरात्र इति । कर्तुमकर्तुमित्यस्येदमुदाहरणमुक्तम् । कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह—उदित इति । स्यादेतत्, पुरुषस्वातन्त्र्यात् कर्तव्ये विधिप्रतिषेधानामानर्थक्यम्, अतदधीनत्वात् पुरुषप्रवृत्तिनिवृत्त्योरित्यत आह—विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः गृह्णातीति विधिः । न गृह्णातीति प्रतिषेधः । उदितानुदितहोमयोर्विधी । एवं नारास्थिस्पर्शननिषेधो ब्रह्मघ्नश्च तद्धारणविधिरित्येवंजातीयका

प्रकाशः

कविध्यादिशब्दान् तदुदाहृतवाक्येषु योजयति—गृह्णातीतिविधिरिति । विधिप्रतिषेधाश्चेति भाष्योक्तबहुवचनप्रयोगमुपपादयितुं पुनर्विधिद्वयं योजयति— उदितानुदितहोमयोर्विधी इति । उदिते जुहोति, अनुदिते जुहोति' इति विधीपकश्च विधिर्भाष्ये कण्ठत एवोक्तो मिलित्वा बहुवचनमुपपन्नम् । अत्रार्थवन्त इतिभाष्ये अत्रेत्यस्य कर्मणः पुरुषाधीनात्मलाभत्वे इत्यर्थः । नारास्थीत्यादि ।

## शाङ्करभाष्यम्

विकल्पोत्सर्गापवादाश्च । न तु वस्तु-एवं नैवमस्ति, नास्तीति विकल्प्यते, विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः । न

## भामती

विधिप्रतिषेधा अर्थवन्तः, कुत इत्यत आह—विकल्पोत्सर्गापवादाश्च । चो हेतौ । यस्माद् ग्रहणाग्रहणयोरुदितानुदितहोमयोश्च विरोधात्समुच्चयासम्भवे तुल्यबलतया च बाध्यबाधकभावाभावे सत्यगत्या विकल्पः, नारास्थिस्पर्शननिषेधतद्धारणयोश्च विरुद्धयोरतुल्यबलतया न विकल्पः, किन्तु सामान्यशास्त्रस्य स्पर्शननिषेधस्य धारणविधिविषये विशेषशास्त्रेण बाधः । एतदुक्तं भवति— विधिप्रतिषेधैरेव स तादृशो विषयोऽनागतोत्पाद्यरूप उपनीतो येन पुरुषस्य विधिनिषेधाधीनप्रवृत्तिनिवृत्त्योरपि स्वातन्त्र्यं भवतीति । भूते वस्तुनि तु नेयमस्ति विधेत्याह-न तु वस्त्वेवं नैवमिति । तदनेन प्रकारविकल्पो निरस्तः ।

## प्रकाशः

"नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्" ।
इति नारास्थिस्पर्शन निषेधः ।
"शिरः कपाली ध्वजवान् भिक्षार्थी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥"

इति ( याज्ञवल्क्य ३ अ० २४३ श्लोकः ) ब्रह्मघ्नः शवशिरसो 'नारास्थ्नो' ध्वजत्वेन धारणविधिः । अत्र विधिप्रतिषेधाश्चेत्यादियथाश्रुतभाष्यात् प्रतिज्ञैव प्रतीयते न तु हेतुरुक्तोऽतो विकल्पेत्यादिभाष्यं हेतुपरत्वेन व्याचिख्यासुराह—कुत इति । भाष्याक्षरैरेवैतस्य हेतुपरत्वमाह— चो हेताविति । शास्त्रेण बाध इति । तस्माद्विधिप्रतिषेधा अर्थवन्त इति वाक्यशेषः । ननु भवन्तु नाम प्रदर्शिता विधिप्रतिषेधा विकल्पोत्सर्गापवादरूपाः, नच तावता तेषामानर्थक्यशङ्का परिहृतेत्यतो भाष्यभावमाविष्करोति-एतदुक्तं भवतीति । उपनीतः बोधितः । स्वातन्त्र्यं भवतीति । अयमाशयः—सन्तु नाम विहितप्रतिषिद्धयोः क्रिययोरुत्पादने स्वतन्त्रा एव पुमांसः किन्तु किं ममेष्टं किं चानिष्टमिति स्वयमजानन्तो विना शास्त्रं लौकिकेऽन्वेव तेषु तेषूच्चावचेषु कर्मसु

## शाङ्करभाष्यम्

वस्तु याथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्। किं तर्हि वस्तुतन्त्रमेव तत्। नहि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति। तत्र पुरुषोऽन्योवेति मिथ्याज्ञानम्। स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात्। एवं भूतवस्तुविषयाणां

## भामती

प्रकारिविकल्पं निषेधति—अस्ति नास्तीति। स्यादेतत्—भूतेऽपि वस्तुनि विकल्पो दृष्टः, यथा स्थाणुर्वा पुरुषो वेति, तत्कथं न वस्तु विकल्प्यत इत्यत आह—विकल्पनास्त्विति। पुरुषबुद्धिरन्तःकरणम्, तदपेक्षा विकल्पनाः संशयविपर्यासाः, सवासनमनोमात्रयोनयो वा यथा स्वप्ने, सवासनेन्द्रियमनोयोनयो वा यथा स्थाणुर्वा पुरुषो वेति स्थाणौ संशयः, पुरुष एवेति वा विपर्यासः, अन्यशब्देन वस्तुतः स्थाणोरन्यस्य पुरुषस्याभिधानात्, न तु पुरुषतत्त्वं वा स्थाणुतत्त्वं वाऽपेक्षन्ते समानधर्मधर्मिदर्शनमात्राधीनजन्मत्वात्। तस्मादयथावस्तवो विकल्पना न वस्तु विकल्पयन्ति वाऽन्यथयन्ति वेत्यर्थः। तत्त्वज्ञानं त न बुद्धितन्त्रं

## प्रकाशः

प्रवर्त्तमाना निवर्त्तमानाश्च नाभिलाषोपनीतं पारलौकिकमैहिकं वा सुखमुपलब्धुमर्हन्ति, शास्त्रेण तु तथा तथोपस्थाप्यन्ते कर्माणि विहितानि प्रतिषिद्धानि च येषु स्वतन्त्राः सन्तोऽपि पुमांसो यदा कदाचिदपि प्रवर्त्तमाना निवर्त्तमानाश्चेष्टं प्राप्नुवन्ति नाप्नुवन्ति चानिष्टमिति न वैयर्थ्यमागमस्येति, नहि गमनादौ स्वतन्त्रा अपि कदाचिदपि ग्रामं न गच्छन्तीति। स्वाप्नजाग्रद्भेदेन कल्पना द्वैविध्यमाह—सवासनेति। जाग्रद्वासनावासितं 'जाग्रत्संस्कार सहितं' मन एव स्वाप्नकारणम्, जाग्रत्संशयविपर्ययाश्च संस्कारसहितान्तर्बहिःकरणजन्या इत्यर्थः। यत्र यादृशविशिष्टविषयकोऽनुभवो नोत्पन्नः (यथा वृक्षाद्यात्मकस्य मनुष्यादेः) तत्र तादृशविशिष्टविषयकसंस्काराभावेऽपि वृक्षविषयको मनुष्यादिविषयकश्च यो यस्तत्तत्प्रत्येकानुभवस्तत्तज्जन्येनैहिकेन जन्मान्तरीयेण वा तत्तत् संस्कारेण विशिष्टं मनः स्वप्ने

## शाङ्करभाष्यम्

प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव; भूतवस्तुविषयत्वात् । ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणाऽनर्थिकैव प्राप्ता । न इन्द्रियाविषयत्वेन सम्बन्धाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि न ब्रह्मविषयाणि ।

## भामती

किन्तु वस्तुतन्त्रमतस्ततो वस्तुविनिश्चयो युक्तो, न तु विकल्पनाभ्य इत्याह- न वस्तुयाथात्म्येति ।एवमुक्तेन प्रकारेण भूतवस्तुविषयाणां ज्ञानानां प्रामाण्यस्य वस्तुतन्त्रतां प्रसाध्य ब्रह्मज्ञानस्य वस्तुतन्त्रतामाह- तत्रैवं सतीति । अत्र चोदयति-ननु भूतेति । यत् किल भूतार्थं वाक्यं तत्प्रमाणान्तरगोचरार्थतयाऽनुवादकं दृष्टम्, यथा नद्यास्तीरे फलानि सन्तीति, तथा च वेदान्ताः, तस्माद्भूतार्थतया प्रमाणान्तरदृष्टमेवार्थमनुवदेयुः । उक्तं च ब्रह्मणि जगज्जन्मादिहेतुकमनुमानं प्रमाणान्तरम् । एवं च मौलिकं तदेव परीक्षणीयं, न तु वेदान्तवाक्यानि तदधीनसत्यत्वानीति कथं वेदान्तवाक्यग्रथनार्थता सूत्राणामित्यर्थः । परिहरति-न इन्द्रियाविषयत्वेति । कस्मात्पुनर्नेन्द्रियविषयत्वं प्रतीच इत्यत आह-

## प्रकाशः

विशिष्टानुभवं जनयतीत्यवगन्तव्यम्, अतएव च जीवितस्य यस्य पुंसो येन मरणानुभवो न जातः सोऽपि स्वप्ने तदीयमरणं पश्यतीति नानुपपन्नम् । अन्यो वेति भाष्यादापाततः संशयः प्रतीयते परंतु 'स्थाणुर्वा पुरुषोवा' इत्येकस्य संशयस्य प्रथममभिधानात् पुनः संशयस्यैवाभिधानमनर्थकं स्यादतो वाकारं पृथक्कृत्य विपर्यासपरतया भाष्यं व्याचष्टे—पुरुष एव वेति । भाष्यस्थस्यान्यशब्दस्य पुरुषः कुतोऽर्थोऽत आह- अन्यशब्देनेति । तथा च पुरुषोऽन्योवेति भाष्यस्य पुरुषो वेत्येवार्थः । अपेक्षन्त इति । विकल्पना इति पूर्वेणान्वयः । अयथावस्तव इति ।

शाङ्करभाष्यम्

सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा सम्बद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा सम्बद्धम्, किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं

भामती

स्वभावत इति । अत एव श्रुतिः--

'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्, इति।

सति हीन्द्रियेति । प्रत्यगात्मनस्त्वविषयत्वमुपपादितम् । यथा च सामान्यतो दृष्टमप्यनुमानं ब्रह्मणि न प्रवर्त्तते तथोपरिष्टान्निपुणतरमुपपादयिष्यामः । उपपादितं चैतदस्माभिर्विस्तरेण न्यायकणिकायाम् । न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टादुपपादयिष्यामः । तस्मात्सर्व-

प्रकाशः

वस्तुत्वं वस्त्वनुसारित्वं यासां नास्ति तास्तथोक्ताः वस्त्वनुसारित्वाभाववत्य इत्यर्थः । न वस्त्विति । संशया न वस्तुस्वरूपं विकल्पयन्ति विपर्यासा नान्यथयन्तीत्यर्थः । तत्त्वज्ञानम् प्रमात्मकं ज्ञानम्, न बुद्धितन्त्रम् न केवलं बुद्धितन्त्रं न मनः कल्पितमित्यर्थः । वस्तुतन्त्रमिति । अयमाशयः- 'अयं घट' इत्यादियथार्थप्रत्यक्षं चक्षुरादिसन्निकर्षाज्जायमानं स्वरूपतो घटादिकं भासयति । संशयविपर्ययौ तु न वस्तुस्वरूपं गोचरयतः विषयस्य पूर्वमसत्त्वेन करणासम्बन्धात् किन्तु संस्कारादिकारणसामग्रीसहकृता बुद्धिः वस्तुस्वरूपं संनिकर्षं चानादृत्य रजताद्याकार मनुभवं जनयतीत्यतो न तद्रजतं सिद्धं वस्तु अतश्च न सिद्धवस्तुविषयकौ 'वस्तुतन्त्रौ, संशयविपर्ययौ भवतः तदेतदुक्तं भाष्यकारैः—'विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः' इति । न बुद्धितन्त्रम् न केवल मनः कल्पितम् पराञ्चीति खानि इन्द्रियाणि व्यतृणत् हिंसितवान् पराङ् अतः बाह्यं घटादिकमिन्द्रियेण लोकः पश्यति नान्तरात्मानम् । नन्वियं श्रुतिः 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति विद्वदिन्द्रियविषयत्वाभिधायिना उत्तरार्धेन 'मनसैवेदमाप्तव्यम्इत्यादिना श्रुत्यन्तरेण च विरोधमावहतीति चेन्न. सगुणनिर्गुणभेदेन ग्राह्यत्वाग्राह्यत्वयोः सत्त्वेन विरोधविरहात् तदेवदाह—प्रत्यगात्मनस्त्वविषयत्वमुपपादितमिति । अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरित्यत्रोपहितस्य मनोविषयत्वेऽपि शुद्धस्याविषयत्वमुपपादितमित्यर्थः। उपरिष्टात् तर्कपादे । न्यायकणिकायामिति ।

शाङ्करभाष्यम्

निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं, किं तर्हि ? वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्म इत्युपक्रम्याह यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म इति'(तैत्ति० ३।१ ) तस्य च निर्णय-

भामती

मवदातम् । श्रुतिश्च यतो वेति जन्म दर्शयति, 'येन जातानि जीवन्ती'ति जीवनं स्थितिं, 'यत्प्रयन्ति' इति तत्रैव लयम् । तस्य च निर्णय-

प्रकाशः

इत्थमत्र तत्रोक्तं संक्षेपेण संगृह्यते—'विमतं धीमत्कर्तृकं कार्यत्वात्' इत्यनुमानं नेश्वरं साधयितुं क्षमते कल्पैर्महायोगिभिः अदृष्टद्वारा जीवमात्रेण वा जगदुत्पत्तिसम्भवेन सिद्धसाधनात् । अपि च धीमत्कर्तृकत्वं साधयदेतदनुमानं कीदृशीं धियमीश्वरे साधयेत् नित्यामनित्यां वा ? नाद्यः, त्वन्मते यथा कार्ये धीमत्कर्तृकत्वव्याप्तिस्तथा ज्ञानत्वे जन्यत्वव्याप्तिरप्यकामेनाप्युपगन्तव्या तद्विरोधेन ज्ञाननित्यत्वासिद्धेः । नापि द्वितीयः-मनःसंयोगादिकं कल्पकारणं विना ईश्वरे ज्ञानोत्पत्त्यसम्भवात् । यदि विनापि कल्पकारणमैश्वर्यवशादेव तत्र ज्ञानमुपेयेत तदा विनाऽपि ज्ञानमैश्वर्यवशादेव स्रष्टृत्वसंभवेन त्वदभिमतसाध्यासिद्धेस्तस्मात् शब्द एवेश्वरे मानमिति । उपरिष्टात् समन्वयसूत्रे (१-१-४) जन्मादिसूत्रेण 'यतो वे'त्यादिश्रुतिवाक्यं लक्ष्यते इति भाष्ये उक्तमतः श्रुतिसूत्रयोरैकार्थ्यं प्रदर्शयति-श्रुतिश्चेति । आकाशादेर्जीवनासंभवादाह-जीवनं स्थितिमिति । प्रधानादिसंशये निर्णयवाक्यमिति ; नन्विदमनुपपन्नम् 'अस्य जगतो नामरूपाभ्यां व्याकृतस्य इत्यादिना जगतो विशेषणान्युक्त्वा 'न च यथोक्तविशेषणस्य जगत' इत्याद्युत्तरग्रन्थेन प्रधानादिविलक्षणस्येश्वरस्य साधितत्वादिदानीं संशयानुत्थानादिति चेन्न, तत्रापि हि सम्भावनामात्रं दर्शितम् श्रुतिस्तु निर्णायिका सा पूर्वं न दर्शिताऽतः सा सम्प्रति प्रदर्श्यते भाष्यकृद्भिरिति ।

## शाङ्करभाष्यम्

वाक्यम्—आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति' (तैत्ति ३।६)। अन्यान्यप्येवं जातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्त्तव्यानि ॥२॥ इति द्वितीयं जन्माधिकरणम् ॥

## भामती

वाक्यम्। अत्र च प्रधानादिसंशये निर्णयवाक्यम् 'आनन्दाद्ध्येवेति। एतदुक्तं भवति। यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगद् ब्रह्मण्येवास्ति तत्रैव च लीयते इति सिद्धम्।.२॥ इति द्वितीयं जन्माधिकरणम्

## प्रकाशः

नन्वद्वितीयस्य ब्रह्मणो जगज्जन्मादिकारणत्वमनुपपन्नं तदा ह कारणान्तरनैरपेक्ष्येण एकस्मादनादिनो ब्रह्मणो जायमानानां कार्याणामनादित्वप्रसङ्ग इत्याशङ्कां दृष्टान्तप्रदर्शनपूर्वकं परिजिहीर्षुराह-एतदुक्तं भवतीति। विविधशक्तिसम्पन्नाऽघटितघटनापटीयसनाद्यविद्यैव ब्रह्मविषयिणी तत्तदाकारेण परिणममानाऽदृष्टकालादिसहकारिणी सर्वं सम्पादयति ब्रह्म तु अविद्याविषयत्वेनाधिष्ठानतया कारणमुच्यतेऽतो न कार्याणामनादित्वप्रसङ्ग इत्यर्थः। अविद्यासहितब्रह्मोपादानमिति। अत्राविद्यासाहित्यस्य ब्रह्मविशेषणत्वोक्त्या उभयमेवोपादानमभिमतम्, तत्र परिणामितयाऽविद्या, अविद्याविषयत्वेनाधिष्ठानतया तु ब्रह्म, अतो 'निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे' इत्यनेन प्रथमसूत्रोक्तेन भामतीग्रन्थेन न विरोधः, नवा 'सर्वं हि विकारजातं तदविद्याशक्तिपरिणाम' इति 'अन्तर्याम्यधिदैवादिषु' इति सूत्रे वक्ष्यमाणेन विरोध इति बोध्यम्। तत्रैव च लय इति। अविद्यायां लीनस्य सत इति शेषः। अविद्यायां हि अशेषमेव जगल्लीयते प्रलयकाले, सृष्ट्यादौ च तस्या एवाविद्यायाः सकाशादाविर्भवति न त्वविद्यायास्तदानीं लयः मोक्षदशायां तु अविद्याऽपि लीयते ब्रह्मणीत्यर्थः, नातोऽविद्यायां लयं प्रतिपादयन्त्या 'समाननामरूपत्वात्' इति सूत्रे वक्ष्यमाणया भामत्या विरोध इति शिवम्।

इति द्वितीयसूत्रप्रकाशः समाप्तः। साम्बशिवार्पणमस्तु।

## विकासः

भाष्ये—आनन्दाद्ध्येवेति । नन्वेतस्माच्छ्रुतिवाक्यात् आनन्दो ब्रह्मणः स्वरूपलक्षणम्, एवं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यात् सत्यादिकमपि लक्षणं पर्यवस्यति। यद्येते सत्यज्ञानानन्दादयः ब्रह्मस्वरूपात्परस्परस्माच्च भिद्यन्ते तदा कथमेते ब्रह्मणः स्वरूपलक्षणं भजेयुः नहि एकं वस्तु अनेकस्वरूपतां प्रतिपद्यते । यदि च न भिद्यन्ते तदा 'सत्यं ज्ञानमनन्तं ब्रह्म इति वाक्यार्थासिद्धिः, गुणभूतपदार्थविशिष्टः प्रधानपदार्थो हि वाक्यार्थो भवति यथा 'दण्डी पुरुष' इति चेन्न, द्विविधं हि वाक्यस्य प्रामाण्यं विशिष्टार्थबोधकत्वेनाज्ञातज्ञापकत्वेन च, तत्र यः पदार्थः प्रमितः स एवेतरपदार्थविशिष्टः शक्यते केनचिच्छब्देनाभिधातुम्, यथा 'नीलो घट' इति । यस्त्वज्ञातः स नान्यैः पदार्थैः शक्यो विशेष्टुम् असंभवात्, प्रकृते चाज्ञाते ब्रह्मण्येव वाक्यस्य पर्यवसानाद् विशिष्टार्थबोधकत्वेन वाक्यस्य प्रामाण्यविरहेऽपि तत्र अज्ञातज्ञापकत्वेन प्रामाण्यं को निवारयितुमीष्टे, प्रमितेऽपि चैकस्मिन् पदार्थ एव यत्र वाक्यस्य समाप्तिर्न तत्र विशिष्टपरत्वमतोऽपि न दोषः न च ब्रह्मणोऽज्ञातत्वमेवासिद्धम् 'आनन्दाद्ध्येव'इति स्वरूपलक्षणवाक्येन ब्रह्म अनूद्य आनन्दत्वाभिधानेन ब्रह्मणो ज्ञातत्वात् अज्ञातस्यानुवाद्यत्वासम्भवादिति वाच्यम्, 'अधीहि भगवो ब्रह्म' इति प्रश्नसमये प्रातिपदिकार्थतया ज्ञातमपि हि ब्रह्म परमाणुप्रधानादिव्यावृत्तेन रूपेण जगदधिष्ठानत्वादिना च न ज्ञातभूतो भवति ब्रह्म अज्ञानम् । एवञ्च जगत्कारणत्वेनानुवाद्यत्वमपि सम्भवत्येवेति तदनूद्यानन्दरूपताभिधानमप्युपपन्नमेव, यथा च 'कश्चन्द्रः' इति प्रश्नस्य 'प्रकृष्टप्रकाशश्चन्द्र' इत्युत्तरवाक्ये प्रकृष्टप्रकाशशब्दौ स्वार्थं बोधयितुं तात्पर्यवशात् बुभुत्सितं चन्द्रस्वरूपं लक्षयतः चन्द्रस्वरूपमात्रस्य बुबोधयिषितत्वात् ततश्च प्रकृष्टत्वं प्रकाशत्वं च न स्वरूपमात्रावगाहिनि वाक्यार्थबोधेऽनुप्रविशतः प्रत्यक्षेणैव तयोरवगतत्वात् अबुभुत्सितत्वाच्च, निर्विकल्पचन्द्रस्वरूपबोधोपायतयैव प्रकृष्टप्रकाशपदयोः तथाऽत्रापि सर्वमवगन्तव्यम् निर्विकल्पकबोधस्यैवाभिमतत्वात् ।

एतेन 'सत्यं विज्ञानमानन्दं ब्रह्म' इत्यत्र एकेन पदेन यदभिधीयते स्वरूपं तस्यैवापरेण पदेनाभिधाने पदानां पर्यायत्वं ततश्च पदान्तरवैयर्थ्यम्, अधिकाभिधानेन तद्विशिष्टस्य वाक्यार्थत्वापत्त्या बोधस्य निर्विकल्पकत्वक्षतिरित्यपास्तम्, शक्यतावच्छेदकभेदेन सत्यज्ञानादिपदानां पर्यायताविरहात्, तेन तेन च रूपेण वाच्यार्थस्य नानात्वेऽपि लक्ष्यैक्येन क्षतेरेव क्षतेः । ननु सत्यज्ञानादीनां यत्किञ्चिदपि ब्रह्मणः सकाशाद् भेदाभावे कथं लक्ष्यलक्षणभाव इति चेद् ? अस्त्येवाविद्याकल्पितो भेद इति न काचिदनुपपत्तिरधिकमत्र कल्पतरुपरिमलयोर्द्रष्टव्यम् । यथाच 'प्रकृष्टप्रकाशश्चन्द्र इत्यादिविशिष्टज्ञानोत्तरजायमानस्य निर्विकल्पज्ञानस्य अयं चन्द्रो नवा नायं चन्द्रः चन्द्रं न जानामि' इत्यादि संशयविपर्ययाज्ञाननिवर्तकत्वं चन्द्रत्वेतरधर्मानवच्छिन्नचन्द्रमात्रनिष्ठनिरवच्छिन्नविषयताकत्वेन नतु समानप्रकारकत्वेनेत्यनुभवानुरोधात् कल्प्यते

## विकासः

तथा विशिष्टज्ञानोत्तरजायमानस्य निर्विकल्पकस्य ब्रह्मज्ञानस्यापि संशयविपर्ययाज्ञाननिवर्तकत्वम् । अज्ञानमपि च केवलब्रह्मविषयकं निर्विकल्पं ब्रह्मज्ञानमपि तथैवेत्युभयोः समानविषयकत्वमुपपन्नमेव । घटमुद्गरपातयोरिव प्रतिबध्यप्रतिबन्धकभावान्यस्यैव वा निवर्त्यनिवर्तकभावस्य ज्ञानाज्ञानयोरुपगमान्नदोष इत्यवगन्तव्यम् ।

भाष्ये—'सर्वज्ञस्वरूपकारणविषयाणीति । अत्रैवं विचिकित्सन्ते-द्वैतवादिनः-चेतनस्य ब्रह्मणो जगदुपादानत्वे जगदपि चेतनं स्यादुपादानोपादेययोः समानगुणत्वदर्शनात् नहि नीलतन्तुभ्यो जायमानः पटो रक्तो भवतीति, तदेतन्न युक्तम्, उपादेये हि उपादानस्य सर्वधर्मान्वये उपादेयत्वमेव व्याहन्येतातः कस्यचिदेव धर्मस्यान्वयो न तु सर्वधर्माणामित्येवोपगन्तव्यम । अस्ति च जगति ब्रह्मधर्मस्य सत्त्वस्यान्वयः 'सन् घट'इत्यादि प्रतीतेः, दृश्यते च गोमयाद्विलक्षणस्य वृश्चिकस्योत्पत्तिः । शुक्लनीलादिनानावर्णकेभ्यस्तन्तुभ्यश्चैकस्य विलक्षणस्य चित्रपटस्योत्पत्तिः एवं तार्किकाणामणुपरिमाणात्परमाणोर्द्व्यणुकस्य द्व्यणुकत्रयाच्च त्रसरेणोर्महत उत्पत्तिः, नच तत्र तत्र कारणगुणः कार्यमनुगच्छतीति । अपि चेयमापत्तिः ब्रह्मपरिणामवादिनमेवालिङ्गते न विवर्त्तवादिनम्, विवर्त्तवादे हि अविद्यैव सर्वानर्थसम्भारवाहिनी, ब्रह्म तु अधिष्ठानमात्रतया कारणमुच्यते तदुक्तं वार्तिककृद्भिः—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम ।
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते ॥" इति ।

अतएव 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति सूत्रभामत्याम्—

"विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति ।

न खलु वाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य विभ्रमस्य दर्शनात् अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यते अनाद्यविद्यातद्वासनाप्रवाहप्रतीतस्तु नानुयोगमर्हति तस्मात्परमात्मविवर्त्ततया "प्रपञ्चस्तद्योनिः भुजङ्ग इव रज्जुविवर्त्ततया न तु परिणामितया" इत्युक्तम् । तस्मान्न विवर्त्तवादिनं निरस्तसमस्तविषयानुरागमज्ञानपरिणामतया जगतो मिथ्यात्वं वदन्तं काप्यापत्तिरनुपपत्तिर्वा कामयते ।

यदपि ब्रह्मण एकस्मात्कथं विचित्रं क्रमिकं कार्यमुत्पद्येत न ह्येकस्मात्क्रमवद्विलक्षणानेकसहकारिरहितात्क्रमिकं विचित्रमनेकं कार्यं भवितुमर्हति तादृशसहकारिसम्पत्तौ चाद्वितीयत्वं व्याहन्येतेति परैराशंक्यते तदप्येतेनैव परास्तम् । परमार्थसदद्वितीयस्य हि ब्रह्मणो निखिलधर्मरहितस्य नास्त्येव कारणत्वं नापि च तस्य कार्यम्, कार्यं तु जगद्

## विकासः

विचित्रानेकक्रमिकविपाकशालिपुण्यापुण्यपुञ्जसहकृतायाः ब्रह्मविषयिकाया अविद्याया एव। ब्रह्मणस्तु तद्विषयतया कारणत्वं क्वचित्प्रतिपाद्यते वस्तुतो निषिध्यते, च तदीयं मिथ्यात्वं जगतः स्फुटीकर्तुम्, कारणत्वेनाभिमते हि प्रतीयमानस्य कार्यस्य निषेधे तस्य क्वचिदपि न स्थितिरवधार्यतेऽतो भवति तस्य मिथ्यात्वम्, एतन्मूलक एवाध्यारोपापवादन्यायोऽपि परिस्फुरति। मायोपाधिके तु भगवति भवे भवत्येव कर्तृत्वरूपं भवकारणत्वम्, नच तस्मिन् वैषम्यनैर्घृण्यप्रसङ्गोऽपि यतः प्राणिनां स्वस्वादृष्टपरम्परासम्पादितत्वात्सुखदुःखयोरिति। तदेतत् 'वैषम्यनैर्घृण्ये न' इति सूत्रे प्रतिपादयिष्यति सूत्रकारो भाष्यकारष्टीकाकारश्च।

एतेन 'नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तते' ईश्वरस्य चाकामस्य न किञ्चित्प्रयोजनमस्तीति कथं स जगज्जनयितुं यतेतेति शङ्कापि पराहता; स्वतः प्रवृत्तिस्वभावाऽनादिपरम्पराप्राप्तप्राणिपुण्यापुण्यपुञ्जसहकृताऽविद्यैव हि ईश्वरमपि प्रयोजननिरपेक्षं प्रवर्त्तयति तस्मान्नानुपपत्तिरापत्तिर्वा काचित्, नचैतावता द्वैतापत्तिरपारमार्थिकत्वादविद्यादीनाम्।

यदपि कुलालकुविन्दादेः शरीरवत एव कारणत्वमुपलब्धमिति नाशरीरस्येश्वरस्य कारणत्वं संभवतीति परैरुद्भाव्यते तदपि समाहितम्, 'अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः' इत्यमिदधताऽतर्क्यैश्वर्यत्वविशेषणमप्रतिमशक्तित्वरूपमुपाददता भगवता पुष्पदन्तेन महिम्नः स्तोत्रे। तस्मात् श्रुतिसमधिगम्ये सर्वातिशायिनि विचित्रशक्तिशालिनि मायिनि सगुणे परमात्मनि नास्पदमादधाति कुतर्कशतमपि, ईश्वरस्य शक्तिविशेषादेवोपपत्तेः। तदुक्तं श्रुतौ-

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'

इति (स्वाभाविकी, अनादिः शक्ति सम्बन्धाज्ज्ञानबलक्रिया च सर्वज्ञत्वं सर्वोत्पादनादिक्रिया च) दृश्यते चेदानीमपि यादृशं कार्यमल्पशक्तिमता पुरुषेण गरीयसा भूयसा साधनेन महीयसाऽनेहसा सम्पाद्यते तादृशमेव च कार्यमधिकशक्तिमता बलीयसा पुंसा लघीयसा साधनेनाल्पीयसा समयेन सम्पाद्यते इति। योगिभिश्च बहिः साधननिरपेक्षैः दुरूहकानि विविधानि कार्याणि सम्पाद्यते इति, किमु वक्तव्यमनन्तशक्तिशालिनो निरतिशयैश्वर्यशालिनो मायिनो बाह्यसाधननिरपेक्षस्येश्वरस्य ब्रह्माण्डकाण्डनिर्माणताण्डवादिकार्यसम्पादने, इति भवति सर्वमनवद्यम्। एवञ्चाद्वितीयं ब्रह्मैव परमतत्त्वं तदेव च मायोपाधिकतया ईश्वरो जगत्कारणमन्तःकरणोपाधिकतया जीव इति च निगद्यते 'उपाधिना क्रियते भेदरूपः' एकं सद्विप्रा बहुधा वदन्ति, एक एव तु भूतात्मा भूते भूते व्यवस्थित' इत्यादिश्रुतिशतेभ्यः। सेयमद्वैतमतिर्न कुतर्कशतमवतार्यानादरणीया। तदुक्तं श्रुतौ— नैषा तर्केण मतिरापनेया' इति। अपि चेयमद्वैतमतिः संसारहुतभुजि हूयमानस्य जीवस्य कामक्रोधशोकमोहारातिनिराकरणपटीयसी पुत्रदारादिष्वनासक्तिं सम्पादयन्ती तदीयशोकादिप्रयुक्तशोकाद्यनर्थशतसंभार मपाकुर्वती दृष्टार्थाऽपि, अतएवोक्तमद्वैतं मण्डयद्भिः खण्डनकृद्भिः—

विकासः

धीधनाः ! नाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेमुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥" इति ।

तस्मात् तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ, इत्यादि श्रुतिप्रतिपादिता विषयाभिनिवेशत्यागपूर्वकमद्वैतमतिरेव सम्पादनीया ।

इति द्वितीयसूत्र विकासः समाप्तः ।
साम्बशिवार्पणमस्तु ।



जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम् तदेव
द्रढयन्नाह—

# शास्त्रयोनित्वात् ॥३॥

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य

## भामती

सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह—जगत्कारणत्वप्रदर्शनेनेति।

शास्त्रयोनित्वात् ॥ ३ ॥

न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या। शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थयते—महत ऋग्वेदादेः शास्त्रस्येति। चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मतत्त्वे च शिष्याणां शासनात् शास्त्रमृग्वेदादि,

## प्रकाशः

ननु ब्रह्मणः सर्वज्ञत्वं जगद्योनित्वादेवाधिगतं पुनः शास्त्रयोनित्वेन तत्साधनं पौनरुक्त्यमापादयति शास्त्रस्यापि जगन्मध्ये प्रवेशादित्याशङ्कां भाष्यकृदपनुदति—जगत्कारणत्वेति। एवं च पूर्वसूत्रे प्रतिपादितस्य जगत्कारणत्वस्य सर्वज्ञत्वं विनाऽनुपपद्यमानतयाऽर्थतः प्राप्तस्य सर्वज्ञत्वस्य सूत्रेणानेन दृढीकरणादुपपाद्योपपादकभावः सम्बन्धः सूचितः। तमेवाह—पूर्वसूत्रेति। जगद्योनित्वनैरपेक्ष्येण केवलेनापि शास्त्रयोनित्वेन हेतुना भवति भगवतो भवस्य सर्वज्ञत्वेति न पौरुक्त्यशंका समुन्मिषतीत्यभिप्रेत्याह—न केवलमिति। ऋग्वेदादेः शास्त्रं वर्णयति चातुर्वर्ण्यस्येत्यादिना। एवं च वेदस्य नित्यतया न जगत्कारणत्वं ब्रह्मणः संभवतीत्याशंकामपाकर्तुमपि शास्त्रयोनित्वादिति सूत्रं प्रवृत्तं इत्यवगन्तव्यम्। पुराणन्यायमीमांसाधर्मशास्त्राण्येतानि चत्वारि, शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि एतानि संकलय्य दश विद्यास्थानानि

## शाङ्करभाष्यम्

**प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति। यद्यद्विस्तरार्थं शास्त्रं**

## भामती

अत एव महाविषयत्वात् महत् । न केवलं महाविषयत्वेनास्य महत्त्वम्, अपि त्वनेकाङ्गोपाङ्गोपकरणतयापीत्याह-**अनेकविद्यास्थानोपबृंहितस्य** पुराणन्यायमीमांसादयो दश विद्यास्थानानि तैस्तया तया द्वारोपकृतस्य । तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काऽप्यपाकृता । पुराणादिप्रणेतारो हि महर्षयः शिष्टा स्तैस्तया तया द्वारा वेदान् व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति । न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह-**प्रदीपवत्सर्वार्थावद्योतिनः** । सर्वमर्थजातं सर्वथाऽवबोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः । अत एव**सर्वज्ञकल्पस्य** सर्वज्ञसदृशस्य । सर्वज्ञस्य हि ज्ञानं सर्वविषयं शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम् । तदेवमन्वयमुक्त्वा व्यतिरेकमाह-**न हीदृशस्येति** । सर्वज्ञस्य गुणः सर्वविषयता, तदन्वितं शास्त्रम्, अस्यापि सर्वविषयत्वात् । उक्तमर्थं प्रमाणयति-**यद्यद्विस्तरार्थं शास्त्रं**

## प्रकाशः

व्यपदिश्यन्ते इत्याह-**पुराणन्यायेत्यादि**। **तया तया द्वारेति**। तत्र सामान्यतः श्रुतावुक्तायाः सृष्टेः प्रपञ्चनद्वारा पुराणान्युपयुज्यन्ते जातिव्यक्तिलक्षणप्रमाणादिनिरूपणद्वारा न्यायो वैदिकपदार्थशोधनाय वाक्यार्थनिरूपणद्वारा मीमांसा तत्तदर्थकवेदानुमानद्वारा धर्मशास्त्राणि वेदार्थनिरूपणद्वारा षडङ्गानि चोपयुज्यन्ते । **अन्वयमुक्त्वा** शास्त्रयोनित्वस्य हेतोः सद्भावमुक्त्वा । **व्यतिरेकमाहेति** व्यतिरेकमुखेन सार्वज्ञ्यमाहेत्यर्थः । **सर्वविषयकत्वादिति** । स्वजन्यज्ञानद्वारेति शेषः । **उक्तमर्थं प्रमाणयतीति** । यद्यद्विस्तरार्थमिति भाष्यात्पूर्वेण सन्दर्भेण शास्त्रयोनित्वहेतुना यदिदं ब्रह्मणः सार्वज्ञ्यं प्रतिज्ञातं तदुदाहरणाद्यवयवो-

## शाङ्करभाष्यम्

यस्मात्पुरुषविशेषात्सम्भवति यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्

## भामती

यस्मात्पुरुषविशेषात् सम्भवति स पुरुषविशेषस्ततोऽपि शास्त्रात् अधिकतरविज्ञान इति योजना । अद्यत्वेऽप्यस्मदादिभिर्यत्समीचीनार्थविषयं शास्त्रं विरच्यते तत्रास्माकं वक्तॄणां वाक्याज्ज्ञानमधिकविषयम्, नहि ते तेऽसाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम् । न खलिक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम् । विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम् । सोपनयं निगमनमाह—किमु वक्तव्यमिति । वेदस्य यस्माद् महतो

## प्रकाशः

पन्यासेन प्रमाणारूढं करोतीत्यर्थः । यद्यपि हेतुनिर्देशमारभ्य प्रमाणोपन्यासः प्रवृत्तस्तथापि व्याप्त्यैव हेतुः प्रामाण्यं लभतेऽतो यद्यदित्यादिर्व्याप्तिप्रदर्शक एव ग्रन्थः प्रमाणोपन्यासार्थत्वेनावतारितः । यद्वा 'त्रीनुदाहरणान्तान्वा यद्वोदाहरणादिकान्, इति वदद्भिर्मीमांसकैस्त्रय एवावयवा अभ्युपगताः न तु तार्किकोपगताः पञ्च सिद्धान्तेऽपि तथैव स्वीकृतत्वेन यद्यदित्यादिना उदाहरणोपनयनिगमनानि त्रयोऽप्यवयवा उपन्यस्ता इति भवत्येतस्यैव यद्यदित्यादेः प्रमाणोपन्यासपरत्वं तस्मात्सुष्ठूक्तमुक्तमर्थं प्रमाणयतीति । अत्रैवं भाष्यविभागः—'महत ऋग्वेदादेः' इत्यारभ्य 'कारणं ब्रह्म' इत्यन्तेन भाष्येण निःश्वसितश्रुत्या वेदः कार्यो विभक्तत्वात् पटवत्, इत्यनुमानोपकृतया ब्रह्मकार्यं वेद इत्युक्तम् । 'नहीदृशस्य' इत्यारभ्य 'अन्यतः सम्भवोऽस्ति' इत्यन्तेन व्यतिरेकमुखेन सर्वज्ञत्वप्रतिज्ञा । यद्यदित्यादि प्रसिद्धं लोक इत्यन्तेन व्याप्तिरुक्तेति स्पष्टं चेदं कल्पतरौ । रसभेदाः रसविशेषाः । विस्तरत्वं शास्त्रविशेषणं व्यर्थं व्यभिचारावारकत्वादित्याशङ्क्य लघीयसः शास्त्रस्योद्भावयिता भवतु ततोऽधिकविज्ञानः ऋग्वेदादिशास्त्रं त्वतिविस्तरमहाविषय-

## शाङ्करभाष्यम्

मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद् यस्मान्म-

## भामती

हतो भूताद् योनेः सम्भवः, तस्य महतो भूतस्य ब्रह्मणो निरतिशयं सर्वज्ञत्वं सर्वशक्तित्वं च किमु वक्तव्यमिति योजना । अनेकशाखेति । अत्र चानेकशाखाभेदभिन्नस्येत्यादिः सम्भव इत्यन्त उपनयः । तस्येत्यादि सर्वशक्तित्वं चेत्यन्तं निगमनम् । अप्रयत्नेनैवेति । ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति । देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वं चोक्तं भवति । अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता 'अस्य महतो भूतस्येति । येऽपि तावद् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम् । आनुपूर्वीभेदवन्तो हि वर्णाः पदम् । पदानि

## प्रकाशः

मतो भगवतो ज्ञानेनेदं सम्भवति समानविषयमतो न तावता भगवतः सार्वज्ञ्यं सिध्यतीति भ्रमं दूरीकर्त्तुं तदुपात्तमित्याह--विस्तरार्थमपीति । यस्मादित्यस्य तस्येत्यनेन व्यवहितेन सम्बन्धमाह—वेदस्येति । अत्रेदमनुमानं प्रयुञ्जते-ब्रह्म (ईश्वरः)वेदविषयादधिकविषयज्ञं वेदकर्तृत्वात् यो यत्र्य कर्त्ता स तद्विषयाधिकविषयज्ञः यथा पाणिन्यादिरिति । भूतात् सिद्धात् । अलवणा यवागूरिति । ईषल्लवणा यवागूरित्यर्थः । वेदस्येश्वरकर्तृकत्वे कर्त्तृमत्त्वेन तस्य सापेक्षत्वं स्यात्ततश्च अक्तस्यैव वेदस्याप्रामाण्यं स्यात्तद्वरं निःश्वसितश्रुतिमात्रस्योपचरितार्थत्वमिति नैतद्बलात्सर्वज्ञत्वसिद्धिरिति वदन् मीमांसकः प्रतिवक्तव्यः; सापेक्षता किं पुरुषसम्पादितत्वेन अभिनवानुपूर्वीविरचनेन वा मानान्तरोपलब्धार्थविषयवचनविरचनेन वा एकस्मात्पुरुषान्निःसरणादनाश्वासेन वेति । तत्राद्यं सम्मतत्वादेव निराकृतमित्याह—येऽपीत्यादि ।

## विकासः

येऽपि तावद्वर्णानां नित्यत्वमित्यादि । अत्र प्रसङ्गात् स्फोटवादिनां वर्णानां नित्यत्ववादिनां तदनित्यत्ववादिनां च मतानि संगृह्य प्रदर्श्यन्ते । तत्र तावत् पङ्कजमस्तीत्यादिवाक्यमाकलयतामाकाङ्क्षाज्ञानादिकारणकलापमादधतां गृहीतसङ्गतिकानां पुंसां वाक्यार्थधीरुल्लसतीति न तिरोहितं केषाञ्चिद्विपश्चिताम् । तत्र न प्रत्येकं वर्णा अर्थं प्रत्याययितुमुत्सहन्ते, नापि मिलिता, नाप्येकस्मृतिगोचराः । तथाहि—आद्ये एकस्मादेव कस्माच्चिद् वर्णादर्थप्रतिपत्तिसम्भवे वर्णान्तरोच्चारणवैफल्यम् । द्वितीये उच्चारणप्रध्वंसवतां तेषां मेलनासम्भवः । तृतीये नदी दीनः रसः सर इत्यादावेकस्मृतिविषयत्वेन विशेषापत्त्या विलक्षणवाक्यार्थप्रतीत्यनुपपत्तिः । नच पूर्वपूर्ववर्णानुभवाहितसंस्कारजन्या तावद्वर्णविषयिणी एका स्मृतिरेवानुभवक्रमेण वर्णक्रममपि गोचरयन्ती सर्वामेनेमामनुपपत्तिं परिहर्त्तुमीहते, क्रमो हि पौर्वापर्यरूपो न वर्णानां नित्यानां विभूनामनित्यानां वाऽनुभवपथमारूढो येनायं स्मृत्या गोचरीक्रियेत अपि तु क्रमेणोच्चारिता वर्णा एवानुभूताः अतो नार्थप्रत्ययः समुदेतुमर्हतीत्यतस्तावद्वर्णाभिव्यङ्ग्योऽनवयवो नित्य एकस्तत्तदर्थवाचकः स्फोटोऽभ्युपेय इत्युदीरयन्ति स्फोटवादिनः, एष्वपि च स्फोटवादिषु पदस्फोट एव केषाञ्चिच्चेतसि परिस्फुरति । 'रामः सुन्दरः' इत्यादौ हि 'राम' इति वर्णसमुदायात्मकपदाभिव्यङ्ग्यो वाचकः स्फोटोऽभिव्यक्तः, एवं 'सुन्दर' इति वर्णसमुदायात्मकपदेनापरोऽपि स्फोटोऽभिव्यक्तः मिलितौ चैतावर्थं प्रत्याययतः । तत्र च नित्येऽनवयवे पारमार्थिकेऽधिष्ठाने च स्फोटे वर्णा वाक्यं चाध्यस्येते अतस्तयोरेतद्विवर्त्तत्वं भवतीति वर्णवाक्यविभागस्तत्रानिरूप्य एव, केवलेभ्यः पदस्फोटेभ्य एव हि आकाङ्क्षाज्ञानादिसचिवेभ्यो वाक्यार्थधीरुदयमानाधिक कमपि वाक्यस्फोटं कामयते इति **पदस्फोटवादिनः** सङ्गिरन्ते ।

अन्ये तु वाक्यस्फोटमेव नित्यमधिष्ठानं वर्णपदयोस्तद्विभागस्य चाविकल्पमाचक्षाणा विलक्षणप्रज्ञा विचक्षणा न मनागपि पदस्फोटादिपक्षमाद्रियन्ते । एष्वपि च वाक्यस्फोटमतमवलम्बमानेषु विवदन्तेऽन्योऽन्यं बहवो विद्वांसः । तथाहि—केचित् तत्तत्ताल्वादिस्थानसमुद्भूतवायवीयनादापरनामकध्वनिविशेषाभिव्यङ्ग्याः नित्याः विभवो वर्णाः वाक्यस्फोटस्यावयवा इत्युपयन्ति । इयांश्चात्र विशेषो यदस्मिन् सावयववादे ध्वनयः साक्षादेव स्फोटावयववर्णव्यञ्जकतया वर्णसमुदायात्मकस्फोटव्यञ्जकाः, निरवयवादे तु ध्वनिभिर्व्यङ्ग्या वर्णाः स्फोटव्यञ्जका इति ।

अपरे पुनर्वाक्यस्फोटपक्षमेव रोचयन्तोऽपि सावयवपक्षमेनमधिक्षिपन्तः स्फोटमेव स्फुटीकर्तुमन्यथैव प्रतिपद्यन्ते । तथाहि—वर्णाः किल स्फोटस्यावयवा भवन्तः किं भट्टमतमालम्ब्य विभूनि द्रव्याणि भवेयुः किं वा तार्किकमतमाश्रित्य गगनगुणा आहोस्वित् एकदेशीयमतमुपादाय वाय्ववयवारब्धद्रव्याणीति । तत्र नाद्यः—अवयविनमपेक्ष्य हि अवयवा न्यूनपरिमाणा एव सर्वत्र दृष्टास्तत्कथमेनं नियमं व्यभिचरन्तोऽमी विभवो वर्णाः

## विकास:

अवयवतामाश्लेष्टुं समीहेरन्। नापि द्वितीय:—तत्पक्षे गुणत्ववन्तो हि वर्णा द्रव्यत्वं परित्यजन्त: कथं द्रव्यसमवायिकारणतारूपामवयवतां नित्यनिरूपितामसंभवन्तीमुरीकर्तुं प्रयतेरन्। नापि चान्त्य:—आशु विनाशिन: क्रमिका युगपदवर्त्तमाना हि वर्णा: अवयविनमनाश्लिष्यन्तो नित्यस्यावयवा भवितुं कथंकारं कामयेरन्।

तस्मात्प्रत्यस्तमितवर्णपदविभागेऽनवयवे वाक्यस्फोटे वर्णपदविभागोऽध्यस्त इत्येव स्वीकर्तुमुचितमित्येवं विवदन्तोऽपि वाक्यस्फोटवादिन: वर्णपदवाक्याखण्डपदाखण्डवाक्यानीति पञ्च व्यक्तिस्फोटा: शक्यतावच्छेदिकाया जातेर्वाच्यत्ववत् शक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यगतस्त्रिविधो जातिस्फोट इत्यष्टौ स्फोटान् सङ्कलयन्तोऽखण्डवाक्यस्फोटमेकमेव परमार्थसन्तं मन्वाना अन्येषां स्फोटपदाभिलप्यानां तज्ज्ञानोपायतामुदीरयन्ति। तदुक्तम्—

"उपाया: शिक्षमाणानां बालानामुपलालना:।
असत्ये वर्त्मनि स्थित्वा तत: सत्यं समीहते॥" इति।

यथा शुद्धब्रह्मप्रतिपत्त्युपायभूता अन्नमयादिपञ्चकोशा आनन्दवल्ल्यां प्रदर्शिता:, यथा वा मुख्यामरुन्धतीं जिग्राहयिषताऽमुख्या स्थूलैव तारा प्रथममरुन्धतीत्युपदिश्य पश्चान्मुख्योपदिश्यते तद्वत्। तत्र सुप्तिङन्तं पदम्, एकतिङन्तार्थमुख्यविशेष्यकबोधजनकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य क्वचिद् वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोट:, सोऽयं शुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदुपदिश्यमान: परम्परयाऽखण्डवाक्यमभिव्यनक्ति। पदस्फोटश्च अन्नमयकोशापेक्षयाऽन्तरप्राणमयकोशवद्वर्णस्फोटापेक्षयाऽन्तरङ्ग:, अस्य चान्तरङ्गत्वं साक्षाद्वाक्यघटकत्वेन, वर्णस्य बहिरङ्गत्वं पदनिष्पत्तिद्वारा तद्घटकत्वम्। तदुक्तम्—

"पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता:॥" इति।

सचायं पदस्फोटो द्विविध: सखण्डोऽखण्डश्च। तत्र यत्तार्किकादिभि: यौगिकं योगरूढं च पदमुच्यते पाचक: पङ्कजमित्यादि, यत्र खण्डशक्तिरप्यनुसन्धीयते तदेव सखण्ड: पदस्फोट:, यच्च खण्डशक्तिनैरपेक्ष्येण समुदायशक्त्याऽर्थप्रत्यायकं घटोऽस्तीत्यादौ घटादि पदं तदखण्ड: पदस्फोट:।

वाक्यस्फोटोऽपि द्विविध: सखण्डाखण्डभेदात्। तत्र यदि ध्वनिभिर्वर्णा अभिव्यज्यन्ते वर्णैश्च पदानि तैश्च वाक्यमिति मतमाश्रीयते तदा वर्णपदातिरिक्तस्तदभिव्यङ्ग्य: सखण्डो वाक्यस्फोट:, यदि तु साक्षादेव ध्वनि: स्फोटमभिव्यनक्ति न तु मध्ये तदतिरिक्तं

## विकासः

येऽपि तावद्वर्णानां नित्यत्वमित्यादि । अत्र प्रसङ्गात् स्फोटवादिनां वर्णा- नित्यत्ववादिनां तदनित्यत्ववादिनां च मतानि संगृह्य प्रदर्श्यन्ते । तत्र तावत् पङ्कजं स्तीत्यादिवाक्यमाकलयतामाकाङ्क्षाज्ञानादिकारणकलापमादधतां गृहीतसङ्गतिकानां पुं- वाक्यार्थधीरुल्लसतीति न तिरोहितं केषाञ्चिद्विपश्चिताम् । तत्र न प्रत्येकं वर्णा अर्थं प्रत्या- ययितुमुत्सहन्ते, नापि मिलिता, नाप्येकस्मृतिगोचराः । तथाहि—आद्ये एकस्मादेव कस्माच्चिद् वर्णादर्थप्रतिपत्तिसम्भवे वर्णान्तरोच्चारणवैफल्यम् । द्वितीये उच्चारणध्वं- सवतां तेषां मेलनासम्भवः । तृतीये नदी दीनः रसः सर इत्यादावेकस्मृतिविषयत्वेन विशेषापत्त्या विलक्षणवाक्यार्थप्रतीत्यनुपपत्तिः । नच पूर्वपूर्ववर्णानुभवाहितसंस्कारसहकृ- तावद्वर्णविषयिणी एका स्मृतिरेवानुभवक्रमेण वर्णक्रममपि गोचरयन्ती सर्वामेनमामनुरागं परिहर्तुमीहते, क्रमो हि पौर्वापर्यरूपो न वर्णानां नित्यानां विभूनामनित्यानां वाऽनुभव- थमारूढो येनायं स्मृत्या गोचरीक्रियेत अपि तु क्रमेणोच्चारिता वर्णा एवानुभूताः अ- नार्थप्रत्ययः समुदेतुमर्हतीत्यतस्तावद्वर्णाभिव्यङ्ग्योऽनवयवो नित्य एकस्तत्तदर्थवाचकः स्फोटोऽभ्युपेय इत्युदीरयन्ति स्फोटवादिनः, एष्वपि च स्फोटवादिषु पदस्फोट एव केषाञ्- च्चेतसि परिस्फुरति । 'रामः सुन्दरः' इत्यादौ हि 'राम' इति वर्णसमुदायात्मकपदाभिव्यङ्ग्यं वाचकः स्फोटोऽभिव्यक्तः, एवं 'सुन्दर' इति वर्णसमुदायात्मकपदेनापरोऽपि स्फोटोऽभि- व्यक्तः मिलितौ चैतावर्थं प्रत्याययतः । तत्र च नित्येऽनवयवे पारमार्थिकेऽधिष्ठाने ए- स्फोटे वर्णा वाक्यं चाध्यस्येते अतस्तयोरेतद्विवर्त्तत्वं भवतीति वर्णवाक्यविभागस्तत्रावि- एव, केवलेभ्यः पदस्फोटेभ्य एव हि आकाङ्क्षाज्ञानादिसचिवेभ्यो वाक्यार्थबोधसम्भवा- नाधिक कमपि वाक्यस्फोटं कामयते इति पदस्फोटवादिनः सङ्गिरन्ते ।

अन्ये तु वाक्यस्फोटमेव नित्यमधिष्ठानं वर्णपदयोस्तद्विभागस्य चाविद्यकत्वमा- चक्षाणा विलक्षणप्रज्ञा विचक्षणा न मनागपि पदस्फोटादिपक्षमाद्रियन्ते । एष्वपि च वाक्यस्फोटमतमवलम्बमानेषु विवदन्तेऽन्योऽन्यं बहवो विद्वांसः । तथाहि—केचित् तत्तत्ताल्वादिस्थानसमुद्भूतवायवीयनादापरनामकध्वनिविशेषाभिव्यङ्ग्याः नित्याः विभवो वर्णाः वाक्यस्फोटस्यावयवा इत्युपयन्ति । इयांश्चात्र विशेषो यदस्मिन् सावयववादे ध्वनयः साक्षादेव स्फोटावयववर्णव्यञ्जकतया वर्णसमुदायात्मकस्फोटव्यञ्जकाः, निरवयववादे तु ध्वनिभिरव्यङ्ग्या वर्णाः स्फोटव्यञ्जका इति ।

अपरे पुनर्वाक्यस्फोटपक्षमेव रोचयन्तोऽपि सावयवपक्षमेनमधिक्षिपन्तः स्फोटमेनं स्फुटीकर्तुमन्यथैव प्रतिपद्यन्ते । तथाहि—वर्णाः किल स्फोटस्यावयवा भवन्तः किं भट्ट- मतमालम्ब्य विभूनि द्रव्याणि भवेयुः किं वा तार्किकमतमाश्रित्य गगनगुणा आहोस्वित् एकदेशीयमतमुपादाय वाय्ववयवारब्धद्रव्याणीति । तत्र नाद्यः—अवयविनमपेक्ष्य हि अवयवा न्यूनपरिमाणा एव सर्वत्र दृष्टास्तत्कथमेनं नियमं व्यभिचरन्तोऽमी विभवो वर्णाः

## विकासः

अवयवतामाश्लेष्टुं समीहेरन्। नापि द्वितीयः—तत्पक्षे गुणत्ववन्तो हि वर्णा द्रव्यत्वं परित्यजन्तः कथं द्रव्यसमवायिकारणतारूपामवयवतां नित्यनिरूपितामसंभवन्तीमुरीकर्तुं प्रयतेरन्। नापि चान्त्यः—आशु विनाशिनः क्रमिका युगपदवर्त्तमाना हि वर्णाः अवयविनमनाश्लिष्यन्तो नित्यस्यावयवा भवितुं कथंकारं कामयेरन्।

तस्मात्प्रत्यस्तमितवर्णपदविभागेऽनवयवे वाक्यस्फोटे वर्णपदविभागोऽध्यस्त इत्येव स्वीकर्तुमुचितमित्येवं विवदन्तोऽपि वाक्यस्फोटवादिनः वर्णपदवाक्याखण्डपदाखण्डवाक्यानीति पञ्च व्यक्तिस्फोटाः शक्यतावच्छेदिकाया जातेर्वाच्यत्ववत् शक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यगतस्त्रिविधो जातिस्फोट इत्यष्टौ स्फोटान् सङ्कलयन्तोऽप्यखण्डवाक्यस्फोटमेकमेव परमार्थसन्तं मन्वाना अन्येषां स्फोटपदाभिलप्यानां तज्ज्ञानोपायतामुदीरयन्ति। तदुक्तम्—

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥" इति।

यथा शुद्धब्रह्मप्रतिपत्त्युपायभूता अन्नमयादिपञ्चकोशा आनन्दवल्ल्यां प्रदर्शिताः, यथा वा मुख्यामरुन्धतीं जिग्राहयिषताऽमुख्या स्थूलैव तारा प्रथममरुन्धतीत्युपदिश्य पश्चान्मुख्योपदिश्यते तद्वत्। तत्र सुप्तिङन्तं पदम्, एकतिङन्तार्थमुख्यविशेष्यकबोधजनकं वाक्यमिति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य क्वचिद् वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच्तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोटः, सोऽयं शुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदुपदिश्यमानः परम्परयाऽखण्डवाक्यमभिव्यनक्ति। पदस्फोटश्च अन्नमयकोशापेक्षयाऽन्तरप्राणमयकोशवद्वर्णस्फोटापेक्षयाऽन्तरङ्गः, अस्य चान्तरङ्गत्वं साक्षाद्वाक्यघटकत्वेन, वर्णस्य बहिरङ्गत्वं पदनिष्पत्तिद्वारा तद्घटकत्वम्। तदुक्तम्—

"पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता।
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः॥" इति।

सचायं पदस्फोटो द्विविधः सखण्डोऽखण्डश्च। तत्र यत्तार्किकादिभिः यौगिकं योगरूढं च पदमुच्यते पाचकः पङ्कजमित्यादि, यत्र खण्डशक्तिरप्यनुसन्धीयते तदेव सखण्डः पदस्फोटः, यच्च खण्डशक्तिनैरपेक्ष्येण समुदायशक्त्याऽर्थप्रत्यायकं घटोऽस्तीत्यादौ घटादि पदं तदखण्डः पदस्फोटः।

वाक्यस्फोटोऽपि द्विविधः सखण्डाखण्डभेदात्। तत्र यदि ध्वनिभिर्वर्णा अभिव्यज्यन्ते वर्णैश्च पदानि तैश्च वाक्यमिति मतमाश्रीयते तदा वर्णपदातिरिक्तस्तदभिव्यङ्ग्यः सखण्डो वाक्यस्फोटः, यदि तु साक्षादेव ध्वनिः स्फोटमभिव्यनक्ति न तु मध्ये तदतिरिक्तं

## विकासः

वर्णं पदं वा तदा त्वखण्डो नित्यो वाक्यस्फोटः परब्रह्मरूपोऽभ्युपेयते । तत्र [illegible]
वाक्ये एते वर्णा, इत्यादिविभागः पदविभागः एवं पदसाधनाय व्याकरणादि[illegible]
चेत्येतत्सर्वम् 'एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः वायोरग्निरग्नेरापः अ[illegible]
पृथिवी' इतिश्रुतिप्रतिपादितरूपप्रपञ्चवन्नामप्रपञ्चोऽपि ब्रह्माविद्यापरिणामो ब्रह्मणो [illegible]
तस्माद्विवर्ताधिष्ठानस्य परमार्थसतो ब्रह्मस्वरूपस्य स्फोटस्याविद्याकल्पितेन वर्णादि[illegible]
तेनोपरागवती 'एतेऽत्र वर्णा' इत्यादिप्रख्या न विरुध्यते । नच वर्णानां क्वचिदपि [illegible]
विरहान्न विवर्तत्वमिति वाच्यम्, क्वापि सत्त्वविरहवतां गगनादिप्रपञ्चानां ब्रह्मविवर्तत्वो[illegible]
पपत्तेः । तदुक्तमभियुक्तैः—

"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भस्तु भावानामनादिब्रह्म शाश्वतम् ॥" इति ।

ननु यदि वर्णैर्नित्योऽनवयवोऽखण्डस्फोटोऽभिव्यज्यते तदा कथमस्मादविल[illegible]
देकरूपाद्विलक्षणतत्तदर्थप्रतिपत्तिरिति चेदत्राहुः—यथा मणिकृपाणदर्पणादौ निय[illegible]
स्थानमपि नियतगौरादिवर्णमपि नियतवितस्त्यादिपरिमाणमपि मुखम् अनेकवि[illegible]
वर्णपरिमाणमिवाभिन्नमपि भिन्नमिव प्रतीयते, तथा तेषु तेषु भिन्नेषु ध्वनिषु एक[illegible]
स्फोटो नानावर्णात्मेव निरवयवोऽपि सावयव इव वर्णातिरिक्तोपि स्वाध्यस्त[illegible]
त्स्याद्वर्णरूषितः प्रतीयते इति ।

ननु ध्वनयः किं सामस्त्येनाभिव्यञ्जयन्ति स्फोटं प्रत्येकं वा ? नाद्यः-उच्चारण[illegible]
सिनां ध्वनीनामेकदा सत्त्वविरहात् । न द्वितीयः यदि हि प्रत्येकमभिव्यञ्जयेयुर्ध्वन[illegible]
प्रथमादेव ध्वनेः स्फोटप्रतिपत्तिस्ततश्चार्थप्रतिपत्तिरपि सम्भवत्येवेति द्वितीयादीनां ध्व[illegible]
नामानर्थक्यमिति चेन्न व्यञ्जयन्तोऽपि प्रत्येकममी ध्वनयो न द्रागेव स्फुटतरं स्फोट[illegible]
भासयितुमीशतेऽपि त्वीषद्रूपम् , यथा रत्नपरीक्षकस्य पुनः पुना रत्नं समीक्षमाणस्य [illegible]
र्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तं र[illegible]
स्वमवभासयन्ति किंतु पञ्चषदर्शनजनितसंस्कारसचिवमन्तिममेव दर्शनम् तद्वत् ईषद[illegible]
पूर्वपूर्वध्वनिप्रत्यक्षजनितसंस्कारसहकृतचरमध्वनिबुद्ध्यैव स्फुटतरमभिव्यज्यमानः स्फो[illegible]
भवत्यर्थप्रत्यायक इति नोत्तरेषां केषामपि ध्वनीनामानर्थक्यम् । नापि प्राचाम्, तद[illegible]
तज्जनितसंस्कारपरिपाकाभावेनानुग्रहाभावात्केवलस्यान्त्यस्य स्फुटतराभिव्यञ्जनाक्षमत्व[illegible]
तदेतदाह वाक्यपदीये ब्रह्मकाण्डे भगवान् भर्तृहरिः—

"नादैराहितबीजानामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥" इति ।

## विकासः

ननु निर्भागे पदात्मनि वाक्यात्मनि वा स्फोटे गृहीते न किंचिदस्याग्रहीतमस्ति यदग्रहणात् प्रथममस्फुटमीषद्रूपं स्फोटस्य ग्रहणं भवेदिति चेत् ? अत्रैवमवधारयन्तु शब्दतत्त्वं निर्णिनीषन्तो भवन्तः ! सर्व एव वर्णाः शब्दब्रह्मण्यधिष्ठानचैतन्यात्मके तादात्म्येनाध्यस्यमानास्तद्विवर्त्ता एवेत्यतो गोचरयतु वर्णज्ञानमपि इदं रजतमित्यादिप्रत्ययस्येवाधिष्ठानमपि स्फोटतत्त्वम्, परं तु तज्ज्ञानगोचरः स्फोटो न भवत्यर्थप्रत्यायकोऽतोऽस्यास्फुटमीषद्रूपं ग्रहणमुच्यते, यदात्वयं पूर्वपूर्ववर्णप्रत्ययप्रचयरचितभावनापरिपाकसंवलितं चेतसि परिस्फुरति तदैवासावर्थप्रतिपत्तिं प्रसूत इति स्फुटतरमभिव्यक्तः स्फोट इत्युच्यते ।

यद्वा पूर्वपूर्ववर्णैरीषत्सन्दिग्धः स्फोटश्चरमबुद्ध्या नितरां निश्चयेन ग्राह्यो भवन्नेवार्थप्रत्यायको भवति नान्यथा, कमलमित्युच्चिचोर्षायां हि कमेत्येतावत्पर्यन्तस्योच्चारणे श्रवणेऽपि किं कमलीयः स्फोटः कमनीयोवेति संशयो नापगच्छति, यावच्चरमो लोनो वानुभूयतेऽत ईषद्ग्राह्यत्वं सन्दिग्धत्वं च तदानीमुच्यते, यदा तु चरमो वर्णोऽनुभवपथमास्कन्दति तदासौ स्फोटः स्फुटतरं प्रतीयमान एवेति न तथोच्यत इति । अत एवान्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमस्वरूपं स्फोटमाहुरालङ्कारिकाः ध्वनिकारादयः । अतो निरंशस्य सामान्यविशेषविरहिणोऽपि स्फोटस्य स्फुटास्फुटावभासः सम्भवत्येव । अविद्यायाः सर्वसम्पादकत्वेन तत्कल्पितस्य सामान्यविशेषभावस्य सत्त्वादिति ।

अत एव च मिथ्याभूतैः विवर्त्तैर्वर्णैः सत्यस्य स्फोटस्य ग्रहणं न युक्तं मिथ्याभूतेन पारमार्थिकस्य वस्तुनो ग्रहणासंभवादित्यपि प्रत्युक्तम्, यथा हि दूरस्थे वनस्पतौ दोषवशाज्जाता मिथ्याभूतयापि हस्तिबुद्ध्या प्रवृत्तिद्वारा तरुप्रमोदयः यथा वा मणिप्रतिबिम्बे मणिबुद्ध्या प्रवर्तमानस्य मणिप्रमोदयः तथा मिथ्याभूतवर्णज्ञानादपि सत्यस्य स्फोटस्य भवति ग्रहणमिति किमनुपपन्नम् ।

अथैवमप्यर्थप्रतिपत्तौ सत्यां तदनुपपत्त्या स्फोटप्रतिपत्तिः, स्फोटप्रतिपत्तौ च सत्यामर्थप्रतिपत्तिरितीतरेतराश्रय इति चेन्मैवम्, नहि वयमर्थप्रतीत्यनुपपत्त्या स्फोटं कल्पयामो येनैवं पर्यनुयुञ्जेमहि, प्रत्यक्षसिद्धमेव त्वेनमध्यवस्यामः । तथाहि— 'गौरित्येकं पदम्, गामानयेत्येकं वाक्यम्' इति सर्वजनीनो भवत्यनुभवः । तत्र पूर्वपूर्ववर्णग्रहणाहितसंस्कारायामनुसंहारबुद्धौ ( चरमवर्णबुद्धौ ) एकमभिन्नं वस्तु समुद्भासते इत्येष्टव्यम्, न खल्वभिन्नवस्तुनिर्भासा बुद्धिः परस्परव्यतिरिच्यमानान्मनो वर्णानेव विषयीकर्त्तुमुत्सहते । तादृशबुद्धिविषये वस्तुन्येकस्मिन्नानात्वस्यासम्भवात् तस्मात्प्रत्यक्षसिद्ध एवायं स्फोटो नानुपपत्त्या कल्पनीयो येनैनमन्योन्याश्रयो दोषो प्रसज्येतेति ॥

## विकासः

स चायं स्फोटः पातञ्जलैः वैयाकरणैश्चाभ्युपेयते । प्रादर्शि च शब्दार्थप्रत्ययानामितरेतराध्यासादित्यादि योगसूत्रीये व्यासभाष्ये तद्वाचस्पत्ये च, वाक्यपदीये भगवता भर्तृहरिणा प्रतिपादितः संगृहीतश्च मञ्जूषायां नागेशेन तदिह किञ्चित्प्रदर्श्यते—नियतसमयपरिपाकानां कर्मणामुपभोगेन प्रक्षये प्रलये लीनसर्वजगत्का माया ईश्वरे लीयमाना कार्यप्रवृत्त्यभावात् सुप्तेव तिष्ठति । ततः स्वाश्रयतत्तदन्तः करणद्वारा मायायां स्थितैरपरिपक्वैः (अवशिष्टैः) कर्मभिः स्वफलदानाय भगवतः सकाशान्मायापुरुषयोराविर्भावः सम्पाद्यते, अयं च कार्यकरणसामर्थ्यरूप एवाविर्भावो नोत्पत्तिः तयोरनादित्वेन पूर्वमेव स्थितत्वात्, ततः परमेश्वरस्य सिसृक्षात्मिका सृजेयमिति मायावृत्तिरुदभूत् । ततो बिन्दुरूपं त्रिगुणं प्रधानशब्दवाच्यं जायत तदेव शक्तितत्त्वम् । तत्र बिन्दौ योऽचिदंशः स बीजम्, सम्मिलितौ चिदचितौ नादः, तस्मिन् बिन्दौ यश्चिदंशो नादान्तर्गतः सोऽपि बिन्दुरभिधीयते, अविद्यापरपर्याया शब्दार्थोभयसंस्काररूपा नामरूपात्मिकाऽविद्योच्यते, एतस्माद् गुणत्रयात्मकाद्बिन्दोः सृष्ट्युपयोग्यवस्थाविशेषरूपं शब्दब्रह्मापरनामधेयं नादमात्रमुदपद्यत एतज्जगदुपादानं ख परा शब्दैर्व्यवह्रियते एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यक्तं 'ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन सम्बन्ध एव मूलाधारस्थ पवनसंस्कारः" तच्चाभिव्यक्तं शब्दब्रह्म परावागित्यभिधीयते । नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं तदेव च शब्दब्रह्म मनोविषयः पश्यन्ती इत्युच्यते । एतच्च परारूपं सूक्ष्मतमं पश्यन्तीरूपं सूक्ष्मतरमुभयमपि ईश्वराधिष्ठातृदेवताकं योगिभिर्निर्विकल्पसविकल्पसमाधिसंवेद्यं भवति, ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वागित्युच्यते । सा च कर्णपिधाने उपांशुशब्दप्रयोगे च विवक्षुणा गृह्यते, सैव च मध्यमा वाक् मुखपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि गृह्यमाणा विराडधिदेवत्या वैखरी वागित्युच्यते । तत्र मध्यमायां यो नादांशः स्फोटः स एवार्थवाचकः, स च यद्यप्येकोऽखण्ड एकैकेनापि वर्णेनाभिव्यज्यते तथापि अन्त्यवर्णाभिव्यक्तो बोधहेतुरिति । तदुक्तमभियुक्तैः—

> परावाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
> हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥
> वैखर्या हि कृतो नादः परश्रवणगोचरः ।
> मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥" इति ।

इति स्फोटवादिनां प्रक्रिया । वर्णनित्यत्ववादिनस्तु नित्याः सम्मिलिता वर्णा एव प्रत्याययन्तीति स्फोटकथा वृथा, नित्यत्वञ्चामीषां 'स एवायं ककारः' इत्यादि प्रत्यभिज्ञानादवसीयते, नचैतद्भ्रान्तं बाधकाभावात् । ननु बहुभिरुच्चारयद्भिरुदात्तोऽनुदात्तः सानुनासि

## विकासः

निरनुनासिकः तारो मन्द्रश्चोच्चार्यमाणो वर्णः सर्वैरेवानुभूयते, ते चैते उदात्तत्वादयो विरुद्धधर्मा एकस्मिन् धर्मिणि स्थातुमसहमाना भिन्दन्त्येव स्वाश्रयान् वर्णानपीति चेत् ? स्यादप्येष पर्यनुयोगो यदि परमार्थतो वर्णधर्मा उदात्तत्वादयोऽभ्युपगम्येरन् न त्वेवमपि तु ध्वनिधर्मा एव ते, तादृशधर्मवन्तो ध्वनयो वर्णानभिव्यञ्जयन्ति, नच व्यञ्जकानां ध्वनीनां वायुतया श्रोत्रेन्द्रियग्रहणायोग्यत्वेन तद्धर्माणामपि न श्रोत्रग्राह्यत्वमिति शक्यतेऽभिधातुम् भवति हि भूम्युदकाकाशानां घ्राणरसनाश्रोत्राग्राह्यत्वेऽपि तद्गुणानां गन्धरसशब्दनां तैस्तै-रिन्द्रियैर्ग्राह्यत्वस्य सर्ववादिसिद्धत्वम्, अन्येषां वायूनां श्रोत्राग्राह्यत्वेऽपि शब्दाभिव्यञ्जकानां ध्वनीनां श्रोत्रग्राह्यत्वोपगमे क्षतिविरहश्च ।

ननु येयं प्रत्यभिज्ञा भवन्मनोरथं पूरयितुं प्रवृत्ता सा ककारादिव्यक्तिभेदेऽपि कत्वादिजातिविशेषमवलम्ब्योपपद्यमाना न वर्णानामेकत्वं नित्यत्व च मनागपि शक्नोति साधयितुम्, 'चैत्रोऽयमधीते न मैत्र' इत्यादिप्रत्ययो हि सार्वजनीनो वर्णव्यक्त्यभेदेऽनुप-पद्यमानो न शक्यते केनचिदपह्नोतुमिति चेत् ? अत्रैवं विदाङ्कुर्वन्तु आयुष्मन्तो भवन्तः । ककारादीन् वर्णाननन्तान् परिकल्प्य तेषु तेष्वनन्तेषु ककारादिषु वर्णेषु कत्वखत्वादयो जातयो भवद्भिः वहवः प्रत्यभिज्ञोपपादनाय कल्पनीयाः तेषु तेषु च वर्णेषु ध्वनिगतोदात्तत्वा-दयो धर्मा औपाधिकाः कल्पयितव्याः तद्वरं जात्यकल्पनलाघवेन एकैक एव ककारखकारा-दिः कल्प्यताम्, तत्र तत्र च भेदप्रत्यय उदात्तत्वादिप्रत्ययश्च ध्वनिनिमित्त इति शक्यते आस्थातुम् । अत एव 'शब्द इति चेन्न' इति सूत्रे (१।३।२८) वक्ष्यति भाष्यकारो 'वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते द्विर्गोशब्द उच्चारित इति भवति प्रतीतिः न तु द्वौ गोशब्दौ' इति । 'तत्र भामत्यामपि 'तथा सति दश गकारानुदचारयच्चैत्र इति हि प्रत्ययः स्यान्न स्याद्दशकृत्व उदचारयद्गकारम्' इति वक्ष्यति । एवञ्च 'उत्पन्नः ककारो विनष्टः ककारः' इत्यादि प्रतीतिः उदात्तत्वादिवत् वर्णाभिव्यञ्जकध्वनिगतोत्पादादिमत्वं वर्णेषु गोचरयन्ती भ्रान्तिरेवेति न कामप्यस्माकमनुपपत्तिमासादयितुमियमीहते ।

यद्यपि **वाचस्पतिमिश्रैः** योगदर्शने स्फोटो व्युत्पादितः निराकृतश्च न्यायवार्तिकतात्पर्यटीकायां भामत्यां च तथा च क एषां सिद्धान्त इति भवति व्यामोहः तथापि तेषु तेषु टीकाग्रन्थेषु तेषां तेषां दर्शनानामभिप्रायं दर्शयन्तोऽमी स्वरचितमूलग्रन्थेषु यदवोचन् तत्रैषामादरोऽवगन्तव्यएव वर्णस्थायित्वपक्षश्च उपवर्षप्रदर्शितः सच श्लोकवार्तिके भट्टपादैः स्फोटनिराकरणपूर्वकं सम-र्थितः **वाचस्पतिमिश्रैश्च** स्वतन्त्रग्रन्थे तत्त्वविन्दौ 'अत्र भवन्तो वार्तिककारमिश्राः, इति स्थाने स्थाने प्रदर्शयद्भिः वर्णनित्यत्वपक्ष एवानुमोदितस्तस्मादयमेव पक्ष एषां सिद्धान्तो न स्फोट इति बोध्यम् )

नन्वेवमपि नित्यानां विभूनां च वर्णानां पौर्वापर्यरूपेण साहित्यं न सम्भ-वति, नच स्वरूपसन्तो नापि क्रमज्ञानविधुरास्ते अर्थानवभासयितुं क्षमन्तेऽतिप्रसङ्गात् ।

## विकासः

नच स्मरणफलोन्नीतसद्भावैः पूर्वपूर्ववर्णानुभवजनितसंस्कारैश्चरमवर्णानुभवसहकृतैरर्थप्रतीत्युपपत्तिरिति साम्प्रतम्, स्वभावविपर्ययप्रसङ्गात्, यो हि यद्विषयानुभवजन्मा संस्कारः स तद्विषयामेव स्मृतिं प्रसूते इति संस्कारस्य स्वभावः, अत एव 'भावनापरनाम्नः संस्कारस्य स्वोत्पादकानुभवगोचरीकृतार्थमात्रविषयकस्मृतिजननादन्यत्र सामर्थ्यादर्शनात् न हि गवानुभवजनितः संस्कारः स्मृतिं करोति तुरगे, इत्युक्तं वाचस्पतिमिश्रचरणैः तस्मात् स्मृत्युत्पादनस्वभाववता संस्कारेणानुभवोत्पादनोपगमे स्वभावो विपर्यस्येत् ।

ननु ये यथास्वं वर्णैराहिताः संस्कारास्ते सम्भूय ( मिलित्वा ) निखिलवर्णविषयामेकामेव स्मृतिं प्रसुवते तद्दशाश्चैकस्मृतिसमारोहिणो वर्णा अर्थस्य वाचकाः, नचैतावता स्वभावविपर्ययः तथा हि संस्काराणां किं विजातीयोत्पादने सजातीयापेक्षा न भवतीत्युच्यते किं वाऽनेकविषयकैकस्मृतौ ? नाद्यः, 'इदमेकमिदमेकम्' इत्येकैकविषयकानुभवद्वयजन्यसंस्कारद्वयजन्याया द्वावित्येकस्या बुद्धेरुदयात्, दृष्टश्चैतत् संस्कारश्चक्षुराद्यनपेक्षः स्मृतिकारणम् चक्षुरादिश्च तन्निरपेक्षः प्रत्यक्षकारणम्, प्रत्यभिज्ञाने तु अन्योऽन्यमपेक्षेते संस्कारश्चक्षुरादिश्चेति ।

नान्त्यः 'ते घटा' इत्यादावेकैकशो घटादीनां यदा कदाचिज्जायमानेभ्योऽनुभवेभ्यः क्रमेण जायमानैः संस्कारैरेकस्या स्मृतेरुदयात् सजातीयापेक्षादर्शनात्, तथा चैकस्य संस्कारस्यैकस्मृतिजनकत्वेऽपि मिलितानां संस्काराणामनेकवर्णगोचरैकस्मृतिजनकत्वं न विरुध्यते ।

नचैकस्मृत्युपारूढवर्णानां वाचकत्वे 'नदी दीन' इति, 'सरो रस' इति क्रमस्मरणनियमाभावात् अनुक्रमविपरीतक्रमाभ्यां विशेषो न स्यात् तावतां वर्णानामनुभवस्मर्यमाणत्वेनार्थप्रत्यये किंकृतं वैषम्यं स्यादिति वाच्यम्, यावद्भ्यो यादृशेभ्यश्च यत्र येऽर्थाः प्रतीयन्ते तत्र तावतां तादृशां चार्थावबोधकत्वाङ्गीकारात्, तदेतत्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥'

इति तत्त्वबिन्दौ श्लोकवार्तिकीयकारिकामुल्लिखद्भिरेभिराचार्य वाचस्पतिमिश्रचरणैः स्पष्टीकृतम् । अत्र 'यादृशा' इत्यनेनैकवक्तृकाः क्रमिकाश्च बोध्याः क्रमश्चानुपूर्वी सा च तत्तद्वर्णज्ञानानन्तरतत्तद्वर्णज्ञानम्, तत्तद्वर्णोच्चारणानन्तरमुत्तरोत्तरवर्णोच्चारणं वा; एवञ्च यथाक्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति तथा क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोहन्ति । यद्यपि स्मरणलक्षणैकप्रतीतिवर्त्तिनां वर्णानां न विशेषः तथापि यौगपद्यविपरीतक्रमाभिव्यक्त्यपेक्षया क्रमोच्चारितानामस्त्येव विशेषः, वर्णानां हि नित्यत्वेन विभुत्वेन च देशतः कालतश्च परिच्छेदशून्यत्वेऽपि क्रमवन्तः पूर्वपूर्ववर्णानुभवाः

विकासः

एकस्मृतिसमारोहिषु वर्णेष्वौपाधिकं क्रमं सम्पादयन्तीति, श्लोकवार्तिककारैरपीदमभ्युपगतम् । तदेतदुक्तं तत्त्वबिन्दौ वाचस्पतिमिश्रचरणैः "यथाहुरत्रभवन्तो वार्तिककारमिश्राः

"पदावधारणोपायान् बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्व स्वरवाक्यश्रुति स्मृतीः ॥" इति ।

न केवलमेकार्थप्रत्यय एवैकं पदमिति व्यपदेशनिमित्तम्, किन्तु क्रमादयोऽपि तत्र रसः रस इत्यत्र क्रमः, करः करञ्ज' इत्यत्र न्यूनातिरिक्तत्वे, 'इन्द्रशत्रुः' इत्यत्र स्वरः, 'सारङ्गमागता नर्त्तकी' इति वाक्यम्, 'परमे व्योमन्' इति श्रुतिः, गृभ्णामीति 'हृग्रहोर्भश्छन्दसि' इति पाणिनीयस्मृतिः एवम् अश्वस्त्वं देवदत्त इत्यत्रापि व्याकरणस्मृतिः । तत्र हि 'अश्व' इति पदं लोकप्रयोगेनाश्ववाचिनामत्वेन सम्भाव्यमानं 'श्वि' धातोर्लुङि सिपि 'जृस्तम्भु' इत्यादिना च्लेरङादेशे 'श्वयतेः' इत्यकारादेशे मध्यमपुरुषैकवचनमिति निर्णीयते, तस्मात् वर्णानुभवक्रमः एकस्यामपि स्मृतौ विशेषकरो भवति दृष्टानुसारित्वात् कल्पनायाः । इत्थञ्चान्तरेणापि स्फोटमुपदर्शितदिशा वर्णैर्नैवार्थ-प्रतीत्युपपत्तेरलं स्फोटकल्पनयेत्याहुर्भट्टानुयायिनो मीमांसकादयः ।

तार्किकास्तु—'शब्दोऽनित्यः सामान्यवत्त्वे सति बहिरिन्द्रियग्राह्यत्वाद् घटवत्' इत्यनुमानात् 'उत्पन्नः कोविनष्टः क' इति प्रतीतेश्च शब्दस्योत्पादविनाशवत्त्वमुपेत्य चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वेन हेतुना तस्य विशेषगुणतां प्रसाध्य विशेषगुण-त्वेन हेतुना दिक्कालमनसां गुणभिन्नत्वं बहिरिन्द्रियग्राह्यत्वेनात्मविशेषगुणभिन्नत्वमग्निसंयो-गासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वेन स्पर्शवद्विशेषगुणभेदं चाकलय्य परिशेषादाकाशगुणतामनुमिमानाः योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वं नियम्य तृतीयक्षणनाश्यत्वं शब्दस्योपगच्छन्तः स्फोटमनङ्गी कुर्वन्तः 'स एवायं ककारः' इत्यादि-प्रत्यभिज्ञां 'तदेवौषधम्' इत्यादिवत्साजात्यविषयत्वेन समर्थयन्ति ।

तदेतत् स्फोटमस्वीकुर्वन्तोऽपि शब्दानां स्थिरत्वमभीप्सन्तो नानुमन्यते । 'स एवायं ककार' इत्यादिप्रत्यभिज्ञया शब्दानां स्थिरत्वसिद्धौ द्विक्षणमात्रस्थायित्वासम्भवात् प्रत्यभिज्ञैव हि पूर्वापरकालसम्बन्धं गोचरयन्ती स्तैर्यं धैर्यं प्रापयन्ती न शक्यते केनचिद-न्यथयितुम्, अपरथा 'सोऽयं पट' इत्यादिप्रत्यभिज्ञापि साजात्यमादायोपपद्यमाना नाभेद-मालिङ्गितुमुत्सहेत विजयेरंश्चैवं सति क्षणभङ्गवादिनो वैनाशिकाः तस्मान्न क्षणिकाः किन्तु स्थिरा एव सर्वे शब्दाः, एवञ्च एकैक एव ककार खकारादिः । नच तारत्वमन्दत्वा-दयो विरुद्धा धर्मा एकस्मिन् समावेष्टुमशक्नुवाना विभजन्त्येव स्वाश्रयान् वर्णानिति साम्प्र-तम्, प्रदर्शितप्रत्यभिज्ञाबलेन शब्दस्य स्थिरत्वसिद्धौ तारत्वादेर्व्यञ्जकध्वनिधर्मत्वस्यैवोप-गन्तुमुचितत्वात् । तथा च तारत्वादेर्दोषाद्वारोपेण सर्वव्यवहारोपपादनान्न वर्णभेदः कल्पनीय इति ।

## विकासः

अपि च दूरस्थे कोलाहलादौ वर्णविशेषस्याप्रतीयमानत्वेऽप्युपलभ्यमान उत्पत्तिविनाशशाली श्रोत्रेण गृह्यमाणो ध्वनिर्न कथञ्चिदपि केनचिच्छक्यतेऽपह्नोतुम् । एवं च प्रत्यक्षसिद्धस्यास्य ध्वनेरुभाभ्यामपि वादिप्रतिवादिभ्यां स्वीकार्यतया तदंशे गौरवस्यानवकाशप्रदर्शनासम्भवः । सति चैवमनन्ततत्तद्वर्णध्वंसप्रागभावध्वंस प्रागभावध्वंस प्रागभावादिकल्पनेनातिगौरवं शब्दानां द्विक्षणावस्थायित्वे, तेषामकल्पनेनातिलाघवं च स्थैर्यपक्षे ।

एवं 'सोऽयं ककार' इत्यादिप्रत्यभिज्ञोपपत्तये कत्वादिजातिकल्पनमतिगौरवमापद्यतेऽस्थैर्यपक्षे, स्थैर्यपक्षे च एकस्यैव ककारादेः सत्त्वेन कत्वादिजातिकल्पनाया अभावात् । ध्वनिरूपोपाधिभेदेन भेदप्रत्ययः ककारादिव्यक्त्यभेदेन चाभेदप्रत्ययोऽप्युपपद्यत एव । एवं वीणादिजन्यानां वर्णातिरिक्तानां ध्वनीनां तद्गतोदात्तत्वादिधर्माणां च सर्वानुभवसिद्धानां वर्णेष्वारोपेणैवोपपत्तावतिलाघवेन प्रत्यभिज्ञया च वर्णानां स्थिरत्वमेव पर्यवस्यतीति ।

न च वर्णानित्यत्वपक्षे कत्वादिकं कण्ठताल्वाद्यभिघातानां कार्यतावच्छेदकम्, नित्यत्वपक्षे तु कादिसाक्षात्कारत्वमिति गौरवमितिवाच्यम्, लौकिकविषयतासम्बन्धेन कादेरेव नित्यत्वपक्षेऽपि कार्यतावच्छेदकत्वोपगमात् , तस्मादस्थिरत्वपक्षेऽसङ्ख्यशब्दोत्पत्तिविनाशविनाशप्रागभावादि कल्पनाऽतितरां गौरवमावहतीति नाविदितं विपश्चितां केषाञ्चित्, स्थिरत्वपक्षे शब्दस्य द्रव्यत्वात् संख्याविभागादयोऽपि तत्र उपलभ्यमानाः सङ्गच्छन्ते नास्थिरत्वपक्षे इति ।

इत्थञ्चास्थिरत्वपक्षे 'भेरी शब्दो मया श्रुतः' इत्यादिप्रतीतिबाधः, 'मन्दो गकारो वेगवान् गकारः' इत्यादिप्रतीतिबाधश्च यन्त्रादिना ( फोनोग्राफ ) धृतस्य शब्दस्योपलम्भबाधश्चेति बाधैरेतैरालिङ्गितामतिगरीयसीमसङ्ख्यशब्दोत्पत्तिध्वंसकल्पनां तर्कशतैर्भर्त्सितां मानहीनामिमां कोऽनुगन्तुमुत्सहेतेति ।

इति सर्वतन्त्रस्वतन्त्र श्री बचाझा शर्मशिष्येण लक्ष्मीनाथशर्मणा काशीविश्वविद्यालयीयसंस्कृतमहाविद्यालयीयदर्शनविभागाध्यक्षेण विरचित तृतीयसूत्रभाष्यभामतीविकासः समाप्तः ।

## शाङ्करभाष्यम्

हतो भूताद् योनेः सम्भवः, 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' (बृह० २।४।१०) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति।

## शाङ्करभाष्यम्

इति प्रथमवर्णकम्। अथवा—यथोक्तमृग्वेदादि शास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे। शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः। शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि। किमर्थं तर्हीदं सूत्रम्? यावता पूर्वसूत्र

## भामती

चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या। पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। तस्मान्नृत्तानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणाऽनुकरोति नर्तकी, न तु तदेव व्यनक्ति। एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवको न तु तामेवोच्चारयति आचार्यव्यक्तिभ्यो

## प्रकाशः

तैरपीति। का कथा दृश्यत्वादिहेतुकजगन्मिथ्यात्वानुमितिसहचरीभिः 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतिभिः ब्रह्मातिरिक्ताखिलप्रपञ्चमिथ्यात्वं प्रतिपादयन्तीभिः सह 'तस्मात्त्रयो वेदा अजायन्त' इत्यादिश्रुतीनां समन्वयमिच्छतामेकविज्ञानेन सर्वविज्ञानप्रतिज्ञां समर्थयतां वर्णानित्यत्ववादिनामस्मदादीनां पदाद्यनित्यत्वे इति अपिशब्देन सूचितम्। आनुपूर्वीभेदवन्तः तत्तद्वर्णोत्तरतत्तद्वर्णस्वरूपानुपूर्वीविशेषवन्तः। व्यक्तिधर्मः अभिव्यक्तिनिष्ठा। वाक्यादीनामिति। आदिपदेन महावाक्यपरिग्रहः। द्वितीये किमानुपूर्व्या व्यक्त्यन्तरत्वमेवाभिनवत्वं विलक्षणत्वं वा? तत्राद्यं भवद्भिरप्यगत्याऽङ्गीकार्यमेवेति प्रदर्श्य द्वितीयमस्माभिरपि नोपेयते इति प्रदर्शयति—तस्मान्नृत्तेत्यादि। आचार्य

भामती

माणवककृव्यक्तीनामन्यत्वात्। तस्मान्नित्यानित्यवर्णवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। यथाहुः—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'।

तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरम्परामविच्छिन्नामनादिमाचक्षते। वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम्, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात्। तथा हि

प्रकाशः

व्यक्तिभ्यः आचार्यकृतवर्णाभिव्यक्तिभ्यः। माणवककृव्यक्तीनां माणवककृतवर्णाभिव्यक्तीनाम्। अन्यत्वादिति। ततश्च तद्धर्मानुपूर्व्या अप्यन्यत्वमेवेत्यर्थः। वर्णानित्यत्ववादिनो नैयायिका वैशेषिकाश्च वेदस्य पौरुषेयत्वमुपगच्छन्तं वेदनिर्माणे भगवतो भवस्य स्वातन्त्र्यमुरीकुर्वन्ति। वर्णनित्यत्ववादिनो मीमांसकास्तु पुरुषेणोच्चार्यमाणत्वरूपं पौरुषेयत्वमुपयन्तोऽपि वेदनिर्माणस्वातन्त्र्यं (आनुपूर्व्यास्वातन्त्र्यादिकर्तृत्वरूपम्) भगवतो नाभ्युपगच्छन्ति एतावतैवापौरुषेयत्वप्रसिद्धिरेषामित्यभिदधाति—तस्मादित्यादिना। मीमांसकानां मते वर्णानां नित्यत्वेऽपि पौर्वापर्यक्रमविशिष्टानां वेदानां वस्तुतो नित्यत्वासम्भव एव, किन्तु संसारस्यानादित्वात् अनादिगुरुशिष्यपरम्परया समागतत्वेनैवागत्या नित्यत्वव्यवहारस्तेषामित्यभिदधाति-तत्र सृष्टीत्यादि। तत्र भट्टसम्मतिमाह-यथाहुरिति। तदेतत्त्वनभ्युपगमपराहतमित्याह-वैयासिकमिति। अनुवर्तमाना इति। 'आचक्षते' इति पूर्वेणानुषङ्गः। विरचनादिति। अतो न मानान्तरेणार्थोपलब्धिपूर्वकं वेदस्य विरचनम्। अयमत्र निर्गलितोऽर्थः वेदान्तसिद्धान्ते मीमांसकानामिव न वर्णानां नित्यत्वमपि तु 'स एवायं ककार' इत्यादिप्रत्यभिज्ञया केवलमाकल्पस्थायित्वमेव; 'अतोऽन्यदार्तम्' एवं च 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदः' इत्याद्यागमेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गभयेन च वेदानामपि वर्णादिसमुदायरूपाणां जन्यतया जन्यभावानां च विनाशित्वेन न मुख्यं नित्यत्वमपि तु यावत्सर्गस्थायित्वरूपं गौणमेव नित्यत्वं मध्ये तु नोत्पत्तिविनाशौ तावदवस्था

## भामती

यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते, नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति अग्निर्वा क्लेदयति, आपो वा दहन्ति, तद्वत्। यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थ-

### प्रकाशः

असंख्यवर्णोत्पत्तिविनाशोपगन्तृनैयायिकादिमतापेक्षयाऽतिलाघवमेव, एवं च सर्गादिकाले यादृशक्रमविशिष्टाः वर्णाः परमेश्वरेणोच्चारिता अविद्यापरिणामरूपा ब्रह्मणो विवर्ताः वियदादिवद्व्याप्रकास्ते तथैव यावत्प्रलयमवस्थिताःसन्तस्तत्तत्पदार्थाभिधानशक्तिमन्तः क्रमवद्व्यञ्जकोपाधिक्रमेण क्रमवत्तयाऽनुभूयमानाः पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतश्रोत्रेन्द्रियजन्यैकबुद्ध्युपारूढाः पदसंज्ञां प्रतिपद्यन्ते। लब्धपदभावाश्च तत्तत्पदार्थसंसृष्टार्थावबोधसमर्थत्वेनैकप्रत्ययोपारूढाः वाक्यसंज्ञां लभन्ते, वर्णाश्च य एव लौकिकास्त एव वैदिकाः, पदान्यपि तथैव वाक्यानि तु भिद्यन्ते। तत्र वैदिकवाक्यानि गृहीतनियतक्रमपदानि सर्गादिकाले परमेश्वरेणोच्चारितानि तत आरभ्याप्रलयमवस्थितानि, लौकिकानि तु वाक्यानि अनियतक्रमाणि सर्गाद्यकाले परमेश्वरेण तादृशक्रमवत्तया नोच्चारितानि तत्तत्पदसमुदायात्मकान्यपि तु अस्मदादिभिर्जीवैरेवेति न सर्गादिकालमारभ्य सर्गान्तपर्यन्तस्थायीनि किंतु यदा यदा जीवेनोच्चारिता उच्चार्यन्ते उच्चारयिष्यन्ते च ततत्समयमारभ्यैव सर्गान्तपर्यन्तस्थायीनि, इत्थमस्ति लौकिकवैदिकशब्दयो विशेषः। सर्वे चामी शब्दाः व्यञ्जकेन कण्ठताल्वाद्यभिघातेनाभिव्यज्यमाना अभिव्यञ्जकशून्यकाले नोपलभ्यन्ते। एवं च वर्णानां 'शिवः' इत्याद्येकबुद्ध्युपारूढत्वेन एकपदत्वस्य, पदानांच शिवं पश्यामीत्याद्येकबुद्ध्युपारूढत्वेन एकवाक्यत्वस्य वाक्यार्थबुद्धेश्चोपपत्त्या नान्यथानुपपद्यमानैकं पदमेकं वाक्यमितिबुद्ध्यधीनसिद्धिकः स्फोट इति न तस्य कल्पनावकाशः। यदि तु स्फोटः सर्वथा ब्रह्मस्वरूप एवोपेयते तदविद्यया च वर्णा उत्पद्यन्ते इत्युपेयते तदा ब्रह्मवादिनां (वेदान्तिनाम्) न स्फोटवादिभिः सह कस्यचिद्विवादस्यावसरः। यदि च वर्णाभिव्यङ्ग्यः ब्रह्मभिन्नः स्फोट इत्युपेयते तदा तु वर्णैरेवोपपत्तेर्न तद्व्यतिरिक्तः स्फोटोऽभ्युपेय इत्यस्ति विवादः।'

न सर्गान्तरे विपरीयन्त इति। पूर्वपूर्वसंस्कारसहकृताविद्यापरिणामभूताः ब्रह्मविवर्ताः यागादय इदानीमपि न विपरीता भवन्तीत्यर्थः। अत्र विपरिय-

## शाङ्करभाष्यम्

एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम्। उच्यते—तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानु-

## भामती

हेतुः एवं सर्गान्तरेष्वपीति, तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि, तच्चास्माकमपि समानमन्यत्राभिनिवेशात्। न चैकस्य प्रतिभानेऽनाश्वास इति युक्तम्, नहि बहूनामप्यज्ञानां विज्ञानां वाऽऽशयदोषवतां प्रतिभाने युक्त आश्वासः। तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसम्पन्नानामुपपद्यते तत्स्वरूपावधारणम्, तत्प्रत्ययेन चार्वाचीनामपि तत्र सम्प्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं प्रामाण्यं चेति। प्रथमवर्णकम्।

## प्रकाशः

न्तोति पाठान्तरम्, तस्याध्युक्त एवार्थः। अन्यथा तदेव अनियतक्रमानुपूर्वीकं वेदाध्ययनमेव। अनर्थहेतुरिति।

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥"

इति शिक्षायां श्रवणात्। अन्यत्राभिनिवेशादिति। वेदस्य सृष्टि नास्तीति यस्तेषामभिनिवेशः श्रुतिविरुद्धस्तदतिरिक्तविषये बहुत्राऽस्माकमपि सम्मतमित्यर्थः। चतुर्थं निराकरोति—न चैकस्येति। सम्प्रदायाविच्छेदमिच्छतां जैमिनीयानां तत्तच्छाखाप्रवर्त्तकेषु कण्वादिषु बहुष्वाश्वासमातिष्ठतां तेषु तेष्वनेकेषु प्रवर्त्तकेष्वाश्वासापेक्षया एकस्मिन् सर्वज्ञे परमेश्वरे एवाश्वासः (विश्वासः) समुचितः नच तस्मिन् सर्वज्ञत्वमेवासिद्धं जगज्जन्मादिकारणत्वसाधकयुक्तिसहकृताभि 'यः सर्वज्ञः स सर्ववित् तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते, पराऽस्य शक्ति

शाङ्करभाष्यम्

पादानाज्जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत, तामाशङ्कां निवर्त्तयितुमिदं सूत्रं प्रववृते—शास्त्रयोनित्वादिति ॥३॥

## इति तृतीयं शास्त्रयोनित्वाधिकरणम् ॥

भामती

वर्णकान्तरमारभते— अथ वेति । पूर्वेणाधिकरणेन ब्रह्मस्वरूपलक्षणासम्भवाशङ्कां व्युदस्य लक्षणसम्भव उक्तः । तस्यैव तु लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम् । अक्षरार्थस्त्वतिरोहितः ॥३॥ इति तृतीयं शास्त्रयोनित्वाधिकरणम् ।

प्रकाशः

विविधैव श्रूयते' इत्यादिश्रुतिभिर्महिमविशेषवतस्तस्य सर्वज्ञत्वसिद्धेः । ननु न वयमीश्वरं पश्यामस्तत्कथं तत्कर्तृके वेदे विश्वास इत्यत आह–सर्गादिष्वामिति ।

वर्णकान्तरपक्षे सङ्गतिमाचष्टे–पूर्वेणेति । पूर्वसूत्रोक्तं जगत्कारणत्वलक्षणं नानुमानविधया ब्रह्मणो लक्षकत्वमपि तु ब्रह्मणो वेदैकप्रमाणकत्वमित्यभिधातुमिदमधिकरणमित्यर्थः । असम्भवाशङ्कामिति । असङ्गोदासीनस्वभावस्य कथं कारणत्वमित्याशङ्काम् । व्युदस्य विचित्रशक्तिशालिन्याऽघटितघटनापटीयस्या माययोपहितस्येश्वरस्य सगुणस्य ब्रह्मणः जीवनिष्ठयाऽविद्यया विषयीकृतस्योपादानं कारणत्वमित्येवंरीत्या निराकृत्येत्यर्थः ।

सदसद्भ्यामनिर्वाच्यं विश्वं यस्मिन् प्रसूयते ।
विद्यते लीयते तस्मै कस्मैचिन्महसे नमः ॥

इति तृतीयसूत्रस्य प्रकाशः समाप्तः
साम्बशिवार्पणमस्तु ।

# तत्तु समन्वयात्

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (जै० सू० १।२।१) इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्। अतो

भामती

तत्तु समन्वयात् ॥ ४ ॥

शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्कारः—"कथं पुनरिति।" किमाक्षेपे। शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म भूतमभिदधतां वेदान्तानामपुरुषार्थोपदर्शिनामप्रयोजनत्वापत्तेः, भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत् तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात्। न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमन-

प्रकाशः

तत्तु समन्वयात् ॥ ४ ॥

तत् ब्रह्म, शास्त्रप्रमाणकम् समन्वयात्, एकार्थतात्पर्यकवाक्यघटकपदप्रतिपाद्यत्वादित्यर्थः व्यक्तीभविष्यत्यग्रे, तु शब्दार्थः सूत्रार्थेन न सम्बध्नाति। पूर्वाधिकरणद्वितीयवर्णकेनाक्षेपकीमुपोद्घातरूपां सङ्गतिमेतदधिकरणस्याचष्टे शास्त्रप्रमाणकत्वमिति। प्रतिपादनीयम् युक्त्या व्यवस्थापनीयम्। उत्सूत्रम् सूत्राद्बहिः। ब्रह्मणः शास्त्रप्रमाणकत्वं न भवतीति मन्वानस्य पूर्वपक्षिणः प्रकारविशेषस्याजिज्ञासनात् कथमित्यस्य केन प्रकारेणेत्यर्थो न युज्यतेऽतस्थमुप्रत्ययार्थस्याविवक्षितत्वमाह—किमाक्षेप इति। अपुरुषार्थोपदेशित्वसाधकं विशेषणमाह—शुद्धेत्यादि। भूतम् सिद्धम्। अप्रामाण्येति तदेव हि वाक्यं प्रमाणं यस्यार्थो न पूर्वं मानान्तरेण गृहीतः अनधिगताबाधितार्थविषयकज्ञानस्यैव प्रमात्वेन सिद्धस्य ब्रह्मणः प्रतिपादने तस्य मानान्तरगोचरत्वमप्यास्थेयमेवेत्य-

## भामती

बोधयन्ति स्वतः प्रमाणम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत । न च तैरप्रमाणैर्भवितुं युक्तम्; न चाप्रयोजनैः, स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात् । तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम् । यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, ततः सन्निहितोपासनादिक्रियापरत्वं वेदान्तानाम् । एवं हि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्यं च सिध्यतीति तात्पर्यार्थः । पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदार्ढ्याय । आनर्थक्यं चाप्रयोजनवत्त्वम्, सापेक्षतया प्रमानुत्पादकत्वं चानुवादकत्वादिति । अत इत्यादि वाऽन्तं ग्रहणकवाक्यम् । अस्य विभाग-

## प्रकाशः

नधिगतविषयकत्वाभावात् तज्ज्ञानस्य प्रमात्वासंभवात् तत्करणं वेदान्तवाक्यं न प्रामाण्यमश्नुवीतेत्यर्थः । **नखल्विति** स्वतः प्रमाणमित्यनेनान्वेति । **अवबोधयन्तीति** शतृप्रत्ययान्तमेतत् । **स्वाध्यायाध्ययनेति** स्वाध्यायोऽध्येतव्य इति विधिः स्वाध्यायपदवाच्यवेदराशेरध्ययनं विदधानस्तस्य प्रयोजनवदर्थपर्यवसायितां सूचयति निःप्रयोजनस्य निरर्थकस्य चाध्ययनविधानानुपपत्तेः अतो वेदान्तानामपि सार्थकत्वमवश्यमुपेयमिति भावः । ननु मन्त्राणां यथा पार्थगर्थ्यं तथा वेदान्तानामपि किं न स्यादत आह—**मन्त्राणां चेति** इषेत्वेत्यत्र छिनद्मीत्यध्याहाराच्छाखाच्छेदनक्रियायामयं मन्त्रोऽङ्गभावमालम्बते एवमग्निर्मूर्धेत्यादयो मन्त्राः क्रियासाधनमग्न्यादिकं प्रकाशयन्तो मन्त्रस्मृतदेवतानां क्रियाङ्गतां सम्पादयन्तोऽङ्गभावं भजन्त एवेत्यर्थः । भाष्ये **कर्मसमवायित्वम्** कर्मसम्बन्धित्वम् । **पूर्वपक्षदार्ढ्यायेति** । पूर्वपक्षदृढीकरणं च सिद्धान्तारम्भस्यावश्यकत्वार्थम् । ननु भाष्ये आनर्थक्याभिधानमसङ्गतं विदितपदपदार्थसम्बन्धानां समधिगतशाब्दप्रक्रियाणां पुंसामर्थज्ञानस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्याज्जायमानस्यापह्नोतुमशक्यत्वादत आह—**आनर्थक्य चेति** । **अप्रयोजनवत्त्वम्** । नत्वर्थज्ञानाजनकत्वमित्यर्थः । वेदान्तवाक्याज्जायमानमपि ज्ञानं न प्रमारूपं संभवति अगृहीतग्राहित्वाभावादित्याह—**सापेक्षतयेति** ।

## भामती

भाष्यं नहीत्यादि उपपन्ना त्वेत्यन्तम् । स्यादेतत्, अक्रियार्थत्वेऽपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति, तथा च 'विधिना त्वेकवाक्यत्वादिति' राद्धान्तसूत्रमनुग्रहीष्यते, न खल्वप्रवृत्तप्रवर्तनमेव विधिः, उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात्, वेदान्तानां चाज्ञातं ब्रह्म ज्ञापयतां

### प्रकाशः

तत्र हेतुः अनुवादकत्वात् । भाष्यकृतां पुनरुक्तिमाशंक्य पूर्वोक्तार्थस्य संग्राहकं संक्षेपेण तदर्थप्रतिपादकमेतदिति समाधत्ते । अत इत्यादीति । वाक्यान्तरविधानार्थत्वं वा इत्यन्तम् । भाष्ये नहीति परिनिष्ठितवस्तुप्रतिपादने दूषणद्वयम् एकं प्रत्यक्षादिसापेक्षत्वेन स्वतः प्रामाण्यविघातोऽपरं पुरुषार्थाभाव इति । विधिना त्वेकवाक्यत्वादिति जैमिनीयसूत्रस्यायमर्थः ( विधिना ) विधिवाक्येन सहैकवाक्यत्वात् विशेष्यविशेषणभावापन्नमहावाक्यार्थबोधजनकत्वात् अर्थवादाः विधीनां स्तुतिरूपार्थाभिधानेन अर्थवन्तः सप्रयोजनाः स्युरिति । भाष्ये—स्तावकत्वे नेति वायुर्वै क्षेपिष्ठा देवता, इत्यादिप्रशंसारूपार्थवादानां प्राशस्त्ये लक्षणा, सोऽरोदीदित्यादिनिन्दार्थवादानां च निन्दितत्वे भवति लक्षणेत्यविवादम् तत्रार्थवादवाक्यगतपदानां सर्वेषां प्रत्येकं प्राशस्त्यादिरूपेऽर्थे लक्षणोपगमे पदान्तरवैयर्थ्यम् एकेनैव पदेन तल्लाभसंभवात् तस्मादर्थवादवाक्यगतानि यावन्त्येव हि पदानि वाक्यानि च सम्मिलितानि तानि एकमेव विध्यपेक्षितप्राशस्त्यादिरूपमर्थं बोधयन्ति पदस्थानीयतामापद्यमानानि विधिवाक्येनैकवाक्यतामापद्यन्ते ।

अतएवैतादृशस्थले पदैकवाक्यतां संगिरन्ते मीमांसकाः, वाक्यैकवाक्यता तु यत्र विभिन्नवाक्यार्थबोधजनकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधजनकत्वं तत्र भवति यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत् इत्यादिवाक्यानां समिधोयजतीत्यादिवाक्यानां च परस्परापेक्षिताङ्गाङ्गिभावबोधकानाम् । प्रकृते वेदान्तवाक्यान्यपि स्वार्थाभिधाने प्रयोजनमलभमानानि विध्यपेक्षितप्राशस्त्यबोधकत्वेन पदस्थानीयतामधिगतानि विधिवाक्यैकवाक्यतां नीयमानान्येव सार्थकानीतिबोध्यम् । ननु चतुर्विधाः भवन्त्यपूर्वविधयः उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिरधिकारिविधिश्चेति तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः यथाऽग्निहोत्रं जुहोती अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः यथा

## शाङ्करभाष्यम्

वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात् । कर्त्तृदेवतादि प्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तरविधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं सम्भवति प्रत्यक्षादिविषयत्वात् परिनिष्ठितवस्तुनः । तत्प्र-

## भामती

तथाभावादित्यत आह—न च परिनिष्ठित इति । अनागतोत्पाद्यभावविषय एव हि सर्वो विधिरुपेयः, अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्पराविनाभावात्, सिद्धे च तेषामसम्भवात् तद्वाक्यानां त्वैम्दपर्यं भिद्यते । यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिलम्भात्, 'अग्निहोत्रं जुहोति' इत्युत्पत्तिमात्रपरं वाक्यम् । न त्वत्र विनियोगादयो न सन्ति, सन्तो-

## प्रकाशः

दध्ना जुहोतीति, प्रयोगप्रांशु भावबोधको विधिः प्रयोगविधिः सोऽयमङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव, फलस्वाम्यवोधको विधिरधिकारिविधिः यथाऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिः, एवंचैतादृशेषु स्थितेषु विधिप्रभेदेषु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यं ब्रह्मस्वरूपबोधकत्वेनोत्पत्तिविधिरस्तु इतराणि तु वाक्यानि विधेयब्रह्मस्तावकत्वेनोपयोक्ष्यन्ते तथाच 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनांस्युः' इति जैमिनीयसिद्धान्तसूत्रानुग्रहोऽपि स्यादिति शंकते—स्यादेतदिति । नन्वप्रवर्त्तकत्वात्कथं विधित्वमत आह-न खल्विति । उत्पत्तिविधेरिति प्रवृत्तेरधिकारविधित एव लाभादुत्पत्तिविधिः कर्मस्वरूपबोधनपर इति भावः । तथाभावात् अज्ञातज्ञापनार्थत्वात् । अनागतेत्यादिः । भावः भावना तद्विषय एव सर्वोविधिः । अधिकारो हि क्रियायाः पुरुषाभिलषितसम्बन्धबोधनम्, विनियोगः क्रियायाः फलशेषत्वज्ञापनम्, प्रयोगः अनुष्ठानम्, कर्मस्वरूपज्ञानमुत्पत्तिः, क्रियायाश्च फलसम्बन्धो न कारणत्वरूपशेषत्वं विना तच्च नानुष्ठानं विना अनुष्ठानं च नाज्ञाते इति तेषामविनाभावः । सिद्धे चेति सिद्धंच वस्तु यदि पुंव्यापारा-

## शाङ्करभाष्यम्

तिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्, अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं माभूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जै० सू० १।२।७) इति स्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणां च 'इषे त्वा, इत्या

## भामती

ऽप्यन्यतो लब्धत्वात् केवलमविवक्षिताः । तस्माद् भावनाविषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति । उपसंहरति–तस्मादिति। अत्रारुचिकारणमुक्त्वा पक्षान्तरमुपसंक्रामति–अथेति । एवं च

## प्रकाशः

नपेक्षमेव फलं जनयेत् तदा सर्वदैव जनयेत् अतो नाधिकारादिविधिः सिद्धे संभवति तस्मादनागतोत्पाद्यभावविषय एव सर्वो विधिरित्यास्थेयम् । ननु सर्वेषां विधीनामविनाभावे सर्वत्र चातुरूप्यसत्त्वे कथमयमुत्पत्तिविधिरयंविनियोगविधिरित्यादिभेदोऽत आह–तद्वाक्यानामिति। ऐदम्पर्यम् तात्पर्यम् । उदाहरति–यथेति। न त्वत्र विनियोगादयो न सन्तीति। नन्वद्वयोपादानाद्विनियोगादयः सर्वदा सन्तीत्यर्थो लभ्यते। ननु सर्वैरेव विधिवाक्यैर्विनियोगादयः प्रतीयन्त एव 'अग्निहोत्रं जुहोति' इत्यनेनापि हि अग्निहोत्रेण होमेनेष्टं भावयेदित्यर्थः प्रत्याय्यत एव, 'न ह्यनेनाग्निहोत्रस्य स्वरूपसत्तामात्रमवगम्यते तथासति अग्निहोत्रमभूत् भवति भविष्यतीतिप्रयोगापत्तौ विधिप्रयोगो न स्यात् नहि अग्निहोत्रं फलरूपं येनाग्निहोत्रं भावयेदित्यर्थःस्याद्युक्तः, तस्मादग्निहोत्रेण होमेनेष्टंभावयेदित्यर्थ एवाभ्युपेयः, एवं च सामान्यतोऽत्रापि फलं प्रतीयत एवेत्यतोऽत्रापि विनियोगादयः सन्त्येवेत्यत आह–सन्तोऽपीति । अन्यत इति अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यधिकारविधिप्राप्तविनियोगानुवादेनोत्पत्तिविधिः स्वरूपपरो भवति, ब्रह्मणि तु नास्ति भावना नित्यत्वेनानुत्पाद्यत्वात् अतोऽनुवाद्यस्यापि विनियोगादेरभावान्न तदविनाभूतोत्पत्तिविधित्वमपि सत्यं विज्ञानमानन्दं ब्रह्मेत्यादेर्वेदान्तस्य संभवतीति भावः। तदेतदुपसंहरति तस्मादिति । सत्यं विज्ञानमित्यादिवाक्यानामुत्पत्तिवि-

## शाङ्करभाष्यम्

दीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा । नच परिनिष्ठिते वस्तुस्वरूपे विधिः सम्भवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्र-

## भामती

सत्युक्तरूपे ब्रह्मणि शब्दस्यातात्पर्यात् प्रमाणान्तरेण यादृशमस्य रूपं व्यवस्थाप्यते न तच्छब्देन विरुध्यते, तस्योपासनापरत्वात्, समारोपेण चोपासनाया उपपत्तेरिति । प्रकृतमुपसंहरति-तस्माद्ब्रह्मेति । सूत्रेण सिद्धान्तयति एवं प्राप्त उच्यते—तत्तु समन्वयात् । तदेतत् व्याचष्टे–तुशब्द—इति । तदित्युत्तरपक्षप्रतिज्ञां विभजते-तद्ब्रह्मेति । पूर्वपक्षी कर्कशाशयः पृच्छति—क

## प्रकाशः

धित्वाभावे सिद्धे ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्याद्विधीयमानयागादिकर्मसु यदपेक्षितं कर्तृदेवतादिस्वरूपं तत्प्रकाशकान्येव सर्वाणि वेदान्तवाक्यानीतिपूर्वपक्षं भाष्यकृदुपसंहरति—तस्मात्कर्मापेक्षितेत्यादिना । अरुचिकारणमुक्त्वेति प्रकरणान्तरभयादित्यनेनेति शेषः । एवंच सति वेदान्तवाक्यानामुपासनापरत्वे च सति । उक्तरूपे जीवाभिन्ने निरस्तसमस्तधर्मके । प्रमाणान्तरेण अनुमानादिना । यादृशम् जीवभिन्नम् । न तदिति उपासनापरो हि वेदान्तो न वस्तुस्वरूपनिरूपणपरः येनास्य प्रमाणान्तरविरोधःस्यात् अपि तु यादृशं प्रमाणान्तरेण सिद्धंवस्तु तादृशमेव तत्, उपासना तु आरोपितमर्थमादायापि 'वाचं धेनुमुपासीत, मनो ब्रह्मेत्युपासीतेत्यादिवज्जीवे ब्रह्मदृष्टिसमारोपेणाप्युपपद्यत इति भावः । तदित्युत्तरपक्षप्रतिज्ञाम् तत्तु समन्वयादितिसूत्रघटकतत्पदोक्तां शास्त्रप्रमाणकत्वप्रतिज्ञाम् । तत् ब्रह्मणः शास्त्रप्रमाणकत्वं वेदान्तवाक्यसमन्वयादवगम्यते इति सूत्राक्षरार्थः, तुशब्दः पूर्वपक्षनिरासार्थः न तु सूत्रार्थघटकार्थाभिधायी। कर्कशाशयः वेदान्तवाक्यानामन्यपरत्वमेवेति कठिनाशयः । सम्य-

## शाङ्करभाष्यम्

काशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणा-
न्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादि-
कर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते
उच्यते—'तत्तु समन्वयात् । तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः।

## भामती

थम् । कुतः प्रकारादित्यर्थः । सिद्धान्ती स्वपक्षे हेतुं प्रकारभेद-
माह--समन्वयात् । सम्यगन्वयः समन्वयस्तस्मात् । एतदेव
विभजते-सर्वेषु हि वेदान्तेष्विति । वेदान्तानामैकान्तिकीं
ब्रह्मपरतामाचिख्यासुर्बहूनि वाक्यान्युदाहरति--सदेवेति । 'यतो
वा इमानि भूतानि' इति तु वाक्यं पूर्वमुदाहृतं जगदुत्पत्तिस्थितिनाशका-
रणमिति चेह स्मारितमिति न पठितम् । येन हि वाक्यमुपक्रम्यते येन

## प्रकाशः

गन्वयः सम्यक्त्वं तात्पर्यम् । तथाच तात्पर्यविषयीभूताविरुद्धार्थप्रतिपादकत्व-
मेव वाक्यानां समन्वयः, अत्र ब्रह्म शास्त्रप्रमाणकम् एकार्थतात्पर्यकवाक्यघटक-
पदकदम्बप्रतिपाद्यत्वादितिप्रयोगः सूत्रकृतोऽभिमतः तदेतदाह भाष्यकारः-
सर्वेषु हीति । अथवा तत् जीवाभिन्नं ब्रह्म मोक्षजनकज्ञानविषयः तात्प-
र्यनिर्णायकषड्विधलिङ्गज्ञानजन्यनिर्णयविषयाखण्डसच्चिदानन्दब्रह्मात्मैक्यतात्प-
र्यकवेदान्तबोध्यत्वरूपात् समन्वयादित्यर्थः माध्वचन्द्रिकाखण्डनकृदनुसारी, हेतु-
रयं केवलव्यतिरेकी बोध्यः । ननु शास्त्रयोनित्वसूत्रस्य द्वितीयवर्णकाक्षेपसमाधान-
परमेतदधिकरणं तत्र च यतो वेति वाक्यमुदाहृतं तत्किमिहोपेक्षितमित्याशंक्य
तदपि संगृह्णाति यतोवेत्यादि । स्मारितमिति जगदुत्पत्तिस्थितिविलयकारण-
मितिभाष्यं यतो वेत्यादिवाक्यप्रमेयं संकीर्त्तयत् तत्प्रमाणं बुद्धिस्थं करोतीत्यतोऽत्र
नोदाहृतमिति भावः । पूर्वमीमांसायां भेदलक्षणे चिन्तितम् 'जामि वा एतद्यज्ञस्य
क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽ-
जामित्वाय प्रजापतिरुपांशुयष्टव्योऽजामित्वायाग्नीषोमावुपांशुयष्टव्यावजामि-

## शाङ्करभाष्यम्

तत् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम् ? समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीत्' 'एकमे

## भामती

चोपसंह्रियते तदेव वाक्यार्थ इति शाब्दाः । यथोपांशुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोषसङ्कीर्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरतैकवाक्यताबलादाश्रिता, एवमत्रापि 'सदेव सोम्येदम्'इति ब्रह्मोपक्रमात् 'तत्त्वमसि'इति च जीवस्य ब्रह्मात्मनोपसंहारात् तत्परतैव वाक्यस्य । एवं वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वमवगन्तव्यम् । न च तत्परत्वस्य दृष्टस्य सति सम्भवेऽन्यपरताऽदृष्टा युक्ता कल्पयितुम्, अतिप्रसङ्गात् । न केवलं कर्तृपरता तेषामदृष्टाऽनुपपन्ना चेत्याह--न च तेषामिति ।

## प्रकाशः

त्वाय'इति श्रूयते उक्तश्रुतेरयमर्थः 'जामि, आलस्यम् अस्मिन् यज्ञे भवति यस्मात् 'पुरोडाशौ, आग्नेयाग्नीषोमीयपुरोडाशयागौ, अन्वञ्चौअव्यवहितौ भवतः अत एतदालस्यदोषपरिजिहीर्षया मध्ये उपांशुयागः कर्तव्य इति 'अत्र यजतीतिविध्यर्थकलेट्: प्रयोगोऽवगन्तव्यः, तत्रोपांशुयाजमन्तरा यजतीति किं विष्णुरुपांशु यष्टव्य इत्यादिवाक्यविहितयागसमुदायानुवाद उतापूर्वविधिरिति संशये यथाऽऽग्नेयादियागानां 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते' इति समुदायानुवादौ एवमेतदपि वाक्यं समुदायानुवाद इति पूर्वपक्षे निरन्तरयोराग्नेयाग्नीषोमीययोः पुरोडाशयागयोः क्रियमाणत्वे आलस्यं 'जामिता' स्यादिति दोषं संकीर्त्य तदपनयनार्थमुपांशुयाजमभिधाय तदनुष्ठानेन च. जामितादोषाभावमजामित्वायेत्यनेनोपसंहरति श्रुतिः तस्मात्सार्थवादोपक्रमोपसंहारयोरैक्यादेकमिदं वाक्यमतोऽ पूर्वविधिरेव । अनेकयागविधाने च नैकवाक्यतां प्रतिपद्येतेति अतः 'विष्णुरुपांशु यष्टव्य' इत्या-

## शाङ्करभाष्यम्

वाद्वितीयम्' ( छा० ६-२-१ ) 'आत्मा वा इदमेक
एवाग्र आसीत्' ( ऐत० २।१।१।१। ) 'तदेतद्ब्रह्म
पूर्वमनपरमनन्तरमबाह्यम् अयमात्मा ब्रह्म सर्वानु
( बृह० २।५।१९ ) 'ब्रह्मैवेदममृतं पुरस्तात्' ( मुण्ड

### भामती

सापेक्षत्वेनाप्रामाण्यं पूर्वपक्षबीजं दूषयति—न च परिनिष्ठित
स्तुस्वरूपत्वेऽपीति अयमभिसन्धिः—पुंवाक्यनिदर्शनेन हि
तार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते। तत्रैवं भवान् पृष्टो
चष्टाम्, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन।
भूतार्थत्वेन ततः प्रत्यक्षादीनामपि परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः,
न्यपि हि भूतार्थान्येव, 'अथ पुरुषबुद्धिप्रभवतया पुंवाक्यं सापेक्षम्

### प्रकाशः

दीनि वाक्यान्यर्थवादाः न तु तैः पृथक् पृथक् कर्माणि विधीयन्ते इत्थं महा
नयमुपांशुयाजः यस्मादत्र विष्णवादयोऽपि यष्टव्या भवन्तीति, पूर्वमीमां
सिद्धान्तं दृष्टान्तीकरोति—यथोपांशुयाजेति । अनूचोः निरन्तर
तत्प्रतिसमाधानोपसंहारे 'विष्णुरुपांशु यष्टव्य' इत्यादिवाक्ये। अपूर्वो
शुयाजकर्मविधिपरताम् अपूर्वं यदुपांशुयाजकर्म तद्विधिपरताम्। एकवा
तावलात् प्रदर्शितसार्थवादोपक्रमोपसंहारैकरूप्यतावललब्धैकवाक्यताब
दार्ष्टान्तिकेऽप्युपक्रमादिना तात्पर्यं निर्णाययति—एवमिति।

सामवेदे सार्वात्म्यविषयावुपक्रमोपसंहारौ दर्शयित्वा ऋग्वेदादि
तथैवास्तीति दर्शयति—एवं वाक्यान्तराणामिति। ऐतरेयके 'आत्मा वा
मेक एव' इत्युपक्रम्य 'स एतमेव पुरुषं ब्रह्म ततमपश्यत्' इति तमेव ब्रह्मात्मा
भिधायान्ते 'प्रज्ञानं ब्रह्म' इत्युपसंजहार। एवं वाजसनेयकेऽपि यजुर्वे
बृहदारण्यके 'अहं ब्रह्मास्मि' इत्युपक्रम्य 'अयमात्मा ब्रह्म' इत्युपसमहा
अथर्ववेदिनां मुण्डकेऽपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भ
इति सर्वात्मकं ब्रह्मोपक्रम्य 'ब्रह्मैवेदममृतं पुरस्तात्' इति तदेव निरपेक्षी

## शाङ्करभाष्यम्

२।२।११ ) इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता; श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्त्तृस्वरूपप्रतिपादनपरताऽवसीयते 'तत्केन कं पश्येत्' ( बृह०-

## भामती

तर्हि तदपूर्वकाणां वेदान्तानां भूतार्थानामपि नाप्रामाण्यं प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मनाम् । यद्युच्येत सिद्धे किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिध्येत्, तदेव तु भूतार्थत्वेन न सिध्यति, भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्

## प्रकाशः

तस्मात् चत्वारोऽपि वेदाः जीवब्रह्मैक्ये प्रमाणमित्युपदर्शयितुं भाष्यकृत् क्रमेण सामवेदीय छान्दोग्योपनिषदः ऋग्वेदीयैतरीयकोपनिषदः यजुर्वेदिनां बृहदारण्यकोपनिषदः आथर्वणिकानां मुण्डकोपनिषदश्च वाक्यान्युदाजहार ।

यदि वेदान्ताः सिद्धं वस्तु अभिदध्युस्तदा सिद्धस्य वस्तुनः प्रमाणान्तरवेद्यतया तदभिधाने प्रमाणान्तरसापेक्षाः वेदान्ताः स्वतः प्रामाण्यमपजह्युरिति पूर्वपक्षस्य बीजं प्रमाणान्तरसापेक्षत्वं दूषयति भाष्यकृदित्याह—सापेक्षत्वेनेति ।

वेदान्ता मानान्तरसापेक्षाः 'सिद्धवस्तुज्ञानजनकत्वरूप'भूतार्थप्रतिपादकत्वात् पुंवाक्यवत्'इति परोद्भाविते ऽनुमाने सोपाधिकत्वं भाष्यगतेनापिशब्देन द्योत्यते इत्याह—अयमभिसन्धिरिति । तत्र प्रमाणान्तरसापेक्षत्वे भूतार्थत्वं प्रयोजकं पौरुषेयत्वं वा ? तत्राद्यं प्रत्यक्षादौ व्यभिचारेण दूषयित्वा द्वितीयपक्षं कक्षीकरोति—अथेति । तथा च पौरुषेयत्वमेव सापेक्षत्वप्रयोजकं तदेव च प्रकृतानुमाने उपाधिः साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च । तदपूर्वकाणाम्—पुरुषबुद्धिप्रभवभिन्नानाम् ।

ननु वेदान्तवाक्यं यदि सिद्धवस्तुप्रतिपादनपरं तदा यद्यद्वाक्यं भूतार्थकं तत्पौरुषेयमितिव्याप्त्या वेदान्तेषु हेतुसद्भावे पौरुषेयत्वमपि स्थास्यत्येवेति तस्य साधनव्यापकत्वमेवेति नोपाधिरित्याशङ्कते—यद्युच्येतेति । भूतार्थकत्वे पौरुषेयत्वमुपपादयति—भूतार्थस्येति । वेदाः पौरुषेया वाक्यत्वात् भारतादिवदित्य-

## शाङ्करभाष्यम्

२।४।१३ ) इत्यादिक्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः 'तत्त्वमसि' ( छान्दो० ६।८।७ ) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहित

## भामती

बुद्धिपूर्वं विरचनोपपत्तेः, वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानुमानस्याप्रत्यूहमुत्पत्तेः । तस्मात्पौरुषेयत्वेन सापेक्षत्वं दुर्वारम्, न तु भूतार्थत्वेन। कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरागोचरतयाऽत्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे । अत्र ब्रूमः । किं पुनरिदं

## प्रकाशः

नुमाने बुद्धिपूर्वकरचितत्वमेवोपाधिरुद्भाव्यते सिद्धान्तिभिः तत्र वेदान्तानां भूतार्थकत्वे प्रदर्शितरीत्या बुद्धिपूर्वकरचितत्वस्यैव सत्त्वेनोपाधेः साधनव्यापकत्वमेव स्यादित्याह—वाक्यत्वादिलिङ्गकस्येति । न तु भूतार्थत्वेनेति। यदि हि भूतार्थत्वेन सापेक्षत्वमापाद्येत तदा तु प्रदर्शितो व्यभिचारो न शक्येत निवर्तयितुम्, न तु तथाऽस्माभिरापाद्यते किन्तु पौरुषेयत्वेनैवेत्यर्थः । कार्यपरत्वे वेदान्तानां न कश्चिद्वाक्यत्वेन सापेक्षत्वमनुमापयितुमर्हति तत्पक्षे पक्षे पौरुषेयत्वस्योपाधेः साधनाव्यापकस्य जागरूकत्वादित्याह—कार्यार्थत्वे त्विति। एतदुपपादयति—कार्यस्यापूर्वस्येति । तत्त्वेन वास्तविकत्वेन । आतिष्ठामहे स्वीकुरुमहे तदर्थानाम् कार्यार्थकानाम् । कार्यस्यापि मानान्तरायोग्यत्वमसिद्धमेवेति कार्यपरत्वेऽपि वेदान्तानां नापौरुषेयत्वं सम्भवतीति भूतार्थकत्वपक्षवदेतत्पक्षेऽपि तस्य साधनव्यापकत्वं समानम्, ततश्च वाक्यत्वादिलिङ्गकं पौरुषेयत्वानुमानमपि समानमेव प्रसरतीत्यपौरुषेयत्वसाधकं नियामकान्तरमेवास्थेयमित्याशयेनाह—अत्र ब्रूम इत्यादिना । किं पुनरिति । कृतियोग्यस्य कार्यत्वे तेन रूपेण गमनादिक्रियाया इवोपासनादिक्रियाया मानान्तरयोग्यत्वमपि समान

## भामती

कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम् । अपूर्वमिति चेत् ? हन्त ! कुतस्त्यमस्य लिङाद्यर्थत्वम् तेनालौकिकेन सङ्गतिसंवेदनविरहात् लोकानुसारतः क्रियाया एव लौकिक्याः कार्याया लिङादेरवगमात् । 'स्वर्गकामो यजेत' इति साध्यस्वर्गविशिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत् स्वर्गानुकूलं, न च क्रिया क्षणभङ्गुराऽऽमुष्मिकाय स्वर्गाय कल्पत इति पारिशेष्याद्वेदत एवापूर्वे कार्ये लिङादीनां सम्बन्धग्रह इति चेत् । हन्त ! चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसम्बन्धादपूर्वकार्यत्वप्रसङ्गस्तथा च तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः, स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे

## प्रकाशः

मित्यर्थः । तर्हि अलौकिकमेव कार्यमित्याशङ्कते—अपूर्वमिति । तर्हि मानान्तरानवगते तस्मिन्नपूर्वे सङ्गतिग्रहाभावाल्लिङादीनामबोधकत्वापात इत्याह—हन्तेति । ननु यजेतेत्यादिश्रुत्या कार्यता प्रतीयतेऽतोऽपूर्वसिद्धिरिति तत्राह—लोकानुसारत इति । लोके पचेदित्यादौ पाकः कार्य इत्यवगमात्पाकादिरेव कार्यो लिङादिनाऽवगम्यते न त्वपूर्वम्, तथा च कथं तत्र सङ्गतिग्रहः स्यादितिभावः ।

ननु स्वर्गकामपदसमभिव्याहारसंज्ञकतर्कानुगृहीतवेदादेव क्रियातो विलक्षणेऽपूर्वे कार्ये लिङादीनां सम्बन्ध इत्याशङ्कते—स्वर्गकाम इति । साध्यस्वर्गविशिष्ट इति । साध्यो यः स्वर्गस्तद्विशिष्टस्तदिच्छावानित्यर्थः । नियोज्य इति । तत्तत्क्रियासु प्रवर्त्यस्तत्तत्क्रियाजन्यफलेच्छावान् पुरुषो नियोज्य इत्युच्यते । उक्तोऽयं समभिव्याहारात्मकस्तर्कोऽतिप्रसञ्जकतयाऽसत्तर्क एवापरथा 'स्वर्गकामश्चैत्यं वन्द्यात्' इतिवाक्यादप्यपूर्वं सिध्येत तस्यापि चैत्यवन्दनादिरूपकार्यस्य स्वर्गसाधनस्य मानान्तरागोचरतयाऽत्यन्ताननुभूतपूर्वस्य पुरुषबुद्ध्यनारोहात्तत्प्रतिपादकस्य स्वर्गकामश्चैत्यं वन्द्यादिति वाक्यस्याप्यशक्यरचनात्वेनापौरुषेयत्वापात इत्याह—हन्तेत्यादिना । कर्तृस्मरणात्स्पष्टदृष्टेन पौरुषेयत्वेन चैत्यवन्दनादिवाक्यानामकार्यार्थत्वे वेदानामपि वाक्यत्वादिलिङ्गेन पौरुषेयत्वस्यानुमितत्वादकार्यार्थत्वं समानमित्याह—स्पष्टदृष्टेनेति । यथा वेदान्तानां

### शाङ्करभाष्यम्

त्वाद् उपदेशानर्थक्यमिति । नैष दोषः । हेयोपादेयशून्य-ब्रह्मात्मताऽवगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः न तु तथा ब्रह्मणः उपासनाविधिशेषत्वं

### भामती

वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात् । अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतम-पूर्वार्थत्वेनात्र तदुपपादकेन । उपपादितं चापौरुषेयत्वमस्माभिर्न्यायक-णिकायाम् इह तु विस्तरभयान्नोक्तम् । तेनापौरुषेयत्वे सिद्धे भूतार्थाना-मपि वेदान्तानां न सापेक्षतया प्रामाण्यविघातः । न चानधिगतगन्तृता नास्ति येन प्रामाण्यं न स्याज्जीवस्य ब्रह्मताया अन्यतोऽनधिगमात्, तदिदमुक्तं—न च परिनिष्ठितवस्तुस्वरूपत्वेऽपीति । द्वितीयं पूर्वपक्ष-

### प्रकाशः

कार्यार्थकत्वपक्षे तेषां वाक्यत्वादिहेतुकं पौरुषेयत्वानुमानं स्मर्यमाणक-र्तृकत्वेनोपाधिना निराक्रियते तथा तेषां सिद्धार्थत्वपक्षे तेनैवोपाधिना तदनुमानं निराकर्तुं शक्यमित्यप्रयोजिका कार्यार्थत्वकल्पनेत्याह—अन्य-तस्त्विति । वर्त्तमानसम्प्रयोगजप्रत्यक्षस्य कार्यरूपधर्मगोचरत्वानुपपत्तेर्योगसा-मर्थ्यस्यापीन्द्रियविषयेष्वेवातिशयकारित्वान्न धर्मस्य प्रत्यक्षता लिङ्गाद्यभावाच्च नानुमेयत्वादिकम् नचाज्ञाते पुंसां वचनरचना संभविनीति वैदिकी रचना न पौरुषेयीति न्यायकणिकायां मण्डनमिश्रकृतविधिविवेकस्य टीकायां व्युत्पादि-तमनुस्मरति—उपपादितमिति । इत्थञ्च वाक्यत्वादिलिङ्गं न पौरुषेयत्वसा-धनक्षममतो नेदं भूतार्थानामपि वेदान्तानां पौरुषेयत्वमापादयितुं प्रभवतीति सिद्धार्थकत्वे सापेक्षतया यः प्रामाण्यविघातः प्रसक्तः स न कथञ्चित्संभवतीत्या-ह—तेनेत्यादि । नन्वस्त्वपौरुषेयतयाऽनपेक्षितत्वमेवमपि 'अग्निर्हिमस्य भेषज-म्' इत्यादिवन्मानान्तरगृहीतग्राहित्वेनानधिगतविषयकत्वाभावादप्रामाण्यं वेदा-न्तानामित्याशङ्कां निराकुरुते - नचानधिगतेति । एतस्मिन् सर्वस्मिन्नुपपादितेऽर्थे

शाङ्करभाष्यम्

सम्भवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । नह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः सम्भवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न

भामती

बीजं स्मारयित्वा दूषयति—यत्तु हेयोपादेयरहितत्वादिति । विध्यर्थावगमात्खलु पारम्पर्येण पुरुषार्थप्रतिलम्भः इह तु तत्त्वमसीत्यवगतिपर्यन्ताद्वाक्यार्थज्ञानाद् बाह्यानुष्ठानायासानपेक्षात्साक्षादेव पुरुषार्थप्रतिलम्भो नायं सर्पो रज्जुरियमिति ज्ञानादिवेति । सोऽयमस्य विध्यर्थज्ञानात् प्रकर्षः । एतदुक्तं भवति । द्विविधं हीप्सितं पुरुषस्य, किंचिदप्राप्तं ग्रामादि, किंचित् पुनः प्राप्तमपि भ्रमवशादप्राप्तमित्यवगतं, यथा स्वग्रीवावनद्धं ग्रैवेयकम् । एवं जिहासितमपि द्विविधं किंचिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किंचित्पुनर्हीनमेव जिहासति, यथा चरणाभरणे नूपुरे फणिनमारोपितम् । तत्राप्राप्तप्राप्तौ चात्यक्तत्यागे च बाह्योपायानुष्ठानसाध्यत्वात् तदुपायतत्त्वज्ञानादस्ति पराची-

प्रकाशः

भाष्यं संवादयति—सदिदमिति । द्वितीयम् सिद्धार्थत्वे सत्यपुरुषार्थनिष्ठत्वं स्यादित्यादिः । भाष्ये-हेयोपादेयशून्येति भावप्रधाननिर्देशात् हेयत्वोपादेयत्वशून्येत्यर्थः एवमग्रेऽपि । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवाक्याज्ज्योतिष्टोमादियागस्वरूपमवगम्य बह्वायासेन तत्साधनं च सम्पाद्यानेकेनानेहसा यागं सम्पाद्य बहुतरसम्वत्सरादनन्तरदेहपाते स्वर्गादिरूपं सुखं सम्पाद्यते इति पारम्पर्येण पुरुषार्थलाभ इत्याह—विध्यर्थावगमादिति । सर्वक्लेशप्रहाणादिति भाष्यस्थप्रशब्दार्थमाह—सोऽयमिति । ब्रह्मज्ञानस्य फलं बाह्यानुष्ठाननिरपेक्षमज्ञाननिवृत्त्या निरतिशयानन्दस्वस्वरूपमन्वयव्यतिरेकिदृष्टान्तद्वयप्रदर्शनपुरस्सरं प्रदर्शयति-- एतदुक्तं भवतीति । ग्रैवेयकम् ग्रीवालङ्कारः । पराचीनम्

## भामती

नानुष्ठानापेक्षा । न जातु ज्ञानमात्रं त्रस्त्वपनयति । नहि सहस्रमपि रज्जुप्रत्यया वस्तुसन्तं फणिनमन्यथयितुमीशते । समारोपिते तु प्रेप्सितजिहासिते तत्त्वसाक्षात्कारमात्रेण बाह्यानुष्ठाननिरपेक्षेण शक्येते प्राप्तमिव हातुमिव । समारोपमात्रजीविते हि तं, समारोपितं च तत्त्वसाक्षात्कारः समूलघातमुपहन्तीति । तथेहाविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः शोकदुःखादिरहिते समारोपितनिबन्धनस्तद्भावः तत्त्वमसि, इतिवाक्यार्थतत्त्वज्ञानादवगतिपर्यन्तान्निवर्तते । तन्निवृत्तौ प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति, त्यक्तमपि शोकदुःखादिरत्यक्तमिव त्यक्तं भवति, तदिदमुक्तं ब्रह्मात्मावगमादेव जीवस्य सर्वक्लेशस्य सवासनस्य विपर्यासस्य, स हि क्लिश्नाति जन्तूनतः क्लेशः, तस्य प्रकर्षेण हानात् पुरुषार्थस्य दुःखनिवृत्तिसुखाप्तिलक्षणस्य सिद्धेरिति । यत्तु–आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीतेत्युपासनावाक्यगतदेवतादिप्रतिपादनेनोपासनापरत्वं वेदान्तानामुक्तं,

### प्रकाशः

पश्चाद्भावि । समूलघातमिति कषादिषु यथाविध्यनुप्रयोगः पूर्वस्मिन्नित्यनेनानुप्रयोगः, सह मूलेनोपहन्तीत्यर्थः । समारोपितनिबन्धनः समारोपिताऽविद्यानिबन्धनं निमित्तं यस्य स तथा । तद्भावः जीवभावः, निवर्त्तत इत्यग्रेऽन्वयः । जीवस्य सर्वक्लेशस्येति व्यधिकरणे षष्ठ्यौ, जीवनिष्ठो योऽखिलः क्लेशस्तस्येत्यर्थः । आत्मानमेव लोकम् चैतन्यम् । अत्र श्रुतिवाक्यद्वये आत्मपदं सगुणब्रह्मपरम् । देवतेत्यादि सगुणं ब्रह्म, आदिपदादादित्यादिपरिग्रहः । प्रदर्शितोपासनावाक्यैकदेशस्य देवताप्रतिपादकस्य आत्मेत्येतावद्भागस्य तु स्ववाक्यं यद् आत्मेत्येवोपासीतेत्यादिकं तद्गता तत्प्रतिपाद्या या उपासना तत्प्रयोजनकत्वेऽपीत्यर्थः । यदवादीत्पूर्ववादी न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्तेति तत्र किं वेदान्ता यदि विधिमन्तरेण प्रमाणं तर्ह्यर्थवादाः किं न स्युरिति प्रतिबन्दी अभिमता अथवा वेदवाक्यं सिद्धपरं नान्यत्र क्वचिदपि दृष्टमतः सिद्धपरत्वाभावव्याप्यं वेदवाक्यत्वमतश्च न वेदान्ताः सिद्धं वस्त्वभिदधीरन्निति ।

## भामती

तद्दूषयति—देवतादिप्रतिपादनस्य तु आत्मेत्येतावन्मात्रस्य स्ववाक्यगतोपासनार्थत्वेपि न कश्चिद्विरोधः। यदि न विरोधः सन्तु तर्हि वेदान्ता देवताप्रतिपादनद्वारेणोपासनाविधिपरा एवेत्यत आह न तु तथा ब्रह्मण इति। उपास्योपासकोपासनादिभेदसिद्ध्यधीनोपासना न निरस्तसमस्तभेदप्रपञ्चे वेदान्तवेद्ये ब्रह्मणि संभवतीति नोपासनाविधिशेषत्वं वेदान्तानां तद्विरोधित्वादित्यर्थः। स्यादेतत्, यदि विधिविरहेऽपि वेदान्तानां प्रामाण्यं, हन्त तर्हि 'सोऽरोदीदि'त्यादीनामप्यस्तु स्वतन्त्राणामेवोपेक्षणीयार्थानां प्रामाण्यम्, नहि हानोपादानबुद्धी एव प्रमाणस्य फले, उपेक्षाबुद्धेरपि तत्फलत्वेन प्रामाणिकैरभ्युपेतत्वादिति कृतं 'बर्हिषि रजतं न देयमि'त्यादिनिषेधविधिपरत्वेनैतेषामित्यत आह यद्यपीति। स्वाध्यायविध्यधीनग्रहणतया हि सर्वो वेदराशिः पुरुषार्थतन्त्र इत्यवगतम्, तत्रैकेनापि वर्णेन

### प्रकाशः

तत्राद्यमाशङ्कते—स्यादेतदिति एतत् अनुपदं वक्ष्यमाणं दूषणम्, एवं सति स्यादिति तदर्थः। बर्हिषि रजतं न देयमिति निषेधविधिना बर्हिःसाध्ययागे रजतदानं निषिध्यते तत्प्रकरणे सोऽरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादिकाऽस्ति आख्यायिका निन्दार्थवादरूपा द्विविधो हि अर्थवादः—प्रशंसारूपो निन्दारूपश्च यथाहि स्वर्गकामो यजेतेत्यादिः यागादिप्रवर्त्तकविधिः पुरुषप्रवृत्त्यर्थं यागादीनां प्रशंसामपेक्षते। एवमेव निषेधविधिरपि निषेध्यस्य निन्दामपेक्षते यतस्तत्र नरकभयान्निवर्त्तेत पुमानिति। इत्थञ्च 'सोऽरोदीदि'त्यादिवाक्यै रजतदानं निन्दनीयत्वेन प्रतिपाद्यतेऽतो निषेधविधिना भवत्येकवाक्यत्वमन्यथाऽऽख्यायिकामात्राभिधाने प्रवृत्तिनिवृत्त्यन्यतरासम्पादकत्वादानर्थक्यं स्यादिति वस्तुस्थितिः। तत्रानुपपत्तिः प्रदर्श्यते—यदिविधिविरहेऽपीति स्वतन्त्राणाम् विधिवाक्यैः सम्बन्धरहितानाम्। उपेक्षणीयार्थानाम् उपेक्षाबुद्धिविषयीकृतार्थानाम्। तत्फलत्वेन प्रमाणफलत्वेन। अभ्युपेतत्वादिति। अन्यथा गगनमस्तीत्यादिवाक्यं न गगनादिप्रमां प्रसवीत। एतेषाम् सोऽरोदीदित्यादिवाक्यानाम्। उपेक्षाफलत्वं निराकरोति—स्वाध्ययेति 'स्वाध्यायोऽध्येतव्य' इति विधिः स्वाध्यायपदवाच्यवेदराशेरध्ययनकर्मतां विदधानोऽखिलस्यैव वेदस्य प्रयोजनवदर्थं पर्यवसाय-

## भामती

नापुरुषार्थेन भवितुं युक्तं, किं पुनरियता 'सोऽरोदी'दित्यादिना पदप्रबन्धेन। न च वेदान्तेभ्य इव तदर्थावगममात्रादेव कश्चित् पुरुषार्थ उपलभ्यते, तेनैष पदसन्दर्भः साकाङ्क्ष एवास्ते पुरुषार्थमुदीक्षमाणः। 'बर्हिषि रजतं न देयमि'त्ययमपि निषेधविधिः स्वनिषेध्यस्य निन्दामपेक्षते। नह्यन्यथा ततश्चेतनः शक्यो निवर्तयितुम्। तद्यदि दूरतोऽपि न निन्दामवाप्स्यत्ततो निषेधविधिरेव रजतनिषेधे च निन्दायां च दर्विहोमवत् सामर्थ्यद्वयमकल्पयिष्यत्। तदेवमुक्तयोः 'सोऽरोदीदि'ति च 'बर्हिषि रजतं न देयमि''ति च पदसन्दर्भयोर्लक्ष्यमाणनिन्दाद्वारेण नष्टाश्वदग्धरथवत् परस्परं समन्वयः। न त्वेवं वेदान्तेषु पुरुषार्थापेक्षा, तदर्थ-

### प्रकाशः

यति निरर्थकस्याध्ययनानुपपत्तेरिति भावः। वेदान्तवाक्यानां प्रयोजनवदर्थपर्यवसायिबोधजनकत्वं सोऽरोदीत्यादीनाञ्च तदभाव इति विशेषं दर्शयन् प्रतिबन्दीं परिहरति—नच वेदान्तेभ्य इति। ननु बर्हिषि रजतं न देयमित्यादिनिषेधविधिरेव स्वनिषेध्यस्य रजतदानस्यानर्थहेतुत्वान्यथानुपपत्त्या निन्दां कल्पयिष्यति किं सोऽरोदीदित्यादिवाक्यान्वयसमन्वयेनेत्याशङ्कां निराकरोति—तद्यदीति। अयमाशयः—स्थितस्य गतिश्चिन्तनीया तद्यदि अर्थवादवाक्यं नोपालप्स्यत्तदा निषेधविधिरेव निषेधे निन्दायां च तात्पर्यमकल्पयिष्यत् यच्चोपलभ्यतेऽर्थवादस्तत्र विद्यमानादेव तस्मान्निन्दालाभे निषेधविधेर्नोभयत्र तात्पर्यं कल्प्यमिति। दर्विहोमवदिति। विचारितमेतन्मीमांसाऽष्टमाध्याये चतुर्थपादे शास्त्रदीपिकादौ तथाहि—यदेकया जुहुयाद्दर्विहोमं कुर्यादिति विधिः श्रूयते। तत्र दर्व्या होमो दर्विहोम इति तृतीयासमासात् दर्विरूपो गुणो होमे विधीयते इति पूर्वपक्षः, सिद्धान्तस्तु--अग्निहोत्रादिशब्दवत्कर्मनामधेयमिति। एवमपि अम्बष्ठानां दार्विहोमिको ब्राह्मण इति स्मृतौ अम्बष्ठस्वामिके स्मार्ते होमे प्रयोगाल्लौकिकस्यैव होमस्य तन्नामेति प्राप्ते दर्व्या होमो दर्विहोम इति प्रवृत्तिनिमित्तस्य लौकिकालौकिककर्मणोः समानत्वादुभयस्यैव होमस्यैतन्नामेति सिद्धम्। पदसन्दर्भयोः निरूप्यनिरूपकभावापन्नविषयताशालिशाब्दप्रतीतिजनकयोः उक्तयोः साकांक्षयोः।

यद्यपि सोऽरोदीदितिवाक्यं वस्तुस्थित्यभिधायकं भूतानुवादत्वान्नाभिधया वृत्त्याऽनिष्टानुबन्धित्वरूपां निन्दां प्रतिपादयितुंप्रभवति तथापि मुख्यार्थं

## शाङ्करभाष्यम्

तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम । न चानुमानगम्यं शास्त्रप्रामाण्यं, येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।

## भामती

ग्रमादेवानपेक्षात् परमपुरुषार्थलाभादित्युक्तम् । ननु विध्यसंस्पर्शिनो वेदस्यान्यस्य न प्रामाण्यं दृष्टमिति कथं वेदान्तानां तदस्पृशां तद्भविष्यतीत्यत आह—न चानुमानगम्य'मिति । अबाधितानधिगतासंदिग्धबोधजनकत्वं हि प्रमाणत्वं प्रमाणानां, तच्च स्वत इत्युपपादितम् । यद्यपि चैषामीदृग्बोधजनकत्वं कार्यार्थापत्तिसमधिगम्यं, तथापि तद्बोधोपजनने मानान्तरं नापेक्षन्ते, नापीमामेवार्थापत्तिं, परस्पराश्रयप्रसङ्गा-

## प्रकाशः

प्रयोजनाभावाल्लक्षणयोक्तरूपां निन्दामप्यभिदधातीत्याशयेनाह—लक्ष्यमाणेति । नष्टाश्वदग्धरथवदिति । यथा रथवत एकस्याश्वो नष्टोऽपरस्य चाश्ववतो रथो नष्टस्तत्र परस्परमपेक्षमाणयोस्तयोः समन्वयः सम्मेलनं तद्वदित्यर्थः । यदि वेदान्तवाक्यमपि स्वार्थाभिधाने प्रयोजनं नालप्स्यत्तदा सोऽरोदीदित्यादिवत्पुरुषार्थमुदीक्षमाणं विधिवाक्येन सहासंभत्स्यत् न त्वेवमस्तीत्याह-न त्वेव-मिति । प्रतिबन्दीं परिहृत्य द्वितीयं पक्षमुपक्षेप्तुमाशङ्कते-ननु विध्यसंस्पर्शिन इति । वेदस्यान्यस्येति वेदान्तातिरिक्तवेदस्येत्यर्थः । तदस्पृशाम् विध्यसंसर्गिणाम् । उपपादितमिति न्यायकणिकायामिति शेषः । ननु वेदान्तवाक्यं प्रमाणम् अनर्थनिवर्त्तकज्ञानजनकवाक्यत्वात् वास्तविकसर्पभेदबोधकवाक्यवदित्याद्यनुमानसंभवात्, नचानुमानगम्यमिति भाष्यमसङ्गतमत आह-यद्यपीति । एषाम् प्रमाणानाम् ईदृग्बोधजनकत्वम् अबाधितानधिगतासन्दिग्धबोधजनकत्वम् । कार्यार्थापत्तिगम्यम् कार्यार्थापत्तिः अनुमानापरपर्याया तद्गम्यम्, उक्तबोधरूपा प्रमा प्रमाणान्तरनिरपेक्षात् शाब्दोत्पादकाकांक्षादिसम्वलिताद्वाक्यादेव जायते उत्पन्नायां च तस्यां तज्जनकत्वज्ञाने प्रवृत्तं तां नाम प्रमाणमिति भावः । नापेक्षन्ते इति शब्दा इति शेषः । परस्पराश्रयेति । तदा हि प्रमा स्याद् यदा

## शाङ्करभाष्यम्

अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्र-

## भामती

दिति स्वत इत्युक्तम्। ईदृग्बोधजनकत्वं च कार्य इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति, अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टमिति चक्षुरपि न रूपं प्रकाशयेदिति। प्रकृतमुपसंहरति तस्मादिति। आचार्यदेशीयानां मतमुत्थापयति अत्रापरे प्रत्यवतिष्ठन्त इति। तथाहि—

## प्रकाशः

वेदान्तेषु प्रमाजनकत्वानुमानं स्यात्, यदा च प्रमाजनकत्वानुमानं स्यात्तदा वेदान्तवाक्यात्प्रमा स्यादित्यन्योन्याश्रयः तस्मात्प्रमाजनकत्वरूपप्रमाणत्वज्ञानेऽनुमानोपयोगेऽपि प्रमोत्पत्तौ नोपयोगः प्रमा तु वाक्यादेव जायत इति स्थितम्। वेदान्ताद् यदि कार्यार्थरहितात्प्रमोत्पद्येत तदा स्वतः परतो वेति चिन्ताऽवतरेत् न तु कार्यार्थरहितेन तेन तदुत्पादः शक्यतेऽभिधातुं क्वचिदप्यदृष्टत्वादित्याशङ्कां किं प्रत्यक्षेण बाधादप्रमात्वमापाद्यते उत वेदान्ता न सिद्धार्थप्रमाजनकाः वेदवाक्यत्वादर्थवादवदित्यनुमानेनेति विकल्प्याद्यं निराकरोति—ईदृग्बोधजनकत्वमिति। तथा च सिद्धे ब्रह्मणि वेदान्तेभ्यः प्रमोत्पत्तिरनुभवसिद्धैवेति न प्रत्यक्षबाधः। द्वितीयं निराकरोति—अन्यथेति। एवं सति चक्षुर्न रूपप्रकाशकम् इन्द्रियत्वात् श्रोत्रवदित्यप्यनुमानं प्रमाणं स्यादिति भावः। एतावता सन्दर्भेण सिद्धेऽप्यर्थे प्रमाणान्तरपरतन्त्राणां पौरुषेयवाक्यानामस्तु प्रामाण्यं वेदान्तानां तु क्रियाविषयतामन्तरेण प्रमाणान्तरनैरपेक्ष्यं पुरुषार्थपर्यवसानं च न लभ्येते इति पूर्वपक्षिणो मतं ब्रह्मात्मैक्यस्य प्रमाणान्तरागोचरत्वेन तदवगमादेव च प्रयोजनलाभेन निराचकार. अतः परं कार्यान्वित एवार्थे पदानां संगतिग्रहान्न सिद्धं वस्तु लौकिकस्यालौकिकस्य वा कस्यचिदपि शब्दस्य प्रमेयमतो

## भामती

अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चयः ॥

न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति, तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते तत्र न तेषां संगति-

### प्रकाशः

वेदान्ता उपासननियोगपरा एवेति ये मन्यन्ते एकदेशिनो वृत्तिकारादयस्तन्मतं निराचिकीर्षुस्तन्मतोत्थापकम्य 'अत्रापरे प्रत्यवतिष्ठन्ते' इति पूर्वपक्षभाष्यस्याभिप्रायं वर्णयति—**अज्ञातेति** । एतेन वेदान्तानां सिद्धब्रह्मबोधकत्वाभावस्यैव पूर्वमपि पूर्वपक्षितत्वादत्रापरे प्रत्यवतिष्ठन्ते इति भाष्यं पुनरुक्तमित्याशङ्काऽपाकृता, मतद्वये सिद्धार्थव्युत्पत्त्यङ्गीकारानङ्गीकाररूपस्य विशेषस्य सत्त्वात् ।

अथवा आचार्यदेशीयानां मतमुत्थापयतीत्युक्तत्वात तत्र ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयर्प्रत्ययान्तेन आचार्यशब्देनेषन्न्यूनाचार्यत्वावगमात् ब्रह्मस्वरूपमसंप्रतिपद्यमानान् पूर्वोक्तान् पूर्वपक्षिणोऽपेक्ष्य एतेषां पूर्वपक्षिणां श्रुत्युक्तं ब्रह्मस्वरूपमुरीकुर्वतामारोपितब्रह्मभावस्य जीवस्योपासनापरा वेदान्ता न ब्रह्मात्मैक्यप्रतिपादनपरा इत्यभिदधतां किञ्चिन्महत्त्वमवगम्यतेऽतो न पौनरुक्त्यशङ्काकलङ्कपंकावकाशलेशोऽपि एतत्पक्षे च यद्यपि शास्त्रप्रमाणकं ब्रह्मेति भाष्यवाक्यस्वारस्यमपि लभ्यत इत्यवगन्तव्यम् ।

भाष्ये—**प्रतिपत्तिविधिविषयतयेति** । ननु प्रतिपत्तिविधेर्विषयः प्रतिपत्तिरेवेति कथं ब्रह्मणस्तद्विषयत्वमिति चेन्न, प्रतिपत्तिविधेर्नियोगस्य विषयीभूतप्रतिपत्तिं प्रत्यवच्छेदकत्वेन विषयतयेत्यस्य तदर्थत्वात् । अत्र वृत्तिकारीयमेतत्कार्यान्वयपक्षमेवानुगच्छन्ति प्राभाकरास्तदनुयायिनश्चेति नैतिहासिकदृष्ट्या विरोध इत्यवगन्तव्यम् । **यत्र हीति** । यस्मिन्नर्थे वृद्धप्रयुक्तशब्दविषयत्वं तस्मिन्नर्थे शब्दस्य सङ्गतिर्गृह्यते, सिद्धे तु वृद्धप्रयुक्तशब्दविषयत्वाभावात्सङ्गतिग्रहाभावः सिध्यतीत्यर्थः । तथाचोपपन्नमज्ञातसङ्गतित्वलिङ्गमिति । **लोकेन न प्रयुज्यन्ते इति** । ननु सन्ति खलु भूयांसः शब्दा ये पामरैर्न प्रयुज्यन्ते तत्किं तेषां प्रेक्षावन्तोऽपि न गृह्णन्ति सङ्केतमिति चेत् ? लोकशब्दस्यात्र प्रेक्षावत्पुरुषपरत्वादिति । प्रयोगव्यापकयोर्वक्तृविवक्षाश्रोतृप्रतिपित्सयोर्निवृत्तौ तद्व्याप्यः प्रयोगोऽपि सिद्धे निवर्तेत इत्याह—

## शाङ्करभाष्यम्

**अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् । कुत एतत् ? प्रवृत्तिनिवृत्तिप्र-**

## भामती

दिति स्वत इत्युक्तम् । ईदृग्बोधजनकत्वं च कार्य इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति, अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टमिति चक्षुरपि न रूपं प्रकाशयेदिति । प्रकृतमुपसंहरति **तस्मादिति** । आचार्य्यदेशीयानां मतमुत्थापयति **अत्रापरे प्रत्यवतिष्ठन्त इति** । तथाहि—

## प्रकाशः

वेदान्तेषु प्रमाजनकत्वानुमानं स्यात्, यदा च प्रमाजनकत्वानुमानं स्यात्तदा वेदान्तवाक्यात्प्रमा स्यादित्यन्योन्याश्रयः तस्मात्प्रमाजनकत्वरूपप्रमाणत्वज्ञानेऽनुमानोपयोगेऽपि प्रमोत्पत्तौ नोपयोगः प्रमा तु वाक्यादेव जायत इति सितम् । वेदान्ताद् यदि कार्यार्थरहितात्प्रमोत्पद्येत तदा स्वतः परतो वेति चिन्ताऽवतरेत् न तु कार्यार्थरहितेन तेन तदुत्पादः शक्यतेऽभिधातुं कचिदप्यदृष्टत्वादित्याशङ्कां किं प्रत्यक्षेण बाधादप्रमात्वमापाद्यते उत वेदान्ता न सिद्धार्थप्रमाजनकाः वेदवाक्यत्वादर्थवादवदित्यनुमानेनेति विकल्प्याद्यं निराकरोति—**ईदृग्बोधजनकत्वमिति** । तथा च सिद्धे ब्रह्मणि वेदान्तेभ्यः प्रमोत्पत्तिरनुभवसिद्धैवेति न प्रत्यक्षबाधः । द्वितीयं निराकरोति—**अन्यथेति** । एवं सति चक्षुर्न रूपप्रकाशकम् इन्द्रियत्वात् श्रोत्रवदित्यप्यनुमानं प्रमाणं स्यादिति भावः । एतावता सन्दर्भेण सिद्धेऽप्यर्थे प्रमाणान्तरपरतन्त्राणां पौरुषेयवाक्यानामस्तु प्रामाण्यं वेदान्तानां तु क्रियाविषयतामन्तरेण प्रमाणान्तरनैरपेक्ष्यं पुरुषार्थपर्यवसानं च न लभ्येते इति पूर्वपक्षिणो मतं ब्रह्मात्मैक्यस्य प्रमाणान्तरागोचरत्वेन तदवगमादेव च प्रयोजनलाभेन निराचकार, अतः परं कार्यान्वित एवार्थे पदानां संगतिग्रहान्न सिद्धं वस्तु लौकिकस्यालौकिकस्य वा कस्यचिदपि शब्दस्य प्रमेयमतो

## भामती

अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चयः ॥

न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति, तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते तत्र न तेषां संगति-

## प्रकाशः

वेदान्ता उपासननियोगपरा एवेति ये मन्यन्ते एकदेशिनो वृत्तिकारादयस्तन्मतं निराचिकीर्षुस्तन्मतोत्थापकस्य 'अत्रापरे प्रत्यवतिष्ठन्ते' इति पूर्वपक्षभाष्यस्याभिप्रायं वर्णयति—अज्ञातेति । एतेन वेदान्तानां सिद्धब्रह्मबोधकत्वाभावस्यैव पूर्वमपि पूर्वपक्षितत्वादत्रापरे प्रत्यवतिष्ठन्ते इति भाष्यं पुनरुक्तमित्याशङ्काऽपाकृता, मतद्वये सिद्धार्थव्युत्पत्त्यङ्गीकारानङ्गीकाररूपस्य विशेषस्य सत्त्वात् ।

अथवा आचार्यदेशीयानां मतमुत्थापयतीत्युक्तत्वात तत्र ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयर्प्रत्ययान्तेन आचार्यशब्देनेषन्न्यूनाचार्यत्वावगमात् ब्रह्मस्वरूपमसंप्रतिपद्यमानान् पूर्वोक्तान् पूर्वपक्षिणोऽपेक्ष्य एतेषां पूर्वपक्षिणां श्रुत्युक्तं ब्रह्मस्वरूपमुरीकुर्वतामारोपितब्रह्मभावस्य जीवस्योपासनापरा वेदान्ता न ब्रह्मात्मैक्यप्रतिपादनपरा इत्यभिदधतां किञ्चिन्महत्त्वमवगम्यतेऽतो न पौनरुक्त्यशङ्काकलङ्कपंकावकाशलेशोऽपि एतत्पक्षे च यद्यपि शास्त्रप्रमाणकं ब्रह्मेति भाष्यवाक्यस्वारस्यमपि लभ्यत इत्यवगन्तव्यम् ।

भाष्ये—प्रतिपत्तिविधिविषयतयेति । ननु प्रतिपत्तिविधेर्विषयः प्रतिपत्तिरेवेति कथं ब्रह्मणस्तद्विषयत्वमिति चेन्न, प्रतिपत्तिविधेर्नियोगस्य विषयीभूतप्रतिपत्ति प्रत्यवच्छेदकत्वेन विषयतयेत्यस्य तदर्थत्वात् । अत्र वृत्तिकारीयमेतत्कार्यान्वयपक्षमेवानुगच्छन्ति प्राभाकरास्तदनुयायिनश्चेति नैतिहासिकदृष्ट्या विरोध इत्यवगन्तव्यम् । यत्र हीति । यस्मिन्नर्थे वृद्धप्रयुक्तशब्दविषयत्वं तस्मिन्नर्थे शब्दस्य सङ्गतिर्गृह्यते, सिद्धे तु वृद्धप्रयुक्तशब्दविषयत्वाभावात्सङ्गतिग्रहाभावः सिध्यतीत्यर्थः । तथाचोपपन्नमज्ञातसङ्गतित्वलिङ्गमिति । लोकेन न प्रयुज्यन्ते इति । ननु सन्ति खलु भूयांसः शब्दा ये पामरैर्न प्रयुज्यन्ते तत्किं तेषां प्रेक्षावन्तोऽपि न गृह्णन्ति सङ्केतमिति चेत् ? लोकशब्दस्यात्र प्रेक्षावत्पुरुषपरत्वादिति । प्रयोगव्यापकयोर्वक्तृविवक्षाश्रोतृप्रतिपित्सयोर्निवृत्तौ तद्व्याप्यः प्रयोगोऽपि सिद्धे निवर्तत इत्याह—

## शाङ्करभाष्यम्

अत्रापरे प्रत्यवतिष्ठन्तेयद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्र-

## भामती

दिति स्वत इत्युक्तम्। ईदृग्बोधजनकत्वं च कार्य इव विधीनां वेदान्तानां ब्रह्मण्यस्तीति दृष्टान्तानपेक्षं तेषां ब्रह्मणि प्रामाण्यं सिद्धं भवति, अन्यथा नेन्द्रियान्तराणां रूपप्रकाशनं दृष्टमिति चक्षुरपि न रूपं प्रकाशयेदिति। प्रकृतमुपसंहरति तस्मादिति। आचार्य्यदेशीयानां मतमुत्थापयति अत्रापरे प्रत्यवतिष्ठन्त इति। तथाहि–

## प्रकाशः

वेदान्तेषु प्रमाजनकत्वानुमानं स्यात्, यदा च प्रमाजनकत्वानुमानं स्यात्तदा वेदान्तवाक्यात्प्रमा स्यादित्यन्योन्याश्रयः तस्मात्प्रमाजनकत्वरूपप्रमाणत्वज्ञानेऽनुमानोपयोगेऽपि प्रमोत्पत्तौ नोपयोगः प्रमा तु वाक्यादेव जायत इति स्थितम्। वेदान्ताद् यदि कार्यार्थरहितात्प्रमोत्पद्येत तदा स्वतः परतो वेति चिन्ताऽवतरेत् न तु कार्यार्थरहितेन तेन तदुत्पादः शक्यतेऽभिधातुं कचिदप्यदृष्टत्वादित्याशङ्कां किं प्रत्यक्षेण बाधादप्रमात्वमापाद्यते उत वेदान्ता न सिद्धार्थप्रमाजनकाः वेदवाक्यत्वादर्थवादवदित्यनुमानेनेति विकल्प्याद्यं निराकरोति—ईदृग्बोधजनकत्वमिति। तथा च सिद्धे ब्रह्मणि वेदान्तेभ्यः प्रमोत्पत्तिरनुभवसिद्धैवेति न प्रत्यक्षबाधः। द्वितीयं निराकरोति—अन्यथेति। एवं सति चक्षुर्न रूपप्रकाशकम् इन्द्रियत्वात् श्रोत्रवदित्यप्यनुमानं प्रमाणं स्यादिति भावः। एतावता सन्दर्भेण सिद्धेऽप्यर्थे प्रमाणान्तरपरतन्त्राणां पौरुषेयवाक्यानामस्तु प्रामाण्यं वेदान्तानां तु क्रियाविषयतामन्तरेण प्रमाणान्तरनैरपेक्ष्यं पुरुषार्थपर्यवसानं च न लभ्येते इति पूर्वपक्षिणो मतं ब्रह्मात्मैक्यस्य प्रमाणान्तरागोचरत्वेन तदवगमादेव च प्रयोजनलाभेन निराचकार, अतः परं कार्यान्वित एवार्थे पदानां संगतिग्रहान्न सिद्धं वस्तु लौकिकस्यालौकिकस्य वा कस्यचिदपि शब्दस्य प्रमेयमतो

भामती

अज्ञातसंगतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चयः ॥

न खलु वेदान्ताः सिद्धब्रह्मरूपपरा भवितुमर्हन्ति, तत्राविदितसंगतित्वात् । यत्र हि शब्दा लोकेन न प्रयुज्यन्ते तत्र न तेषां संगति-

प्रकाशः

वेदान्ता उपासननियोगपरा एवेति ये मन्यन्ते एकदेशिनो वृत्तिकारादयस्तन्मतं निराचिकीर्षुस्तन्मतोत्थापकस्य 'अत्रापरे प्रत्यवतिष्ठन्ते' इति पूर्वपक्षभाष्यस्याभिप्रायं वर्णयति—अज्ञातेति । एतेन वेदान्तानां सिद्धब्रह्मबोधकत्वाभावस्यैव पूर्वमपि पूर्वपक्षितत्वादत्रापरे प्रत्यवतिष्ठन्ते इति भाष्यं पुनरुक्तमित्याशङ्काऽपाकृता, मतद्वये सिद्धार्थव्युत्पत्त्यङ्गीकारानङ्गीकाररूपस्य विशेषस्य सत्त्वात् ।

अथवा आचार्यदेशीयानां मतमुत्थापयतीत्युक्तत्वात् तत्र ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयर्प्रत्ययान्तेन आचार्यशब्देनेषन्न्यूनाचार्यत्वावगमात् ब्रह्मस्वरूपमसंप्रतिपद्यमानान् पूर्वोक्तान् पूर्वपक्षिणोऽपेक्ष्य एतेषां पूर्वपक्षिणां श्रुत्युक्तं ब्रह्मस्वरूपमुरीकुर्वतामारोपितब्रह्मभावस्य जीवस्योपासनापरा वेदान्ता न ब्रह्मात्मैक्यप्रतिपादनपरा इत्यभिदधतां किञ्चिन्महत्त्वमवगम्यतेऽतो न पौनरुक्त्यशङ्काकलङ्कपंकावकाशलेशोऽपि एतत्पक्षे च यद्यपि शास्त्रप्रमाणकं ब्रह्मेति भाष्यवाक्यस्वारस्यमपि लभ्यत इत्यवगन्तव्यम् ।

भाष्ये—प्रतिपत्तिविधिविषयतयेति । ननु प्रतिपत्तिविधेर्विषयः प्रतिपत्तिरेवेति कथं ब्रह्मणस्तद्विषयत्वमिति चेन्न, प्रतिपत्तिविधेर्नियोगस्य विषयीभूतप्रतिपत्ति प्रत्यवच्छेदकत्वेन विषयतयेत्यस्य तदर्थत्वात् । अत्र वृत्तिकारीयमेतत्कार्यान्वयपक्षमेवानुगच्छन्ति प्राभाकरास्तदनुयायिनश्चेति नैतिहासिकदृष्ट्या विरोध इत्यवगन्तव्यम् । यत्र हीति । यस्मिन्नर्थे वृद्धप्रयुक्तशब्दविषयत्वं तस्मिन्नर्थे शब्दस्य सङ्गतिर्गृह्यते, सिद्धे तु वृद्धप्रयुक्तशब्दविषयत्वाभावात्सङ्गतिग्रहाभावः सिध्यतीत्यर्थः । तथाचोपपन्नमज्ञातसङ्गतित्वलिङ्गमिति । लोकेन न प्रयुज्यन्ते इति । ननु सन्ति खलु भूयांसः शब्दा ये पामरैर्न प्रयुज्यन्ते तत्किं तेषां प्रेक्षावन्तोऽपि न गृह्णन्ति सङ्केतमिति चेत् ? लोकशब्दस्यात्र प्रेक्षावत्पुरुषपरत्वादिति । प्रयोगव्यापकयोर्वक्तृविवक्षाश्रोतृप्रतिपित्सयोर्निवृत्तौ तद्व्याप्यः प्रयोगोऽपि सिद्धे निवर्तत इत्याह—

## भामती

ग्रहः । न चाहेयमनुपादेयं रूपमात्रं कश्चिद्विवक्षति प्रेक्षावान्, तस्या श्रुत्सितत्वात्, अबुभुत्सितावबोधने च प्रेक्षावत्ताविघातात् । तस्मा प्रतिपित्सितं प्रतिपिपादयिषन्नयं लोकः प्रवृत्तिनिवृत्तिहेतुभूतमेव प्रतिपादयेत्, कार्यं चावगतं तद्धेतुरिति तदेव बोधयेत् । एवं च वृ व्यवहारप्रयोगात् पदानां कार्यपरतामवगच्छति । तत्र किञ्चित्साक्षा र्याभिधायकं किञ्चित्तु कार्यार्थस्वार्थाभिधायकं न तु भूतार्थपरता प नाम् । अपि च नरान्तरस्य व्युत्पन्नस्यार्थप्रत्ययमनुमाय तस्य च श भावाभावानुविधानमवगम्य शब्दस्य तद्विषयबोधकत्वं निश्चेतव्यम् न च भूतार्थरूपमात्रप्रत्यये परनरवर्त्तिनि किंचिल्लिङ्गमस्ति कार्य तु नरान्तरवर्तिनि प्रवृत्तिनिवृत्ती स्तो हेतू इत्यज्ञातसंगतिना ब्रह्मरूपपरा वेदान्ताः । अपि च वेदान्तानां वेदत्वात् शास्त्र सिद्धिरस्ति प्रवृत्तिनिवृत्तिपराणां च संदर्भाणां शास्त्रत्वम् । यथाहु

### प्रकाशः

न चाहेयमित्यादि । रूपमात्रम्—वस्तुस्वरूपमात्रम् घटादिकम् । सर्वपद कार्याभिधायकत्वे पर्यायत्वापत्तिमाशङ्क्य लिङादीनां साक्षात् अन्येषां तु का न्वितस्वार्थबोधकत्वमितिरीत्या सर्वपदानां कार्यबोधकत्वं नियम्यतेऽतो पर्यायत्वमिति परिहरति—तत्र किञ्चिदिति । कार्यार्थस्वार्थम् कार्यार्थः न्वितः स्वार्थो यस्य तत् तथा घटमानयेत्यादौ घटादिपदम् । अत्र तेषां प्रयो 'गोपदं न कार्यानन्विते गोत्वे गृहीतसम्बन्धम्, तत्र वृद्धैरप्रयुक्तत्वात् तुर वदिति । सिद्धे वस्तुनि सर्वत्रोत्तमवृद्धस्य शब्दप्रयोगाभावो दर्शितः सम्प्रति ऽपि मध्यमवृद्धप्रवृत्तिः शब्दसङ्केतग्रहे लिङ्गभूता सापि सिद्धे नास्तीति न व्युत्पत्तिरित्याह—अपिचेति यः कश्चिच्छिष्यादिकं प्रति घटमानयेत्या माज्ञापयति स उत्तमवृद्ध इत्युच्यते आज्ञाप्यः शिष्यादिर्यो घटाद्यानय स मध्यमवृद्धः, यश्चोभयदर्शी तयोर्व्यवहारेण पदसङ्केतं गृह्णाति स व्युत्पत्सु इत्युच्यत इत्यवगन्तव्यम् ।

शास्त्रत्वेनेत्यादिहेतून् विवृणोति—अपिच वेदान्तानामिति ।

## भामती

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । अनित्येन
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इति । तस्माच्छास्त्रत्वप्रसिध्या व्याहतमेषां स्वरूपपरत्वम् । अपि च न ब्रह्मरूपप्रतिपादनपराणामेषामर्थवत्त्वं पश्यामः । न च रज्जुरियं न भुजङ्ग इति यथाकथंचिल्लक्षणया वाक्यार्थतत्त्वनिश्चये यथा भयकम्पादिनिवृत्तिः, एवं 'तत्त्वमसी'तिवाक्यार्थावगमान्निवृत्तिर्भवति सांसारिकाणां धर्माणाम्, श्रुतवाक्यार्थस्यापि पुंसस्तेषां तादवस्थ्यात् । अपि च यदि श्रुतब्रह्मणो भवति सांसारिकधर्मनिवृत्तिः कस्मात्पुनः श्रवणस्योपरि मननादयः श्रूयन्ते । तस्मात्तेषां वैयर्थ्यप्रसङ्गादपि न ब्रह्मस्वरूपपरा वेदान्ताः, किन्त्वात्मप्रतिपत्तिविषयकार्यपराः । तच्च कार्यं स्वात्मनि नियोज्यं नियुञ्जानं नियोग इति च मानान्तरापूर्वतयाऽपूर्वमिति चाख्यायते । न च विषयानुष्ठानं विना तत्सिद्धिरिति स्वसिद्ध्यर्थं तदेव

## प्रकाशः

रज्जुरिति । अत्र नच निवृत्तिर्भवति सांसारिकाणां धर्माणामित्यग्रेऽन्वयः । यथाकथञ्चिदिति । सिद्धपदार्थसंसर्गो न नियोगं विना भासतेऽतो 'रज्जुरियं न भुजङ्ग' इत्यत्र मा भैषीरित्यादिनियोगं कल्पयित्वैव सिद्धार्थप्रत्यय उपपादनीय इत्यर्थः । ननु रज्जुरियमित्यारभ्य भयकम्पादिनिवृत्तिः इत्यन्तो ग्रन्थः सिद्धान्तिमतानुवादः तन्मध्ये सिद्धान्त्यनभिमता यथाकथञ्चिल्लक्षणयेत्युक्तिरसमञ्जसेति चेन्न भावानवबोधात् अयं हि न सिद्धान्तिनोमतानुवादोऽपि तु सिद्धान्तिमतं तिरस्कर्तुः यदि सिद्धान्ती एवं वदेत्तदेत्यभिप्रायवतः स्वमताभिनिवेशवतः पूर्वपक्षिण एवेदं वाक्यमिति न कश्चिद्दोषः । तेषाम्—सांसारिकधर्माणाम । किन्त्वित्यादि । आत्मप्रतिपत्तिर्विषयोऽवच्छेदको यस्य कार्यस्य तत्तथाकृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वमित्यर्थः । ननु प्राभाकराः नियोगोऽपूर्वमिति वाक्यार्थं वर्णयन्ति स नियोगः किं कार्यादन्य एवेत्याशङ्कां निराकुरुते तच्च कार्यमिति ।

## विकासः

तच्च कार्यमिति—

## विकासः

एषा हि प्राभाकराणां प्रक्रिया —'स्वर्गकामो यजेत' इत्यादौ लिङो नेष्टसाधनत्वमर्थः 'प्रत्यहं शुचिः सन्ध्यामुपासीत' इति विधेरप्रामाण्यप्रसङ्गात्, नित्यस्य कर्मणः फलजनकत्वेन सन्ध्योपासनमिष्टसाधनमिति बोधस्य भ्रमत्वात् न चास्तु कार्यत्वमेव लिङर्थस्तथाचोक्तवाक्यात् स्वर्गकामनियोज्यताको नियोज्यताकत्वसम्बन्धेन स्वर्गकामनिरूपितो वा यागः कार्यतावानिति बोध इति वाच्यम्, यतः स्वर्गकामनियोज्यताकत्वं न स्वर्गकामकृतिसाध्यत्वम्, तथासति स्वर्गकामकृतिसाध्यताविशिष्टे यागे कार्यत्वान्वयबोधे उक्तवाक्यस्य निराकाङ्क्षत्वप्रसङ्गात् कार्यत्वस्यापि कृतिसाध्यतात्मकत्वात् विधेयांशेऽधिकावगाहिनः शाब्दबोधस्य स्वीकृतत्वेऽपि उद्देश्यांशेऽधिकावगाहिनः शाब्दबोधस्यानभ्युपगतत्वात् । नच तदीयकृतिसाध्यत्वधीविशेष्यत्वमेव तन्नियोज्यताकत्वमिति वाच्यम्, स्वर्गकामः पचेदित्यादेः प्रामाण्यप्रसङ्गात् । स्वर्गकामनिष्ठं यत्पाको मत्कृतिसाध्य इति ज्ञानं तद्विशेष्यत्वस्य पाके सत्वात् किन्तु स्वर्गकामनिष्ठस्वर्गसाधनताज्ञानजन्यकार्यत्वज्ञानविशेष्यत्वमेव स्वर्गकामनियोज्यताकत्वम् । इत्थञ्च स्वर्गकामनिष्ठं यत्स्वर्गसाधनताज्ञानं तद्यागविशेष्यकं प्रथमं न सम्भवति यागस्य हीच्छाविशेषरूपत्वेनाशुविनाशिनः स्वर्गसन्तस्थायित्वाभावान्न साक्षात्स्वर्ग साधनत्वं किन्तु स्वजन्यादृष्टद्वारैव । तथा चादृष्टस्योपस्थापकपदाभावे उपस्थित्यसम्भवात् स्वजन्यादृष्टवत्वसम्बन्धावच्छिन्ना या स्वर्गसाधनता तत्प्रकारकयागविशेष्यकज्ञानस्योक्तवाक्यादनुत्पत्तेः । अन्विताभिधानवादिनां तेषां मते सम्बन्धस्यापि पदोपस्थितस्यैव भानात्, अतः कार्यं एव लिङादिविध्यर्थः । कार्यञ्चापूर्वमदृष्टापरपर्यायम् । तत्र कार्यत्वं तु कृतिसाध्यत्वमेव तेनैव रूपेण च लिङादिनाऽपूर्वप्रतीतेः । तथा च लिङादिपदेन कार्यस्योपस्थित्या स्वर्गकामनिष्ठेन कार्यं स्वर्गसाधनमिति प्रकारकज्ञानेन जायमानं यत् कार्यं कृतिसाध्यमित्याकारकं कार्यत्वेनापूर्वावगाहिज्ञानं तद्विशेष्यत्वस्यापूर्वे सत्त्वात्तत्रोक्तनियोज्यताकत्वान्वयस्तदेकदेशे कृतावेव च धात्वर्थयागादेर्विषयत्वसम्बन्धेनान्वयः तथा च यागविषयकं कार्यं स्वर्गकामनिष्ठस्वर्गसाधनताज्ञानजन्यकृतिसाध्यताज्ञानविशेष्यम् एतत्स्वरूपपर्यवसायी यागस्य कार्यं स्वर्गकामनियोज्यताकम् इत्याकारकः प्रथममन्वयबोधः । अथवा नियोज्यताकत्वानवगाही यागस्य कार्यं स्वर्गकामकृतिसाध्यम् इत्याकारकः प्रथममन्वयबोधः तदनन्तरं यागजन्यापूर्वस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामनियोज्यताकत्वं वा यागस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गकामनियोज्यताकत्वं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानसहकृतात् 'स्वर्गकामो यजेत' इति वाक्यादे। स्वर्गकामनियोज्यताको याग इत्याकारकः, यागः स्वर्गकामस्य कृतिसाध्य इत्याकारको वा यागादिगोचरप्रवृत्त्युपयोगी जायमानो बोध औपादानिको बोध इति व्यपदिश्यते।

'तृप्तिकामो भुञ्जीत' इत्यादौ लौकिकलिङादिस्थले तु कार्यत्वमेव लिङर्थस्तस्य भोजनेऽन्वयात् तृप्तिकामस्य कार्यं भोजनमित्यन्वयबोधः । अत्रापि कार्यत्वं कृतिसाध्यत्वमेव । सर्वत्र च कार्यत्वाश्रयमुख्यविशेष्यक एव चैतन्मतेऽन्वयबोधः, सिद्धार्थकस्थले तैः शाब्दबोधस्यानङ्गीकृतत्वादिति । प्रदर्शितं चैतदस्माभिर्व्युत्पत्तिवादप्रकाशेऽपि ।

## भामती

कार्यं स्वविषयस्य करणास्यात्मज्ञानस्यानुष्ठानमाक्षिपति । यथा च कार्यं स्वविषयाधीननिरूपणमिति ज्ञानेन विषयेण निरूप्यते, एवं ज्ञानमपि स्वविषयमात्मानमन्तरेणाशक्यनिरूपणमिति तन्निरूपणाय तादृशमात्मानमाक्षिपति तदेव कार्यम् । यथाहुः—'यत्तु तत्सिद्ध्यर्थमुपादीयते आक्षिप्यते तदपि विधेयमिति तन्त्रे व्यवहार' इति । विधेयता च नियोगविषयस्य ज्ञानस्य भावार्थतयाऽनुष्ठेयता तद्विषयस्य स्वात्मनः

## प्रकाशः

ननु वेदान्ताः कार्यपरा इति वादिनां भवतां मते भूतस्य ब्रह्मणः कथं सिद्धिरित्याशङ्क्य विध्याक्षेपापरनामकोपादानप्रमाणादित्याह—नचेति न हीत्यर्थः । स्वविषयस्येति लिङा कार्यत्वेनापूर्वं प्रतिपाद्यते कार्यत्वञ्च कृतिसाध्यत्वम् नचापूर्वस्य साक्षात्कृतिसाध्यत्वं सम्भवति अतो यद्द्वाराऽपूर्वस्य कृतिसाध्यत्वं सम्पादनीयं स धात्वर्थो यागहोमादरनुबन्धोऽवच्छेदको विषय इति प्राभाकराः संगिरन्ते । करणस्येति । कार्यघटिकायाः कृतेर्यागादिर्भवति विषयोऽतः कार्यस्यापि कृतिघटितस्वरूपस्य यागादिर्विषय उच्यते कार्यस्य चापूर्वरूपस्यादृष्टशब्दाभिधेयस्य यागादिजन्यत्वात् यागादिः करणमित्युच्यते एवञ्चात्मज्ञानं कार्यस्य विषयः करणं च भवति । तदुक्तम् ।

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्ये सङ्घटिताकारे करणत्वेन सम्मतः ॥ इति ।

यथा च कार्यमिति 'आत्मा ज्ञातव्यः' 'आत्मेत्येवोपासीत' इत्यत्र लिङाद्यर्थरूपं कार्यम् । ननु कार्यं यदि स्वावच्छेदकज्ञाननिरूपणाय आत्मानमाक्षिपेत् न तदा श्रौतत्वमात्मनः आक्षेपलभ्यो हि प्रमाणान्तरप्रमेयो न श्रुतिलभ्यः इत्याशङ्क्यान्यस्याक्षेपलभ्यस्याश्रौतत्वेऽपि विध्याक्षिप्तस्य श्रौतत्वमेव प्राभाकरसम्मतमिति समाधत्ते—यथाहुरिति । यत्तु तत्सिद्ध्यर्थमिति विधेयसिद्ध्यर्थं यदुपादीयत इत्यन्वयः उपादीयते इत्यस्य व्याख्यानम् आक्षिप्यत इति । ननु प्रत्यक्षादेरिवात्मप्रमाया अपि न विधेयत्वं कृत्यविषयत्वात्, न वात्मनस्तस्य नित्यत्वादित्याशङ्क्याह विधेयता चेति । ज्ञानस्येति—ज्ञानमिहोपासनम्, तच्च क्रियेत्यतो नियोगविषयत्वमनुष्ठेयत्वं च नानुपपन्नम् । ननु कार्यं स्वावच्छेदकज्ञाननिरूपणाय ज्ञेयमात्मानं त्रिकालाबाध्यमाक्षिपतीत्यनुपपन्नम्, ज्ञेयस्य

## भामती

स्वरूपसत्ताविनिश्चितिः, आरोपिततद्भावस्य त्वन्यस्य निरूपकत्वे तेन तन्निरूपितं न स्यात् । तस्मात्ताद्दगात्मप्रतिपत्तिविधिपरेभ्यो वेदान्तेभ्य-ताद्दगात्मविनिश्चयः तदेतत्सर्वमाह यद्यपीति । विधिपरेभ्योऽपि वस्तु-स्तत्त्वविनिश्चिय इत्यत्र निदर्शनमुक्तं–यथा यूपेति । 'यूपे पशुं बध्नाती' ति बन्धनाय विनियुक्ते यूपे तस्यालौकिकत्वात् कोऽसौ यूप इत्यपेक्षिते 'खादिरो यूपो भवति यूपं तक्षति यूपमष्टाश्रीकरोती'त्यादिभिर्वाक्यैस्त-क्ष्णादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारु यूप इति गम्यते। एवमाहवनीयादयोऽप्यवगन्तव्याः । प्रवृत्तिनिवृत्तिपरस्य शास्त्रत्वं न स्वरूपपरस्य, कार्यएव सम्बन्धो न स्वरूप, इति हेतुद्वयं भाष्यवा-

## प्रकाशः

स्वरूपराहित्येऽपि 'वाचं धेनुमुपासीत' इत्यादावारोप्यस्य विधेयधीविषयत्वमिव प्रकृतेऽप्यारोप्यस्य विषयत्वसम्भवादत आह—आरोपिततद्भावस्येति । अत्र तत्पदग्राह्यम् अहं ब्रह्मास्मीति ज्ञाने भासमानं यद् वेदान्तप्रसिद्धं सत्यज्ञाना-नन्दस्वरूपं ब्रह्म तदात्मको भाव आरोपितो यस्य जीवस्य स तथा, तस्यान्यस्य स्वरूपकोटिबहिर्भूतस्य सत्यज्ञानानन्दस्य ज्ञाननिरूपकत्वे तेन प्रतिभासमानार्थेन (आरोपितेन) तज्ज्ञानं निरूपितं न स्यात्, आरोपितः सत्यज्ञानानन्दादिरर्थो न ज्ञाननिरूपकः किन्तु वास्तविक एवेति भावः । नन्वारोपिताया अपि वाग्धे-नोर्विषयतया ज्ञाननिरूपकत्वमस्त्येवेति चेन् ! प्रत्यक्षबाधितविषयस्थलेऽगत्या तथास्वीकारेऽपि यथैकस्यैव व्यापकस्य नभसस्तत्तत्कर्णशष्कुल्यवच्छेदेन प्रतिपुरुषं व्यवस्थितः श्रोत्रभावः तथैकस्यैव व्यापकस्य ब्रह्मणस्तत्तदविद्योपाध्यव-च्छेदेन व्यवस्थितः प्रत्यगात्मभावः इति गतौ विद्यमानायां न वाग्धेन्वादिव-दारोपो युक्त इति भावः । अलौकिकत्वादिति लोके प्रसिद्ध्यभावात् अथवा संस्कृतकाष्ठविशेषस्य यूपत्वात् संस्कारघटितस्वरूपतयाऽलौकिकत्वं बोध्यम् । संस्काराविष्टम् संस्कारसहितम् । एवमाहवनीयादय इति 'यदाहवनीये जुहोति' इति विधिः श्रूयते, तत्र क आहवनीय इति जिज्ञासायाम् 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधिविहिताधानादिसंस्कारविशिष्टोऽग्निराहव-नीय इति गम्यते एवं 'स्वर्गकामो यजेत' इति विधिः श्रूयते तत्र कोऽसौ स्वर्ग इत्याकाङ्क्षायाम्—

### शाङ्करभाष्यम्

योजनत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति । 'चोदनेति क्रियायाः प्रवर्तकं वचनम्' । तस्य ज्ञानमुपदेशः'—( जै० सू० १।१।५ ) 'तद्भूतानां क्रियार्थेन समाम्नायः'—( जै० सू० १।१।२५ ) 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'—( जै० सू० १।२।१ ) इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्, तच्छेषतया चान्यदुपयुक्तम्, तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् । सति च विधिपरत्वे यथा

### भामती

क्येनोपपादितम्—प्रवृत्तिनिवृत्तिप्रयोजनत्वादित्यादिना तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यादित्यन्तेन । न च स्वतन्त्रं कार्यं नियोज्यमधिकारिणमनुष्ठातारमन्तरेणेति नियोज्यभेदमाह सति च विधिपरत्व इति । 'ब्रह्म वेद ब्रह्मैव भवती'ति सिद्धवदर्थ-

### प्रकाशः

"यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ॥"

इत्यर्थवादेन रोगादिजन्यदुःखानवच्छेदकशरीरावच्छिन्नसुखविशेषःस्वर्गः शास्त्रेणावगम्यत इति । भाष्ये—विधिशेषतयेति विध्यङ्गतयेत्यर्थः । भाष्ये—कुत एतदिति प्रवृत्तिनिवृत्तिविधिविषयतया ब्रह्मणः समर्पणं कुत इत्यर्थः । अज्ञातसंगतित्वेनेति श्लोकोक्तमज्ञातसंगतित्वं शास्त्रत्वं चेति हेतुद्वयं भाष्येण सङ्गमयति प्रवृत्तिनिवृत्तिपरस्येति ।

भाष्ये—दृष्टो हि तस्यार्थः कर्मावबोधनमिति तस्य वेदस्य, कर्माव-

## भामती

वादावगतस्यापि ब्रह्मभवनस्य नियोज्यविशेषाकाङ्क्षायां ब्रह्मबुभूषोर्नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भः ।

## प्रकाशः

बोधम्-नियोगज्ञानम्, दृष्टं प्रयोजनमित्यर्थः । **चोदनेति** क्रियायाः प्रवर्तकं वचनमिति चोदनाशब्देन क्रियाया नियोगस्यानुष्ठापकं वचनमाहुरित्यर्थः । तस्य ज्ञानमुपदेश इति तस्य धर्मस्य ज्ञानम्-प्रमाणम्, ज्ञायतेऽनेनेति व्युत्पत्तेः उपदेशः विधिवाक्यम् । **तद्भूतानामिति** । तत् तेषु पदार्थेषु भूतानां सिद्धानाम् क्रिया-कार्यम् तदर्थत्वेन-तदङ्गत्वेन समाम्नायः-समुच्चारणमित्यर्थः । अत्र **तद्भूतानामिति** सूत्रोदाहरणेन कार्यान्विते ऽर्थे शब्दसङ्केतो न तु सिद्धेऽर्थे इत्यभिहितम । तथा चाज्ञातसङ्गतित्वेनेति हेतुः संगृहीतः । **आम्नायस्य क्रियार्थत्वादिति** अनेन जैमिनीयसूत्रेण सिद्धार्थपरस्य न शास्त्रत्वमित्युक्तम्, इतरसूत्रैस्तु प्रवृत्त्यादिपरस्य शास्त्रत्वमुक्तमिति भेदः । **नियोज्यम्**—नियोगस्य स्वकीयत्वेन जानानम्, **अधिकारिणम्**—कर्मणः स्वामिनम् अनुष्ठातारम् कर्मणः कर्त्तारमितियावत् । तथा च नैतेषां समानार्थकतेति न नियोज्यविशेषणत्वानुपपत्तिः । **नियोज्यभेदम्** नियोज्यविशेषम् । ननु ब्रह्म वेद ब्रह्मैव भवतीत्यादौ भवतिना सिद्धरूपेण ब्रह्मभावोऽवगम्यतेऽतो न कार्यविधिपरत्वं वेदान्तानामित्याशङ्कायां तस्यापि कार्यविधिपरत्वं स्थापयति पूर्वपक्षी—**ब्रह्मवेदेत्यादि** अयम्भावः 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्यस्त्यर्थवादः, तत्र रात्रिशब्देनायुर्ज्योतिरित्यादिवाक्यविहिताः सोमयागविशेषा उच्यन्ते । तत्र किं सोमफलभूतस्वर्ग एव फलमुत 'प्रतितिष्ठन्ति' इत्यर्थवादवाक्यप्रतिपाद्यं प्रतिष्ठेति संशयः । तत्र प्रतितिष्ठन्तीत्युक्तार्थवादवाक्योपस्थापितप्रतिष्ठाफलमपहायानुपस्थितस्वर्गफलमनुचितमित्यार्थवादिकमेव रात्रिसत्राणां प्रतिष्ठाफलं प्रतिष्ठाकामश्च नियोज्य इति प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विधिश्च कल्प्यते इति व्यवस्थापितम्, तद्वदत्र ब्रह्म विद्ब्रह्मैव भवतीत्यर्थवादवाक्यात्प्रतीयमानं ब्रह्मभवनं फलमपि विधिं कल्पयति अत्र च ब्रह्मबुभूषुर्नियोज्यः एवञ्च शब्दविपरिणामेन ब्रह्मविद्ब्रह्मैव भवतीति वाक्यं ब्रह्मबुभूषुर्ब्रह्म विद्यादिति विधिं पर्यवसाययतीति भावः । **प्रतिलम्भः**—प्राप्तिः ।

## शाङ्करभाष्यम्

स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयते एवममृतत्व-कामस्य ब्रह्मज्ञानं विधीयत इति युक्तम् । नन्विह जिज्ञा-

## भामती

पिण्डपितृयज्ञन्यायेन तु स्वर्गकामस्य नियोज्यस्य कल्पनायामर्थवा-दस्यासमवेतार्थतयाऽत्यन्तपरोक्षा वृत्तिः स्यादिति । ब्रह्मभावश्चामृत-

## प्रकाशः

नन्वस्तु पिण्डपितृयज्ञन्यायेन ब्रह्मज्ञानस्य 'स्वर्गकाम एव नियोज्यः, स्वर्ग एव च फलमत आह—**पिण्डपितृयज्ञन्यायेनेति** । अयञ्च न्यायः पूर्वमीमांसायाम् (४ अ० ४ पा० १९ सू० ) इत्थं व्युत्पादितः—अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यस्ति अनारभ्याधीतं वाक्यम्, 'अप्रकरणपठितं वाक्यमनारभ्याधीतमुच्यते, तत्र पिण्डपितृयज्ञः क्रत्वर्थः'क्रत्वङ्गम्, क्रतुफलेनैव फलवान्, उत पुरुषार्थः, 'साक्षादेव किञ्चित्फलजनकम्, इति विचिकित्सायाम्—अमावास्याशब्दो, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ दर्शशब्दप्रतिपाद्ये यागविशेषे श्रुतौ प्रसिद्धोऽतः क्रत्वर्थ एव युक्त इति पूर्वपक्षे, अत्रामावास्याशब्दः कालार्थक एव तत्रैव ह्ययं रूढः कर्मणि तु लाक्षणिकः अपराह्ण इति कालविशेषार्थकशब्दसमभिव्याहारोऽपीममेवार्थमुपोद्बलयति । इत्थञ्चामावास्यातिथावयं विधीयमानो यागविशेषः स्वतन्त्र एव न तु अमावास्याशब्दलक्ष्ययागस्याङ्गमतः पुरुषार्थ एवेति सिद्धान्त इति । इत्थञ्च यथा तत्र स्वर्गकामो नियोज्यस्तथाऽत्रापि स्वर्गकामो नियोज्य इति यदि कल्प्येत तदा ब्रह्मविद्ब्रह्मैव भवतीत्यादेरर्थवादात्प्रतीयमानं ब्रह्मभवनं न सम्बद्धुमर्हतीत्यतोऽयमर्थवादः श्रुतमर्थं परित्यज्यात्यन्तासम्बद्धमर्थमभिदध्यात् नचैतद्युक्तमतो नात्र तथा, पिण्डपितृयज्ञादौ तु आर्थवादिकमपि फलं नास्तीत्यतः स्वर्गः फलं स्वर्गकामश्च भवति नियोज्य इति भावः । **असमवेतार्थतया** असम्बद्धार्थतया । **अत्यन्तपरोक्षा** लक्षणा **वृत्तिः** यद्यपिब्रह्मभवनस्य फलत्वेऽपि ब्रह्मभवनकाम इति लक्षणाऽऽश्रीयत एवेति परोक्षवृत्तिता पक्षद्वयेऽपि तुल्या, तथापि सिद्धान्ते श्रुतं ब्रह्मभवनं न परित्यज्यतेऽतोऽजहत्स्वार्थलक्षणा, पूर्वपक्षे तु तदपि परित्यज्य जहत्स्वार्थलक्षणैवाश्रीयतेऽत उक्तमत्यन्तेति जहत्स्वार्थापेक्षयाऽजहत्स्वार्थाया लक्षणाया अभ्यर्हितत्वादिति भावः ।

## शाङ्करभाष्यम्

स्यवैलक्षण्यमुक्तम्—कर्मकाण्डे भव्यो धर्मो जिज्ञास्य इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति। तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम् कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपा-

## भामती

त्वमिति अमृतत्वकामस्येत्युक्तम् अमृतत्वं चामृतत्वादेव न कृतकत्वेन शक्यमनित्यमनुमातुम् आगमविरोधादिति भावः । उक्तेन धर्मब्रह्मज्ञानयोर्वैलक्षण्येन विध्यविषयत्वं चोदयति नन्विति । परिहरति नार्हत्येवमिति । अत्र चात्मदर्शनं न विधेयम् । तद्धि दृशेरुपलब्धिवचनत्वात् श्रावणं वा स्यात् प्रत्यक्षं वा । प्रत्यक्षमपि लौकिकमहंप्रत्ययो वा, भावनाप्रकर्षपर्यन्तजं वा । तत्र श्रावणं न विधेयं, स्वाध्यायविधि-

## प्रकाशः

ननु ज्ञानविधेर्ब्रह्मभावफलत्वेऽमृतत्वकामस्येति भाष्यमसङ्गतं स्यात् उभयोः समानार्थकत्वमाह—ब्रह्मभावश्चेति । अमृतत्वशब्देन ब्रह्मभावनिर्देशनप्रयोजनमाह—अमृतत्वञ्चेति अमृतत्वशब्देनाभिधानं च । अस्य ब्रह्मभावस्य, अमृतत्वादेव अविनाशित्वादेव अविनाशित्वं ख्यापयितुमिति भावः। ननु कथं ब्रह्मभावस्य नित्यत्वमुपासनाकार्यत्वेन हेतुना अनित्यत्वानुमानादित्यत आह - न कृतकत्वेनेति । कृतकत्वम् कार्यत्वम् । विध्यविषयत्वम्, ब्रह्मण इति शेषः । चोदयति पृच्छति सिद्धान्ती, परिहरति पूर्वपक्षी । अत्र भाष्यकृता ब्रह्मज्ञानं विधीयत इत्युक्तत्वात् 'द्रष्टव्य' इति विध्युदाहृतेश्च प्रमाणज्ञानविधिः पूर्वपक्षिसम्मत इति भ्रमः स्यात्तं व्युदस्यति—अत्र चेति आत्मा वा अरे द्रष्टव्य इत्यत्र च । न विधेयमिति । आत्मदर्शनस्य विधेयत्वे दोषमाह—तद्धीति । दृशेरिति 'द्रष्टव्य' इति वाक्यघटकदृशधातोर्ज्ञानवाचकत्वादित्यर्थः । स्वाध्यायविधिनैवेति स्वाध्यायविधिरेव हि अर्थावबोधपर्यवसायी वेदान्त-

शाङ्करभाष्यम्

द्यमानत्वात् । 'आत्मा वा अरे द्रष्टव्यः' ( बृ० २।४।५ )'य आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) 'आत्मेत्येवोपासीत' ( बृ० १।४।७ ) 'आत्मानमेव लोकमुपासीत' ( बृ० १।४।१५ ) 'ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३।२।६ ) इत्यादिविधानेषु सत्सु 'कोऽसावात्मा किं तद् ब्रह्म' इत्याकाङ्क्षायां तत्स्वरूप-समर्पणेन सर्वे वेदान्ता उपयुक्ताः—'नित्यः सर्वगतः, ( भ०-गी० २।२४ ) नित्यशुद्धबुद्धमुक्तस्वभावः । ( नृ० गी ६ ) विज्ञानमानन्दं ब्रह्म' ( बृ० ३।६।२८ ) इत्येवमादयः । तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति ।

भामती

नैवास्य प्रापितत्वात् कर्मश्रावणवत् । नापि लौकिकं प्रत्यक्षं, तस्य नैसर्गिकत्वात् । न चौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयं, तस्योपासनाविधानादेव वाजिनवदनुनिष्पादितत्वात् । तस्मादौपनिष-दात्मोपासनाऽमृतत्वकामं नियोज्यं प्रति विधीयते 'द्रष्टव्य' इत्याद-यस्तु विधिसरूपा न विधय इति । तदिदमुक्तं तदुपासनाच्चेति । अर्थवत्तया मननादिप्रतीत्या चेत्यस्य शेषः प्रपञ्चो निगदव्याख्यातः ॥

प्रकाशः

श्रवणजन्यं ज्ञानमपि विधत्ते इति भावः । भावनाधेयवैशद्यम् भावनया आधेयं, जन्यं, वैशद्यं यस्य प्रत्यक्षस्य तत्तथा । वाजिनवदिति यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति आमिक्षार्थ-विहितात्दुग्धनिष्ठदधिप्रक्षेपाद्वाजिनमानुषङ्गिकं निष्पद्यते एवममृतत्वार्थविहिता-दुपासनात्साक्षात्कारो नान्तरीयकतया जायेतएवातो न तदुत्पादनं विधातुमुचि-तमित्यर्थः । यस्मात् 'आत्मा वा अरे द्रष्टव्य' इत्यस्य न विधित्वं सम्भवति तस्मात् । आत्मोपासनेति विधीयते इत्यनेनान्वयः । न विधय इति किन्तु

## शाङ्करभाष्यम्

कर्तव्यविध्यननुप्रवेशे तु वस्तुमात्रकथने हानोपादानासम्भवात्, 'सप्तद्वीपा वसुमती' राजाऽसौ गच्छति' इत्यादिवाक्यवद् वेदान्तवाक्यानामानर्थक्यमेव स्यात्। ननु वस्तुमात्रकथनेऽपि 'रज्जुरियं नायं सर्पः' इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टम्, तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवं यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, न तु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० २।४।५) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति । अत्राभिधीयते न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यम्,

## भामती

तदेकदेशिमतं दूषयति—अत्राभिधीयते न एकदेशिमतम्, कुतः? कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। पुण्यापुण्यकर्मफले सुखदुःखे। तत्र मनुष्यलोकमारभ्याब्रह्मलोकात्सुखस्य तारतम्यम् आपेक्षिकाधिकोत्कर्षः। एवं मनुष्यलोकमारभ्य दुःखतारतम्यमावावीचिलोकात्। तच्च सर्वं कार्यं च विनाशि च। आत्यन्तिकं त्वशरीरत्वमनतिशयं

भामती

स्वभावसिद्धतया नित्यमकार्यमात्मज्ञानस्य फलम्। तद्धि फलमिव फलम्, अविद्यापनयमात्रेणाविर्भावात्। एतदुक्तं भवति। त्वयाप्युपासनाविधिपरत्वं वेदान्तानामभ्युपगच्छता नित्यशुद्धबुद्धत्वादिरूपब्रह्मात्मता जीवस्य स्वाभाविकी वेदान्तगम्याऽऽस्थीयते। सा चोपासनाविषयस्य विधेर्न फलं नित्यत्वादकार्यत्वात्, नाप्यनाद्यविद्यापिधानापनयः, तस्य स्वविरोधिविद्योदयादेव भावात्। नापि विद्योदयः, तस्यापि श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात्। उपासनासंस्कारवदुपासनाऽपूर्वमपि चेतःसहकारीति चेद्, दृष्टं च खलु नैयोगिकं फलमैहिकमपि, यथा चित्राकारीर्यादिनियोगानामनियतनियतफलानाम्, न गान्धर्वशास्त्रोपासनावासनाया इवापूर्वानपेक्षायाः षड्जादिसाक्षात्कारे वेदान्तार्थोपासनावासनाया जीवब्रह्मभावसाक्षात्कारेऽनपेक्षाया एव सामर्थ्यात्। तथा चामृतीभावं प्रत्यहेतुत्वादुपासनापूर्वस्य नामृतत्वकामस्तत्कार्यमवबोद्धुमर्हति, अन्यदिच्छत्यन्यत् करोतीति हि विप्रतिषिद्धम्। न च तत्कामः क्रियामेव कार्यमवगमिष्यति नापूर्वमिति साम्प्रतम्, तस्या मानान्तरादेव तत्साधनत्वप्रतीतेर्विधेर्वैयर्थ्यात्। न चावघातादिविधितुल्यता, तत्रापि नियमापूर्वस्यान्यतोऽनवगतेः। न च ब्रह्मभूयादन्यदमृतत्वमार्थवादिकं किंचिदस्ति, येन तत्काम उपासनायामधिक्रियेत, विश्वजिन्न्यायेन तु स्वर्गकल्पनायां तस्य सातिशयत्वं क्षयित्वं चेति न नित्यफलत्वमुपासनायाः। तस्माद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावाद् अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव सम्भवाद्, उपासनायाः संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनः साचिव्यस्य च मानान्तरसिद्धत्वाद्, 'आत्मेत्येवोपासीते'ति न विधिः, अपि तु विधिसरूपोऽयम्, यथोपांशुयाजवाक्ये 'विष्णुरुपांशुयष्टव्य' इत्यादयो विधिसरूपा न विधय इति तात्पर्यार्थः।

## प्रकाशः

आत्मेत्येवमुपासीतेत्यादय एव विधयः अत्र ब्रह्मज्ञानस्याविधेयत्वे पूर्वपक्षिणोऽपि सिद्धान्तिना साम्यम्, केवलं जीवब्रह्मणोर्वास्तविकोऽभेदो मोक्षश्च ब्रह्मस्वरूपात्सिद्ध एवेति पूर्वपक्षी नानुमनुते इति बोध्यम् । भाष्ये—ब्रह्मवेद ब्रह्मैव भवतीति । अस्य ब्रह्मबुभूषुर्ब्रह्म विद्यादिति विधिपर्यवसायित्वं प्रदर्शितमेतस्माभिः । न एक देशिमतम् युक्तमिति शेषः । भाष्ये—प्रतिपत्तिविधीति आत्मा ज्ञातव्य इत्यादि विधीत्यर्थः । यदि वेदान्ता उपासनाविधिपराः स्युस्तर्हि विहितोपासनायास्तिथिपक्षमासादिकालपरिमिततया तत्साध्यं फलमपि सातिशयमनित्यं च स्यादतो न विधिपरत्वं वेदान्तानामित्यभिप्रायम् 'अतो न कर्त्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः इत्यन्तस्य भाष्यस्य प्रकटयति—पुण्यापुण्येत्यादिना ।

## विकासः

भाष्ये—शारीरं वाचिकमित्यादि । अत्र प्रसङ्गात् कर्मस्वरूपं विचार्यते। सामान्यतः कर्म द्विविधम् पुण्यमपुण्यं च एतद् द्वयमेव चादृष्टमुच्यते । पुण्यमेव च धर्मः, तच्च सुखसाधनम्, अपुण्यमेव चाधर्मः पापम् तच्च दुःखसाधनम् । धर्माधर्मसाधनेऽपि कर्मशब्दः प्रयुज्यते विहितकर्मजन्यो धर्मो निषिद्धकर्मजन्योऽधर्म इति वदद्भिः । मीमांसायां हि धर्माधर्मशब्दौ यागहिंसादौ प्रयुज्येते तज्जन्यमदृष्टंत्वपूर्वशब्देनाभिधीयते । योगदर्शने च धर्माधर्मौ कर्माशयशब्देनोच्यमानौ नियतविपाकावनियतविपाकौ भवन्तौ जात्यायुर्भोगभेदेन त्रिधा विभज्येते । तत्रानेकं कर्म सम्भूय ( मिलित्वा ) एकस्य जन्मनो यत् कारणं भवति तदैकभविकं कर्मेत्युच्यते, जन्मप्रयाणयोरन्तराले हि कृतः कर्मप्रचयः विविधसुखदुःखोपहारेण विचित्रः प्रधानोपसर्जनभावेनावस्थितः ( यदविलम्बेन फलमुत्पादयति तत्प्रधानं यच्च विलम्बेन तदुपसर्जनम् ) अग्रिमजन्मादिरूपे कार्ये जनयितव्ये एकलोलीभावमापन्नः एकं मनुष्यादिजन्म करोति तेन च कर्मणा लब्धायुष्कं तज्जन्म भवति तदेव च कर्म प्रारब्धमित्युच्यते तस्मिन् मनुष्यादिजन्मनि तस्य सर्वस्यैव कर्मणो भवति भोगः, अत एवास्य प्रारब्धकर्मणो भोगादेव क्षयो भवतीति प्रसिद्धिः । अतश्चायं कर्माशयो जात्यायुर्भोगभेदेन त्रिधा विपरिपच्यमानस्त्रिपाक इत्यभिधीयते पातञ्जलैः ।

एवं कर्माशयो द्विविधो दृष्टजन्मवेदनीयोऽदृष्टजन्मवेदनीयश्च तीव्रसंवेगेन मन्त्रतपः समाधिभिः सम्पाद्यमानः ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा सम्पाद्यमानः सद्यः परिपच्यते पुण्यकर्माशयः । यथा नन्दीश्वरस्याष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगजन्मा पुण्यविशेषो दृष्ट एव जन्मनि लब्धविपाकः मरणमप्राप्तस्यैव हि तस्य मनुष्यशरीरं नन्दीश्वररूपेण परिणतम्, सोऽयं कर्माशयो न प्रारब्धं कर्म किन्तु क्रियमाणमुच्यते।

## विकासः

तत्तच्छरीरारम्भकस्य ( प्रारब्धस्य ) कर्मण एव तत्तच्छरीरावच्छेदेन भोगो भवतीति न नियमः अपि तु सञ्चितक्रियमाणयोरपि मध्ये भवति भोगः प्रारब्धं हि कर्म स्वकार्यं सम्पादयत् मध्ये एतयोरपि कार्यं कर्तुमवसरं ददातीति । एवं तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु महानुभावेषु वा तपस्विषु कृतात्पुनःपुनरपकाराज्जायमानः कर्माशयः सद्य एव परिपच्यते । यथा नहुषस्य राज्ञः पार्ष्णिप्रहारकर्मणा जायमानः पापविशेषो दृष्टजन्मन्येव भोगहेतुः अप्राप्तमरणस्यैव हि तस्य शरीरं सर्परूपेण परिणतम्, स्वर्गिणां भोगहेतुः पुण्यकर्माशयो मनुष्यादिशरीरेण सम्पादितोऽदृष्ट 'स्वर्गि' जन्मवेदनीयः । एवं नरकिणां भोगहेतुः कर्माशयो मनुष्यादिशरीरेण सम्पादितोऽदृष्ट 'नरकि' जन्मवेदनीयो वेदितव्यः । तस्मादेवं क्रमेणैकभविकः मरणादव्यवहितपूर्वक्षणे एकलोलीभावमापन्नोऽग्रिमजन्मनि जात्यायुर्भोगभेदेन त्रिधा विपच्यमानः कर्माशयस्त्रिविपाको भवतीति सिद्धम् ।

दृष्टजन्म वेदनीयस्य तु कर्मणो न त्रिविपाकत्वं तज्जन्मनः पश्चाज्जायमानत्वेन तज्जन्म प्रतितस्याकारणत्वात् । जन्मान्तरे च तद्भोगविरहात्, अपि तु भोगैकविपाकत्वम्, आयुर्भोगोभयविपाकत्वं वा यस्य हि कर्मणः फलं दृष्टे एव जन्मनि सम्पद्यते तत् दृष्टजन्मवेदनीयमित्युच्यते ।

यच्चादृष्टजन्मवेदनीयं कर्म अनियतविपाकं तस्य त्रयी भवति गतिः । कृतस्याविपक्वस्य तपसा प्रायश्चित्तादिना च नाशः १ । प्रधानकर्मण्यवापगमनम्,यथा–ज्योतिष्टोमादि कर्मफलभोगसमये तदङ्गपशुहिंसादिकर्मफलस्यापि भवति भोगः २ । नियतविपाककर्मणाऽभिभूतस्य चिरमवस्थानं वा भवति ३ । एतत्त्रयमेव सञ्चितं कर्मेत्युच्यते ।

अथैवं कथमकालमरणव्यपदेश इति चेदित्थमवधारणीयम्—तत्तत्कर्मफलं सुखं दुःखं च यदि समयं व्यवधाय मन्दं मन्दमुपभुज्यते तदाऽऽयुष्यस्य भवति वृद्धिः, भवति हि प्राणायामादिनाऽऽयुष्यवृद्धिः तत्काले कर्मफलस्य सुखस्य दुःखस्य वा भोगविरहात् । यदि चातितीव्रगत्या उपभुज्यते तदा शतवर्षायुषोऽपि पुंसोऽल्पीयसैव समयेनोपभोगात् क्षीणमायुर्भवतीति, भवति च सर्पदंशनजलोन्मज्जनादिना मरणे बहुतरसमयसम्पादनीयस्यापि दुःखस्याततितीव्रसंवेगेनाल्पीयसैव समयेन भोगसम्पादनान्नियतसमयविपाकस्य कस्यचिदभावादायुषः क्षयः, ततश्चजायमानं मरणमकालमरणमभिधीयते ।

'नाकाले म्रियते कश्चित्प्राप्ते काले न जीवति ।'

इत्यादिकं तु सामान्यवचनं प्रारब्धकर्मणो विद्यमानत्वाविद्यमानत्वाभिप्रायेण संगमनीयम् । तदेतत्सर्वं योगभाष्यं तदीयं वाचस्पत्यं चाधीतवतां भवति सुबोधम् ।

शाङ्करभाष्यम्

यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा (जै० सू० १।१।१) इति सूत्रिता। अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे। मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते, धर्मतारतम्यादधिकारितारतम्यम्। प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम्। तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम्। केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्। तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' (छा० ५।१०।५) इत्यस्माद् गम्यते। तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः। तथोर्ध्वं गतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते। एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' (छा० ८।१२।१) इति यथावर्णितं संसाररूपमनुवदति।

प्रकाशः

भाष्ये—यद्विषया जिज्ञासा अथातो धर्मजिज्ञासेति सूत्रितेत्युक्तिः उपासनाया भवन्मते धर्मकोटिनिक्षिप्तत्वाद्धर्मस्य च पूर्वतन्त्रे विचारितत्वात्पुनर्विचारवैयर्थ्यमित्यापादयितुम् । अधर्मोऽपीत्यायुक्तिः यज्ञादिजन्यपुण्यफलभोगोत्तरमधर्मफलभोग इवोपासनाफलभोगोत्तरमधर्मफलभोगः स्यादिति ख्यापयितुम् । चोदनालक्षणत्वोक्तिर्यागादेरिवोपास्तेरपि धर्मत्वमवगमयितुम् । शरीरवागित्यादिविशेषणानि कर्मफलवदुपासनाफलस्यापि शरीरोपभोग्यत्वं प्रसञ्जयितुमिति बोध्यम् । भाष्ये मनुष्यत्वादारभ्येति मनुष्यलोकादारभ्येत्यर्थः, स्वार्थिकस्त्वल् प्रत्ययः । भाष्ये इष्टापूर्तदत्तसाधनैरिति इष्टं श्रौतं यागादिकर्म, पूर्तं वापीकूपतडागादिकम् स्मार्तं कर्म, दत्तं दानम् । भाष्ये—यावत्सम्पातमिति सम्पतत्यनेनास्माल्लोकादमुं लोकमिति सम्पातः कर्म धर्माधर्मौ । आवीचिलोकात् नरकलोकपर्यन्तम् । आत्यन्तिकम् सर्वोपाधिप्रत्यस्तमयोपलक्षितं स्वरूपम् । फलं कार्यरूपम् । न च तदिह सम्भवतीत्यत आह - तद्धीति । आविर्भावादिति । नचैतदुपासनाविधिपक्षे सम्भवति कर्मकार्यस्य नित्यत्वासम्भवादिति भावः ।

नन्विदमनित्यत्वप्रसञ्जनमुपासनावादिनामिष्टमेवेत्यत आह—एतदुक्तमिति । उपासनाविधेः फलं ब्रह्मात्मत्वमुताविद्यानिवृत्तिरुत विद्योदय इति विकल्प्य क्रमेण निराकुरुते—त्वयापीत्यादिना । उपासनयाऽदृष्टमुत्पाद्यते तद्द्वारा जीवस्य ब्रह्मात्मता उत्पद्यते इति नाभिधातुं शक्यमित्याह—सा चेति । द्वितीयं निरस्यति—नापीति । अपनयोऽपि नादृष्टद्वारोपासनया जन्यते तत्र हेतुमाह—तस्येति विद्याऽविद्ययोर्विरोधादित्यर्थः । तृतीयं प्रतिक्षिपति—नापि विद्योदय इति । उपासनया जायमानो दृढतरः संस्कारो भवन्मते यथाऽन्तःकरणसहकारी तथा तया जायमानमपूर्वमपीति भवति विधेरवकाश इत्याशङ्कते—उपासनेति । इति चेदित्यस्य 'न' इत्यनेनाग्रेतनेन सम्बन्धः । ऐहिकं फलं कथं नैयोगिकं स्यादित्याशङ्क्याह—दृष्टं चेति । 'चित्रया यजेत पशुकामः' इत्यादिविधिवाक्यलभ्याः नियोगाः प्रतिबन्धकवशादेतज्जन्मनि फलाजनने जन्मान्तरेऽपि फलं जनयन्तीत्यनियतफलाः 'शुष्यत्सस्यसम्पत्तिकामः कारीरीं कुर्यात्' इत्यादि विधिवाक्यलभ्यास्तु नियोगा एतज्जन्मन्येव नियमेन फलं जनयन्तीति नियतफला इत्याह—अनियतनियतफलानामिति । अनपेक्षायाः अपूर्वानपेक्षायाः । तत्कार्यमिति तदपूर्वं कर्तव्यत्वेन

## प्रकाशः

नावबोद्धुमर्हतीत्यर्थः । **अन्यदिच्छतीति** इच्छोद्देश्यस्य सम्पादिका तद्विषयिणी च कृतिर्भवति, उपासनाजन्यापूर्वं तु न मोक्षसम्पादकमिति कथं तत्र कृतिः स्यात् ? तथा च विध्ययोगान्नापूर्वं साक्षात्कारोपयोगीति भावः। यद्यपूर्वं न साक्षात्कारस्योपयोगि तर्हि तदर्थमुपासना क्रियैव विधीयतां सैव साक्षात्कारोपयोगिनी स्यादित्याशङ्कां पराकरोति—**नचेति** । तत्कामः अमृतत्वकामः । **क्रियामेव** उपासनामेव । **तस्या** उपासनायाः । उपास्यसाक्षात्कारं प्रत्युपासनायाः कारणत्वस्य षड्जादिसाक्षात्कारस्थलेऽन्वयव्यतिरेकसिद्धत्वात् तत्र विध्ययोगादात्मोपासनविधिवैयर्थ्यमिति भावः । नन्ववघातस्य तुषविमोकं प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वेऽवधृतेऽपि यथा व्रीहीनवहन्तीत्यादौ नियमादृष्टं कल्प्यते तथा प्रकृतेऽप्यस्त्वित्याशङ्कामपाकरोति—**नचावघातादीति**। **अन्यतोऽनवगतेरिति** तथा च तत्र विधिरावश्यक इति भावः । उपासने नास्ति नियमापूर्वमित्याह--**न च ब्रह्मभूयादिति** । नचायं ब्रह्मभावः परमापूर्वं नियमापूर्वं वाऽपेक्षते नित्यत्वादित्यर्थः । 'विश्वजिता यजेत' इति विधौ न कश्चिन्नियोज्यो दृश्यतेऽतो नियोज्योऽध्याह्रियते । स च स्वर्गकामो वाऽन्यो वा तत्राविशेषादनियमे प्राप्ते इदमाह सूत्रकारः— 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् इति, अत्र तु स्वर्गफलकल्पना न संभवतीत्याह--**विश्वजिन्न्यायेनेति** । **न नित्यफलत्वमिति** आत्मोपासनावादिनाऽप्युपासनाया अक्षय्यफलत्वस्यैवाङ्गीकारात् नच ब्रह्मभावः फलं तस्य नित्यसिद्धत्वेन जन्यत्वाभावात् तदेतदुपसंहरति--**तस्मादिति** । **तात्पर्यार्थ** इति। इदमपि च विचारमर्हति—जीवेनोपासनया ब्रह्मभावः प्राप्यते इति वदन् प्रष्टव्यः-जीवो ब्रह्मरूपेणोत्पद्यते इति यद्युच्येत तदा जीवस्य पूर्वस्वरूपनाशः प्रसज्यते न च स्वरूपनाशाय कश्चित्प्रयतते, ब्रह्मणश्च स्वस्वरूपेण पूर्वकालतो वर्तमानत्वात्कथं तत्स्वरूपेण जीव उत्पत्तुं शक्नुयात्, उभयोरपि पूर्वरूपं परित्यज्य रूपान्तरप्रहण-प्रसङ्गात्। यदि च जीवो ब्रह्म च मिलित्वा एकरूपतामापद्यते इत्युच्यते तदेवदसम्भवदुक्तिकम् उक्तदोषादेव, यदि च ब्रह्म स्वस्वरूपेणैव तदानीमपि विराजते जीव एव यथा ब्रह्मस्वरूपमस्ति तथोपासनया भवतीत्युच्यते तदापि जीवस्यानित्यत्वं केन वार्येत तस्मान्न किंचिदेतत्, सिद्धान्ते तु सर्वदा ब्रह्मैव जीवभेदस्तु अविद्याकल्पित एवेत्यतो न कश्चिद्दोषः ।

## भामती

श्रुतिस्मृतिन्यायसिद्धमित्युक्तं तत्र श्रुतिं दर्शयति तथा च श्रुतिरिति । न्यायमाह—अत एवेति । यत्किल स्वाभाविकं तन्नित्यं, यथा चैतन्यं, स्वाभाविकं चेदं, तस्मान्नित्यम् । परे हि द्वयीं नित्यतामाहुः कूटस्थनित्यतां परिणामिनित्यतां च, तत्र नित्यमित्युक्ते मा भूदस्य परिणामिनित्यतेत्यत आह—तत्र किंचिदिति । परिणामिनित्यता हि न पारमार्थिकी । तथाहि—तत्सर्वात्मना वा परिणमेदेकदेशेन वा ? सर्वात्मना परिणामे कथं न तत्त्वव्याहतिः । एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो वाऽभिन्नो वा ? भिन्नश्चेत्, कथं तस्य परिणामः । नह्यन्यस्मिन्परिणममानेऽन्यः परिणमतेऽतिप्रसङ्गात् । अभेदे वा कथं न सर्वात्मना परिणामः ।

भिन्नाभिन्नं तदिति चेत्, तथाहि तदेव कारणात्मनाऽभिन्नं भिन्नं च कार्यात्मना, कटकादय इवाभिन्ना हाटकात्मना, भिन्नाश्च कटकाद्यात्मना । न च भेदाभेदयोर्विरोधान्नैकत्र समवाय इति युक्तम् । विरुद्धमिति नः क्व सम्प्रत्ययो यत्प्रमाणविपर्ययेण वर्तते यत्तु यथा प्रमाणेनावगम्यते तस्य तथाभाव एव । कुण्डलमिदं सुवर्णमिति सामानाधिकरण्यप्रत्यये व्यक्तं भेदाभेदौ चकास्तः । तथाह्यात्यन्तिकेऽभेदेन्यतरस्य द्विरवभासप्रसङ्गः । भेदे चात्यन्तिके न सामानाधिकरण्यं, गवाश्ववत् । आधाराधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं, नहि भवति कुण्डं बदरमिति नाप्येकासनस्थयोश्चैत्रमैत्रयोश्चैत्रो मैत्र इति । सोऽयमबाधितोऽसंदिग्धः सर्वजनीनः सामानाधिकरण्यप्रत्यय एव कार्यकारणयोर्भेदाभेदौ व्यवस्थापयति । तथा च कार्याणां कारणात्मत्वात् कारणस्य च सद्रूपस्य सर्वत्रानुगमात् सद्रूपेणाभेदः कार्यस्य जगतो भेदः कार्यरूपेण गोघटादिनेति । यथाहुः—

## भामती

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥ इति ।

अत्रोच्यते । कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इति चेत्, किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा ? न चेदेकत्वमेवास्ति न च भेदः । अस्ति चेद्भेद एव नाभेदः । न च भावाभावयोरविरोधः, सहावस्थानासम्भवात् । सम्भवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः भेदस्याभेदाविरोधात् । अपि च कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते एवं कटकात्मनापि न भिद्येरन् कटकस्य हाटकादभेदात् । तथा च हाटकमेव वस्तु सन्न कटकादयो भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदो न कटकत्वेन तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते, नानुवर्तते चेत्, कथं हाटकादभिन्नः कटकः । ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात् कुसुमभेदाः । नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति । सत्तानुवृत्या च सर्ववस्त्वनुगमे इदमिह नेदं, इदमस्मान्नेदम्, इदमिदानीं नेदम्, इदमेवं नेदमिति विभागो न स्यात् कस्यचित् क्वचित् कदाचित् कथंचिद्विवेकहेतोरभावात् । अपि च दूरात्कनकमित्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन्, कनकादभेदात्तेषां तस्य च ज्ञातत्वात् । अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेप्यज्ञातास्ते । नन्वभेदोप्यस्तीति किं न ज्ञाताः ? प्रत्युत ज्ञानमेव तेषां युक्तं, कारणाभावे हि कार्याभाव औत्सर्गिकः, स च कारणसत्तयाऽपोद्यते । अस्ति चाभेदे कारणसत्तेति कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्युः । तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत्ततो भिद्यते, यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करभात् । गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः

## शाङ्करभाष्यम्

'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८।१२।१) इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते। अशरीरत्वमेव धर्मकार्यमिति चेत्, न; तस्य स्वाभाविकत्वात्।

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥'

(क० १।२।२१) 'अप्राणो ह्यमनाः शुभ्रः' (मु० २।१।२) 'असङ्गो ह्ययं पुरुषः' (बृ० ४।३।१५) इत्यादिश्रुतिभ्यः। अत एव अनुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्। तत्र किंचित्परिणामि-

## भामती

तस्मात्ते हेम्नो भिद्यन्ते। कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यमिति चेद्, नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम्। अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम्? न खल्वभेदे ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते इत्युक्तम्। तस्माद् भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना न भेदोपादानाऽभेदकल्पनेति युक्तम्। भिद्यमानतन्त्रत्वाद्भेदस्य भिद्यमानानां च प्रत्येकमेकत्वाद्, एकाभावे चानाश्रयस्य भेदस्यायोगाद्, एकस्य च भेदानधीनत्वाद्, नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वादेकत्वग्रहस्य चान्यानपेक्षत्वादभेदोपादानैवानिर्वचनीयभेदकल्पनेति सांप्रतम्। तथा च श्रुतिः 'मृत्तिकेत्येव सत्य'मिति। तस्मात् कूटस्थनित्यतैव पारमार्थिकी न

### प्रकाशः

ननु कर्मणो विचित्रफलत्वदर्शनादशरीरत्वमप्यस्तु धर्मकार्यमिति शङ्कते भाष्यकारः—**अशरीरत्वमेवेति** । शरीरित्वं न वास्तविकमपि तु मिथ्याज्ञानकार्यमशरीरत्वं न धर्मकार्यम् अपि तु विद्ययाऽभिव्यज्यमानं स्वभावसिद्धमेवेत्यर्थः । भाष्ये—स्थूलशरीराभावे मानमुक्त्वा सूक्ष्मशरीराभावेऽपि तदाह—**अप्राण इति** । **न्यायमाह** युक्तिमाह । मोक्षाख्यमशरीरत्वं नित्यम् अनुष्ठेयफलविलक्षणत्वात्स्वाभाविकत्वाद्वेति प्रयोगः । अत्रोदाहरणं प्रदर्शयति--**यत्किलेति** । उपनयनिगमने दर्शयति—**स्वाभाविकमित्यादिना** । तथा च स्वाभाविकनित्यचैतन्यात्मकस्य ब्रह्मात्मभावस्य कर्मसाध्यत्वं व्याहतमिति भावः । ननु सिद्धान्ते परिणामिनित्यत्वानङ्गीकारात्तद्व्यावर्तकं भाष्ये कूटस्थनित्येत्यत्र कूटस्थपदं व्यर्थमित्याशंक्याह **परेहीति** । तथा च परमतसिद्धपरिणामिनित्यत्वभ्रान्तिवारणाय कूटस्थत्वं विशेषणमिति भावः । भाष्ये—**पृथिव्यादिजगन्नित्यत्ववादिनामिति** पृथिवी कदाचित्तृणवृक्षाद्यवस्थां प्राप्नोति पुनस्तृणादिनाशे मृदवस्थाम्, अवस्थाद्वयेऽपि पृथिवी अनुवर्त्तमानैव अतः सा परैः परिणामिनित्योपेयते । ननु परिणामिनित्यता किमर्थं व्यवच्छिद्यते ब्रह्मण्यपि सैवास्त्वित्यत आह—**परिणामिनित्यता हीति** । भाष्ये इदं तु पारमार्थिकं कूटस्थनित्यमित्युक्तं तत्र पारमार्थिकत्वस्योद्देश्यतावच्छेदकत्वात्तद्व्यापकत्वं कूटस्थनित्यत्वे लभ्यते, तदेतत्तदा उपपद्येत यदि यत्पारमार्थिकं तदविकृत कूटस्थनित्यमिति व्याप्तिः स्यात् परिणामिनि चाविकृतत्वाभावान्नेयं व्याप्तिः संभवति पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिरेव हि परिणामः पूर्वरूपपरित्यागे च विकृतत्वमेवेति न नित्यत्वमतः परिणामिनो नित्यत्वभ्रान्तिरेवेत्युपपादयति **तत्सर्वात्मनेत्यादिना** । तदिति परिणामिनित्यत्वेनाभिमतं परामृशति । **तत्त्वव्याहतिरिति** । नचायं विकल्पोऽविद्यायाः परिणामित्वेऽप्यापततीति वाच्यम् जगतामाविद्यकत्वपक्षे दूषणस्य भूषणत्वात् अत एव सांख्याभिमता प्रकृतिरविद्यारूपैव नतु तदतिरिक्तेति वर्ण्यते वेदान्तिभिः । द्वितीयं निराकरोति—**एकदेशेति** । स एकदेशः परिणममान एकदेशः । ततः एकदेशिनो धर्मिणः सकाशात् । य एकदेशो रूपान्तरमापन्नः स स्वरूपपरित्यागाद्विनष्ट एवेति न तस्य परिणामिनो नित्यत्वसिद्धिरित्याह—**भिन्नश्चेदिति** । तस्य एकदेशिनो धर्मिणः । नश्यन्नेकदेशो धर्मिण एकदेशिनो

प्रकाशः

अभिन्नश्चेत्तस्यैकदेशस्य सर्वात्मना परिणामे नाशेत्रा धर्मिणोऽपि तौ स्यातामिति न तस्य नित्यत्वमित्याह—अभेदेचेति । अथोक्तपक्षद्वयोक्तदूषणनिराकरणाय कार्यकारणात्मकमेकमेव वस्तु स्वीकार्यं तस्य च कार्याकारेण परिणामित्वम्, तानि च कार्याणि भिन्नानि, कारणाकारेण च नित्यत्वं तच्चाभिन्नमिति शङ्कते— भिन्नाभिन्न-मिति । हाटकात्मना सुवर्णात्मना । यत् प्रमाणविपर्ययेण प्रमाण विरोधेन वर्त्तते तत्र विरुद्धमिति सम्प्रत्यय इत्यन्वयः ।

यत्तु यद्वस्तु तु । एकस्यैव वस्तुनः कार्यकारणरूपेण द्व्यात्मकत्वमित्यत्र युक्तिमाह—कुण्डलमिति । सामानाधिकरण्येति, अभेदान्वयोपयोगि समानविभक्तिकपदोपस्थाप्यत्वेत्यर्थः । द्विरवभासेति हेम हेम कुण्डलं कुण्डलमिति वेत्यर्थः, हेमकुण्डलयोरीषदपि भेदविरहात् । गवाश्ववदिति तस्मादपर्यायानेकशब्दवाच्यत्वेन हेमकुण्डलयोर्भेदः सामानाधिकरण्याच्चाभेद इत्यङ्गीकार्यमिति स्थितम् तत्र हेम कुण्डलमिति सामानाधिकरण्यं हेमत्वस्य कुण्डलनिष्ठत्वात्कुण्डलाकारसंस्थानस्य हेमत्वस्य चैकद्रव्यनिष्ठत्वाद्वोपपद्यमानं नोक्ताभेदं साधयितुमर्हतीत्याशङ्क्यैतद्व्यभिचारयति—आधारेत्यादिना । भेदाभेदौ व्यवस्थापयतीति । ननु कथमेकस्मिन्नेव प्रत्यये कुण्डलभेदकुण्डलभेदाभावावभासेयाताम् न हि भवति घटो न नीलः घटो नीलश्चेत्येकः प्रत्यय इति चेत् ? न, प्रकारविधया भेदाभेदभानासम्भवेऽपि हि भेदोपलक्षिताधिकरणवृत्तित्वविशिष्टाभेदस्य 'तादात्म्यरूपस्य' संसर्गविधया भानं पूर्वपक्षिणामेषामभिमतम् । नच विरूपोपस्थितेरभावादेव हेमहेमेत्यादिप्रतीतिवारणं संभवतीति वाच्यम्, शाब्दप्रतीतेरुक्तरीत्या वारणेऽपि प्रात्यक्षिकादिप्रतीतेरवारणाद्भेदभानस्यावश्यकत्वादिति । दृष्टान्ते सिद्धौ भेदाभेदौ दार्ष्टान्तिके योजयति—तथा चेति । 'सन् घटः' 'सन् पटः' इत्यादिप्रतीतौ प्रतीयमानसामानाधिकरण्येन घटपटादेरखिलस्य जगतः 'कारणरूपेण' सदात्मनाऽभेदः, घटपटादिकं यद् व्यावृत्तं कार्यं तेन रूपेण च भेद इत्यर्थः । तमिमं भेदाभेदपक्षमुपपाद्याचार्यः प्रतिक्षिपति अत्रोच्यते इत्यादिना । सिद्धान्ते तु कार्यं न कारणातिरिक्तं किन्तु कारणमेव विशेषावस्थामापद्यमानं कार्यपरिणामश्चोच्यतेऽतः कारणातिरिक्तस्य कार्यस्यैवाभावात् न कटककुण्डलयोरेकोपादानत्वप्रयुक्तोऽभेदः शक्यते आपादयितुमिति बोध्यम् । परस्पराभावः भेदाभावोऽभेदोऽभेदाभावश्च भेद इत्यर्थः । अयम् भेदः ।

## विकासः

सहावस्थानासम्भवादिति ननु एतदारभ्य न परिणामिनित्यतेति सिद्धम् एतत्पर्यन्तग्रन्थो न सामञ्जस्यमर्हति तथा हि विरुद्धयोरपि धर्मयोरवच्छेदकभेदेन वृत्तिः सर्वैरुपेयत एव कथमन्यथा संयोगतदभावावेकस्मिन् वृक्षादौ वर्तेयाताम् । एवञ्च हाटकत्वेनाभेदस्य कटकत्वकुण्डलत्वादिना भेदस्य चैकस्मिन् हेम्नि वृत्तौ बाधकाभावः । न च कटकमिदं कुण्डलमित्यभेदप्रतीतिप्रसङ्गः हाटकत्वेनाभेदेऽपि कटकत्वकुण्डलत्वाभ्यां भेदस्यैव सत्त्वेनापत्त्यसंभवात् अत एव च न हाटकत्वेनावगते कुण्डलत्वादिना जिज्ञासाद्यनुपपत्तिः । भेदाभेदावनङ्गीकुर्वद्भिरपि एकस्मिन् धर्मिणि केनचित्प्रकारेण निश्चिते तदन्यप्रकारेण संशयजिज्ञासादिकं समर्थ्यत एवेति सर्वस्यैवैतस्य भेदाभेदपक्षप्रतिक्षेपस्यायुक्तत्वम्, युक्तत्वे वा स्वमतेऽप्येतत्सर्वं दूषणं प्रसज्यते भेदाभेदाभ्यामेव सामानाधिकरण्यस्य स्वमतेऽप्युपपादनात् । अभेदः सत्यो भेदस्तत्राध्यस्त इति परं स्वमते विशेषः सोऽप्यकिञ्चित्कर एव तावताऽपि हाटकत्वकटकत्वयोरैक्यात्पूर्वोक्तदूषणस्यानुद्धारात् अपि च अभेदः सत्यो भेदोऽध्यस्त इदमप्यर्धजरतीयमप्ययुक्तम् सहैव भेदाभेदयोः प्रतीतावेकतरबाधकल्पकस्य कस्यचिदभावात् अभेदोपादाना भेदकल्पनेत्युक्तिरप्ययुक्ता सत्यानृतयोः ब्रह्मप्रपञ्चयोः तात्त्विकस्याभेदस्य सिद्धान्तेऽनङ्गीकारात् । 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्र भामत्यामत्रापि च कार्यकारणयोर्वास्तविकस्यैक्यस्य निराकरणात् 'तस्मात्तेऽपि हाटकाद्भिन्ना एव इति 'तस्मात् ते हेम्नोभिद्यन्त इत्याभ्यां हेम्नि अनध्यस्तस्यैव भेदस्य सिद्धान्तितत्वाच्च । तस्मात्सर्वमिदं परस्परविरुद्धमसमञ्जसमिति चेदत्रेदमवगन्तव्यम्

यदि हाटकत्वकटकत्वधर्मौ भिन्नौ व्यवास्थास्येते तदाऽवच्छेदकभेदेन भेदाभेदावुपापत्स्येते परंतु हाटकात्कटकस्याभेदे सर्वात्मनैव हाटकं कटकतामापद्यतेऽतो यदेव हाटकत्वं तदेव च कटकत्वमिति नैतयोरपि भेदः सिध्यतीति नावच्छेदकधर्मभेदेन भेदाभेदयोर्वृत्तिकल्पनं भवत्युचितम् । सतिचैवमभेदसत्तया कुण्डलादिकमपि ज्ञातमेवेति सिद्धान्त्युद्भाविता जिज्ञासाद्यनुपपत्तिरपि युक्तैव । सिद्धान्ते च भेदः कुण्डलादिकं सर्वं नामधेयमात्रम् उपादानमेव हि हेमादि मृदितावस्थाविशेषापन्नं कटकादिकमुच्यमानं न ततोऽन्यदुपेयते यत्र भिन्नमभिन्नं वेति विकल्पः समुदयेतेति एकस्मिन्नेव हि तस्मिन् हाटकेऽविद्यया भेदो भासतेऽतः सौवर्णं कुण्डलमिति परिणामश्च व्यपदिश्यतेऽतो न काचिदनुपपत्तिरिति ।

ननु सिद्धान्तेऽप्यभेदोपादाना भेदकल्पनेत्यभिधानात् हाटककटकयोरभेदे जिज्ञासाद्यनुपपत्तिर्दोषो विद्यत एवेति चेन्न अभेदोपादानेत्यत्र अभेदशब्दस्य हि एकोऽर्थः तथा च हाटकादिरूपैकोपादाना कटकादिरूपभेदकल्पनेत्यभिप्राया तदुक्तिः, अतएव चारम्भणाधिकरणे भामत्यामाचार्यैः वक्ष्यते 'वाचा केवलमारभ्यते विकारजातं न तु तत्त्वतोऽस्ति यतो नामधेयमात्रमेतत् यथा पुरुषस्य चैतन्यम् .राहोःशिर इति विकल्पमात्रम्,' इति । वाचारम्भणं विकारो नामधेयमिति श्रुति श्चैतदर्थिकाऽनुगृह्यते ।

## विकास:

ननु यदि विकारभेदः कल्पनामात्रसिद्धः इत्यभिमतं कथं तर्हि वाक्यान्वयाधिकरणे ( १।४।१६ ) भामत्याम् "ननु मृद्विकारः शरावादिः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मना मृद्भावसाक्षात्कारेण शक्योनिवर्तयितुम् तत्कस्य हेतोः तस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वात् वस्तुनश्च ज्ञानेनोच्छेत्तुमशक्यत्वात् इत्युक्तमितिचेत् अत्रेदं महतापरिश्रमेण बहुतरभावनासाध्येन समीक्षितमस्माभिः कार्यं द्विविधं विवर्त्तरूपं परिणामरूपं च तत्रैक एव कार्यः किञ्चिदपेक्षया विवर्त्तः किञ्चिदपेक्षया परिणामश्चोच्यते यथा प्रपञ्चो ब्रह्मणोविवर्तोऽविद्यायाः परिणामश्च तत्राद्योद्विविधो ब्रह्मविवर्तः रज्ज्वादिविवर्तश्च तत्राद्यं घटादि व्यवहारकाले मुद्गरपातादिनिवर्त्यम् द्वितीयं तु व्यवहारकाले एवाधिष्ठानसाक्षात्कारबाध्यम् यथा रज्ज्वादिसाक्षात्कारबाध्यं सर्पादिकम्, परिणामश्च परिणामित्वेनाभिमतस्यैव रूपान्तरं नतु तद्भिन्नं भिन्नत्वे पृथक्त्वेनोपलब्धिप्रसङ्गात् तस्मात् परिणामो नास्त्येवेति नाभिमतमपि तु परिणामिनः सकाशाद्भिन्नं नास्तीति, कथमन्यथा जगतोऽविद्यापरिणामत्वं तत्रतत्रोच्यमानं संगच्छेत, एवञ्च मृद्विकारस्य, मृत्समानसत्ताकस्यतदवस्थाविशेषरूपस्य वस्तुभूतस्य शरावादेरविद्यया भिन्नतया प्रथमानस्य मृत्साक्षात्कारेण न बाध इति युक्तमेवोक्तम्। तस्मात् मृद्घटः सौवर्णं कुण्डलमित्यादिव्यवहारः सत्यप्यभेदे भेदकल्पनयोपपद्यते.। एवञ्चाभेदः सत्यो भेदस्तत्राध्यस्तइत्युक्तिरपि युक्तैव, तदेतत्सिद्धम् कार्यकारणयोरभेदोक्तिः परिणामपरिणामिनोरभेदाभिप्रायेण, तदनन्यत्वमितिसूत्रीयम् 'नखल्वनन्यत्वमित्यभेदं ब्रूमः किं तु भेदं व्यासेधामः ततश्चनाभेदाश्रयदोषप्रसङ्गः, इत्यभेदनिराकरणं तु अधिष्ठानविवर्ताभिप्रायम् न हि सर्पोरज्जुश्च वस्तुत एको भवतीत्यतो न कस्यचित्पूर्वापरग्रन्थस्य विरोधः। तस्मात् यद्युपादानभूतसुवर्णातिरिक्तं कटकं कुण्डलं च स्यात् स्यात्तदैकोपादानकयोरेतयोरैक्यापादनं युक्तं नत्वस्ति तदतिरिक्तं तत् अतो नास्मन्मते काचनापत्तिः प्रदर्शितैवंविधपरिणामपरिणाम्यभेदव्यवस्थाविचारसोपानपरम्परासमारूढस्य पुरुषधौरेयस्याविद्यैवायं प्रपञ्चः समुद्भासते।

इत्थञ्च यन्मते प्रपञ्चस्य ब्रह्मपरिणामत्वं तन्मते परिणामपरिणामिनोरभेदात् सर्वेषामैक्यप्रसङ्गः घटाभिन्नेन ब्रह्मणा पटादेरभेदात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादपि घटपटाद्योरभेदः प्रसज्यते अन्यान्यप्यत्रोक्तानि दूषणानि ब्रह्मपरिणामवादिनां स्कन्धमास्कन्दन्त्येव अस्मन्मते च ब्रह्मप्रपञ्चयोरभेदासत्त्वान्नापत्तिः काचिदनुपपत्तिर्वा। दृष्टिसृष्टिपक्षे च सर्वापत्तिपरिहारः सुगम एवेति दृष्टिसृष्टिवादनिरूपणावसरे प्रदर्शितमेवास्माभिरिति।

## प्रकाशः

कटकवर्द्धमानकयोः सौवर्णाभरणविशेषयोः । **तत्त्वेनेति** कटकत्वेन वर्द्धमानकत्वेन च भेदावच्छेदकत्वेनाभिमतेन विशेषरूपेणापि तयोरभेदप्रसङ्गः भेदाभेदयोर्विरोधव्यवस्थायाः भवतैवोत्सारितत्वात् सर्वथैव चाभेदे कटककार्यं वर्द्धमानकेनापि सम्पाद्येतेत्यर्थः । यत्रैकेन सुवर्णपिण्डेन पूर्वं कटकं निर्मितम् अनन्तरं च तत्कटकं भङ्क्त्वा तेनैव सुवर्णेन पुनः कदाचित्कुण्डलं निर्मापितं तस्य कुण्डलस्य तदभिन्नाभिन्नस्य तदभिन्नत्वमिति रीत्या कटकाभेदः प्रसज्यत इत्याह—**अपि चेति** । एवं सर्वेषामेषामेकोपादानकानां कटककुण्डलादीनां मृद्घटादीनां च कारणादभेदे भेदो न सिद्ध्यतीति गतं भेदव्यवहारेण, एवं यन्मते प्रपञ्चस्य ब्रह्मपरिणामत्वं तन्मते तूक्तयुक्त्या सर्वेषां ब्रह्मरूपत्वेनैकान्तिकाद्वैतापातात्सर्वभेदव्यवहारोच्छेदप्रसङ्गः । यदि चाविद्यया भेदोभासते इत्युपगम्येत तेन तदा तस्यापसिद्धान्त इत्यप्यवधेयम् । कटकस्यास्ति रूपद्वयं कटकत्वं हाटकत्वं च तत्र हाटकत्वरूपेण कटकस्य कुण्डलादिनाऽभेदो न तु कटकात्मना तस्य व्यावृत्तत्वादिति न कश्चिद्दोष इति पुनः शङ्कते--**अथेति** । अत्र सिद्धान्ती यदि कटकादभिन्नमेव हाटकं तदाऽस्य कुण्डलादिष्वनुवर्त्तनात्कटकस्यापि कुंण्डलादिष्वनुवृत्तिः प्रसज्येतेति पूर्वोक्तमेव परिहारं स्मारयति-**यदि हाटकादिति** । **नानुवर्त्तते चेदिति** । हाटकं चानुवर्त्तते, अत्र कुण्डलादयो हाटकाद्भिन्ना इति प्रतिज्ञा लभ्यते हाटकेऽनुवर्त्तमाने व्यावृत्तत्वादिति हेतुस्त्वर्थाल्लभ्यते । व्यावृत्तस्यानुवृत्ताद्भेदे सामान्यव्याप्तिमभिदधाति--**ये हीति** उपनयमाह—**नानुवर्त्तन्त इति** । निगमयति--**तस्मादिति** । यदि हेम्नोऽनुवृत्त्या कुण्डलादिषु तदभेदात्कटकादीनामनुगमस्तदा सत्ताऽनुवृत्त्या कृत्स्नस्यैव प्रपञ्चस्यैकत्वापत्त्या सर्वव्यवहारविप्लवः स्यादित्याह—**सत्तानुवृत्त्या चेति** । इदमिह नेदमिति 'इति विभागो न स्यात्' इत्यनेन सर्वेषां सम्बन्धः इह क्षीरे इदम् दधि नेदम् न घटादिकम् । इदम् पटादिकम् **अस्मात्** घटात् भिद्यतेइदम् पटादिकम् पटादेर्नभिद्यते **इदानीम्** बसन्ते **इदम्** कोकिलरवादिकम नेदम् न कुमुदादि इदम् घटादिकम् एवम् कम्बुग्रीवादिमत्, पटादि नैवम् इत्यसंकीर्णव्यवस्था न स्यादित्यर्थः । इतोऽपि हेतोर्न वास्तवमैक्यं कार्यकारणयोरित्याह-**अपिचेति** । कनके निश्चिते तदभिन्नाः कुण्डलादयोऽपि निश्चिता एवेति न तत्सं-

## प्रकाशः

शयः स्यादित्युक्तौ तत्र भेदोऽप्यस्ति तत्प्रयुक्तो भवति संशय इति शङ्कते--अथेति। विनिगमनाऽभावं सिद्धान्त्याह--नन्विति। न केवलं विनिगमनाऽभाव एव अपि तु वैपरीत्यनिश्चय एवेत्याह--प्रत्युतेति। हेमकुण्डलयोरभेदे हेम्नि निर्णीते कुण्डलमपि निर्णीतमेवेति निर्णयाभावरूपकारणविरहात्संशयो न स्यात् संशयरूपकारणविरहाच्च न विचारः स्यात् विचाराभावाच्च न तत्साध्यः कुण्डलादिनिर्णयोऽपि स्यादिति बोध्यम्। कार्यकारणयोर्वास्तविकमभेदं प्रतिषेधन्नुपसंहरति--तेनेति। तदेतत् सिद्धम् परिणामपरिणामिनोर्वस्तुतः कार्यकारणभाव एव नास्ति किन्तु परिणामित्वेनाभिमतमुपादानमेव विशेषावस्थामापन्नं कार्यमुच्यते नतु ततोऽन्यदिति यतो यदेव हि सुवर्णं पूर्वंकुन्डलमासीत तदेव पुनर्विनष्टमेकलोलीभावं यदाऽऽपद्यते तदा कुण्डलमिदमिति प्रत्ययोनोदेति उदेति च तदापि सुवर्णमित्येव प्रत्ययोऽतः कुण्डलादौ सुवर्णादिभेदो नास्ति किन्त्वविद्यया भेदस्य कल्पनामात्रमतो न व्यवहारानुपपत्तिः। ननूपादानातिरिक्तं यदि कार्यं नास्ति तदा कथं न तन्त्वाद्यवस्थायां प्रावरणादिकं कार्यं भवतीति चेन्न अवस्थाविशेषमापन्नस्यैवोपादानस्य प्रावरणादिकार्यजनकत्वात्, स एव चावस्थाविशेषोऽन्यैः कार्योऽभ्युपेयते सिद्धान्ते तूपादानमेव प्रदर्शितयुक्तेरिति। एतेन सिद्धान्ते समवायस्यानभ्युपगतत्वेन सन्घट इत्यादिप्रतीतौ जातिव्यक्त्योर्गुणगुणिप्रभृतीनांच स्वीकारात् तादात्म्यस्यैव तच्च तादात्म्यं भेदसमानाधिकरणाभेदरूपमेव स्वीकार्यम् नच तदपि संभवति उक्तयुक्तेरेवेति सिद्धान्तेऽप्ययं दोष इति परास्तम् प्रपञ्चस्य काल्पनिकत्वेन तत्र दूषणस्य भूषणत्वेनैव सर्वानुपपत्तिविरहादिति।

यदि हेमकुण्डलयोर्भेदाभेदौ नाङ्गीक्रियेयातां कथं तर्हि हेमकुण्डलयोः सामानाधिकरण्यम्, न ह्येतत् अत्यन्तभेदे नाप्यत्यन्ताभेदे च भवतीति पूर्वपक्षिणोक्तमनुवदति--कथं तर्हीति। अत्र 'इति चेत्' इत्यस्य अथानुवृती'त्यादितोऽव्यवहितप्राग्योजना कार्या। यदि हाटकात्कटककुण्डलादयो भेदाभेदावाश्रयेयुस्तदा तेष्वनुवृत्तहाटकादभेदान्नामी कटककुण्डलादयः परस्परं व्यावर्तेरन् न वा संशयजिज्ञासादयः समुदयेरन्निति मिथोविरोधाख्येन प्रतितर्केण दूष्यते भवदीयः सामानाधिकरण्यानुपपत्तिस्तर्क इत्याह सिद्धान्ती-अथेति। ऐकान्तिके आत्यन्तिके। अनैकान्तिके--भेदसमानाधिकरणे। निरस्तेपारमार्थिकभेदाभेदवादे 'अनैकान्तवादे' स्वपक्षे सामानाधिकरण्यव्यवहारमुपपादयति सिद्धान्ती-तस्मादिति। यदि विरोधादेकतरं बाध्यते तर्हि भेद एवास्तु कार्यकारणयोर्वा-

## प्रकाशः

स्तविकोऽभेद एवास्तु वाध्य इति वौद्धमतमाशङ्क्याह--न भेदोपादानेति। भेदो भवन् कस्माच्चित्कस्मिंश्चिद्भवतीति सर्वजनीनमतः प्रतियोग्यनुयोगिसापेक्षो घटादीनां भेदो न घटादिनिरपेक्षो भवितुमर्हतीति निश्चितम् । भिद्यमानश्च पटादिः प्रत्येकमेकमेव 'अभेद एव'। तत्र च न भेदो न वा तत्प्रतियोग्यादिरपेक्ष्यतेऽतोऽभेदोपादाना 'एकोपादाना' भवितुमर्हति भेदकल्पना न तु भेदमूलाऽभेदकल्पनेत्याह-भिद्यमानेति । एकाभावे घटादेरेकस्य 'अभेदस्य' अभावे तन्निष्ठस्य तत्प्रतियोगिकस्य वा पटादिभेदस्य स्वरूपालाभादभेदो भेदस्योपजीव्यः प्रयोजक इत्यर्थः । तदेतदुक्तं खण्डनकृद्भिः—

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा।
तथा चाद्ये प्रमा सा स्यान्नान्ते स्वापेक्ष्य वैशसात् ॥" इति।

अभेदम् एकं घटादिकम्, आद्ये भेदे स्वापेक्ष्यः स्वप्रयोजकोयोऽभेदस्तद्वैशसात् तद्विरोधादित्यर्थः। अभेदो न भेदाभावः किन्त्वेकः एकत्वं वेत्याशयेनाह--एकस्य चेति। तथा च स्वसत्तायां भेदस्याभेद सापेक्षत्वाद् भेद एवाभेदेऽभ्यस्त इत्यर्थः । प्रतीत्यापि भेदस्यैव प्रतियोगिरूपाभेदापेक्षेत्याह नायमिति। कारणस्यैव सत्यत्वे श्रुतिं प्रमाणयति--तथाचेति। सिद्धान्तो कारणे कार्यं कल्प्यते इति प्रकरणार्थमुपसंहरति-तस्मादिति। तथा च परिणामित्वे नित्यत्वं न सम्भवति परिणामस्य भिन्नाभिन्नत्वमपि न वास्तविकम प्रदर्शितयुक्तेः। परिणामस्य नाशे तदात्मना परिणामिनोऽपि नाशात्, तस्मात्परिणामिनित्यत्वपक्षो न साधीयान् किन्तु कूटस्थनित्यत्वपक्ष एवेत्यर्थः ।

## विकासः

न परिणामिनित्यतेति । अत एव केषाञ्चित्पदार्थानामविद्यापरिणामत्वं केषां च शुद्धब्रह्मपरिणामत्वमिति वल्लभाचार्याणां सिद्धान्तः पराहतः, अविद्यातत्कार्यातिरिक्तस्य परिणामित्वासम्भवात्, ब्रह्मणश्च निरवयवत्वान्निर्विकारत्वान्निर्धर्मकत्वान्निष्क्रियत्वात् कूटस्थनित्यत्वाच्चपरिणामासम्भवात्। अत एव नृसिंहतापनीयोपनिषदि-'सैषाऽविद्या जगत्सर्वम्' इत्युपक्रम्य तद्यथा-'वटबीजसामान्यमनेकान् स्वाव्यतिरिक्तान् वटान' इति पूर्वोपदर्शितश्रुतिरविशेषेणाशेषाणामेव जगतामविद्यापरिणामत्वमभिदधाति, अत एव च चिन्तामणिकल्पवृक्षादितो निसदृशस्यापि दुग्धादेरुत्पत्तिदर्शनान्निरुपादानिकापि भवतिसृष्टिरित्यपि तत्सिद्धान्तः पराहतः, उपदर्शितश्रुतिविरोधाद् युक्तिविरोधाच्च। अस्मत्सिद्धान्ते च तत्रत्यदुग्धादेरपि चिन्तामण्यादिसहकृताया अविद्याया एव साक्षात् परिणामोऽधस्तात्प्रदर्शितमेघमाला-

विकासः

ऽऽखण्डलधनुरादिवदिति सर्वमुपपद्यते । तस्मात् न कारणान्तरसापेक्षस्यापि ब्रह्मणः परिणामः सम्भवति नापि केवलस्यैव कारणान्तरनिरपेक्षस्य शुद्धस्य ब्रह्मणः परिणामो विनाशित्व-प्रसङ्गादिति प्रतिपादितमस्माभिरधस्तात् तस्मादाविद्यकत्वमेव श्रुतिस्मृत्यादिसिद्धं जगतो मन्तव्यम् नात आविर्भावस्याविर्भावपरम्परायामनवस्थाऽऽविर्भावस्योत्पत्तौ च क्षिमपराद्धं घटादिनेति प्रधानपरिणामवादिनः सांख्यान् प्रति नैयायिकाद्युद्भावितापत्तिः उत्पत्तेरुत्पत्तिपरम्परायामनवस्थेति आद्यक्षणसम्बन्धस्योत्पत्तेः घटादिरूपत्वे घटादेरदृश्य-त्वापत्तिः अतिरिक्तत्वेचानवस्थाति नैयायिकादीन् प्रति सांख्योद्भावितापत्तिश्च नैतत्प-क्षमालिङ्गति अघटितघटनापटीयस्या मायया सर्वदूषणगणग्रासात् तदुक्तमाचार्यमण्ड-नमिश्रैः नहि मायायां काचिदनुपपत्तिः अनुपपद्यमानार्थैव हि मायेति ।

शाङ्करभाष्यम्

नित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते। यथा पृथिव्यादि जगन्नित्यत्ववादिनाम्, यथा च सांख्यानां गुणाः । इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्व-व्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिः-

भामती

परिणामिनित्यतेति सिद्धम् । व्योमवदिति च दृष्टान्तः परसिद्धः, अ-स्मन्मते तस्यापि कार्यत्वेनानित्यत्वात् । अत्र च कूटस्थनित्यमिति निर्वर्त्यकर्मतामपाकरोति । सर्वव्यापीति प्राप्यकर्मताम् । सर्वविक्रि-यारहितमिति विकार्यकर्मताम् । निरवयवमिति संस्कार्यकर्मताम् ।

प्रकाशः

ननु 'एतस्मात्मन आकाशः सम्भूतः' इत्यादिश्रुतेः एकविज्ञानेन सर्व-विज्ञानश्रुतेश्चाकाशस्यानित्यत्वेन नित्यत्वे तस्य दृष्टान्तत्वमनुपपन्नमत आह-व्योमवदिति चेति । अत्रास्मन्मते इत्युक्तया सर्वशास्त्रतत्त्वज्ञानामप्येषामाचा-र्याणां वेदान्ते विशेष आदरोऽभिव्यक्तः ।

चतुर्धा कर्म भवति—प्राप्यं संस्कार्यं विकार्यं निर्वर्त्यं चेति । तत्र प्राप्यम्-ग्रामादिः, संस्कार्यम्—दर्पणादिः, विकार्यम्-दुग्धादिः, निर्वर्त्यम्-घटादिः । तदेतेष्वन्नैकमपि नेत्याह--कूटस्थनित्यमितीति । अनंशत्वात् धर्मरहितत्वात् ।

### शाङ्करभाष्यम्

स्वभावम् । यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतदशरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्. अन्यत्र भूताच्च भव्याच्च' (क० २।१४) इत्यादिश्रुतिभ्यः । अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता । तद्यदि कर्तव्यशेषत्वेनोपदि-

### भामती

व्रीहीणां खलु प्रोक्षणेन संस्काराख्योऽंशो यथा जन्यते, नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति अनवयवत्वात्, अनंशत्वादित्यर्थः । पुरुषार्थतामाह—नित्यतृप्तमिति । तृप्त्या दुःखरहितं सुखमुपलक्षयति । क्षुद्दुःखनिवृत्तिसहितं हि सुखं तृप्तिः । सुखं चाप्रतीयमानं न पुरुषार्थ इत्यत आह स्वयं ज्योतिरिति । तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य क्रियानिष्पाद्यस्य मोक्षस्यानित्यत्वं प्रसञ्जयति—तद्यदीति न चागमबाधः, आगमस्योक्तेन प्रकारेणोपपत्तेः ।

### प्रकाशः

एतेनानंशेऽपि ब्रह्मणि संस्कारः कर्मजन्योऽस्त्विति शङ्का पराहता निर्धर्मके तदसंभवात् । भाष्यस्थे—अन्यत्र धर्मादिति श्रुतिवाक्येऽन्यत्रेत्यस्यान्यदित्यर्थः । नेदं भाष्ये अतस्तद्ब्रह्मेति । तथा च कार्यविलक्षणानधिगतब्रह्मविषयलाभात् नेदं पूर्वमीमांसाशास्त्रविषयः पूर्वपक्षिमते तु वेदान्तस्यापि कार्यविषयत्वेन धर्मविषयत्वात् ।पृथक् शास्त्रारम्भणमयुक्तं स्यादिति भावः । पूर्वं मोक्षस्य नित्यत्वान्नियोगाविषयत्वमुक्तं सम्प्रति मोक्षसाधनज्ञानस्य केवलदृष्टार्थत्वादपि तदाह—तदेवमित्यादि । 'आत्मेत्येवमुपासीत' इत्यागमबाधमाशङ्क्य परिहरति—नचागमबाध इति । मोक्षस्य कृतकत्वेनानित्यत्वापादकमनुमानं तन्नित्यत्वप्रतिपादकागमाविरुद्धं साध्यं साधयितुं नार्हति वेदान्तानां हि सिद्धब्रह्मपरत्वमेव न विधिपरत्वं विधेयालाभादित्यादिपूर्वोक्तरीत्यैवोपपत्तौ प्रतिपत्तिविधिपरत्वमाश्रित्य यद्यत्कृतकं तदनित्यमिति न्यायबाधकल्पनस्यायुक्तत्वादित्याह उक्तप्रकारेणेति । पूर्वं फलस्य नित्यस्य मोक्ष-

शाङ्करभाष्यम्

श्येत तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपि च 'ब्रह्मवेद ब्रह्मैव भवति' (मु० ३।२।६), क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु० २।२।८), आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' (तै० २।६), अभयं वै जनक प्राप्तोऽसि' (बृ० ४।२।४) तदात्मानमेवावेदहं ब्रह्मास्मीति' 'तस्मात्तत्सर्वमभवत्' (बृ० १।४।१०), तत्र को मोहः कः शोक एकत्वमनुपश्यतः' ( ई० ७ ) इत्येवमाद्याः श्रुतयो ब्रह्म-

भामती

अपि च ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयस्यः श्रुतयो निवारिका इत्याह—अपि च ब्रह्म वेदेति । अविद्याद्वयप्रतिबन्धापनयमात्रेण च विद्याया मोक्षसाधनत्वं न स्वतो-

प्रकाशः

स्यैतादृक स्वभावो यन्नियोगाजन्यत्वमित्युपपाद्य फलिनो ज्ञानस्यापीदृक् स्वभावो येन मोक्षस्य नियोगापेक्षा न भवतीत्युच्यते भाष्यकृतेत्याह—अविद्याद्वयेति । पूर्वं पूर्वभ्रमजन्यः संस्कारो मूलाविद्या चाविद्याद्वयम् । न स्वत इत्यादि । न ब्रह्मस्वभावं मोक्षं प्रति विद्याया साक्षादपूर्वद्वारा वा जनकत्वमित्यर्थः ।

## शाङ्करभाष्यम्

विद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृ० १।४।१०) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणाय उदाहार्यम् । यथा तिष्ठन् गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं

## भामती

ऽपूर्वोत्पादेन चेत्यत्रापि श्रुतिमुदाहरति--त्वं हि नः पितेति । न केवलमस्मिन्नर्थे श्रुत्यादयः अपि त्वक्षपादाचार्यसूत्रमपि न्यायमूलमस्तीत्याह तथा चाचार्यप्रणीतमिति आचार्यश्चोक्तलक्षणः पुराणे-

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥ इति ।

तेन हि प्रणीतं सूत्रं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति । पाठापेक्षया कारणमुत्तरं कार्यं च

## विकासः

तेन हि प्रणीतमिति । अथैतत्प्रसङ्गात् किमपीतिवृत्तं लिख्यते । अयमाचार्यो गौतमो न्यायसूत्रकर्त्ता ब्रह्मर्षिः मिथिलामण्डलं मण्डयामास । सम्प्रत्यपि गौतमकुण्डोऽहिल्यास्थानं चोपलभ्यत एव । तदेतत् महाभारते वनपर्वणि मिथिलातीर्थयात्राप्रसङ्गे उल्लिखितमस्ति—

"आसीद्ब्रह्मपुरी नाम्नी मिथिलायां विराजिता ।
तस्यां विराजते नित्यं गौतमो नाम तापसः ॥
अहिल्या नाम तत्पत्नी पतिव्रता प्रियंवदा ।
सर्वलक्षण सम्पूर्णा आसीत्सर्वाङ्गसुन्दरी ॥"

इत्यादि । तदेतस्मात्सूत्रकारादारभ्याद्यापि न्यायादिनिखिलास्तिकदर्शनप्रणयनाध्ययनाध्यापन परम्परामक्षुण्णामाश्रयन्त्येव मैथिला(तीरभुक्तीया)इति । मध्येऽपि हि काले

## विकासः

न्यायादिदर्शनशास्त्राणां मिथिलायां प्रचुरप्रचारकारकाः संरक्षकाः ग्रन्थकर्त्तारश्च मण्डनमिश्र-वाचस्पतिमिश्र पार्थसारथिमिश्रोदयनाचार्य-गङ्गेशोपाध्याय-पक्षधरमिश्र प्रभृतयः प्रादुरभूवन्निति न तिरोहितमसारसंसारसारभूतसरस्वतीसमुपासकमण्डले । तत्र उदयनाचार्यः गोवर्धनाचार्य शिष्यः बलभद्राचार्यसतीर्थः ( तदुक्तम् आर्यासप्तशत्याम् गोवर्धनाचार्यैः 'उदयनबलभद्राभ्यां सप्तशतीशिष्यसोदराभ्यांमे' । द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य, इति) स चायम् उदयनाचार्यः काश्यपगोत्रः नोनीतिवारमूलको मैथिलब्राह्मणः आत्मतत्त्वविवेक किरणावली लक्षणावली कुसुमाञ्जल्यादिग्रन्थकारः करियोन 'कालीचन' ग्राममलंचकार, अस्मिन्नपि समये तस्मिन्ग्रामे आचार्यडीह नामकं किंचित्स्थानमापामरसाधारणं प्रसिद्धमस्ति तद्वंशजाश्च सम्प्रत्यपि आचार्योपनामका बहवो विद्यन्ते । तदेतत् हरिसिंहदेवेन मिथिलाधरातलनायकेन सपिण्डादिषु वैवाहिकसम्बन्धनिवारणार्थं शाके १२१७ सप्तदशाधिकद्वादशशते वर्षे राज्यशासनारूढेन सापिण्ड्यादिज्ञानार्थं निर्मापितो यो मैथिल ब्राह्मण ( वंशावली ) पञ्जीप्रबन्धः यत्र तत्कालीनाः सर्व एव मैथिलब्राह्मणाः स्वस्वपूर्वजानां सप्तपुरुषपर्यन्तानां नामान्युल्लेखयांबभूवुः थं च प्रबन्धमवलोक्य सापिण्ड्याभावं निश्चित्यैव वैवाहिकं कार्यं सम्प्रत्यपि सम्पादयन्ति तीरभुक्तीयाः 'मैथिलाः' तस्मिन्नपि पञ्जीप्रबन्धे उदयनाचार्यस्य नाम उल्लिखितमस्ति । भविष्यपुराणपरिशिष्टेऽपि—

अथ वक्ष्ये तृतीयस्य हरेरंशस्य धीमतः ।
उदयनाचार्यनाम्नस्तु माहात्म्यं लोमहर्षणम् ॥
भूत्वा स मिथिलायां तु शास्त्राण्यध्यैष्ट सर्वतः ।
विशेषतोन्यायशास्त्रे साक्षाद्वै गौतमोमुनिः ॥

इत्यादिकमस्ति तदेतदात्मतत्त्वभूमिकायां द्रष्टव्यम् ।

एवं गङ्गेशोपाध्यायः तत्त्वचिन्तामणिकारकः तदीयः पुत्रो वर्धमानोपाध्यायः न्यायकुसुमाञ्जल्यादिषु प्रकाशनामक टीकाकारः । अभिनववाचस्पतिमिश्रो विवादचिन्तामण्याद्येकचत्वारिंशद्ग्रन्थकारः तदुक्तं तैरेव 'शास्त्रे दश स्मृतौ त्रिंशन्निबन्धा येन यौवने । निर्मितास्तेन चरमे वयस्येषविनिर्ममे ॥' सचायं शंकरमिश्रजयदेवापरनामकपक्षधरमिश्रसमसमय आसीत् अतएव 'शंकरवाचस्पत्योः सदृशौ शंकरवाचस्पती एव । पक्षधरप्रतिपक्षी लक्ष्यीभूतो न च क्वापि' ॥ इति मैथिलैर्गीयमाना गाथा नाद्यापि विस्मृता । सचायं जयदेवः

---

पूर्व पत्रे १७ पङ्क्तौ त्रुटिरियम्—

"ततो गच्छेद् ब्रह्मर्षेर्गौतमस्य वनं प्रियम् ।
अहिल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम् ॥"

एवं स्कन्दपुराणे हिमवत्खण्डे—

## विकासः

आलोकप्रसन्नराघवचन्द्रालोकादिरचयिता दशसहस्रसंख्यकान् छात्रानध्यापयामास अत एवास्ति तत्समयकः श्लोकः 'अर्कपत्रमपि यत्र दुर्लभं रन्धनं भवति नेन्धनंविना । श्रीमगीरथगुणेन केवलं भौरगौरवकथागरीयसी ॥' इत्यादि । एतस्यैव च पक्षधरमिश्रस्यान्तेवासिनो रघुनाथशिरोमणि गौराङ्गमहाप्रभुवासुदेव सार्वभौमरघुनन्दनप्रभृतयो वङ्गदेशीयाः अग्रगण्याः विद्वांसः समभवन्निति विदन्ति न्यायाध्ययनाध्यापनरसिकाः । अयं च प्राचीनकालीनो नियमोमिथिलायामासीत् ये न्यायप्रधानाविद्वांसस्ते आचार्यशब्देनाभिधीयन्तेस्म ये च मीमांसाप्रधानास्ते भट्टशब्देनेति, अतश्च कुमारिलभट्टपादानामपि मैथिलत्वं बहुभिरुरीक्रियमाणं न विरुध्यते अत एव च तत्त्वबिन्दौ आचार्यवाचस्पतिमिश्राः तत्र तत्र 'अत्रभवन्तो-वार्तिककारमिश्राः, इति मिश्रशब्देनैनान् प्रत्यपीपदन् विद्यन्ते च भट्टपुरा भट्टसिमरिप्रभृतयो ग्रामाः सम्प्रत्यपीत्यलमतिप्रपञ्चेनेति विरम्यते ।

## भामती

पूर्वं, कारणापाये कार्यापायः, कफापाय इव कफोद्भवस्य ज्वरस्यापायः, जन्मापाये दुःखापायः, प्रवृत्त्यपाये जन्मापायः, दोषापाये प्रवृत्त्यपायः, मिथ्याज्ञानापाये दोषापायः मिथ्याज्ञानं चाविद्या, रागाद्युपजनितक्रमेण दृष्टेनैव संसारस्य परमं निदानम् । सा च तत्त्वज्ञानेन ब्रह्मात्मैकत्वविज्ञानेनावगतिपर्यन्तेन विरोधिना निवर्त्यते । ततोऽविद्यानिवृत्त्या ब्रह्मरूपाविर्भावो मोक्षः, न तु विद्याकार्यस्तज्जनितापूर्वकार्यो वेति सूत्रार्थः । तत्त्वज्ञानान्मिथ्याज्ञानापाय इत्येतावन्मात्रेण सूत्रोपन्यासो न त्वक्षपादसंमतं तत्त्वज्ञानमिह संमतम् । तदनेनाचार्यान्तरसंवादेनायमर्थो दृढीकृतः ॥

स्यादेतत्, नैकत्वविज्ञानं स्थितवस्तुविषयं, येन मिथ्याज्ञानं भेदावभासं निवर्तयन्न विधिविषयो भवेत्, अपि तु सम्पदादिरूपम्, तथा च विधेः प्रागप्राप्तं पुरुषेच्छया कर्त्तव्यं सद् विधिगोचरो भविष्यति, यथा वृत्त्यनन्तत्वेन मनसो विश्वेदेवसाम्याद् विश्वान् देवान् मनसि सम्पाद्य मन आलम्बनमविद्यमानसमं कृत्वा प्राधान्येन सम्पाद्यानां विश्वेषामेव देवानामनुचिन्तनं तेन चानन्तलोकप्राप्तिः, एवं चिद्रूपसाम्याज्जीवस्य ब्रह्मरूपतां सम्पाद्य जीवमालम्बनमविद्यमानसमं कृत्वा

## भामती

प्राधान्येन ब्रह्मानुचिन्तनं तेन चामृतत्वफलप्राप्तिः । अध्यासे त्वालम्बनस्यैव प्राधान्येनारोपिततद्भावस्यानुचिन्तनं, यथा 'मनो ब्रह्मेत्युपासीत 'आदित्यो ब्रह्मे'त्यादेशः' । एवं जीवमब्रह्म 'ब्रह्मेत्युपासीते'ति । क्रियाविशेषयोगाद्वा, यथा 'वायुर्वाव संवर्गः, प्राणो वाव संवर्गः', बाह्या खलु वायुदेवता वह्न्यादीन् संवृङ्क्ते, महाप्रलयसमये हि वायुर्वह्न्यादीन् (संवृज्य) संहृत्यात्मनि स्थापयति, यथाह द्रविडाचार्यः' संहरणाद्वा संवरणाद्वा सात्मीभावाद्वायुः संवर्ग' इति, अध्यात्मं च प्राणः संवर्ग इति, स हि सर्वाणि वागादीनि संवृङ्क्ते, प्रायणकाले हि स

### प्रकाशः

अत्रसूत्रे कार्यं दुःखं पूर्वमुक्तं तत्कारणं तु जन्म तत्पश्चात् एवं जन्म कार्यं पूर्वमुक्तं तत्कारणं तु प्रवृत्तिः तत्पश्चात् एवमग्रेऽपीत्याह पाठापेक्षयेति । उदाहृते न्यायसूत्रे दोषो रागादिः प्रवृत्तिः कर्म । नन्वक्षपादसम्मतं तत्त्वज्ञानं प्रमाणादिषोडशपदार्थज्ञानमेव तच्च न मोक्षहेतुरिति न तस्य दृष्टान्तत्वं युक्तमत आह—तत्त्वज्ञानादिति । उपासनं त्रिविधम् सम्पत् अध्यासः विशिष्टक्रियायोग निमित्तं च तत्र आलम्बनमविद्यमानसमं कृत्वा सम्पाद्यस्य 'आरोप्यस्य' वस्तुनः प्राधान्येनानुचिन्तनं प्रथमम् आरोपितब्रह्मादिभावस्यालम्बनस्य मन आदेः प्राधान्येनानुचिन्तनं द्वितीयम् एतदेव च प्रतीकोपासनमिति निगद्यते तृतीयं तु स्पष्टार्थकमेव तदेतेष्वेकतमोपासनपरा एव सन्तु वेदान्ताः न तु वास्तविकजीवब्रह्मात्मैक्यपरा इति शङ्कते—स्यादेतदिति । तथा च सम्पदादिरूपत्वे च । सम्पदुपासनमुदाहरति —यथेति । मनसो वृत्तयोऽनन्ताः विश्वेदेवाश्चानन्ता इत्युभयोरनन्तत्वसाम्येन मनसि विश्वेदेवत्वं सम्पाद्येत्यर्थः । उदाहृत्य प्रकृते घटयति—एवमिति । चिद्रूपसाम्यादिति भावप्रधानो निर्देशः जीवस्य चिद्रूपत्वं ब्रह्मणोऽपि चिद्रूपत्वमित्युभयोश्चिद्रूपत्वसाम्यमिति भावः । आरोपिततद्भावस्य आरोपितस्तद्भावो ब्रह्मादिभावो यस्य मन आदेः स तथा । अग्न्यादीनां प्रलयकाले संवरणात्स्वस्मिन् समावेशाद्वायोः सम्वर्गत्वम् एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरिति तृतीयमुपासनमाह—क्रियेति । वह्न्यादीनिति आदिपदाच्चन्द्रसूर्यादयः प्रत्येतव्याः । वागादीनीति । आदिपदाच्चक्षुरादीनि गृह्यन्ते ।

## भामती

एव सर्वाणीन्द्रियाणि संगृह्योत्क्रामतीति, सेयं संवर्गदृष्टिर्वायौ प्राणे च दशाशागतं जगद्दर्शयति यथा, एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति, तदेतेषु त्रिष्वपि पक्षेष्वात्मदर्शनोपासनादयः प्रधानकर्माण्यपूर्वविषयत्वात् स्तुतशस्त्रवत् ।

## प्रकाशः

सात्मीभावात् समानभावेन कारणरूपताप्राप्तेः । प्रायणकाले मरणकाले यद्यपि श्रुतौ स्वापे प्राणः संवर्ग उक्तस्तथापि न्यायसाम्याद्वयस्य चात्र प्रकृतत्वात् प्रायणमुदाहृतम् । दशाशागतम्—दशदिग्गतम् । बृंहणक्रियया देहादिपरिणमनक्रियया । आत्मदर्शनोपासनादयः दर्शनमत्र प्रमितिः । अत्रात्मोपासनेत्यपहाय आत्मदर्शनोपासनेति यदुक्तं तदात्मविषयकप्रमाणज्ञानं विधेयमिति मतमवलम्ब्येति बोध्यम्, 'तेनोपासनाविधिशङ्कावसरे दर्शनस्य प्रधानकर्मत्वकथनमसङ्गतमिति परास्तम्' आदिशब्देन च दृष्टान्ततया प्रदर्शित मनो ब्रह्मेत्याद्युपासनं परिगृह्यते । स्तुतशस्त्रवदिति 'आज्यैः स्तुवते, प्रउगं शंसति' इति स्तुतशस्त्रे समाम्नाते आज्यप्रउगशब्दौ स्तोत्रशस्त्रविशेषनामनी प्रगीतमन्त्रसाध्यं देवतादिगुणसम्बन्धाभिधानं स्तोत्रम् अप्रगीतमन्त्रसाध्यकं देवतादिगुणसम्बन्धाभिधानं शस्त्रम्, ते एते स्तोत्रशस्त्रे देवताप्रकाशनाख्यसंस्कारार्थत्वेन गुणकर्मणी उत स्वतन्त्रापूर्वार्थत्वेन प्रधानकर्मणी इति संशये गुणसम्बन्धाभिधानाद्गुणिन्या देवताया अभिधानेन याज्यावत्क्रतूपयोगिदेवतास्मरणस्य दृष्टत्वाद्देवतास्मरणरूपे गुणकर्मणी एव स्तोत्रशस्त्रे इति प्राप्तेऽयं सिद्धान्तः—स्तावकैर्गुणैः सम्बन्धकीर्त्तनं ष्टुञ् शंस् धात्वोर्वाच्योऽर्थः, लोके हि 'देवदत्तश्चतुर्वेदाभिज्ञ' इत्युक्ते स्तुतिः प्रतीयते तद्वाक्यस्य गुणसम्बन्धपरत्वात्, यदा तु देवदत्तस्वरूपपरता 'यश्चतुर्वेदी तमानय' इत्यादौ, न तदा तत्र स्तुतिः प्रतीयते तस्य चतुर्वेदसम्बन्धद्वारेण देवदत्तस्वरूपपरत्वेन गुणसम्बन्धपरत्वाभावात् । एवञ्च यैर्मन्त्रवाक्यैः स्तोत्रं शस्त्रं वा 'गुणसम्बन्धाभिधानं' करणीयं तानि मन्त्रवाक्यानि यदि गुणसम्बन्धाभिधानपराणि स्युः तदा स्तुतिः शस्त्रं च स्यात्, यदा तु गुणद्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः तदा तु न स्तुतिः स्यात् स्तुतिश्चात्र विहिता प्रतीयते 'आज्यैः स्तुवते, इत्युक्तत्वात्, अतो नात्र मन्त्रवाक्यानि देवतास्वरूपप्रकाशनपराणि किंतु गुणसम्बन्धाभिधानपराण्येवेति स्तुतशस्त्रयोः प्रधानकर्मत्वमास्थीयते । तत्र यथा दृष्टप्रयोजनाभावादपूर्वार्थकत्वम् एवमिहात्मोपासनं प्रधानकर्म आत्मा तच्छेषः गुण इति भावः ।

## शाङ्करभाष्यम्

तारयसि' (प्र० ६।८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य पारं तारयतु' (छा० ७।१।३) 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' (छा० ७।२६।२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्या० सू० १।१।२) इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति । न चेदं ब्रह्मात्मैकत्वविज्ञानं सम्पद्रूपम्,

## भामती

आत्मा तु द्रव्यं कर्मणि गुण इति, संस्कारो वाऽऽत्मनो दर्शनं विधीयते, यथा दर्शपूर्णमासप्रकरणे 'पत्न्यवेक्षितमाज्यं भवती'ति समाम्नातं, प्रकरणिना च गृहीतमुपांशुयाजाङ्गभूताज्यद्रव्यसंस्कारतयाऽवेक्षणं गुणकर्म विधीयते एवं कर्तृत्वेन क्रत्वङ्गभूते आत्मनि' आत्मा वा अरे द्रष्टव्य'इति दर्शनं गुणकर्म विधीयते, 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते' इति न्यायात्, अत आह—न चेदं ब्रह्मात्मैकत्वविज्ञानमिति । कुतः ?

## प्रकाशः

आत्मात्विति । आत्मा वस्तुतो द्रव्यरूपोऽपि ( कर्मणि ) उपासनादौ गुण एव, द्रव्यदेवतादेर्गुणत्वेन मीमांसकैः परिभाषितत्वात् कर्मण एव प्रधानत्वेन तत्साधनतया तद्विशेषणतया च प्राप्तानां द्रव्यदेवतादीनां गुणत्वस्याप्रधानत्वेन तत्साधनतया तद्विशेषणतया च प्राप्तानां द्रव्यदेवतादीनां गुणत्वस्याप्रधान- स्वरूपस्यैवाभ्युपगन्तुंयुक्तत्वात् । एवं चात्र आत्मोपासनं प्रधानकर्म आत्म-

प्रकाशः

दर्शनमात्मसंस्काररूपं गुणकर्म वा भवितुमर्हतीत्याह-संस्कारो वेति एतदेव स्पष्टीकरोति-यथेति पत्न्यवेक्षितमाज्यं भवती'त्यत्र पत्न्यवेक्षणेन क्रियाङ्गमाज्यं संस्क्रियते तथा 'अहं ब्रह्मास्मि' इत्युपासनया यागादिक्रियाङ्गं तत्त्वज्ञानाङ्गं वा कर्त्ता संस्क्रियते इति भावः। गृहीतमिति अवेक्षणमित्यग्रिमेणान्वेति। ग्रहणे हेतुमाह उपांश्विति। उपांशुयागस्याङ्गभूतं यदाज्यद्रव्यं तत्संस्कारतया। द्रव्यसंस्कारस्य गुणकर्मत्वे जैमिनीयं सूत्रमुदाहरति-यैस्त्विति यैरवघातादिभिर्द्रव्यं चिकीर्ष्यते संस्कर्त्तुमिष्यते तत्र द्रव्ये गुणभूतं कर्म प्रतीयते इत्यर्थः।

शाङ्करभाष्यम्

यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति. (बृ० ३।१।६ ) इति। न चाध्यासरूपम्, यथा 'मनो ब्रह्मेत्युपासीत' ( छा० ३।१८।१ ) आदित्यो ब्रह्मेत्यादेशः' ( छा० ३।१९।१ ) इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः। नापि विशिष्टक्रियायोगनिमित्तम्, 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' ( छा० ४।३।१ ) इतिवत्। नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम्, संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' (छा०

भामती

सम्पदादिरूपे हि ब्रह्मात्मैकत्वविज्ञान इति। दर्शपूर्णमासप्रकरणे हि समाम्नातमाज्यावेक्षणं तदङ्गभूताज्यसंस्कार इति युज्यते। न च आत्मा वा अरे द्रष्टव्य' इत्यादि कस्यचित् प्रकरणे समाम्नातम्। न चानारभ्याधीतमपि, 'यस्य पर्णमयी जुहूर्भवती'त्यव्यभिचरितक्रतुसम्बन्धजुहूद्वारेण जुहूपदं क्रतुं स्मारयद्वाक्येन यथा पर्णतायाः क्रतुशेषभावमापादयति, एवमात्मा नाऽव्यभिचरितक्रतुसम्बन्धो येन तद्दर्शनं

## शाङ्करभाष्यम्

६।८।७) 'अहं ब्रह्मास्मि' (बृ० १।४।१०) 'अयमात्मा ब्रह्म' (बृ० २।५।१६) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' (मुं० २।२।८) इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्। 'ब्रह्म वेद ब्रह्मैव भवति' इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिपक्षे न सामञ्जस्येनोपपद्येरन्। तस्मान्न सम्पदादिरूपं ब्रह्मा-

### विकासः

भाष्ये—तस्मान्न सम्पदादिरूपमिति । अत्र सम्पदाद्युपासनवादी प्रष्टव्यः । किं प्रमाणान्तरविरोधात्सम्पदादिपरः पदसमन्वयो भवदभिमतः किं वा स्वार्थे तात्पर्याभावादिति ? न तावत्प्रमाणान्तरविरोधः जीवब्रह्मणोः प्रमाणान्तरागोचरत्वात्, भेदावभासस्य च बिम्बप्रतिबिम्बन्यायावतारात् अवच्छेदन्यायावताराद्वा उपपादनात् । नच तात्पर्याभावोऽपि, तात्पर्यनिर्णायकस्यार्थवादस्य तत्र तत्र विद्यमानत्वात् तथाहि—तत्त्वमसीति नवकृत्वोऽभ्यस्तस्य ऐकात्म्यस्य सिद्धये 'अनेन जीवेनात्मनानुप्रविश्य' इत्यस्त्यर्थवादः। 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षयलोका भवन्ति' इति भेददर्शनं च निन्द्यते, तथा 'अहं ब्रह्माऽस्मि' इत्यस्य 'स एष इह प्रविष्ट' इत्यादिरर्थवादः । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः, इत्यादिभेदप्रतिषेधश्च, तथा 'एष त आत्मा' इति बहुकृत्वोऽभ्यस्तस्य नान्योऽतोऽस्ति द्रष्टेत्यादिः भेदापवादः 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इत्यस्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यर्थवादः' तथा 'यदेतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति' इति भेद दर्शनापवादः' तथा 'एतमेव पुरुषं ब्रह्म ततमपश्यत्' इत्यस्य 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत इत्यर्थवादः; तदेवं सर्वे वेदान्तेषु तत्र तत्र भेददर्शनापवादेन जीवब्रह्मात्मैकत्वं प्रतिपाद्यमानं तात्पर्यहीनमिति न युक्तं वक्तुमिति । किं चाविद्यानिवृत्तिर्ब्रह्मात्मभावश्च विद्याफलं श्रूयते न च सम्पदादिरूपे तदुपपद्यते अतः फलवचन सामर्थ्यादपि ब्रह्मात्मैकत्वपरः पदसमन्वयोऽभ्युपगन्तव्य भिन्नयोर्जीवब्रह्मणोरेकत्वासम्भवात् एकतरस्योभयोर्वा नाशप्रसङ्गस्यास्माभिः पूर्वमुपपादितत्वात् इति ।

## शाङ्करभाष्यम्

त्मैकत्वविज्ञानम् । अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या। किं तर्हि ? प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रा। एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद् युक्त्या शक्यः

## भामती

क्रत्वङ्गं सदात्मानं क्रत्वर्थं संस्कुर्यात् । तेन यद्ययं विधिस्तथापि 'सुवर्णं भार्यमि'तिवद् विनियोगभङ्गेन प्रधानकर्मैवापूर्वविषयत्वान्न गुणकर्मेति स्थवीयस्तयैतद्दूषणमनभिधाय सर्वपक्षसाधारणं दूषणमुक्तम् । तदतिरोहितार्थतया न व्याख्यातम् । किञ्च ज्ञानक्रियाविषयत्वविधानमस्य

## प्रकाशः

आत्मोपासनादेः प्रकरणात् संस्कारकर्मत्वमुच्यते भवता वाक्याद्वा? इति विकल्प्य दृष्टान्तवैषम्यपूर्वकमाद्यं निराचष्टे--दर्शपूर्णमासप्रकरणे हीति। न द्वितीय इत्याह--नचानारभ्याधीतमिति । अप्रकरणपठितमनारभ्याधीतमित्युच्यते पूर्वमीमांसायामङ्गाङ्गिभाव प्रयोजकानि षट् प्रमाणानि परिभाषितानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि तत्र निरपेक्षोरवः श्रुतिरिति लिङ्गाद्यनपेक्षः शब्द इति तदर्थः सामर्थ्यं लिङ्गम् समभिव्याहारो वाक्यम् उभयाकाङ्क्षा प्रकरणम् स्थानम् क्रमः एकतराकाङ्क्षेतियावत् समाख्या यौगिकः शब्द इति उदाहरणानि त्वेषां पूर्वमीमांसायां प्रपञ्चितानीह विस्तरभयात्परित्यज्यन्ते। एवमिति नकारोऽनुषज्यते । एवमात्मा विगलितसमस्तोपाधिरखण्डसच्चिदानन्दो नाव्यभिचरितक्रतुसम्बन्धः एतादृशस्यात्मनः क्रतुसम्बधासंभवात् । यद्ययमिति । विधित्वाभावस्तु पूर्वंनिराकृत एवेति भावः ।

सुवर्णं भार्यमितिवदिति । 'तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति' इत्यस्त्यनारभ्याधीतं वाक्यम् । तत्रैतद्वाक्यविहितं शोभनवर्णं हिरण्यधारणं क्रत्वङ्गम् उत प्रधानकर्म ( पुरुषधर्मः स्वतन्त्रफलकम् ) इति संशये, क्रत्वङ्गत्वे क्रतुफलेनैव फलवत्त्वात् स्वतन्त्रफलकल्पनाया अभावेन क्रत्वङ्गत्वमेव लाघवाद्युज्यत इति पूर्वपक्षे, हिरण्यधारणस्याव्यभिचरितक्रतुसम्बन्धाभावात् न क्रत्वङ्गत्वमपि तु हिरण्यसाधनकं धारणं प्रधानकर्मैव 'दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति वाक्यशेषावगतशत्रुदौर्वण्यमेव चास्य फलमिति व्यव-

## शाङ्करभाष्यम्

कार्यानुप्रवेशः कल्पयितुम् । न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथोऽविदितादधि' ( के० १।३ ) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' ( बृ० २।४।१३ ) इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उप-

## भामती

बहुश्रुतिविरुद्धमित्याह—न च विदिक्रियेति । शङ्कते अविषयत्व इति । ततश्च शान्तिकर्मणि वेतालोदय इति भावः । निराकरोति न

## प्रकाशः

स्थापितं पूर्वतन्त्रे ( जै० अ० ३ पा० ४ सू० २७ ) । एवमत्रामृतत्वफलकमात्मदर्शनं प्रधानकर्मैव स्यादित्यर्थः । अपूर्वविषयत्वात् । अपूर्वजनकत्वात् तत् दूषणम् । अतिरोहितार्थतया स्पष्टार्थतया । भाष्ये—अन्यदेव तद्विदितादिति तद् ब्रह्म विदितात् ज्ञानविषयादन्यदेव ज्ञातुर्ज्ञानक्रियया यद्भाति तत् विदितमित्युच्यते यथा घटपटादिकार्यजातम् यत्तु ज्ञानक्रियया न ज्ञातुर्भाति तदविदितमित्युच्यते, यथा परोक्षं कारणम्, भवति हि घटादिकार्यं पश्यन्तं प्रति केनेदं रचितमिति प्रश्ने कार्यमात्रमेतज्जानामि कारणं तु न जानामीति प्रत्युत्तरम् । एवमत्र कारणं परोक्षमव्याकृतमिहाविदितमित्युच्यते तस्मादपि ब्रह्म अधि—उपरि अन्यदेवेत्यर्थः । येनेदं सर्वमित्यादि येन प्रमात्रा इदं सर्वं वस्तु विजानाति लोकः तम् केन करणेन विजानीयात् करणस्य ज्ञेयविषयत्वात प्रमातरि वृत्त्यनुपपत्तेः तस्मात् प्रमाताऽपि न ज्ञेयः किन्तु साक्षीत्यर्थः । ननु मा भूद् विदिक्रियाकर्मत्वमुपास्तिक्रियाकर्मत्वं तु स्यादत आह भाष्ये—तथोपास्तिक्रियेति । यद्वाचानभ्युदितमिति यत् 'वाचा' शब्देन अनभ्युदितम् अप्रकाशितम्, येन ब्रह्मणा वागभ्युद्यते प्रकाश्यते 'तदेव ब्रह्मत्वं विद्धि' तदेवात्मभूतं प्रमातृत्वादिकल्पनामपोह्य-

## शाङ्करभाष्यम्

न्यस्य 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (के० १।४) इति। अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत्, न; अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। नहि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति।

## भामती

कुतः? अविद्याकल्पितभेदनिवृत्तिविषयत्वादिति। सर्वमेव हि वाक्यं नेदन्तया वस्तुभेदं बोधयितुमर्हति, नहीक्षुक्षीरगुडादीनां मधुररसभेदः शक्य आख्यातुम्। एवमन्यत्रापि सर्वत्र द्रष्टव्यम्। तेन प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी शब्दस्य, तदा कैव कथा

## प्रकाशः

त्येवकारार्थः ब्रह्म त्वं विद्धि हे शिष्य! यत 'इदम्' उपाधिविशिष्टं देवतादिकमुपासते जना इदं त्वं ब्रह्म न विद्धीति। शान्ति कर्मणीति, साधारणपिशाचनिवृत्त्यर्थं क्रियमाणे शान्तिकर्मणि प्रबलवेतालोदयस्येव ब्रह्मणो विषयत्वं निराकुर्वता भवता तस्य शास्त्रप्रमाणकत्वभङ्ग एव साधित इत्यर्थः। भाष्ये–अविद्याकल्पितेति। अविषयतया स्वतः सिद्धमेकरूपमपि ब्रह्म अविद्याकल्पितेन भेदेन भिन्नमिवास्ति शास्त्रं तु तत्रान्तःकरणवृत्तिं शाब्दात्मिकामुत्पादयति तदभ्यासाहितदृढतरसंस्कारपरिपाकसहितान्तःकरणकरणकजायमाना निर्विकल्पसाक्षात्कारात्मिका वृत्तिरविद्याकल्पितनिखिलभेदप्रपञ्चं समूलमुन्मूलयन्ती स्वयमपि निवर्तते, इत्थञ्च शास्त्रजन्यान्तःकरणवृत्तिविशेषविषयत्वेन सहाविद्यकसम्बन्धमादाय शास्त्रप्रमाणकं ब्रह्मोच्यते। वाङ्मनसागोचरत्वश्रुतिस्तु चक्षुरादिप्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यविषयत्वरूपफलव्याप्यत्वलक्षणकर्मत्वप्रतिक्षेपपरा निर्विशेषब्रह्मपरा वेति भवत्युभयोरुपपत्तिरिति। न केवलमिक्षुक्षीरादिरसविशेष एवानभिधेयः प्रतीयतेऽपि तु सर्व एव वाक्यार्थ ईदृशः, नीलो घट इत्यादिवाक्यमपि हि यादृशं नैल्यं यादृशश्च घटः न तादृक् स्वरूपं प्रत्याययितुमर्हति एवं ब्रह्मापि

## शाङ्करभाष्यम्

किं तर्हि ? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्या-कल्पितं वेद्यवेदितृ-वेदनादिभेदमपनयति । तथा च

## भामती

प्रत्यगात्मन्यलौकिके। अदूरविप्रकर्षेण तु कथंचित्प्रतिपादनमिहापि सामानम् । त्वंपदार्थो हि प्रमाता प्रमाणाधीनया प्रमित्या प्रमेयं घटादि व्याप्नोतीत्यविद्याविलसितम् । तदस्याविषयीभूतोदासीनतत्पदार्थप्रत्य-गात्म सामानाधिकरण्येन प्रमातृत्वाभावात् तन्निवृत्तौ प्रमाणादयस्तिस्रो विधा निवर्तन्ते । नहि पक्तुरवस्तुत्वे पाक्यपाकपचनानि वस्तुसन्ति भवितुमर्हन्तीति । तथाहि—

## प्रकाशः

अनभिधेयं प्रतीयते इत्याह—एवमिति। अदूरविप्रकर्षेणेति । साक्षादनभिधा-नादस्ति विप्रकर्षः, सचादूरोऽप्यस्ति वाचः, गवादिशब्दाभिधेयगोत्वादिधर्म-तादात्म्येन व्यक्तिविशेषस्य लक्षणया प्रतिपादकत्वादिति । दृश्यते चागृहीतस-ङ्गतिकेनापि कोलाहलादिशब्देन सुप्तस्य प्रबोधः । तदेतदुक्तं वार्तिककारैः—

"अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्तौ बोधिताः परैः ॥
जाग्रद्वन्न ततः शब्दं सुषुप्ते वेत्ति कश्चन ।
ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्माऽस्मीति भवेत्फलम् ॥"

तदेतद् ब्रह्मण्यपि समानमिति । प्रत्यगात्मत्वेनाविषयतया प्रतिपाद-यदिति भाष्यं विवृण्वन् अदूरविप्रकर्षेण वस्तुबोधकत्वं वेदान्तानामुपपादयति-त्वं पदार्थो हीति । तत्त्वमसीत्यत्र त्वं पदार्थः प्रमाता अन्तःकरणावच्छिन्नं चैतन्यं जीवः । व्याप्नोति यत् तत्, अविद्याविलसितम् अविद्याकार्यम् । तदिति यस्मात्प्रमातृत्वादिकं सर्वमविद्याविलसितं तस्मादित्यर्थः, तस्मिन् सतोति वार्थः । अस्य जीवस्य प्रमातृत्वाभावादित्यनेन सम्बन्धः । अविषयी-भूतोदासीनपदार्थस्य प्रत्यगात्मनः त्वं पदार्थस्य च तत्त्वमसीति सामानाधिकर-ण्येन हेतुना अस्य जीवस्य वस्तुतः प्रमातृत्वाभावात् काल्पनिकस्य च प्रमातृत्वस्य ऐक्यज्ञानेन निवृत्तौ प्रमाणं प्रमेयं प्रमितिश्चेति तिस्रो विधाः प्रकाराः निवर्त्तन्ते ।

## विकासः

तिस्रो विधा निवर्त्तन्त इति । यदत्र द्वैतवादिभिर्दुराग्रहगृहीतमतिभिः श्रुतिस्मृतिप्रथितमिथ्याभावस्य जगतः पारमार्थिकत्वस्थापनव्यग्रबुद्धिभिः तस्य त्वंतत्त्वमिति षष्ठीसमासं परिकल्प्य न तत्त्वमसीतिवाक्यमभेदं प्रतिपिपादयिषतीत्युच्यते तन्न युक्तम् 'तत्त्वमेव त्वमेव तत्' इति कैवल्योपनिषदि त्वमेव तदित्यत्र समासासम्भवात्, तस्मात्तत्त्वमसीतिवाक्याज्जीवब्रह्मणोरभेद एव प्रत्याय्यत इति । ननु तत्पदार्थः सर्वज्ञत्वविशिष्टचैतन्यम्, त्वं पदार्थश्चाल्पज्ञत्वादिविशिष्टचैतन्यमित्यनयोर्विरुद्धविशेषणाक्रान्ततया कथमभेदान्वय इति चेदत्रायं भाष्यकृदादीनां सर्वेषामद्वैतमभ्युपगन्यमानानां सिद्धान्तः यद्यपि तत्त्वं पदाभ्यां विशिष्टं चैतन्यमुपस्थाप्यते तथापि विशेषणांशं परित्यज्य केवलचैतन्यमात्रे पदयोर्भागत्यागलक्षणया चैतन्यमात्रविषयको निर्विकल्पको बोधो जायते स एवात्राभेदान्वयबोध इत्युदीर्यते इति । न चैकस्यैव पदस्य लक्षणयापि विरोधो भज्यत एवेति पदद्वयस्य लक्षणा न युक्तेति वाच्यम्, तावताऽपि हि निर्विकल्पकबोधस्यालाभात्तस्यैव च शुद्धब्रह्मावरकाज्ञाननिवर्त्तकत्वात् ज्ञानाज्ञानयोः समानविषयकयोरेव निवर्त्य निवर्त्यकभावात् । तस्मात् पदद्वये लक्षणा आवश्यकीति मन्तव्यम् ।

यत्तु वेदान्तपरिभाषाकृता "तत्त्वमसि' इत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेऽपि न लक्षणा, शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थापितयोरेवान्वयबोधाविरोधः, यथा 'घटोऽनित्य' इत्यत्र घटपदवाच्यैकदेशघटत्वस्यानित्यत्वान्वयायोग्यत्वेऽपि योग्यघटव्यक्तया शक्त्युपस्थापितया सहानित्यत्वान्वयः 'यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिस्तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाऽभ्युपगम्यते अत एव नित्यो घटः इत्यत्र घटपदाद् घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे भवति लक्षणा । एवमेव तत्त्वमस्यादिवाक्येऽपि न लक्षणा, शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभावात् अन्यथा 'गेहे घटः' घटे रूपम्, घटमानय' इत्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वं लक्षणयैव स्यात्, तस्मात् तत्त्वमसीतिवाक्ये आचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या" इत्युक्तं तदत्यन्तमसमञ्जसम्–यदि हि विशिष्टवाचकानां पदानां विशेष्यमात्रपरत्वं लक्षणाग्रहमन्तरेणैव स्यात् स्यात्तदा ध्वंसपदस्य उत्पत्तिमदभाववाचकस्याभावमात्रेऽपि मुख्यप्रयोगापत्त्या घटात्यन्ताभाववत्यपि 'अत्र घटो ध्वस्त' इत्यादिप्रयोगापत्तिरनिवार्या । एवं पश्वादिपदवाच्यस्य लोमवल्लाङ्गूलविशिष्टस्य योऽयं विशेषणांशो लोमेति तस्य मूषके बाधिततयाऽयोग्यतया विशिष्टान्वयनिरहेऽपि लाङ्गूलस्य विशेष्यस्य मूषकेऽपि सत्वात् 'मूषकः पशुः' इत्यादिवाक्यस्य प्रामाण्यापत्त्या विशेषणांशस्याव्यावर्त्तकतया विशिष्टशक्तिस्वीकारः सर्वत्रोच्छिद्येत, तस्माद्विशिष्टवाचकपदानां विशेष्यमात्रपरत्वमपि लक्षणयैव सम्पादनीयम् ।

## विकासः

यदपि 'गेहे घटः, घटे रूपम्' इत्यादौ गेहत्वघटत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वं लक्षणयैव स्यादिति तेन प्रतिपादितं तदपि तुच्छम् तत्र घटादिपदानां विशेष्यमात्रपरत्वस्यानावश्यकत्वात् गृहत्वविशिष्टघटत्वविशिष्टयो रूपत्वविशिष्टघटत्वविशिष्टयोश्च विरुद्धत्वं न कस्यचिद्विपश्चितोऽनुभवपथमारूढं येन तत्रापि लक्षणाऽपेद्येत घटत्वरहिते हि तस्मिन् रूपान्वयं तु न कश्चिदभ्युपैति । सर्वज्ञत्वाल्पज्ञत्वयोर्विरोधस्तु सर्वेषामनुभवपथमारोहत्येवेति योग्यताविरहान्न विशिष्टयोरन्वयबोधः सम्भवति अतोऽत्र युक्तैव लक्षणा, अत एव देवीभागवतेऽपि तत्त्वमसीत्यत्र भागत्यागलक्षणा प्रदर्शिता व्यासेन । अत एव च शिवस्य ध्याने 'तत्त्वमस्यादिलक्ष्यम्' इत्यभिहितम् । अत एव च व्युत्पत्तिवादे द्वितीयायाम्—अधः संयोगावच्छिन्नव्यापारवाचकस्य पत् धातोः संयोगावच्छिन्नव्यापारे परित्यक्तैकदेशे लक्षणा प्रतिपादिता गदाधरभट्टाचार्यैः, अस्माभिश्च तदीयप्रकाशटीकायां तत्र सर्वं व्युत्पादि, तदेतत्सिद्धं तत्त्वमसीत्यादौ भागत्यागलक्षणा सर्वथैवोचितेति ।

## भामती

विगलितपराग्वृत्त्यर्थत्वं पदस्य तदस्तदा
त्वमिति हि पदेनैकार्थत्वे त्वमित्यपि यत्पदम् ।
तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मतां
त्यजति सकलान् कर्तृत्वादीन् पदार्थमलान्निजान् ॥

### प्रकाशः

विगलितेति । विगलिता पराक्त्वेन वृत्तिर्वर्त्तनं यस्य स विगलिरागृपत वृत्तिः पराक्त्वरहितः प्रत्यक्त्वमापन्नः सोऽर्थो यस्य पदस्य तद्विगलितपराग्वृत्त्यर्थं तस्य भावस्तत्त्वम् । तदः पदस्य तत्त्वमसीत्यत्र तत्पदस्य । तदा तस्मिन् काले भवति, कदेत्यत आह—त्वमिति हीति । त्वमितिपदेनैकार्थत्वे सति, त्वमित्यपि यत्पदं तदपि तदा तत्पदेनैकार्थ्यम् एकार्थत्वं गत्वा प्राप्य । ऐकार्थ्यं विनिनष्टि—विशुद्धेति तथा च विशुद्धचिदात्मार्थत्वलक्षणमैकार्थ्यं प्राप्य किं करोतीत्यत आह—सकलान् कर्तृत्वादीन् पदार्थमलान् त्यजतीति । आन्तरश्लोकः मध्यश्लोकः प्रसङ्गागतविचारेऽयमपि श्लोकः संवादतयाऽऽयाती-

## शाङ्करभाष्यम्

शास्त्रम्—'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्' ( के० २।३ ), 'न दृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातेर्विज्ञातारं विजानीयाः' (बृ०३।४।२) इति चैवमादि। अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः। यस्य तूत्पाद्यो मोक्षस्तस्य मानसं वाचिकं कायिकं वा कार्यम-

### प्रकाशः

त्यर्थः। तत्रैवार्थे ब्रह्मणोऽविषयत्वे। यस्यामतमिति भाष्योक्तश्रुतेरयमर्थः— यस्य पुंसः अमतम् ज्ञानाविषयो ब्रह्म इति निश्चयः तस्य पुंसः तद्ब्रह्म मतम् सम्यग् ज्ञातम्, तदन्तःकरणेऽखण्डानन्दरूपेण प्रकटितम्। यस्य तस्येत्यत्र कर्त्तरि षष्ठ्यौ एवमग्रेऽपि। यस्य पुनर्ब्रह्म मतम् विषयतया ब्रह्मनिश्चयः, स न वेद यतः ब्रह्मज्ञानयोर्भेदज्ञानदशायामेव ब्रह्मणो ज्ञानविषयत्वनिश्चयः स्यात्, ज्ञानमेव च ब्रह्म, न च स्वस्य स्वविषयत्वं सम्भवतीत्युक्त निश्चयो भ्रम एवेति साधूक्तम्—'मतं यस्य न वेद स इति'। 'अविज्ञातं विजानतां' इति विजानतां विविधप्रमातृप्रमाणप्रमेयज्ञानवतामविदुषाम् अविज्ञातम् अविदितम् ब्रह्म। अविजानतां विविधप्रमात्रादि भेदज्ञानरहितानां विदुषां विज्ञातम् विशेषेण ज्ञातम्, देशतः कालतो वस्तुतश्च त्रिविधपरिच्छेदशून्यब्रह्माहमस्मीति निश्चितमित्यर्थः। न दृष्टेर्द्रष्टारमिति, दृष्टेः चक्षुर्जन्यायाः वृत्तेः द्रष्टारं प्रकाशकं न पश्येः। न विज्ञातेरिति विज्ञातेर्बुद्धिधर्मस्य निश्चयस्य विज्ञातारं भासकमनया विज्ञात्या दृश्यया न विजानीथा इत्यर्थः। भाष्ये—न मोक्षस्यानित्यतादोष इति अविद्यानिवृत्त्युपलक्षितमात्मस्वरूपमेव मोक्षः, आत्मा च नित्य एवेति नानित्यतादोषः सिद्धान्ते जीवो हि सच्चिदानन्दब्रह्मरूपतया सर्वदैव मुक्तः ब्रह्मैव सन् ब्रह्माप्येतीत्यादिश्रुतेः केवलमविद्यावशादन्तःकरणतादात्म्याध्यासेन दुःखादिकं तत्राध्यस्यते न तु तत्परमार्थतोऽस्ति यथा रज्जौ सर्पादिकं न कदाचिदस्ति केवलमध्यस्यत एव तथेत्यर्थः। भाष्ये—यस्यतूत्पाद्योमोक्ष इति उत्पाद्यं निर्वर्त्त्यमित्यनर्थान्तरम्।

## शाङ्करभाष्यम्

पेक्षत इति युक्तम् । तथा विकार्यत्वे च । तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादि विकार्यम् उत्पाद्यं

## भामती

इत्यान्तरश्लोकः । अत्रैवार्थे श्रुतीरुदाहरति—तथा च शास्त्रं यस्यामतमिति । प्रकृतमुपसंहरति अतोऽविद्याकल्पितेति । परपक्षे मोक्षस्यानित्यतामापादयति यस्य त्विति । कार्यमपूर्वं यागादिव्यापारजन्यं तदपेक्षते मोक्षः स्वोत्पत्ताविति । तयोः पक्षयोरिति । निर्वर्त्यविकार्ययोः । क्षणिकं ज्ञानमात्मेति बौद्धाः । तथा च विशुद्धविज्ञानोत्पादो मोक्ष इति निर्वर्त्यो मोक्षः । अन्येषां तु संसाररूपावस्थामपहाय या कैवल्यावस्थावाप्तिरात्मनः स मोक्ष इति विकार्यो मोक्षः ।

## प्रकाशः

शून्यं शून्यमित्यादिप्रदर्शितभावनाप्रचयसञ्जातनिखिलवासनोच्छेदनिर्मुष्टविविधविषयाकारोपप्लवविशुद्धविज्ञानस्वरूपो मोक्ष इति बौद्धा मन्यन्ते, परमार्थतः संसार्येव जीवो भगवदुपासनयाऽसंसारिस्वरूपेण विक्रियते स च मोक्षोऽविनाशीति वैष्णवा मन्यन्ते । तत्र प्रथमपक्षे उत्पाद्यत्वम्, द्वितीयपक्षे च विकार्यत्वमायातम्, तदेतयोः पक्षयोरनित्यत्वं भाष्यकृदभिमतमिति दर्शयन् विवृणोति—कार्यमपूर्वमिति । यद्यपि बौद्धानां मते यागादिजन्यमपूर्वं नापेक्षते मोक्षः स्वोत्पत्तौ तथापि शून्यं शून्यमित्यादिभावनाप्रचयजन्यसंस्कारेण मोक्षो जन्यत इति तैः स्वीक्रियत इति तन्मतेऽपि भावनात्मकमानसव्यापारजन्यं संस्कारमपेक्षत एव मोक्षः, अत एव यागादीत्यत्रादिपदमुपात्तम्, अपूर्वपदञ्च यागभावनादिव्यापारजन्यपरमिति सर्वमुपपन्नम् । अत्र कार्यमपूर्वं यागादिव्यापारजन्यमिति कल्पतरोराभोगटीकायां भामतीपाठोऽत्यन्तंमनोहरः बौद्धैर्हि यागादिजन्यस्यापूर्वस्य मोक्षसाधनत्वानङ्गीकर्तृभिरपि यागादिव्यापारजन्यस्य संस्कारस्यापूर्वस्य मोक्षेऽपेक्षणमुपगम्यत एवेत्यवगन्तव्यम् । अन्येषाम् वैष्ण-

## शाङ्करभाष्यम्

वा घटादि नित्यं दृष्टं लोके । न चाऽऽप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात् सर्वेण ब्रह्मणः आकाशस्येव । नापि संस्कार्यो मोक्षः,

## भामती

यथा पयसः पूर्वावस्थापहानेनावस्थान्तरप्राप्तिर्विकारो दधीति । तदेतयोः पक्षयोरनित्यता मोक्षस्य, कार्यत्वाद् दधिघटादिवत् । अथ 'यदतः परो दिवो ज्योतिर्दीप्यत' इति श्रुतेर्ब्रह्मणो विकृताविकृतदेशभेदावगमादविकृतदेशब्रह्मप्राप्तिरुपासनादिविधिकार्या भविष्यति, तथा च प्राप्यकर्मता ब्रह्मण इत्यत आह—न चाप्यत्वेनापीति । अन्यदन्येन विकृतदेशपरिहाण्याऽविकृतदेशं प्राप्यते । तद्यथोपवेलं जलधिरतिबहलचपलकल्लोलमालापरस्परास्फालनसमुल्लसत्फेनपुञ्जस्तबकतया विकृतो, मध्ये तु प्रशान्तसकलकल्लोलोपसर्गः स्वस्थः स्थिरतयाऽविकृतस्तस्य मध्यमविकृतं पौतिकः पोतेन प्राप्नोति । जीवस्तु ब्रह्म वेति किं केन प्राप्यतां, भेदाश्रयत्वात् प्राप्तेरित्यर्थः । अथ जीवो ब्रह्मणो भिन्नस्तथापि न तेन ब्रह्माप्यते, ब्रह्मणो विभुत्वेन नित्यप्राप्तत्वादित्याह—स्वरूपव्यतिरिक्तत्वेपीति । संस्कार्यकर्मतामपाकरोति—नापि संस्कार्य इति ।

## प्रकाशः

धानाम् । उपवेलम् वेलायाः समीपे, 'जलधिर्विकृतः' इत्यग्रेऽन्वयः । विकृतत्वे हेतुमाह—अतिवहलेत्यादि । समुल्लसन्तः फेनपुञ्जस्तबकाः गुच्छाः यस्य स तथा, मध्ये तु जलधिरविकृत इत्यन्वयः । अविकृतत्वे हेतुमाह--प्रशान्तेइत्यादि तस्य जलधेः । मध्यम् मध्यभागम् पोतेन व्यवहरतीति पौतिकः । भेदाश्रयत्वादिति । नन्वेवं यदतः परो दिवोज्योतिर्दीप्यत इति श्रुत्या प्रतीय-

शाङ्करभाष्यम्

त व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणा-
नेन वा स्याद् दोषापनयनेन वा । न तावद् गुणाधानेन

भामती

वो हि संस्कार्यता गुणाधानेन वा यथा बीजपूरकुसुमस्य लाक्षारसावसेकः
न हि तत् कुसुमं संस्कृतं लाक्षासवर्णं फलं प्रसूते। दोषापनयेन वा यथा
मलिनमादर्शतलं निघृष्टमिष्टकाचूर्णेनोद्भासितभास्वरत्वं संस्कृतं भवति ।
न तावद् ब्रह्मणि गुणाधानं सम्भवति । गुणो हि ब्रह्मणः स्वभावो वा
भिन्नो वा ? स्वभावश्चेत् कथमाधेयस्तस्य नित्यत्वात् । भिन्नत्वे तु कार्य-
त्वेन मोक्षस्यानित्यत्वप्रसङ्गः । न च भेदे धर्मधर्मिभावः गवाश्ववत् ।

प्रकाशः

तस्य विकृताविकृतदेशभेदस्य का गतिरिति चेन्न, सच्चिदानन्दैकस्वरूपेण
अवस्थितस्यापि हि ब्रह्मणोऽविद्यानिवृत्तेः पूर्वमुपासनार्थं विकृताविकृतदेश-
कल्पनायां श्रुतेस्तात्पर्यं न तु वास्तविकभेदे । ब्रह्मभिन्नेन गुणेन ब्रह्मणि आधी-
यमानेन भवति मोक्ष इति द्वितीयपक्षमाक्षिपति--भिन्नत्वे त्विति । कार्यत्वेन
गुणाधानकार्यत्वेन । अपि च बोऽयं भेदो भवताऽभ्युपगतः स ऐकान्तिकः भेदा-
भेदो वा ? आद्यं दूषयति--नच भेद इति । नन्वैकान्तिके भेदेऽपि घट भूतला-
दिधर्मधर्मिभावो भूयान् भवन्नुपलभ्यते इति चेन्न, तादात्म्यसम्बन्धेनेत्यस्य
विवक्षितत्वात् । अत एव गवाश्वयोरपि कदाचित्संयोगेन धर्मधर्मिभावसम्भवे-
ऽपि न क्षतिः, प्रकृते च ब्रह्मण्याधीयमानगुणेन न संयोगः सम्भवति क्रिया-
जन्यत्वात्तस्य, नहि नित्ये विभावमूर्ते ब्रह्मणि क्रिया सम्भवति, नाप्याधीयमाने
ऽमूर्तत्वादेव, मूर्तत्वं तु पृथिवीजलतेजोवायुमनसामेवेति न संयोगः सम्ब-
न्धो भवितुमर्हति नापि कालिकः नित्ये कालिकायोगस्य तार्किकैर्व्यवस्थापित-
त्वात्, नापि दिक्कृतविशेषणता ब्रह्मणोऽदिक्त्वात्, नापि दैशिकः अभावस्य
देशतानियामको हि सः आधीयमानस्य च गुणस्य भावरूपत्वात् । स्वरूपसम्ब-
न्धश्च तादात्म्यपर्यवसायीति तादात्म्यमेव सम्बन्धो धर्मधर्मिभावनियामको
वाच्यः स च नात्यन्तिके भेदे सम्भवति अन्यथा गवाश्वयोरपि तादात्म्यं स्या-

## शाङ्करभाष्यम्

सम्भवति, अनाधेयातिशयब्रह्मस्वरूपत्वात् मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव सन् तिरोभूतो मोक्षः क्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते, यथाऽऽदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत्, न; क्रियाश्रयत्वानुपपत्तेरात्मनः ।

## भामती

भेदाभेदश्च व्युदस्तः विरोधात् । तदनेनाभिसन्धिनोक्तम् अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । द्वितीयं पक्षमपक्षिपति—नापि दोषापनयनेनेति । अशुद्धिः सती दर्पणे निवर्तते, न तु ब्रह्मण्यसती निवर्तनीया, नित्यनिवृत्तत्वादित्यर्थः । शङ्कते—स्वात्मधर्म एवेति । ब्रह्मस्वभाव एव मोक्षोऽनाद्यविद्यामलावृत उपासनादिक्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते, न तु क्रियते । एतदुक्तं भवति नित्यशुद्धत्वमात्मनोऽसिद्धं, संसारावस्थायामविद्यामलिनत्वादिति शङ्कां निराकरोति—न कुतः ? क्रियाश्रयत्वानुपपत्तेः' नाविद्या ब्रह्माश्रया

## प्रकाशः

दिति भावः । नन्वस्तु तर्हि द्वितीय एव पक्षोऽत आह—भेदाभेदश्चेति । स्वोक्तार्थस्य भाष्यारूढतां सम्पादयति—तदनेनेति । अशुद्धिरिति । अशुद्धिरियं सती असती वा ? नाद्यः या हि मालिन्यलक्षणाऽशुद्धिरादर्शे दृश्यमाना सा इष्टकाचूर्णादिनाऽपनेतुं शक्यते विशुद्धे तु ब्रह्मणि न सती अशुद्धिः सम्भवतीत्यर्थः । एवमत्राद्यो भेदाभेदविकल्पेनापि प्रतिक्षेपणीयः, भेदे धर्मधर्मिभावस्य प्रदर्शितरीत्याऽसम्भवात्, अभेदे नित्यत्वेनापनेयत्वासम्भवात् । द्वितीयोऽपि नेत्याह—न त्विति । असती चेदशुद्धिस्तदा नित्यनिवृत्तत्वात् सर्वदा साऽविद्यमानैवेति व्यर्थं तदर्थं गुणाधानमित्यर्थः । अनाद्यविद्यामलेति । पूर्वपक्षिणोऽत्र

## भामती

क्ति तु जीवे, सा त्वनिर्वचनीयेत्युक्तं, तेन नित्यशुद्धमेव ब्रह्म । अभ्यु-त्य त्वशुद्धिं क्रियासंस्कार्यत्वं दूष्यते । क्रिया हि ब्रह्मसमवेता वा ब्रह्म संस्कुर्याद्, यथा निघर्षणमिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर

## प्रकाशः

स्तविको अविद्याऽभिमता, असत्पक्षदोषो हि पूर्वमेव प्रतिचिक्षिपे । मलिन-त्वादिति । तथा च मोक्षदशायामेव श्रुतिबोधितं शुद्धत्वम्, न संसारदशाया-मिति भावः । इत्युक्तमिति अध्यासभाष्ये । ननु जीवनिष्ठैवाविद्या उपासनातो निरस्या भवत्विति चेन्न, तस्याः ज्ञानेनैव निरासेन तदर्थमुपासनावैफल्यात् । निघर्षणं व्याचष्टे--इष्टकाचूर्णेत्यादि । प्रचयः समूहः ।

## विकासः

संयोगविभागप्रचय इति । अथ व्यापारमात्रस्य धात्वर्थत्वेऽपि फलविशेषा-वबोधे धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया 'ग्रामं गच्छति' इत्यादौ धात्वर्थस्पन्दे व्यापारे' ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते, 'ग्रामं त्यजति' इत्यादौ च धात्वर्थे स्पन्दे ग्रामनिष्ठविभागजनकत्वमेव प्रतीयते न तु ततो विपरीतम् । द्वितीयादेर्गम्याद्युपस्थित-स्पन्दादावेव फलान्वयबोधकत्वात् 'ग्रामं गच्छती'त्यादिवद् 'ग्रामं स्पन्दते' इत्यादयो न प्रयोगाः न हि येन केनचित्पदेनोपस्थितयोरर्थयोरन्वयबोधो भवति; तथा सति 'घटः कर्मत्वम्' इत्यादिपदेनोपस्थापितयोरपि घटकर्मत्वाद्योरन्वयबोधः प्रसज्येत । इत्थञ्च धातो-र्व्यापारमात्रार्थकत्वेऽपि आपत्त्यनुपपत्त्योः परिहारस्य अस्मन्निर्मितप्रकाशटीकोपेते व्युत्प-त्तिवादे द्वितीयायां प्रदर्शितरीत्या सम्भवान्न फलं नापि फलावच्छिन्नव्यापारो धात्वर्थोऽतो निघर्षणं संयोगविभागप्रचय इति व्याख्यानमसङ्गतमिति चेदेवं हि सति त्यजिगमी समा-नार्थकाविति व्यवहारापत्तिर्न वारयितुं शक्यते इति तत्रोक्तस्य दूषणस्य जागरूकत्वात् एक एव हि पूर्वदेशविभागोत्तरदेशसंयोगरूपफलद्वयस्यानुकूलः पुरुषव्यापार इति, एत-द्वारणाय संयोगादिरूपफलानुकूलव्यापारपर्यन्तस्य गम्याद्यर्थत्वाङ्गीकारोऽपि न साधीयान् आवश्यकत्वाल्लाघवाच्च तत्तत्फलस्यैव धात्वर्थत्वौचित्यात् व्यापारस्याख्यातार्थत्वाङ्गीकारे-णैवोपपत्तेः । न ह्येवं सति विक्लित्त्युदयात्प्राक् पचतीति वर्त्तमानापदेशानुपपत्तिः, 'तदानीं विक्लित्तेरसत्त्वेऽपि तदनुकूलव्यापारस्य सत्त्वात्, फलस्यैव धात्वर्थत्वे च धात्वर्थतावच्छेदक-फलशालित्वरूपस्य कर्मत्वस्य वक्तुमशक्यत्वेऽपि तद्धातुसमभिव्याहृताख्यातार्थव्यापारप्रयोज्य-फलाश्रयत्वमेव तद्धात्वर्थकर्मत्वमिति शक्यतेऽभिधातुम्, नातो भ्वादेरकर्मकस्य सकर्मक-त्वापत्तिः तत्समभिव्याहृतस्य हि आख्यातस्य न व्यापारोऽर्थोऽपि त्वाश्रयत्वम्, तदेतद् संयोगविभागादिरूपं फलमेव धात्वर्थ इति युक्तिसमुद्भासितमाचार्यं मण्डनमिश्राणां मत-माश्रित्येहाचार्येण टीकाकृता संयोगविभागप्रचय इति प्रतिपादितमिति बोध्यम् ।

शाङ्करभाष्यम्

यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते । यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्टम् । तस्मान्न स्वाश्रया क्रियाऽऽत्मनः सम्भवति । अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयाऽऽत्मा संस्क्रियते । ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः, न; देहादिसंहतस्यैवा-

भामती

आदर्शतलसमवेतः । अन्यसमवेता वा । न तावद् ब्रह्मधर्मः क्रिया, तस्याः स्वाश्रयविकारहेतुत्वेन ब्रह्मणो नित्यत्वव्याघातात् । अन्याश्रया तु कथमन्यस्योपकरोति, अतिप्रसङ्गात् । नहि दर्पणे निघृष्यमाणे मणिविशुद्धो दृष्टः । तच्चानिष्टमिति । तदा बाधनं परामृशति । अत्र व्यभिचारं चोदयति ननु देहाश्रययेति । परिहरति—न, देहादिसंहतस्येति । अनाद्यनिर्वाच्याविद्योपधानमेव ब्रह्मणो जीव इति च क्षेत्रज्ञ इति चाचक्षते । स च स्थूलसूक्ष्मशरीरेन्द्रियादिसंहतस्तत्संघातमध्यप-

प्रकाशः

तदा तच्छब्देन । बाधनम् बाध्येरन्नित्यनेनोक्तं बाधनमव्यवहितत्वात्परामृश्यते, अनित्यत्वमात्मनः प्रसज्येतेत्युक्तं त्वनित्यत्वं व्यवहितत्वान्न परामृश्यते ।

नित्यत्वव्याघातादिति । तदुक्तम्—'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति । अन्याश्रयात्विति । योऽपि चैत्राश्रितः स्पन्दलक्षणव्यापारो दर्पणमुपकुर्वन् दृष्टः सोऽपि दर्पणे संयोगविभागौ द्वारीकुर्वन्नेवोपकरोति न चैतौ ब्रह्मणि सम्भवत इति भावः । स्वाभाविकं संस्कार्यत्वं निराकरोति—अनाद्यनिर्वाच्येति । नन्वविद्योपधानं सुषुप्तावप्यस्तीति तदानीं न यथा व्यवहारस्तथा जागरणेऽपि न स्यादत आह—सचेति । स्थूलसूक्ष्माणि च शरीरेन्द्रियाणीति विग्र-

## शाङ्करभाष्यम्

ृह्यागृहीतस्य आत्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि
ानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया तत्संहत
त्र कश्चिदविद्ययाऽऽत्मत्वेन परिगृहीतः संस्क्रियते इति
ुक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन
संहतस्य तदभिमानिन आरोग्यफलं 'अहमरोगः' इति
त्र बुद्धिरुत्पद्यते । एवं स्नानाचमनयज्ञोपवीनादिना 'अहं
ुद्धः संस्कृतः' इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स
देहेन संहत एव । तेनैव ह्यहंकर्त्राऽहंप्रत्ययविषयेण प्रत्य-
ना सर्वाः क्रिया निर्वर्त्यन्ते, तत्फलं च स एवाश्नाति,

## भामती

ास्तदभेदेनाहमिति प्रत्ययविषयीभूतोऽतः शरीरादिसंस्कारः शरीरा-
धर्मोऽप्यात्मनो भवति, तदभेदाध्यवसायात् । यथाऽङ्गरागधर्मः सुग-
्धता कामिनीनां व्यपदिश्यते । तेनात्रापि यदाश्रिता क्रिया सांव्य-
ारिकप्रमाणविषयीकृता तस्यैव संस्कारो नान्यस्येति न व्यभिचारः ।
त्त्वतस्तु न क्रिया न संस्कार इति । सनिदर्शनं तु शेषमध्यासभाष्य

## प्रकाशः

ेनः स्थूलत्वं शरीरेषु सूक्ष्मत्वं चेन्द्रियेषु यथासंख्यं सम्बन्धः, 'आदि पदात्प्राण
ंपदः प्रवेशश्च संयोगादिर्भेदेन भासमानेऽपि संभवतीति न स विवक्षितः किं
ाध्यासेनेत्याह—तदभेदेनेति । अङ्गरागः चन्दनादिः । निष्कृष्टमाह—तेनेति
मैक्येनाध्यस्ते देहादावपि जायमाना क्रिया आत्मैक्याध्यस्तदेहादावेव भवति
ारोऽपि तत्रैवेति 'अन्याश्रितक्रियाफलभाक्त्वमन्यस्य न भवति' इति नियमो न
भिचरतीत्यर्थः । सनिदर्शनम् सदृष्टान्तम् । संहतस्य भोक्तृत्वेऽसंहतस्याभोक्-

शाङ्करभाष्यम्

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'(मु० ३।१।१) इति मन्त्रवर्णात्, आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (क० १।३।४) इति च। तथा 'एको देवः सर्वभूतेषु गूढः' सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वे० ६।११) इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' (ई० ८) इति च, एतौ मन्त्रावनाधेयाति-

भामती

एव कृतव्याख्यानमिति नेह व्याख्यातम्। तयोरन्यः पिप्पलमिति। अन्यो जीवात्मा। पिप्पलं कर्मफलम्। अनश्नन्नन्य इति। परमात्मा। संहतस्यैव भोक्तृत्वमाह मन्त्रवर्णः—आत्मेन्द्रियेति। अनुपहितशुद्धस्वभावब्रह्मप्रदर्शनपरौ मन्त्रौ पठति—एकोदेव इति। शुक्रं दीप्तिमत्, अव्रणम् दुःखरहितम्, अस्नाविरम् अविगलितम्, अवि-

प्रकाशः

तृत्वे च भाष्यकृत् श्रुतिं प्रमाणयति—तयोरन्य इति। अभिचाकशीति पश्यस्यैव केवलं नात्तीत्यर्थः। आत्मेन्द्रियेत्यादि, अत्रात्मपदमात्मीयार्थकत्वेन शरीरपरम्। सर्वभूतेषु गूढः छन्नः सर्वव्यापी न वियदिव किन्तु सर्वभूतान्तरात्मत्वेन कर्माध्यक्षः, कर्मफलप्रदाता सर्वभूतानामधिवासः अधिष्ठानम् साक्षित्वे हेतुश्चेतेति चैतन्यस्वभावः, केवलः दृश्यवर्जितः निर्गुणः ज्ञानादिगुणशून्यः। अकायं शरीररहितम्। अपापविद्धम् धर्माधर्मरहितम्। अविगलितमिति। यद्यपि ईशावास्यभाष्ये अस्नाविरशब्दस्य स्नायुशब्दान्निष्पत्तिमाश्रित्य शिरारहितार्थकत्वमुक्तं तथापि सोऽर्थोविद्यत एव न निराक्रियतेऽपि तु 'स्नु प्रस्रवणे' इत्यस्माद्धातोरौणादिकप्रत्ययेऽपि निष्पद्यते स्नाविरशब्दः ततश्चास्नाविर-

## शाङ्करभाष्यम्

…तां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्मभावश्च …क्षः । तस्मान्न संस्कार्योऽपि मोक्षः । अतोऽन्यन्मोक्षं प्रति

## भामती

…तीति यावत् । उपसंहरति-तस्मादिति । ननु मा भून्निर्वर्त्यादिकर्म-…तुष्टयी पञ्चमी तु काचिद् विधा भविष्यति यया मोक्षस्य कर्मता …ष्यत इत्यत आह अतोन्यदिति । एभ्यः प्रकारेभ्यो न प्रकारा-…न्यदस्ति, यतो मोक्षस्य क्रियानुप्रवेशो भविष्यति । एतदुक्तं भवति …णां विधानां मध्येऽन्यतमतया क्रियाफलत्वं व्याप्तं, सा च मोक्षाद् …वर्तमाना व्यापकानुपलब्ध्या मोक्षस्य क्रियाफलत्वं व्यावर्तय-…ति । तत् किं मोक्षे क्रियैव नास्ति, तथा च तदर्थानि शास्त्राणि तद-

## प्रकाशः

…स्याविगलितार्थकत्वमपि सम्भवतीत्यभिप्रेत्येत्थं व्याख्यातमिति बोध्यम् । …नुप्रवेशद्वारान्तराभावे भाष्ये प्रतिज्ञैव प्रतीयते न तु हेतुरत आह--एत-…मिति । सा च अन्यतमता च, मोक्षस्य क्रियाफलत्वेऽभ्युपगम्यमाने तद्व्या-…याऽन्यतमतयाऽपि तत्र स्थातव्यम् नच तत्र तदस्तीत्यतो व्यापिकाया अन्यत-…या अभावाद् व्याप्यस्य क्रियाफलत्वस्याभावो मोक्षे सिध्यतीत्यर्थः ।

ननु 'नच विदिक्रियाकर्मत्वेन' इति भाष्ये ज्ञानाविषयत्वमुक्तमेवेति …दाशङ्कोत्तरे व्यर्थे इत्याशङ्क्य परिहारान्तराभिप्रायतां भाष्यस्य दर्शयति-…मर्थ इति । ज्ञेयवैलक्षण्येन वास्तविकस्य विदिक्रियाकर्मत्वस्याभावः पूर्व-…ः सम्प्रति ध्यानादिनिदर्शनेन यज् ज्ञानस्य क्रियात्वाद्विधेयत्वमनुमितं पूर्व-…णा तत्र क्रियात्वमुपेत्य विधेयत्वं निराकरोति-सत्यमित्यादिना । तथा …कूलतर्करहितं विधेयत्वानुमानमिति भावः । ननु ज्ञानस्य क्रियात्वनिराकरणं …त्स्पष्टं प्रतीयते तत्कथं तत्परित्यज्य ज्ञानस्य विधेयत्वनिराकरणपरत्वेन …वर्णनमिति चेत् ? न, पचतीत्यादिवज्जानातीत्यादिप्रयोगस्य लोकवेद-…स्यासति क्रियावाचकत्वेऽसम्भवात् धातोर्निष्पद्यमानस्य तिङ्प्रत्ययस्य …भूतेर्धातुत्वमन्तरानुपपत्तेः, क्रियावाचकत्वे हि धातुत्वं स्यान्नान्यथेत्यभि …णेत्थं व्याख्यानमिति बोध्यम् ।

शाङ्करभाष्यम्

क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् । तस्माद् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते । ननु ज्ञानं नाम मानसी क्रिया ? न, वैलक्षण्यात् । क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च, यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट् करिष्यन्' इति, संध्यां मनसा

भामती

र्थाश्च प्रवृत्तयोऽनर्थकानीत्यत उपसंहारव्याजेनाह—तस्माज्ज्ञानमेकमिति । अथ ज्ञानं क्रिया मानसी कस्मान्न विधिगोचरः, कस्माच्च तस्याः फलं निर्वर्त्यादिष्वन्यतमं न मोक्ष इति चोदयति—ननु ज्ञानमिति । परिहरति न, वैलक्षण्यात् । अयमर्थः--सत्यं ज्ञानं मानसी क्रिया, न त्वियं ब्रह्मणि फलं जनयितुमर्हति, तस्य स्वयंप्रकाशतया विदिक्रियाकर्मभावानुपपत्तेरित्युक्तम् । तदेतस्मिन्वैलक्षण्ये स्थिते एव वैलक्षण्यान्तरमाह—क्रिया हि नाम सेति । यत्र विषये, वस्तुस्वरूपनिरपेक्षैव चोद्यते । यथा देवतासंप्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा देवताध्यानक्रिया, यथा वा योषिति अग्निवस्त्वनपेक्षाऽग्निबुद्धिर्या सा क्रिया, हि नामेति योजना । नहि 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इत्यस्माद्विधेः प्राग्देवताध्यानं प्राप्तं,

प्रकाशः

भाष्ये-वैलक्षण्यादिति । अयमाशयः—मानसी क्रिया द्विविधा तत्रैका पुरुषेच्छाप्रयत्नसाध्यत्वात्पुरुषतन्त्रा उपासनारूपा, अपरा पुनः प्रमाणव्यापाराधीनत्वाद् वस्तुतन्त्रा ज्ञानरूपा। तत्राद्यैव विधेया, नापरा ज्ञानरूपा वस्तुतन्त्रा यतोऽनिच्छतोऽप्रयतमानस्यापि पुंसः प्रमाणप्रमेयसम्बन्धे जाते भवति ज्ञानोत्पत्तिर-

भामती

…स्त्वधीतवेदान्तस्य विदितपदतदर्थसंबन्धस्याधिगतशब्दन्यायतत्त्वस्य …देव सोम्येदमित्यादे स्तत्त्वमसी' त्यन्तात्संदर्भाद् ब्रह्मात्मभावज्ञानं …प्रमाणसामर्थ्यात्, इन्द्रियार्थसंनिकर्षसामर्थ्यादिव प्रणिहितमनसः …तालोकमध्यवर्तिकुम्भानुभवः । नह्यसौ स्वसामग्रीलब्धजन्मा सन् …षेच्छयाऽन्यथाकर्तुमकर्तुं वा शक्यो, देवताध्यानवद्, येनार्थवानत्र …धिः स्यात् । न चोपासना वाऽनुभवपर्यन्तता वाऽस्य विधेर्गोचरस्त …न्वयव्यतिरेकावधृतसामर्थ्ययोः साक्षात्कारे वाऽनाद्यविद्यापनये वा …धिमन्तरेण प्राप्तत्वेन पुरुषेच्छयाऽन्यथाकर्तुमकर्तुं वाऽशक्यत्वात् । …ाद् ब्रह्मज्ञानं मानसी क्रियाऽऽपि न विधिगोचरः । पुरुषचित्त-

प्रकाशः

…र्योऽतः क्रियात्वस्य ज्ञानोपासनयोरुभयोरविशिष्टत्वेऽपि न ज्ञानस्य विधेयत्व-…े वैलक्षण्यमिति । एतद् वैलक्षण्यमेव स्फुटयति भाष्यकृत्–क्रिया हीत्या-…। वैलक्षण्यान्तरमिति पूर्वं ज्ञेयवैलक्षण्यमुक्तं सम्प्रति ज्ञानस्याविधेयत्व-… वैलक्षण्यमभिधीयत इति । यत्र विषये या वस्त्वनपेक्षा चोद्यते तत्र सा …ति तच्छब्दाध्याहारेण योजयितुं भाष्यं व्याचष्टे--यत्र विषय इति । …द्यते विधिगोचरी क्रियते । ध्याने वस्त्वनपेक्षत्वं प्रतिपाद्य पुरुषेच्छाधीनत्वं …त्थापयति-न हीति । एतत् प्राप्तमित्यनेनान्वेति । वषट् करिष्यन् होता । …ताध्यानं हि तद्विध्यर्थानुष्ठानात्प्राक् न केनापि प्रमाणेन प्राप्तमतस्तत्पुरुषे-…धीनं, ब्रह्मात्मैकत्वविज्ञानं तु तत्त्वमस्यादिशब्दश्रवणमात्रेणैव जायतेऽतो न …विषयेमित्यर्थः । ननुमास्तूक्तयुक्त्या ज्ञानस्यविधेयत्वं शाब्दज्ञानाभ्यासरूपाया …सनायाः तस्या अनुभवपर्यन्ततायाः'साक्षात्कारं प्रति हेतुताया'एववा पुरुषेच्छा-…या विधेयत्वमस्त्वित्याशङ्कामपाकुरुते-नचेति । साक्षात्कारं प्रत्युपदर्शित-…या उपासनायाः साक्षात्कारस्याविद्यानिवृत्तिं प्रति हेतुतायाश्च विधिमन्तरेण …नाम तत्तदुद्देशेन उपासनायाः साक्षात्कारस्य च विधानमुचितम् किंचिदुद्दि-…े हि किंचिद्विधीयते तस्मान्न ज्ञानस्यविधेयत्वं नवा उपासनायाः नापि साक्षा-…रस्य' उद्देश्यस्य विधिमन्तरेणैव प्राप्तेरिति सिद्धम् ॥

भाष्ये निदर्शनद्वयप्रदर्शनस्य सार्थक्यमुपपादयति--पुरुषचित्तेति ।

शाङ्करभाष्यम्

ध्यायेत्' (ऐ० ब्रा० ३।८।१) इति चैवमादिषु ध्यानं चिन्तनं यद्यपि मानसम्, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम्, पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् प्रमाणं च यथाभूतवस्तुविषयम्, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यं केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्, तस्मात् मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा च 'पुरुषो वाव गौतमाग्निः' 'योषा वाव गौतमाग्निः' (छा० ५।७,८।१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति, केवलचोदनाजन्यत्वात् क्रियैव सा पुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि ? प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतत, न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् । तद्विषये लिङादयः श्रूयमाणा

भामती

व्यापाराधीनायास्तु क्रियाया वस्तुस्वरूपनिरपेक्षिता क्वचिदविरोधिनी, यथा देवताध्यानक्रियायाः नह्यत्र वस्तुस्वरूपेण कश्चिद्विरोधः । क्वचिद्वस्तुस्वरूपविरोधिनी, यथा योषित्पुरुषयोरग्निबुद्धिरित्येतावता भेदेन निदर्शनमिथुनद्वयोपन्यासः । क्रियैवेत्येवकारेण वस्तुतन्त्रत्वमपाकरोति । ननु 'आत्मेत्येवोपासीते'त्यादयो विधयः श्रूयन्ते, न च प्रमत्तगीताः, तुल्यं हि सांप्रदायिकं, तस्माद्विधेयेनात्र भवितव्यमित्यत आह-तद्विषया लिङादय इति । सत्यं श्रूयन्ते लिङादयो, न त्वमी विधि-

## शाङ्करभाष्यम्

त्यनियोज्यविषयत्वात् कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुर-तैक्ष्ण्यादिवत् अहेयानुपादेयवस्तुविषयत्वात् । किमर्थानि

## भामती

विषयाः, तद्विषयत्वेऽप्रामाण्यप्रसङ्गात् । हेयोपादेयविषयो हि विधिः स एव च हेय उपादेयो वा यं पुरुषः कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति । तत्रैव च समर्थः कर्ताऽधिकृतो नियोज्यो भवति । न चैवं-भूतान्यात्मश्रवणमननोपासनदर्शनानीति विषयतदनुष्ठात्रोर्विधिव्यापक-योरभावाद् विधेरभाव इति प्रत्युक्ता अपि लिङादयः प्रवर्तनायामसमर्था उपल इव क्षुरतैक्ष्ण्यं कुण्ठमप्रमाणीभवन्तीति । अनियोज्यविषय-त्वादिति । समर्थो हि कर्ताऽधिकारी नियोज्य इत्यर्थः । असामर्थ्ये तु अकर्ता ततो नाधिकृतोऽतो न नियोज्य इत्यर्थः । यदि विधेरभावान्न विधिवचनानि, किमर्थानि तर्हि वचनान्येतानि विधिच्छायानीति पृच्छति— किमर्थानीति । न चानर्थकानि युक्तानि, स्वाध्यायविध्य

## प्रकाशः

निदर्शनमिथुनद्वयोपन्यास इति । एकं निदर्शनमिथुनम्, यस्यै देवतायै, सन्ध्यां मनसा ध्यायेदित्याभ्यामभिहितम्, अपरं च मिथुनम् 'पुरुषो वा योषा वा इत्या-भ्यामभिहितम् । वस्तुतन्त्रत्वमपाकरोतीति । एतेन 'ज्ञानमेव न क्रिया' इति । अन्येऽपि क्रियापदेन ज्ञानक्रियागतमवस्तुतन्त्रत्वं प्रतिषिध्यते न तु क्रियात्वमिति । अत एव 'ज्ञानं न चोदनातन्त्रम्' इत्यनेन ज्ञानं न क्रियेत्यनभिधाय न चोदनातन्त्र-मिति स्वाभिप्रायं भाष्यकारः स्फोरयिष्यति अतः क्रियात्वमुपेत्यापि विधेयत्वं न युज्यते इत्यवगन्तव्यम् । साम्प्रदायिकम् गुरुपरम्परायाताध्ययनकर्म विधि-विषया इति विधिर्विषयो येषां ते तथा, विधिरत्र कार्यादिः । अप्रमाण्यप्रसङ्ग-मुपपादयति—हेयोपादेयेति । तत्रैव च समर्थ इत्यादि यः समर्थः (शक्तः) स कर्ता, यः कर्ता स कर्मण्यधिकृतः 'स्वामी' योऽधिकृतः स नियोगं स्वकीयतया प्रतिपद्यमानो नियोज्यः, स च तत्रैवोक्तस्वरूपे विषये सति भवति तस्मिन्नसति न भवतीत्यर्थः । तदिदं विषयत्वं श्रवणादिषु नास्तीत्याह—नचैवंभूतानीति

## शाङ्करभाष्यम्

तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि ? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः । यो हि बहिर्मुखः प्रवर्तते पुरुषः' इष्टं मे भूयादनिष्टं मा भूत्' इति, न च तत्राऽऽत्यन्तिकं पुरुषार्थं लभते,

## भामती

धीनग्रहणत्वानुपपत्तेरिति भावः । उत्तरम्—स्वाभाविकेति । अन्यतः प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकरत्वात् । तथाहि—तत्तदिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि समाधातुमर्हति । आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उद्घाट्यते इति प्रवृत्तिविशेषकरतानुवादानामस्तीति सप्रयोजनतया स्वाध्यायधीनग्रहणत्वमुपपद्यत इति । यच्च चोदितमात्मज्ञानमनु-

## प्रकाशः

तदेतत् सर्वापेक्षाधिकरणे ( ३-४-२६ ) वक्ष्यति चतस्रः प्रतिपत्तयो ब्रह्मणि, प्रथमा तावत् उपनिषद्वाक्यश्रवणमात्राद्भवति यां किलाचक्षते—श्रवणमिति । द्वितीया मीमांसा सहितात् तस्मादेवोपनिषद्वाक्यात् यामाचक्षते—मननमिति तृतीया चिन्तासन्ततिमयी यामाचक्षते निदिध्यासनमिति । चतुर्थी तु साक्षात्कारवती वृत्तिरूपेति । तथा च चतुर्णामप्येषां ज्ञानानां श्रवणादिरूपतयोक्तानां प्राप्तत्वेन विध्यगोचरत्वमेव । 'उच्यते' इत्याद्युत्तरसूचकपदाभावादुत्तरभाष्यस्य शङ्कावाक्यैकवाक्यता भ्रमः स्यात्तं निर्विवृत्सुराह—उत्तरमिति । दर्शनार्थं कर्त्तव्यत्वेनान्वयव्यतिरेकाभ्यामवगतान् श्रवणादीननुवदन्तोविधिसरूपाः शब्दाः तद्गतप्राशस्त्यलक्षणया तेष्वभिरुचिमुत्पादयन्तोऽनात्मचिन्तायामरुचिं सम्पादयन्तः प्रवृत्त्यतिशय जनयन्तीत्याह—अन्यतः प्राप्ता एव हीत्यादिना । खिलीकृत्य अवरुध्य । आत्मस्वरूपोपदेशपरं

## शाङ्करभाष्यम्

तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसङ्घात-प्रवृत्तिगोचराद् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि । तस्याऽऽत्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चाऽऽत्मतत्त्वमुपदिश्यते 'इदं सर्वं यदयमात्मा' (बृ० २।४।६) 'यत्र त्वस्य सर्वमात्मैवाभूत्त-केन कं पश्येत् केन कं विजानीयात् विज्ञातारमरे केन विजा-नीयाद्' (बृ० ४।५।१५) 'अयमात्मा ब्रह्म' (बृ २।५।१९) इत्यादिभिः । यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपा-दानाय वा न भवतीति तत्तथैवेत्यभ्युपगम्यते । अलंकारो ह्ययमस्माकं यद् ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति । तथा च श्रुतिः—

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ।'(बृ०४।४।१२)इति ।
'एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।'भ०गी०१५।२०

## भामती

ष्ठानानङ्गत्वादपुरुषार्थमिति । तदयुक्तम्, स्वतोऽस्य पुरुषार्थत्वेसिद्धे यदनुष्ठानानङ्गत्वं तद् भूषणं न दूषणमित्याह—यदपीति । अनुसंज्वरेत्

## प्रकाशः

भाष्यकृत् श्रुतिवाक्यमुदाहरति--इदं सर्वं यदयमात्मेति । नन्वेवं सर्वस्या-त्मरूपत्वे घटादेरुत्पत्तिविनाशाभ्यामात्मनोऽपि तौ प्रसज्येयातामिति चेन्न, भावा-नवबोधात् ।:यथा हि अधिष्ठानभूतं रज्जुस्वरूपमन्तरेण सर्पादिकं तत्र नाव-भासते नापि विद्यतेऽपितु यावदज्ञानं तत्तादात्म्येनैव भासते विद्यते च एवं

## शाङ्करभाष्यम्

इति च स्मृतिः । तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम् । यदपि केचिदाहुः—'प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति' इति तन्न, औप-

## भामती

शरीरं परितप्यमानमनुतप्येत । सुगममन्यत् । प्रकृतमुपसंहरति तस्मान्न प्रतिपत्तीति । प्रकृतसिद्ध्यर्थमेकदेशिमतं दूषयितुमनुभाषते यदपि केचिदाहुरिति । दूषयति—तन्नेति । इदमत्राकूतम्—

कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा ।
सिद्धबोधेऽर्थवत्त्वैवं शास्त्रत्वं हितशासनात् ॥

यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवेत् अहेयोपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम्, तत्राविदितसामर्थ्यत्वात्पदानां लोके तत् पूर्वकत्वाच्च वैदिकार्थप्रतीतेः । अथ तु भूतेऽप्यर्थे पदानां लोके शक्यः

## प्रकाशः

ब्रह्मण्यध्यस्यमानमिदं जगत् यावदज्ञानं ब्रह्मात्मनैवावभासते विद्यते च इत्यभिप्रायकं न तु वास्तविकाभेदाभिप्रायकं तद्वाक्यमिति । प्रस्फुटश्चायमर्थः स एष नेति नेत्यात्मेत्यादिश्रुतिभ्यः तदनन्यत्वमित्यादिसूत्रतद्भाष्यभामतीभ्यश्च । प्रकृतसिद्ध्यर्थम्—प्रकृतं यत् सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्यं तत्सिद्ध्यर्थम् । एकदेशिमतम् सिद्धे वस्तुनि सङ्गतिग्रहो न भवतीति वृत्तिकृन्मतम् । ननूपनिषदां सिद्धबोधकत्वं न सम्भवतीति परैराक्षिप्तम्, तत्र युक्त्या तन्निराकरणमन्तरेण पुरुषस्योपनिषद्गम्यत्वं सिद्धवत्कृत्य प्रदर्शनं भाष्यकृतामनुपपन्नमित्याशङ्क्य तस्योपनिषद्गम्यत्वोपयोगिन्यायं भाष्यकृतोऽभिमतं वर्णयति—इदमत्राकूतमिति । यदवादि पूर्ववादिना अज्ञातसङ्गतित्वेनेत्यनेन पुरुषान्तरवर्त्तिनः शब्दार्थज्ञानस्य यल्लिङ्गभूतं प्रवृत्त्यादिकं तत् सिद्धे न सम्भवतीत्यतो न सिद्धे

## भामती

संगतिग्रहस्तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनयाऽवगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुं, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । तत्र तावदेवमकार्येऽर्थे न संगतिग्रहो, यदि तत्परः प्रयोगो न लोके दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्येत । न तावत्तत्परः प्रयोगो न दृश्यते लोके । कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसन्दर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः । तद्यथाऽऽखण्डलादिलोकपालचक्रवालादिवसतिः सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयः प्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदवनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजः सुमेरुरिति, नैष भुजङ्गो रज्जुरियमित्यादि । नापि भूतार्थबुद्धिर्व्युत्पन्न-

## प्रकाशः

व्युत्पत्तिरिति तत्राह—कार्यबोधे इति । यदुक्तं तस्यामेव कारिकायामर्थवत्तयेति तदपि सिद्धपुत्रजन्मादिबोधेऽपि हर्षादिप्रयोजनलाभान्न कार्यपरत्वनियामकमित्याह—अर्थवत्तैवमिति । कार्यबोधे यथा चेष्टालिङ्गं तथा सिद्धबोधे हर्षादयो लिङ्गम् एवं सति उभयविधस्यैव वाक्यस्य भवति अर्थवत्ता, कार्यबोधकवाक्यस्येव सिद्धबोधकवाक्यस्यापि हितशासकत्वात् शास्त्रत्वं चेतिकारिकाऽक्षरार्थः । सर्वत्र कार्य एव सङ्गतिग्रहाद्वेदान्तानामपि कार्यपरत्वमुत क्वचित्सिद्धार्थे सङ्गतिग्रहसत्त्वेऽपि वेदान्तानां कार्यपरत्वमिति विकल्प्याद्यं निराकरोति—यदि हीति । द्वितीयं निरस्यति—अथ तु भूतेऽपीति । ननु कुतूहलाद्यर्थप्रयुक्तवाक्येष्वपि प्राथमिककार्यव्युत्पत्तिग्रहानुरोधेन कार्यबोधकपदाध्याहारोऽस्त्वित्यत आह-बहुलमुपलब्धेरिति । बहुलप्रयोगानुरोधेन गौरवेण पदान्तरलभ्यत्वेन च कार्यांशस्यैव त्याग उचितः, अन्यथा दण्डेन गामानयेत्यादिवाक्ये प्रथमव्युत्पत्तौ दण्डकरणकगोकर्मकानयनमेव सर्वेषामपि पदानां वाच्यं स्यात् । यदि च तत्रावापोद्वापाभ्यां जायमानात् तत्तदर्थानुभवात् तत्तत्पदानां विशेषतस्तत्तदर्थे सङ्केतो गृह्यत इत्युच्यते तदा यत्र कार्यार्थकः शब्दो न प्रयुक्तस्तत्रापि शब्दजन्यबोधस्य जायमानत्वात्सर्वत्र कार्यबोध इति नियमस्त्यक्तव्य एवेति किमपराद्धं परमपुम-

### प्रकाशः

र्थज्ञानप्रसवित्र्योपनिषदेति भावः । कुतूहलार्थं भयनिवृत्त्यर्थं च पदसन्दर्भो दृश्यते इत्युक्तम्, तत्र प्रथममाह–तद्यथेति । पर्वतराजः सुमेरुरित्यन्तेन । द्वितीयं तु वक्ष्यति–नैष भुजङ्गो रज्जुरित्यनेन ।

### विकासः

तद्यथेति । ननु कुतूहलभयनिवृत्त्यादिप्रयोजनसत्त्वेऽपि अत्राप्याद्यव्युत्पत्तिग्रहानुसारेण कार्याध्याहारोऽस्त्विति चेत् ? अत्रेदं विचारणीयम्—किमाद्यव्युत्पत्तिग्रहकाले गामानयेत्यादिवाक्यगतानां सर्वेषां पदानां कार्यवाचित्वमध्यवसितमतस्तदनुसारेण शोभनो गौरस्तीत्यादिद्वितीयादिप्रयोगेषु श्रुतैरपि सर्वैः पदैः कार्यसमान्ये बोधिते तद्विशेषजिज्ञासया कार्यविशेषवाचि पश्येत्यादि क्रियापदाध्याहारः ? उताद्यशब्दव्यवहारस्य क्रियापदघटितत्वं दृष्टमिति तदनुरोधेनात्रापि क्रियापदाध्याहारः नाद्यः–गामानयेत्यादौ प्राथमिके प्रयोगे क्रियापदसमभिव्याहारात् सर्वेषां पदानां कार्ये इव गवादिपदसमभिव्याहारात् सर्वेषां तद्वाक्यघटकानां पदानां गवादिषु शक्तिः प्रसज्येत विनिगमकाभावात् तस्मात् प्रथमव्युत्पत्तिग्रहणसमये न सर्वेषां पदानां कार्ये व्युत्पत्तिर्गृह्यते । यथा प्रवृत्तिः कार्यावगतिपूर्विका तथा कार्यावगतिरपि प्रवृत्तिविषय शुद्ध 'कार्यानन्वित' पदार्थगोचरज्ञानपूर्विकेति नियमस्य प्रत्यक्षाधीन स्वप्रवृत्तिस्थले दृष्टत्वेन स्वकीयां प्रवृत्तिं दृष्टान्तीकृत्य प्रयोज्यस्य प्रवृत्त्या तस्य कार्यावगतेरिव कार्यावगत्या कार्यानन्वितशुद्धपदार्थज्ञानस्यापि प्रयोज्यनिष्ठस्यानुमितिस्तटस्थस्यानिवार्या स्यात्, तस्मिंश्च शुद्धपदार्थज्ञाने प्रयोज्यनिष्ठे उत्तमवृद्धवाक्यं विना कारणान्तराभावेनोत्तमवृद्धवाक्यघटकपदस्यैव कारणतयाऽऽद्यव्युत्पत्तिग्रहसमय एव शुद्धे गवादिपदार्थे शब्दसामर्थ्यग्रहणावश्यम्भावाच्च, नापि द्वितीयः–दण्डेन गामानयेत्यादौ आद्यव्युत्पत्तिग्रहे दण्डादिकरणश्रवणेऽ गोपिश्येत्यादौ दण्डादिकरणानध्याहारवत् गौरस्तीत्यादो कार्यानध्याहारस्याऽपि युक्तत्वात्, अन्यथा आद्यव्युत्पत्तिग्राहकवाक्यस्यानयनकार्यबोधकपदघटितत्वेन 'गौरस्ति' 'गांपश्य' इत्यादिप्रयोगेऽपि आनयनकार्यार्थकपदाध्याहारापत्तिः आनयनं विनापि दर्शनादिकार्यान्तरार्थकपदघटितवाक्यश्रवणोत्तरशाब्दबोधस्योदयादानयननियमस्त्यज्यत इति चेत् ? तर्हि कार्यवाचिपदरहितानां सिद्धार्थवर्णनपराणां काव्यादीनां बहुलमुपलम्भात् कार्यनियमोऽपि त्यक्तव्य इति तुल्यम्, एवञ्चाद्यव्युत्पत्तिग्रहानुरोधेना सिद्धार्थप्रयोगेषु कार्यपदमध्याहर्त्तव्यमित्यभिमाने भग्ने हर्षादिलिङ्गोपजीविसिद्धार्थव्युत्पत्तिग्रहोऽपि भवितुं युक्तएवेति न सिद्धार्थवाक्यस्थले कार्याध्याहारस्यावश्यकतेतिस्थितम् ।

## भामती

पुरुषवर्तिनी न शक्या समुन्नेतुम्, हर्षादेरुन्नयनहेतोः संभवात् । तथाह्यविदितार्यजनभाषार्थो द्रविडो नगरगमनोद्यतो राजमार्गाभ्यर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः पटवासोपायनार्पणपुरःसरं 'दिष्ट्या वर्धसे पुत्रस्ते जात' इति वार्ताहारव्याहारश्रवणसमनन्तरमुपजातरोमाञ्चकञ्चुकं विकसितनयनोत्पलमतिस्मेरमुखमहोत्पलमवलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते, प्रमोदस्य च प्रागभूतस्य तद्व्याहारश्रवणसमनन्तरं

## प्रकाशः

आखण्डलादीनाम् इन्द्रादीनाम्, चक्रवालम् समूहः, धौतानि निर्मलीकृतानि, कलधौतमयानि सुवर्णमयानि, शिलातलानि यस्य स तथा । प्रमदवनानि प्रमदाभिः सह नृपाणां क्रीडावनानि तेषु विहारिणां सञ्चारिणाम् शकुन्तानां पक्षिणाम्, निनदः शब्दः । पुरुषान्तरवर्त्तिनी बुद्धिः हर्षादिनाऽनुमातुं शक्यते इत्युपपादयति-तथाहीति येन कार्यपरमेव वाक्यं प्रथममधिगतं तस्यास्तु तावत् सिद्धार्थकस्थलेऽपि स्नानदानानयनादिकार्यपरपदमध्याहृत्यैव बोधः, येन तु प्राथमिकी व्युत्पत्तिर्न कार्येऽधिगता तस्य तु जायमाने बोधे न कार्यपदाध्याहारः शक्यः कल्पयितुम् तादृशं स्थलं निर्दिशति अविदितार्यजनभाषार्थ इति । अविदित अज्ञातः आर्यजन भाषायाः संस्कृत भाषायाः अर्थो येन स तथा । एतादृशत्वोक्त्या प्रथमंकार्यपरत्वं वाक्यस्य न तेन द्रविडेन गृहीतमिति लभ्यते, द्रविडः अनुमिमीते इत्यन्वयः । सर्वं प्रथमान्तं द्रविडस्य विशेषणम् । अभ्यर्णम् नातिसमीपम्, प्रतिपन्नम् अवगतम्, जनकस्य पितुः, आनन्दनिबन्धनम् आनन्दजनकं पुत्रजन्म येन स तथा । स च देवदत्तगृहं गतो द्रविडः वार्त्ताहारेण सह तस्य देवदत्तस्य समीपं गतः, अभ्याशः समीपम् । सिन्दूररञ्जितपुत्रपदाङ्कितः पटः पटवासः स एवोपायनम् उपहारः, तस्यार्पणपूर्वकम् । व्याहारो वचनम्, उत्पलम् पद्मम् । अनुमिमीते इति । तथा च प्रयोगः-'अयं देवदत्तः प्रमोदवान् समुदञ्चितरोमाञ्चकञ्चुकत्वात् अतिस्मेरमुखारविन्दत्वात् विकसितनयनारविन्दत्वाद्वा मद्वत्' इति वार्ताहारेण सह समागतो द्रविडोऽनुमिमीते इत्यर्थः । प्रागभूतस्य वार्त्ताहारवचनात्प्रागनुत्पन्न-

## भामती

भवतस्तद्धेतुताम् । न चायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पत इत्यनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते । हर्षहेत्वन्तरस्य चाप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात्तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति । एवं भयशोकादयोऽप्युदाहार्याः । तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः । एवं च ब्रह्मस्वरूपज्ञानस्य परमपुरुषार्थहेतुभावादनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितानुशासनाच्छास्त्रत्वं सिद्धं भवति । तत्सिद्धमेतद्—विवादाध्यासितानि वचनानि भूतार्थविषयाणि, भूतार्थविषयप्रमाजनकत्वात्, यत् यद्विषयप्रमा-

## प्रकाशः

स्य, तद्धेतुताम् वार्त्ताहारव्याहारप्रयोजकताम् हेतुशब्दोऽत्र प्रयोजकवचनः शब्दजन्यज्ञानस्य प्रमोदजनकत्वात्, अनुमिमीते इति पूर्वेणानुषङ्गः । तथा च एतदीयः प्रमोदः वार्त्ताहारव्याहारप्रयोज्यः असति बाधके तत्पूर्वानुत्पन्नत्वे सति तदुत्तरोत्पन्नत्वात् यदसति बाधके यत्पूर्वानुत्पन्नत्वे सति यदुत्तरोत्तरोत्पन्नं तत् तत्प्रयोज्यम्, यथा मदीयः प्रमोदः, इतिप्रयोगोऽत्र भवति । नचायमिति अयमं वार्त्ताहारः । न हर्षाय कल्पते न देवदत्तस्य प्रमोदमुत्पादयितुमर्हति । इति अनेनेत्यत्रेतिशब्दोऽत इत्यर्थकः । प्रतिपद्यते निश्चिनोति द्रविड इति पूर्वेणानुषङ्गः । अनन्तरं कोऽनेन हर्षहेतुरर्थ उक्त इति समालोचमानो हर्षहेत्वन्तरमप्रतिपद्यमानो यदनेन वार्त्ताहारेण सिन्दूररञ्जितपुत्रपदाङ्कितपटप्रदर्शनपूर्वकं वचनमुक्तं तच्छ्रवणसमनन्तरमेवास्य प्रमोददर्शनेन प्रमोदजनकं पुत्रजन्मैवैतद्वचनस्यार्थ इति परिच्छिनत्तीत्यर्थः । एवञ्चात्र कार्यबोधकपदाज्ञानेनासिद्धेऽप्युक्तरीत्या यथा लोके पदानां सङ्केतग्रहस्तथा वेदान्तानामपि सिद्धपराणां संकेतग्रह उपपद्यत एवेति सिद्धम् । प्रदर्शितसिद्धान्तिश्लोकघटकस्य अर्थवत्त्वमिति भागस्याभिप्रायं प्रकटयति—तथाचेति। एतेन सिद्धस्य न प्रतिपित्सितत्वं न वा प्रतिपिपादयिषितत्वमिति प्रत्युक्तम् । शास्त्रत्वं हितशासनादित्येतद्भागं व्याचष्टे—एवञ्चेति । इतराणि हि वाक्यानि बहुतरायाससाध्यप्रवृत्तिनिवृत्तिजनकज्ञानोपजननेन हितशासकतयोच्यमानानि शास्त्रत्वमाश्रयन्ते वेदान्तास्तु केवलं ज्ञानोपजननेनैव परमहितशासकाः कथं न शास्त्रत्वमाश्रयेयुरिदंसिद्धमिति भावः । तार्किकादिसम्मतपञ्चावयववाक्यानि प्रयुङ्क्ते—

शाङ्करभाष्यम्

निषदस्य पुरुषस्य अनन्यशेषत्वात् । योऽसावुपनिषत्स्वे-
वाधिगतः पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्य-
विलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधि-

भामती

जनकं तत् तद्विषयं, यथा रूपादिविषयं चक्षुरादि, तथा चैतानि, तस्मा-
त्तथेति । तस्मात्सुष्ठूक्तं तन्न औपनिषदस्य पुरुषस्यानन्यशेषत्वा-
दिति । उपनिपूर्वात्सदेर्विशरणार्थात्क्विप्युपनिषत्पदं व्युत्पादितमुपनी-
याद्वयं ब्रह्म सवासनामविद्यां हिनस्तीति ब्रह्मविद्यामाह, तद्धेतुत्वाद्वेदान्ता
अप्युपनिषदः, ततो विदित औपनिषदः पुरुषः । एतदेव विभजते—
योऽसावुपनिषत्स्विति अहम्प्रत्ययविषयाद्भिनत्ति । असंसारीति
अत एव क्रियारहितत्वाच्चतुर्विधद्रव्यविलक्षणः अतश्चचतुर्विधद्रव्यविल-
क्षणो यदनन्यशेषः अन्यशेषं हि भूतं द्रव्यं चिकीर्षितं सत् उत्पत्त्याद्याप्यं

प्रकाशः

विवादाध्यासितानीति एतच्च अग्निहोत्रादिवाक्ये बाधवारणायोक्तम् । भूता-
र्थविषयाणीति भूतार्थमात्रविषयाणीत्यर्थः । मात्रपदेन कार्यं व्यावर्त्यते,
तथा च कार्यविषयकत्वाभाव एव साध्यः, यथाश्रुते भूतार्थप्रतीतिजनकत्व-
साधने सिद्धसाधनम् पूर्वपक्षिणाऽपि हि कार्यविशेषणतया सिद्धार्थस्य
मानमङ्गीक्रियत एवेति बोध्यम् । उक्तार्थस्य भाष्यारूढतां सम्पादयति—तस्मा-
त्सुष्ठूक्तमिति । उपनिपूर्वादिति उपेत्यव्ययं सामीप्यम् नीत्यव्ययं निश्चय-
मर्थमाचष्टे सदेरर्थमाह-सवासनामिति । तथा च ब्रह्मसमीपं नीयत्वा ब्रह्मभेदं
तिरस्कृत्य सवासनामविद्यामुन्मूलयतीत्युपनिषद् ब्रह्मविद्येत्यर्थः । भाष्ये—असं-
सारीति त्वंपदलक्ष्यनिर्देशः तस्य लक्ष्यत्वं ब्रह्मेत्यनेनोक्तम् असंसारित्वं क्रिया-
रहितत्वम् । वेदान्तप्रतिपाद्यं ब्रह्म न क्रियाङ्गमिति ज्ञापयितुं भाष्यकृता भाषितानि
विशेषणानि व्याचष्टे-अहं प्रत्ययेति । व्यवहितस्याप्यनन्यशेषत्वस्योत्पाद्यत्वा-
भावे हेतुत्वं घटयति अतश्चेति असंसारित्वादेव । यथा यूपं तक्षतीति यूपे पशुं

## शाङ्करभाष्यम्

गम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' (बृ० ३।९।२६) इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्या-

## भामती

संभवति यथा, यूपं तक्षति, इत्यादि। यत्पुनरनन्यशेषं भूतभाव्युपयोगरहितं, यथा 'सुवर्णं भार्यं, सक्तून् जुहोतीत्यादि, न तस्योत्पत्त्याद्याप्यता। कस्मात्पुनरस्यानन्यशेषतेत्यत आह—यतः स्वप्रकरणस्थः। उपनिषदामनारभ्याधीतानां पौर्वापर्यपर्यालोचनया पुरुषप्रतिपादनपरत्वेन पुरुषस्यैव प्राधान्येनेदं प्रकरणम्। न च जुह्वादिवदव्यभिचरितक्रतुसम्बन्धः पुरुष इत्युपपादितम् अतः स्वप्रकरणस्थः, सोऽयं तथाविध उपनिषद्भ्यः प्रतीयमानो न नास्तीति शक्यो वक्तुमित्यर्थः। स्यादेतत्, मानान्तरागोचरत्वेनागृहीतसंगतितयाऽपदार्थस्य ब्रह्मणो वाक्यार्थत्वानुपपत्तेः कथमुपनिषदर्थतेत्यत आह—स एष नेति नेत्यात्मेत्यात्मशब्दात्। यद्यपि गवादिवन्मानान्तरगोचरत्वमात्मनो नास्ति,

## प्रकाशः

बध्नातीति बन्धनाय विनियुक्तो यूपः काष्ठमयो बन्धनस्य शेषः 'अङ्गम्' भवतीत्यतः स काष्ठस्य तक्षणादिना उत्पाद्यः। सुवर्णं भार्यमिति। सुवर्णधारणं न क्रत्वङ्गमपि तु पुरुषधर्मः प्रधानमेवेत्यभिहितं प्राक्, अतोऽनन्यशेषं सन्न क्रतुप्रयुक्तोत्पत्त्यादिमद्भवतीत्यर्थः। दृष्टान्तान्तरमाह सक्तून् जुहोतीत्यादि। सक्तवो हि न प्राग्विनियुक्ताः, नच होमेन भस्मीभूता उत्तरत्र विनियोक्ष्यन्तेऽतो विनियुक्तसंस्कारो विनियोक्ष्यमाणसंस्कारो वा न सम्भवतीति सक्तुहोमः प्रधानकर्मैवातोऽनन्यशेषः होमजन्योत्पत्त्यादिशून्यो यथा तथेत्यर्थः। ब्रह्मणोऽनन्यशेषत्वे स्वप्रकरणस्थत्वं हेतुत्वेन योजयति—कस्मादिति। येयं पुत्रजन्मादौ सिद्धेऽपि व्युत्पत्तिः प्रदर्शिता तामगत्याऽङ्गीकुर्मः, उपनिषदां तु न सिद्धे प्रामाण्यं सम्भवति ब्रह्मणोऽविषयत्वादित्याशङ्कापरिहारपरत्वेन भाष्यमवतारयति—स्यादेतदिति। स्वयं प्रकाशे ब्रह्मणि समारोपितद्वयं निषेधच्छास्त्रं शक्नोति लक्षणयाऽऽत्मानं

## शाङ्करभाष्यम्

तुमशक्यत्वात्। य एव निराकर्ता तस्यैवात्मत्वात्।

## भामती

तथापि प्रकाशात्मन एव सतस्तत्तदुपाधिपरिहाण्या शक्यं वाक्यार्थत्वेन निरूपणं, हाटकस्येव कटककुण्डलादिपरिहाण्या नहि प्रकाशः स्वसम्वेदनो न भासते, नापि तदवच्छेदकः कार्यकरणसंघातः तेन 'स एष नेति नेत्यात्मेति तत्तदवच्छेदपरिहाण्या बृहत्त्वादापनाच्च स्वयंप्रकाशः शक्यो वाक्याद् ब्रह्मेति चात्मेति च निरूपयितुमित्यर्थः। अथोपाधिनिरासवदुपहितमप्यात्मरूपं कस्मान्न निरस्यते इत्यत आह— आत्मनश्च प्रत्याख्यातुमशक्यत्वात्। प्रकाशो हि सर्वस्यात्मा तदधिष्ठानत्वाच्च प्रपञ्चविभ्रमस्य, न चाधिष्ठानाभावे विभ्रमो भवितुमर्हति नहि जातु रज्ज्वभावे रज्ज्वां भुजङ्ग इति वा धारेति वा

## प्रकाशः

निरूपयितुमिति भाष्याभिप्रायं स्पष्टमाचष्टे—यद्यपीति। हाटकस्येति, यथा कटककुण्डलादेः कार्यस्य विनाशेऽपि हाटकस्य विद्यमानत्वं तथेत्यर्थः। ननु प्रमिते वस्तुनि प्रमाणान्तरेण ज्ञातं वस्तु यत्र न विद्यते तत्र भवति लक्षणा, यथा गङ्गायां गृहीतायां शब्देन वापे गृहीते प्रत्यक्षेण निषिध्यमाने भवति लक्षणा, नच ब्रह्म केनचिदपि प्रमाणेन प्रमितमतः कुतोऽत्र लक्षणाऽत आह—नहि प्रकाश इति। भासमाने वस्तुनि विरुध्यमानं भासमानान्तरं निषेध्यमित्येतावानेन नियमोऽभ्युपगन्तुमुचितो न तु मानेन भासमाने, यतो भवन्मते न मानं विना किञ्चिद्भासमानमस्तीत्यतो मानेनेति विशेषणं व्यर्थम् अस्मन्मते तदुपादाने ब्रह्मणि व्यभिचारः स्यादिति भावः। नापीति न भासते इति पूर्वेणानुषङ्गः। न केवल निषेधमुखेनैवात्मा निरूपणीयोऽपि त्वाप्नोति व्याप्नोतीत्यात्मेति व्युत्पत्तिनिष्पआत्मादिशब्दैरपि व्यापनाद्यभिधानमुखेन त्रिविधपरिच्छेदाभावोपलक्षित आत्मा लक्ष्यते। स चायं नेति नेतीति वाक्यादात्मपदयुक्तादात्मेति निरूप्यते ब्रह्मपदयुक्ताच्च 'अयमात्मा ब्रह्म' इत्यादेर्वाक्यात ब्रह्मेति निरूप्यते इत्याह— तेनेति। नेति नेतीति श्रुतौ इतिशब्दस्येदमर्थतकतया 'इदं न इदं न' इति तत्तत्पदार्थनिषेधाधिष्ठानत्वेनाप्यात्मा निरूप्यत इति भावः। प्रकाशो हीति।

शाङ्करभाष्यम्

नन्वात्माहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम्, न; तत्साक्षित्वेन प्रत्युक्तत्वात् । न ह्यहंप्रत्ययविषय-

भामती

विभ्रमो दृष्टपूर्वः । अपि चात्मनः प्रकाशस्य भासा प्रपञ्चस्य प्रथा । तथा च श्रुतिः–'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति । न चात्मनः प्रकाशस्य प्रत्याख्याने प्रपञ्चप्रथा युक्ता । तस्मादात्मनः प्रत्याख्यानायोगाद्वेदान्तेभ्यः प्रमाणान्तरागोचरसर्वोपाधिरहितब्रह्मस्वरूपावगतिसिद्धिरित्यर्थः । उपनिषत्स्वेवावगत इत्यवधारणममृष्यमाण आक्षिपति–नन्वात्मेति । सर्वजनीनाहंप्रत्ययविषयो ह्यात्मा कर्ता भोक्ता च संसारी, तत्रैव च लौकिकपरीक्षकाणात्मपदप्रयोगात् य एव लौकिकाः शब्दास्त एव वैदिकास्त एवं च तेषामर्था इत्यौपनिषदमप्यात्मपदं तत्रैव प्रवर्तितुमर्हति, नार्थान्तरे तद्विपरीत इत्यर्थः । समाधत्ते–न अहम्प्रत्ययविषय औपनिषदः पुरुषः, कुतः ? तत् साक्षित्वेन, अहम्प्रत्ययविषयो यः कर्ता कार्यकरणसंघातोपहितो जीवात्मा तत्साक्षित्वेन परमात्मनोऽहम्प्रत्ययविषयत्वस्य प्रत्युक्तत्वात् । एतदुक्तं भवति

प्रकाशः

इदमत्रावगन्तव्यम्–प्रपञ्चो न पारमार्थिकीं सत्तामवलम्बते यतस्तत्र सद्व्यवहारो न सत्ताजातिनिबन्धनः स्वरूपसत्तानिबन्धनो वा शक्यो निरूपयितुम्, अपि तु आध्यासिकसत्तादात्म्यनिबन्धन एव 'सन् घटः' इत्यादिप्रतीति र्हि सता तादात्म्यं घटादाववगाहते न तु घटादौ सत्ताधिकरणत्वमपीत्याद्युक्तमधस्तात् भूयः, तस्यैतस्याध्यासिकतादात्म्यवतः प्रपञ्चस्याधिष्ठानज्ञानेन युक्तो नाशः अधिष्ठानस्य च ब्रह्मणो नाशकाभावान्न नाश इति न शून्यवादप्रसङ्ग इति । सोऽयमात्मा अधिष्ठानत्वेन प्रपञ्चस्य न सद्व्यवहारमात्रोपपादकोऽपि तु तस्य स्फुरणोपपादकोऽपीत्याह–अपि चेति । प्रपञ्चस्य प्रथा युक्तेति प्रपञ्चस्य चैतन्येऽध्यस्तत्वं विना तत्प्रतीतिरेव न स्यादिति पूर्वप्रतिपादितमनुसन्धेयम् । तत्साक्षित्वेनेति । जीवात्मसाक्षित्वेनेत्यर्थः

शाङ्करभाष्यम्

कर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा अतः स न केनचित् प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्यु-

भामती

यद्यप्यनेन जीवेनात्मनेति जीवपरमात्मनोः पारमार्थिकमैक्यं, तथापि तस्योपहितं रूपं जीवः शुद्धं तु रूपं तस्य साक्षि, तच्च मानान्तरानधिगतमुपनिषद्गोचर इति। एतदेव प्रपञ्चयति—नह्यहं प्रत्ययविषयेति। विधिशेषत्वं वा नेतुं न शक्यः । कुतः ? आत्मत्वादेव । नह्यात्माऽन्यार्थोऽन्यत्तु सर्वमात्मार्थम् । तथा च श्रुतिः—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इति । अपि चातः सर्वेषामात्मत्वादेव न हेयो नाप्युपादेयः सर्वस्य

प्रकाशः

तत्रापि 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायाद्विशेषणीभूतान्तःकरणसाक्षित्वं पर्यवस्यति । न ह्यहं प्रत्ययविषयेत्यादि भाष्यमात्मनोऽनधिगतत्वेनौपनिषदत्वोपपादनपरमित्यवतारयति—एतदेवेति । भाष्ये—तत्साक्षीत्यनेन कर्मकाण्डानधिगम्यत्वं सर्वभूतस्थ इत्यनेन च विनश्यत्सु सर्वभूतेषु स्थितो न विनश्यतीत्यर्थकेन बौद्धागमानधिगम्यत्वमुक्तम् सम इत्यनेन सावयव आत्मेति जैनागमानधिगम्यत्वम् समत्वं हि एकरूपत्वम्, सावयवत्वपक्षे विनाशित्वापत्त्या कुत एकरूपता स्यात् । कूटस्थ इत्यनेन जीवोत्पत्तिवादि पञ्चरात्रतन्त्रानधिगम्यत्वम्, 'एकः सर्वस्यात्मा' इत्यनेन च काणादादि तर्कानधिगम्यत्वमुक्तम् । एवं विधमात्मतत्त्वं नान्यैः कैश्चित् परीक्षकैरधिगतमपि तूपनिषदेकसमधिगम्यमतो नास्यौपनिषदस्य पुरुषस्य बाधः केनचित् कर्तुं शक्य इत्याह भाष्यकृत्—अतः स न केनेत्यादिना अधिगते हि बाधो भवति नानधिगते एवं विधस्यचात्मनो यदाऽधिगतिस्तदा संसारभ्रम एव निवर्तते इति कुतोऽस्य बाधः स्यादित्यर्थः । आत्मार्थमिति । तथा च न कस्य-

## शाङ्करभाष्यम्

पादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च

## भामती

हि प्रपञ्चजातस्य ब्रह्मैव तत्त्वमात्मा न च स्वभावो हेयोऽशक्यहानत्वात् न चोपादेय उपात्तत्वात् तस्माद्धेयोपादेयविषयौ विधिनिषेधौ न तद्विपरीतमात्मतत्त्वं विषयीकुरुत इति सर्वस्य प्रपञ्चजातस्यात्मैव तत्त्वमिति । एतदुपपादयति—सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । अयमर्थः—पुरुषो हि श्रुतिस्मृतीतिहासपुराणतदविरुद्धन्यायव्यवस्थापितत्वात् परमार्थसन्, प्रपञ्चस्त्वनाद्यविद्योपदर्शितोऽपरमार्थसन्, यश्च परमार्थसन्नसौ प्रकृतिः रज्जुतत्त्वमिव सर्पविभ्रमस्य विकारस्य । अतएवास्यानिर्वाच्यत्वेनादृढस्वभावस्य विनाशः, पुरुषस्तु परमार्थसन्, नाऽसौ कारणसहस्रेणाप्यसन् शक्यः कर्तुम् । नहि सहस्रमपि शिल्पिनो घटं पटयितुमीशत इत्युक्तम् । तस्मादविनाशिपुरुषान्तो विकारविनाशः शुक्तिरज्जुतत्त्वान्त इव रजतभुजङ्गविनाशः ।

## प्रकाशः

चिदपि शेषत्वमात्मनो विधिशेषत्वं तु दूरापेतमित्यर्थः । ब्रह्मैव तत्त्वमिति । कार्यनाशेऽवशिष्यमाणं यद् वस्तु तत् तत्त्वमिह विवक्षितम् । ननु घटादेर्नाशे 'लये' मृदादेरवशिष्यमाणत्वात् कथं सर्वस्य पुरुषान्तो लयोऽतस्तदुपपादयति—अयमर्थ इति । आत्मैव परमार्थसन् अधिष्ठानम्, यच्चाधिष्ठानं तदेव लयाधारो भवितुमर्हति न कल्पितमतो मृदादिकं तत्तल्लयाधारत्वेनापाततः प्रतीयमानमपि स्वयं लीयमानत्वेन नाधिष्ठानम् अतः सर्वेषां प्रपञ्चानामाविद्यकत्वादधिष्ठानं ब्रह्मैव तस्मिन्नेव लय इति भावः । इदन्तु बोध्यम्—न सर्वे पदार्थाः साक्षादेव ब्रह्मणि लीयन्तेऽपि तु तत्तत्कारणे लयक्रमेणाविद्यायामविद्यायाश्च ब्रह्मणि लयो नातो 'विपर्ययेण तु' इत्यादिसूत्रं तत्तत्स्थलीयं भाष्यम् 'अविद्यायां' भीना इत्यादि भामती च न विरुध्यते ।

## शाङ्करभाष्यम्

कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्तस्वभावः, तस्मात् पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' ( का०

## भामती

पुरुष एव हि सर्वस्य प्रपञ्चविकारजातस्य तत्त्वम् । न च पुरुषस्यास्ति विनाशो यतोऽनन्तो विनाशः स्यादित्यत आह—पुरुषो विनाशहेत्वभावादिति । नहि कारणानि सहस्रमप्यन्यदन्यथयितुमीशत इत्युक्तम् । अथ मा भूत्स्वरूपेण पुरुषो हेय उपादेयो वा, तदीयस्तु कश्चिद्धर्मो हास्यते कश्चिच्चोपादास्यत इत्यत आह-विक्रियाहेत्वभावाच्च कूटस्थनित्यः । त्रिविधोपि धर्मलक्षणावस्थापरिणामलक्षणो विकारो नास्तीत्युक्तम् । अपि चात्मनः परमार्थसतो धर्मोऽपि परमार्थसन्निति न तस्यात्मवदन्यथात्वं कारणैः शक्यं कर्तुम्, न च धर्मान्यथात्वादन्यो विकारः तदिदमुक्तम्--विक्रियाहेत्वभावादिति, सुगममन्यत् । यत्पुनरेकदेशिना शास्त्रविद्वचनं साक्षित्वेनानुक्रान्तं तदन्यथोपपादयति—

## प्रकाशः

ननु पुरुषोऽप्यनिर्वाच्यः किं न स्यादत आह—पुरुषस्त्विति । अनन्तः अनवधिः । विकारहेत्वभावात्त्रिविधो विकारो नास्तीति पूर्वोक्तं स्मारयति—त्रिविधोऽपीति धर्मपरिणामः लक्षणपरिणामः, अवस्थापरिणाम इति त्रैविध्यम्, यदि हि आत्मनि धर्मोऽङ्गीक्रियेत। तदा सोऽपि धर्म आत्मवन्नित्य एव स्यान नाशकाभावात् नित्यस्य च तस्यान्यथाकरणाभावात् न पूर्वधर्मान्यथालक्षणो धर्मपरिणामो भवितुमर्हति, वस्तुतस्तु समस्तधर्मरहितमेव ब्रह्म आविद्यकधर्मैर्णैवोपपत्तौ श्रुत्यादिविरुद्धनित्यधर्मोपगमे प्रयोजनविरहादित्यर्थः । उक्तमर्थं भाष्यारूढं करोति तदिदमुक्तमिति । भाष्येऽत एवेति यतो विकारहेतुर्नास्ति अतएवेत्यर्थः । सर्वस्यैवप्रपञ्चस्य पुरुषात्वधिरेवलय इत्यत्र भाष्यकृत्श्रुतिमाह-

शाङ्करभाष्यम्

१।३।११ 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ० ३।९।२६) इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्व उपपद्यते अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् । यदपि शास्त्रतात्पर्यविदा-

भामती

यदपि शास्त्रतात्पर्यविदामनुक्रमणमिति । 'दृष्टो हि तस्यार्थः प्रयोजनवदर्थावबोधनमिति वक्तव्ये धर्मजिज्ञासायाः प्रकृतत्वाद्धर्मस्य च कर्मत्वात् 'कर्मावबोधनमित्युक्तम् . न तु सिद्धरूपब्रह्मावबोधनं व्यापारं वेदस्य वारयति न हि सोमशर्मणि प्रकृते तद्गुणाभिधानं परिसंचष्टे विष्णुशर्मणो गुणवत्ताम् । विधिशास्त्रं विधीयमानकर्मविषयं प्रतिषेधशास्त्रं च प्रतिषिध्यमानकर्मविषयमित्युभयमपि कर्मावबोधनपरम् । अपि च 'आम्नायस्य क्रियार्थत्वादिति शास्त्रकृद्वचनम् तत्रार्थ-

प्रकाशः

तस्मात पुरुषादिति यस्मात्कल्पितस्याकल्पितमेवाधिष्ठानं तस्मात् । मानान्तरावेद्यतया वेदान्तैकवेद्यत्वे भाष्ये श्रुतिमुदाहरति—तं त्वौपनिषदमिति । शास्त्रविद्वचनम् शबरस्वामिवचनम् । दृष्टो हि तस्येत्यत्र तस्य वेदस्येत्यर्थः । नन्वेवं धर्माव-बोधनमिति कुतोनोक्तमत आह—धर्मस्य चेति । इत्युक्तमिति तथा च प्रकृतत्वादेव कर्मपदमुपात्तम्, प्रयोजनवदर्थावबोधनमेव तत्तात्पर्यार्थः । ननु प्रतिषेधवाक्यानामनुष्ठेयाबोधकत्वात्कथं तेषां कर्मावबोधप्रयोजनत्वमत आह—प्रतिषेध शास्त्रं चेति । तथा च किञ्चित्कर्म अनुष्ठानाय भवति यत् 'अग्निहोत्रं जुहुयादि-त्यादिना बोध्यते किञ्चित्कर्मवर्जनाय यत् 'न ब्राह्मणं हन्या'दित्यादिनाबोध्यते इति प्रतिषेधशास्त्रमपि कर्मविषयम् । अत एव च सौत्रं धर्मपदं कर्मपरत्वेन शबरस्वामिना भाष्ये व्याख्यातमित्यर्थः । तथा च शबरस्वामिनो भाष्यकृतो वचनात् 'आम्नायस्य' इति सूत्रे आम्नायपदं विधिनिषेधपरं न तु कृत्स्नवेदपरमिति सिध्यति । परिहारान्तरमाविष्कर्तुम 'आम्नायस्य क्रियार्थत्वात्' इत्यत्रार्थपदमभिधेयपरं प्रयोजनपरं वेति विकल्प्याद्यं दूषयति—अपि चेति । अर्थग्रह-

### शाङ्करभाष्यम्

मनुक्रमणम्—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तत् धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् । अपि च आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः, प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तू-

### भामती

ग्रहणं यद्यभिधेयवाचि ततो भूतार्थानां द्रव्यगुणकर्मणामानर्थक्यमनभिधेयत्वं प्रसज्येत, नहि ते क्रियार्था इत्यत आह--अपिचाम्नायस्येति । यद्युच्येत नहि क्रियार्थत्वं क्रियाभिधेयत्वमपि तु क्रियाप्रयोजनत्वम् द्रव्यगुणशब्दानां च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानं न स्वनिष्ठतया, यथाहुः शास्त्रविदः--चोदना हि भूतं भवन्तमित्यादि । एतदुक्तं भवति कार्यमर्थमवगमयन्ती चोदना तदर्थभूतादिकमप्यर्थं गमयतीति, तत्राह--प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेदिति ।

### प्रकाशः

णम् अर्थशब्दः । आनर्थक्यमित्यस्य विवरणम्--अनभिधेयत्वमिति । द्रव्यगुणकर्मणामिति । अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति' इत्यादावारुण्यादिगुणं गवादिद्रव्यं च नाभिदध्यात्, नाभिदध्याच्च 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ शीघ्रगमनं कर्मेत्यर्थः । द्रव्यगुणकर्मणामित्यत्र कर्मपदं न यागहोमदानकर्मपरं किन्तु गमनादिपरमेवेति नानुपपत्तिः । ते द्रव्यगुणकर्मप्रतिपादकाः शब्दाः । द्वितीयपक्षं प्रतिक्षिपति—यद्युच्येतेति । न स्वनिष्ठतया न स्वार्थाभिधायमात्रपर्यवसायितया किन्तु कर्म प्रयोजनतयेत्यर्थः । चोदना हि भूतं भवन्तं भविष्यन्तमित्येवं जातीयकं शक्नोत्यवगमयितुमिति शाबरभाष्यवाक्यं प्रमाणयति पूर्वपक्षी यथाऽऽहुरिति । ननूक्तशाबरवाक्यं 'विधिवाक्यं

## भामती

अयमभिसन्धिः-न तावत्कार्यार्थ एव स्वार्थे पदानां सङ्गतिग्रहो नान्यार्थ इत्युपपादितं भूतेऽप्यर्थे व्युत्पत्तिं दर्शयद्भिः । नापि स्वार्थमात्रपरतैव पदानां, तथा सति न वाक्यार्थप्रत्ययः स्यात् । नहि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा तस्मात्पदानां स्वार्थ-

## प्रकाशः

भूतादिबोधकं न भवति, इति प्रत्याययति न तु तावता द्रव्यादिशब्दानां क्रियाप्रयोजनता लब्धाऽत आह—एतदुक्तं भवतीति ।

ननु विधिवाक्यस्य कार्यान्वितभूतबोधकत्वे कथं तन्न्यायेन ब्रह्मवाक्यस्याक्रियाङ्गभूतब्रह्मबोधकत्वमत आह—अयमभिसन्धिरिति । योऽयं कार्यान्वितार्थबोधकत्वनियमो भवताऽवधारितः पदानां स किं तादृश एवार्थे पदानां व्युत्पत्तिबलात् उत प्रयोजनार्थम् ?, तत्र केवलभूतवस्त्ववगमादपि 'रज्जुरियं न भुजङ्ग' इत्यादिवाक्यजन्यात्प्रयोजनसिद्धिमग्रेऽभिधास्यति, प्रथमं तावन्निषेधति-नतावदिति तावदिति वाक्यालङ्कारे, न इत्युपपादितमित्यन्वयः । कार्यार्थे कार्यशेषे कार्यान्विते इति यावत् । दर्शयद्भिः कार्यबोधे यथा चेष्टेत्यादिनाऽस्माभिरित्यर्थः । ननु यदि पदानां कार्यान्वितार्थबोधकत्वनियमो लाघवात्त्यज्यते तदा ततोऽप्यतिलाघवात् अन्वितार्थपरत्वमपि वाक्यस्य त्यज्यतां केवलं स्वार्थपरतैवास्तुपदानामत आह नापीति । तत्तद्वाक्यघटकैस्तैस्तैः पदैः स्वार्थमात्राभिधानकुशलैस्ते ते पदार्था अभिधीयमाना अपि प्रवृत्तिनिवृत्त्यन्यतरप्रयोजकप्रतिपिपादयिषितार्थबोधविषयतामनासादयन्तः पदार्थान्तरैरन्वयमाकाङ्क्षन्तः योग्यतादिवशात्परस्परं समन्वीयन्ते इत्याह—तस्मादित्यादिना । तथाचैतादृशोबुबोधयिषितार्थप्रत्ययोऽन्वयबोधापरनामा वाक्यार्थबोध इत्युदीर्यते तज्जनकश्च पदसमूह एकवाक्यमित्युच्यते । एकप्रयोजनवदिति-नहि पदार्थानामितरेतरवैशिष्ट्यबोधमन्तरेण एकप्रयोजनसिद्ध्युपयोगित्वं पदानां सम्पद्यते, नहि 'दण्डिनं देवदत्तमानयेत्यादौ दण्डीदेवदत्त आनयनं कृतिरिति विशकलित एव ज्ञाने जायमाने दण्डस्य देवदत्तादेश्चानयनादिसम्बन्धाप्रतीतौ प्रयोजनसिद्धिर्वाक्यरचनायाः स्यात् नाप्येकवाक्यत्वं प्रतीयमानं स्यात्, अतःतेषां प्रयोजनवत्वायैकवाक्यत्वाय चान्वितपरत्वं भवति शक्तिस्तु घटत्वादावेव घटादिपदानामितिभावः । एवं च तैस्तैः पदैः स्मारितानां तत्तत्पदार्थानां सम्बधावगाही एकः प्रत्ययआस्थेय इत्याह-

शाङ्करभाष्यम्

पदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः । नहि भूतमुपदिश्यमानं क्रिया भवति ।

भामती

मभिदधतामेकप्रयोजनवत्पदार्थपरतयैकवाक्यता । तथा च तत्तदर्थान्तरविशिष्टैकवाक्यार्थप्रत्यय उपपन्नो भवति । यथाहुः शास्त्रविदः—

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ इति ।

तथा चार्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ न कार्यसंसर्गपरत्वनियमः पदानाम् । एवं च सति कूटस्थनित्यब्रह्मरूपपरत्वेऽप्यदोष इति । भव्यं—कार्यम् । ननु यद्भव्यार्थं भूतमुपदिश्यते न

प्रकाशः

तथा चेति । पदानां न केवलं स्वार्थाभिधानपर्यवसायिताऽपितु स्वार्थाभिधानोत्तरमन्वितार्थबोधपर्यवसायिताऽपीति सिद्धम् । अत्र कुमारिलभट्ट सम्मतिमाह—यथाऽऽहुरिति । साक्षादित्यादि । यद्यपि वर्णाः पदानि पदार्थप्रतिपादनं स्वस्वार्थमात्रविषयकं ज्ञानम् साक्षात् शक्त्यैव कुर्वन्ति तथापि तन्मात्रप्रतिपादने यदर्थवुबोधयिषया प्रवृत्तिः पदानां तदलाभात् प्रयोजनं न सिद्ध्येत् तस्मात् वाक्यर्थमितये 'वाक्यार्थबोधाय' तेषां वर्णानां पदात्मकानां या प्रवृत्तिः यः प्रयोगस्तत्तत्पदार्थप्रतिपादनम् तत्तत्स्वार्थमात्रविषयकं ज्ञानं, नान्तरीयकम् 'अवश्यम्भावि' भवति द्वारत्वात् यथा काष्ठैः पचतीत्यादौ काष्ठकरणके पाके ज्वलनं नान्तरीयकं भवति तद्वदित्यर्थः ।

भव्यार्थत्वेनेति भाष्ये भवतीति भव्य इति कर्त्तरि यद्विधानादुत्पाद्यार्थत्वे संस्कार्यादि कर्म न संगृह्येतात आह—भव्यं कार्यमिति । यदिदमवादीत्पूर्ववादी भव्यसंसर्गिणा रूपेण भूतमपि भव्यं भवतीति तत्र भव्यशब्दार्थः

शाङ्करभाष्यम्

अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः । क्रियार्थत्वेऽपि क्रियानिर्वर्तन-

भामती

तद्भूतं, भव्यसंसर्गिणा रूपेण तस्यापि भव्यत्वादित्यत आह—नहि भूतमुपदिश्यमानमिति । न तादात्म्यलक्षणः संसर्गः, किन्तु कार्येण सह प्रयोजनप्रयोजनिलक्षणोऽन्वयः, तद्विषयेण तु भावार्थेन भूतार्थानां क्रियाकारकलक्षण इति न भूतार्थानां क्रियार्थत्वमित्यर्थः । शङ्कते—अक्रियात्वेऽपीति । एवं चाक्रियार्थकूटस्थनित्यब्रह्मोपदेशानुपपत्तिरिति भावः । परिहरति—नैष दोषः, क्रियार्थत्वेऽपीति । न हि क्रियार्थं भूतमुपदिश्यमानमभूतं भवति अपि तु क्रियानिर्वर्तनयोग्यं भूतमेव तत् । तथा च भूतेऽर्थेऽवधृतशक्तयः शब्दाः क्वचित्स्वनिष्ठभूतविषया दृश्यमाना मृत्वा शीत्वा वा न कथंचित् क्रियानिष्ठतां गमयितुमुचिताः नह्युपहितं शतशो दृष्टमप्यनुपहितं क्वचिद्दृष्टमदृष्टं

प्रकाशः

कार्यमुत क्रियेति विकल्प्य उभाभ्यामपि भूतस्य नैक्यमित्यभिदधाति न तादात्म्यमिति । बाधितत्वादिति शेषः । एतदेव स्फोरयति—किन्त्विति । कार्यं हि साध्यतया प्रयोजनं भवति भूतं तु साधकतया प्रयोजनि, द्वितीयेऽपि पक्षे ऐक्यं वारयति । तद्विषयेणेति कार्यविषयेणेत्यर्थः । शङ्कते इति इतः पूर्वभाष्येण कार्यान्वयनियमभङ्गमुपपाद्य कुटस्थनित्यस्योपदेशः समर्थितः, सम्प्रति प्राथमिकव्युत्पत्तिः कार्यान्वित एवेति नियममुपगम्यापि परिहारान्तरमभिधातुं भाष्यकृता पूर्वोक्तैव शङ्काऽनूद्यते इति बोध्यम् ।

ननु भवतु भूतं भूतमेव न भव्यं ततः प्रकृते किमायातमत आह—तथा चेति । स्वनिष्ठभूतविषया इति । स्वनिष्ठं स्वप्रतिपाद्यं यद्भूतं कार्यानन्वितं भूतं तद्विषया इत्यर्थः । मृत्वा शीत्वा वेति कथंचिदध्याहारादिक्लेशं सोढ्वा नान्यथयितव्य इत्यर्थः । ननु कार्यान्वितगृहीतशक्तिकस्य पदस्य कथं सिद्धबोधकता नहि घटत्वे गृहीतशक्तिकं घटपदं पटत्वमभिधातुमुत्सहतेऽत आह—नहीति ।

## शाङ्करभाष्यम्

शक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति यदि नामोपदिष्टं किं तव तेन

## भामती

भवति । तथा च वर्तमानापदेशा अस्तिक्रियोपहिता अकार्यार्था अप्यन्वीवर्णकादयो लोके बहुलमुपलभ्यन्ते । एवं क्रियाऽनिष्ठा अपि सम्बन्धमात्रपर्यवसायिनो, यथा कस्यैष पुरुष इति प्रश्नोत्तरं राज्ञ इति । तथा प्रातिपदिकार्थमात्रनिष्ठाः, यथा कीदृशास्तरव इति प्रश्नोत्तरं फलिन इति । नहि पृच्छता पुरुषस्य वा तरूणां वाऽस्तित्वनास्तित्वे प्रतिपित्सिते, किन्तु पुरुषस्य स्वामिभेदस्तरूणां च प्रकारभेदः । प्रष्टुरपेक्षितं चाचक्षाणः स्वामिभेदमेव च प्रकारभेदरूपमेव च प्रतिवक्ति, न पुनरस्तित्वं, तस्य तेनाप्रतिपित्सितत्वात् । उपपादिता च भूतेऽप्यर्थे व्युत्पत्तिः प्रयोजनवती पदानाम् । चोदयति–यदि नामोपदिष्टं भूतं, किं तत्रोपदेष्टुः श्रोतुर्वा प्रयोजनं स्यात् । तस्माद् भूतमपि प्रयोजनवदेवोपदेष्टव्यं नाप्रयोजनम्, अप्रयोजनं च ब्रह्म, तस्योदासीनस्य

## प्रकाशः

तथा च पदेनाभिहितस्यार्थस्य घटादेर्भूतस्य कार्यान्वय उपाधिः न तु स्वाभाविको येन तद्रहितं भूतं वस्तु वाक्यार्थप्रतीतौ नावभासेत नहि शुक्लपटेनोपाधिनाऽऽवृतो देवदत्तः शतशोऽनुभूतः कदाचित्तद्रहितोदृष्टोऽपि नावभासत इति शक्यते वदितुम् । बहुलमुपलभ्यन्ते पुराणेतिहासादौ । क्रियाऽनिष्ठा इति । नन्वत्रापि अस्त्यादिक्रियापदस्याध्याहर्त्तुं शक्यत्वान्न क्रियानिष्ठत्वाभावोऽत आह नहीति । पृच्छता प्रतिपित्सिते इत्यन्वयः प्रतिपित्सितमर्थं प्रतिपादयन्नेवावधेयवचनो भवति प्रेक्षावताम् अप्रतिपित्सितं कार्यमर्थं प्रतिपादयन् कथमयमवधेयवचनो भवेदिति भावः । भेद इति प्रतिपित्सत इति विभक्तिविपरिणामेनान्वयः । कार्यान्वयनियममुपेत्य परिहारो दर्शितः सम्प्रति तं नियम-

## शाङ्करभाष्यम्

स्यादिति, उच्यते अनवगतात्मवस्तूपदेशश्च तथैव भवितु-

## भामती

सर्वक्रियारहितत्वेनानुपकारकत्वादिति भावः । परिहरति-अनवगता-त्मोपदेशश्च तथैव प्रयोजनवानेव, भवितुमर्हति अप्यर्थश्चकारः । एतदुक्तं भवति । यद्यपि ब्रह्मोदासीनं तथापि तद्विषयं शाब्दज्ञानमव-गतिपर्यन्तं विद्या स्वविरोधिनीं संसारमूलनिदानमविद्यामुच्छिन्दत् प्रयोजनवदित्यर्थः । अपि च येऽपि कार्यपरत्वं सर्वेषां पदानामा-स्थिषत तैरपि 'ब्राह्मणो न हन्तव्यः, न सुरा पातव्ये'त्यादीनां न कार्यपरता शक्याऽऽस्थातुम् । कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्तं

## प्रकाशः

मेव परित्याजयति-उपपादिता चेति । समुच्चयासम्भवादाह अप्यर्थश्चकार इति । विधिवाक्यगता अपि द्रव्यगुणादिबोधकशब्दाः केवलभूतार्था एव न भव्यार्थका इति व्यवस्थाप्य तन्निदर्शनेन ब्रह्मप्रतिपादका अपि शब्दाः सिद्धं ब्रह्म अभिदधतीत्यवादि, सम्प्रति निषेधवाक्यादपि वेदान्ताः सिद्धपरा इति व्यवस्था-पयितुं भूमिकामारचयति-अपि चेति । एकदेशिनः कार्यार्थवादिनो 'ब्राह्मणो न हन्तव्यः' इत्यादौ नञर्थोऽभावः, तत्र च हननादिरूपो धात्वर्थोऽन्वेति हननादौ च ब्राह्मणादिः नञर्थश्च तव्यलिङादिविधिप्रत्ययार्थेन कार्येण, एवञ्च ब्राह्मण हननाभावविषयकं कार्यमित्यर्थं वर्णयन्ति तदेतन्न विचारपदवीमधिरोढुमर्हति अभावस्य कृत्यविषयत्वादित्याह-कृत्युपहितमर्यादम् विषयतया जन्यतया च कृतिविशिष्टम्, भवति हि कृतिजन्यः कृतिविषयश्च पाकादिः कार्य इति । अय-माशयः-यत्र ओदनाद्युद्देशेन पाकाद्यर्थं पुमान् प्रवर्त्तते तत्रौदनादौ उद्देश्यत्वाख्या पाके साध्यत्वाख्या तण्डुलादौ चोपादानत्वाख्या भवति कृतेर्विषयता सा चेयं कृतिः पुरुषनिष्ठाऽपि उपादानत्वाख्यविषयतासम्बन्धेन तण्डुलादिनिष्ठा, तत्रैव च कार्यं पाकादिरूपमपि भवति ततश्चौदनादिर्निर्वर्त्यत इत्येतत्सर्वजनीनम् तथा च यत्रास्ति तण्डुलादौ पाकस्तत्र कृतिरप्युपादानत्वाख्यविषयतासम्बन्धे-नास्तीति भवति कृतिः कार्यव्यापिका । एवञ्च निषेधेषु व्यापिकायाः कृतेर्निवृत्तौ

## शाङ्करभाष्यम्

मर्हति। तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन।

## भामती

तन्निवृत्तौ निवर्तते शिंशपात्वमिव वृक्षत्वनिवृत्तौ। कृतिर्हि पुरुषप्रयत्नः, स च विषयाधीननिरूपणः। विषयश्चास्य साध्यस्वभावतया भावार्थ एव पूर्वापरीभूतोऽन्योत्पादानुकूलो भवितुमर्हति, न द्रव्यगुणौ। साक्षात् कृतिव्याप्यो हि कृतेर्विषयो न च द्रव्यगुणयोः सिद्धयोरस्ति कृतिव्याप्यता। अत एव शास्त्रकृद्वचः—भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इति। द्रव्यगुणशब्दानां नैमित्तिकावस्थायां कार्यावमर्शेऽपि भावस्य स्वतो द्रव्यगुणशब्दानां तु भावयोगात् कार्यावमर्श इति भा-

## प्रकाशः

तद् व्याप्तं कार्यमपि निवर्त्तत इति। तदेतदुपपादयति कृतिर्हीति। पचतीत्यादौ पाकादि धात्वर्थः न घटादिवत्सिद्धस्वरूपोऽपि तु पूर्वापरीभूताधःसन्तापनादितण्डुलविक्लितिफलपर्यन्तक्रियाप्रचयरूपः स च साध्यस्वभावतया कृतेः साध्यत्वाख्यविषयताविशिष्टतया भावार्थः धात्वर्थः। अन्योत्पादनेति ओदनाद्युत्पादनेत्यर्थः। न द्रव्यगुणाविति। न च द्रव्यगुणयोरपि घटतद्रूपाद्योः कृत्यपेक्षोत्पत्तिकत्वात्तत्राप्यस्त्येव कृतिविषयतेति वाच्यम्, तत्रापि घटाद्युत्पादनानुकूला या दण्डचक्रादिषु क्रिया सैव कृत्याख्येन पुरुषव्यापारेण सम्बध्नाति साध्यतया, न तु पटपटरूपादिः तयोस्तूद्देश्यत्वाख्यां विषयतामुरीकुर्वन्ति एवमोदनादावपि बोध्यम साक्षात्कृतिव्याप्यः साध्यत्वाख्यविषयताविशिष्टः कृतिव्याप्यता कृतिविषयता। शास्त्रकृद्वचः जैमिनीयसूत्रम्। शास्त्रकृत्पदेन जैमिनिः शास्त्रवित्पदेन शबरस्वामिनः कुमारिलभट्टाश्च एकदेशिपदेन तु वृत्तिकारा अत्राभिधीयन्ते। सूत्रभावं प्रकटयति—द्रव्यगुणशब्दानामिति। गुरुमतेनैतत्, भट्टमतं तु लिङादिना कार्यार्थो नावगम्यते दूरतो द्रव्यगुणशब्दानां कार्यावमर्शित्वमतो नास्य भाट्टमताभिप्रायकत्वं सम्भवतीति। अत्र पदैः स्मा-

### भामती

वार्थेभ्य एवापूर्वावगतिर्न द्रव्यगुणशब्देभ्य इति । न च 'दध्ना जुहोति' 'सन्ततमाघारयति'इत्यादिषु द्रव्यादीनां कार्यविषयता । तत्रापि हि

### प्रकाशः

रिताः कार्यविशेषेणानन्विताः ये पदार्था ते वाक्यार्थबोधात् प्राक्, क्रियान्वयनिमित्तानि भवन्तीति तादृशी अवस्था नैमित्तिकीत्युच्यते तस्यां चावस्थायां क्रियाया इव द्रव्यादेरपि स्वत एव कार्यान्वयः सम्भवतीति कुतो न द्रव्यगुणयोः साक्षादेव कार्यान्वय इति तत्रत्य पूर्वपक्षः कार्यावमर्शोऽपीत्यन्तेन प्रदर्शितः । सिद्धान्तमाह--**भावस्ये**ति भाववाचकशब्दस्य यजत्यादिधातोरिति यावत् । **स्वतः** कार्यावमर्शः साक्षात्कार्यसम्बन्धः । भावशब्दः धातुः साक्षादेव साध्यस्वरूपां क्रियामाचष्टे द्रव्यादिशब्दास्तु क्रियासम्बन्धद्वारा द्रव्यादीन् साध्यतयाऽऽचक्षत इत्यर्थः । कुतोऽत आह--**भावार्थेभ्य** इति । अयमाशयः— लिङादिना प्रतीयमानः कार्यात्मा नियोगोऽपूर्वपदवेदनीयः न साक्षादस्ति कृतिसाध्योऽतोऽयं नियोगः स्वस्मिन् कृतिविषयतां सम्पादयितुम् स्वावच्छेदकां साक्षात् साध्यस्वभावां क्रियामेवाकाङ्क्षति न द्रव्यगुणौ समानपदोपात्तस्य भावार्थस्य क्रियाया एव प्रथममुपस्थितेरतः क्रियान्वयद्वारैव द्रव्यगुणौ साध्यत्वाख्यां कृतिविषयतामाश्रयति न साक्षात् अतो भावार्थशब्देभ्य एव यजेतेत्यादिभ्यो विषयविशिष्टस्य नियोगस्यापूर्वस्यावगतिरिति ।

एवमपि भावनावाचिनाऽपि भावनाशब्देन नापूर्वावगतिरित्यतः सूत्रे 'कर्मशब्दा' इत्युक्तम् । एवमपि क्रत्वर्थवाचिभ्योऽपि यागादिशब्देभ्यो नैवापूर्वावगतिरिति भावार्था इत्युक्तम्, अतो धात्वर्थोपरक्तभावना येषु भाति यजेतेत्यादिषु तेभ्योऽपूर्वं प्रतीयते एष हि भावनासाध्योऽपूर्वलक्षणोऽर्थो विधीयत इति जैमिनि सूत्रार्थः ।

ननु 'दध्ना जुहोति' 'सन्ततमाघारयति' इत्यादौ द्रव्यगुणावेव विधीयेते होमस्य 'अग्निहोत्रं जुहोति' इत्युत्पत्तिवाक्येनैवाधिगतत्वात् तदुद्देशेन गुणमात्रस्यानेन विधानात्, एवमाघारः क्षारणम् सान्तत्यम् अविच्छिन्नम् तत्राघारस्य आघारमाघारयतीत्यनेन प्राप्ततया तदुद्देशेन सान्तत्यस्यैव गुणस्य विधानात्, उभयत्र द्रव्यगुणावेव कार्यावच्छेदकावतो न क्रियाया एव साक्षात्कार्यान्वय नियम इत्याशङ्कामपाकरोति–**न चे**ति एतत् कार्यविषयतेत्यनेनान्वेति । नन्वेवं सोमेन यजेदित्यत्रादौ सोमविशिष्टयागादिविधानवत् अत्रापि दधिविशिष्टहोमस्य सान्तत्यविशिष्टाघारस्य च विधाने 'अग्निहोत्रं जुहोति, इत्यस्य आघारमाघारयति,

भामती

होमाघारभावार्थविषयमेव कार्यम्। न चैतावता 'सोमेन यजेत'इतिवत्, दध्यसन्ततादिविशिष्टहोमाघारविधानात् 'अग्निहोत्रं जुहोति' 'आघारमाघारयती'ति तदनुवादः। यद्यप्यत्रापि भावार्थविषयमेव कार्यम्, तथापि भावार्थानुबन्धतया द्रव्यगुणावविषयावपि विधीयेते । भावार्थो हि कारकव्यापारमात्रतयाऽविशिष्टः कारकविशेषेण द्रव्यादिना विशेष्यत इति द्रव्यादिस्तदनुबन्धः। तथा च भावार्थे विधीयमाने स एव सानुबन्धो विधीयत इति द्रव्यगुणावविषयावपि तदनुबन्धतया विहितौ भवतः। एवं च भावार्थप्रणालिकया द्रव्यादिसङ्क्रान्तो विधिगौरवाद्

प्रकाशः

इत्यस्य चानुवादकत्वं स्यादित्याशङ्कामपनुदति-नचैतावतेति तदनुवाद इत्यनेन सम्बन्धः। 'सोमेन यजेत' इत्यादौ केवलयागबोधकस्योत्पत्तिविधेरविद्यमानत्वात् भवति विशिष्टविधानम्, अत्र तु न तथा, उत्पत्तिविधेर्विद्यमानत्वादित्यर्थः। तदेतदुपपादयति-यद्यपीति। यद्यपि साक्षात्कृतिविषयत्वं दध्ना जुहोतीत्यादिवाक्येऽपि भावार्थस्यैवातस्तदवच्छिन्नमेव कार्यम् अतश्च कार्यं प्रति साक्षादविषयत्वादनवच्छेदकौ द्रव्यगुणौ भवतस्तथापि भावार्थं 'धात्वर्थं होमादिकं, प्रति अनुबन्धकतया अवच्छेदकतया विशेषणतयेति यावत्, साक्षात्कृत्यविषयावपि द्रव्यगुणौ विधीयेते इत्यर्थः। एतदुपपादयति-भावार्थो हीति। कारकव्यापारमात्रतयाऽविशिष्टः कारकविशेषसम्बन्धरहितः यद्यपि भावार्थः कारकसम्बन्धं विना स्वरूपमेव न लभतेऽतः सामान्यतः तत्सत्त्वेऽपि कारकविशेषसम्बन्धमुदीक्षमाणः 'दध्ना जुहोति' इत्यादिवाक्यविहितदध्यादिना विशेष्यतेऽतो द्रव्यादिर्होमादिक्रियानुबन्धा भवतीत्यर्थः। नन्वेतावता द्रव्यादिर्भावश्चोभावपि विधीयेतेऽतो वाक्यभेदप्रसङ्गो नेत्याह-तथा चेति। तदनुबन्धतयेति। तथा च न साक्षाद् द्रव्यादिर्विधीयते येन वाक्यभेदः प्रसज्येतेत्यर्थः। नन्वेवं 'दध्ना जुहोति' इत्यादिवाक्यानां विशिष्टविधायकत्वमापतितमत आह-एवञ्चेति। अयमाशयः-यत्र केवलं स्वरूपमात्रबोधको विधिर्नोपलभ्यते तत्रैवागत्या जघन्यामपि मत्वर्थलक्षणामाश्रित्य विशिष्टं विधीयते, प्रकृते त्वस्ति 'अग्निहोत्रं जुहोति' इत्यादिकर्मस्वरूपबोधको विधिः स च होमावच्छिन्नमेव

## भामती

विभ्यत् स्वविषयस्य चान्यतः प्राप्ततया तदनुवादेन तदनुबन्धीभूतद्रव्यादिपरो भवतीति सर्वत्र भावार्थविषय एव विधिः । एतेन 'यदाग्नेयोऽष्टाकपालो भवती'त्यत्र सम्बन्धविषयो विधिरिति परास्तम् । ननु न भवत्यर्थो विधेयः, सिद्धे भवितरि लब्धरूपस्य भवनं प्रत्यकर्तृत्वात् । न खलु गगनं भवति । नाप्यसिद्धे, असिद्धस्यानियोज्यत्वात् गगनकुसुमवत् । तस्माद् भवनेन प्रयोज्यव्यापारेणाक्षिप्तः प्रयोजकस्य भावयि-

### प्रकाशः

कार्यं प्रत्याययति 'दध्ना जुहोति' इत्यादिर्विधिश्च दधिसम्बद्धस्य होमस्य कार्यावच्छेदकत्वमभिदधानो दध्नो होमाद्यवच्छेदकत्वमभिधत्ते तत्र केवलस्य होमस्य प्राप्ततया लाघवाद्दध्यादेर्विधेयत्वं पर्यवसाययति एवमपि होमाद्यनुवादेनैव दध्यादेर्विधानमायातम् न तु साक्षात् अतः क्रियानुबन्धीभूतस्य द्रव्यादेः कार्यसम्बन्धः क्रियाद्वारैवेति सिद्ध्यति । अविषयाविति कर्तारिति शेषः । स्वविषयस्य होमादेः । अन्यतः वाक्यान्तरेण । ननु यदि सर्वत्र भावार्थविषयक एव विधिरिति नियमः स्यात् स्यात्तदा 'न हन्यात्' इत्यादौ हननाभावः कार्यं इत्यर्थस्यायुक्तत्वं, परं तु 'यदाग्नेयोऽष्टाकपालो भवति, इत्यादौ द्रव्यदेवतासम्बन्धो भावार्थातिरिक्तोऽपि विधीयतेऽतो नायं सार्वत्रिको नियमः, तस्मादभावविषयकमपि कार्यमवबोद्धुमर्हति न हन्यादित्यादिवाक्यमिति ब्रुवतां मीमांसकैकदेशिनां गुरुमतानुवर्त्तिनां मतं दूषयति-एतेनेति । क्रियाया एव साक्षात् विधेयत्वेनेत्यर्थः । सम्बन्ध एवात्र भावनावच्छेदकत्वेन विधेयो नान्यः सम्भवतीति सोपपत्तिकं तन्मतमाशङ्कते-नन्विति । यदत्र भवतीति क्रियापदं विद्यते तदर्थो भवनं न विधातुमुचितम्, यतो भवनकर्त्ता सिद्धोऽवा ? आद्ये विधिवैयर्थ्यम् भवनस्य सिद्धत्वाभावे भवनकर्तुः सिद्धत्वाभावात्, 'अन्त्येऽसिद्धस्य नियोज्यत्वाभावाद्विध्यभावः प्राप्यते इत्याह-न भवत्यर्थ इति । सिद्धे भवितरि भवत्यर्थो न विधेय इत्यन्वयः लब्धस्वरूपत्वात् भवितुरित्यर्थः । भवति उत्पद्यते । ततः किं विधेयमत आह एकदेशी-तस्मादिति । भवनेनेत्यादि । यथा हि घटो भवतीत्यादौ प्रयोज्यस्य 'उत्पाद्यस्य' घटस्य यो भवनरूपो व्यापारस्तेन प्रयोजकस्य कुलालादेः व्यापार आक्षिप्यते तेन विना घटस्य भवनानुपपत्तेः एवञ्चात्र प्रतीय-

## भामती

तुर्व्यापारो विधेयः। स च व्यापारो भावना कृतिः प्रयत्न इति। निर्विषयश्चासावशक्यप्रतिपत्तिरतो विषयापेक्षायामाग्नेयशब्दोपस्थापितो द्रव्यदेवतासम्बन्ध एवास्य विषयः। ननु व्यापारविषयः पुरुषप्रयत्नः कथमव्यापाररूपं सम्बन्धं गोचरयेत्? नहि घटं कुर्वित्यत्रापि साक्षान्नामार्थं घटं पुरुषप्रयत्नो गोचरयत्यपि तु दण्डादि हस्तादिना व्यापारयति। तस्माद् घटार्थां कृतिं व्यापारविषयामेव प्रतिपद्यते, न तु रूपतो घटविषयाम्, उद्देश्यतया त्वस्यामस्ति घटो न तु विषयतया विषयतया तु हस्तादिव्यापार एव। अत एवाग्नेय इत्यत्रापि द्रव्यदेवतासम्बन्धाक्षिप्तो यजि-

## प्रकाशः

मानेन प्रयोज्यस्य व्यापारेण भवनेनाक्षिण्यमाणो यः प्रयोजकस्य 'भावकस्य' व्यापारः स एव विधेयः। नन्वस्तु व्यापारो विधेयः किमेतावतेत्यत आह— सचेति। एवास्य विषय इति तथा च द्रव्यदेवतासम्बन्धानुकूलो व्यापारः कार्य इत्यर्थः सम्पद्यते इति। तदेतन्मीमांसकैकदेशिमतमुपपाद्य चोद्यच्छलेन सिद्धान्ती निराकुरुते नन्विति। ननु घटं कुर्वित्यादिव्यवहारदर्शनाद्घटादिरपि करोत्यर्थरूपभावनाविषयो दृश्यतेऽतो व्यापारभिन्नोऽपि भवति साक्षात्कृतिविषय इत्याशङ्कां व्युदस्यति—न हीति गोचरयतीत्यनेन सम्बन्धः। नामार्थमिति। हेतुगर्भं विशेषणम्, आख्यातान्तेन हि पदेन पूर्वापरीभूतस्य क्रियाप्रचयस्य साध्यत्वेन भासमानस्यैव कृत्यन्वययोग्यत्वम् नतु लिङ्गसंख्यान्वययोग्यस्य सिद्धस्य नामार्थस्य तथात्वम्। तर्हि किमत्र भवतीत्यत आह—अपि त्विति। पुरुषप्रयत्नः हस्तादिना दण्डादिकं व्यापारयतीति सम्बन्धः। यस्माद् घटं कुर्वन् दण्डादिकमेव व्यापारयति तस्मात् व्यापारविषयावेव घटानुकूलाकृतिर्भवतीत्याह— तस्मादिति। ननु घटस्य कृतेरविषयत्वे कथं तत्कर्मत्वमत आह— उद्देश्यतयेति। तथा च उद्देश्यत्वाख्या कृतिविषयता घटादावप्यस्ति अतो न कर्मत्वानुपपत्तिः केवलं साध्यत्वापराभिधानकविधेयत्वाख्या कृतिविषयता घटादौ नोपेयते सा हि व्यापारनिष्ठैवेत्यर्थः। अस्याम् कृतौ। विषयतया विधेयतया।

एवञ्च मीमांसकैकदेशिनां प्राभाकराणांमते दूषिते आग्नेयवाक्येन यदि सम्बन्धः सिद्धतया न विधेयस्तर्हि किं विधेयमित्येकदेशिमतानुवर्त्तिना पृष्टे सिद्धान्त्याह— अत एवेति। यतः क्रियैव साक्षात्कृतिविषयतामाश्रयति अतएव। सम्बन्धा-

भामती

रेव कार्यविषयो विधेयः । किमुक्तं भवति ? आग्नेयो भवतीति, आग्नेयेन यागेन भावयेदिति । अत एव 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इत्यनुवादो भवति 'यदाग्नेय' इत्यादिविहितस्य यागषट्कस्य । अत एव च विहितानूदितस्य तस्यैव दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यधिकारसम्बन्धः । तस्मात् सर्वत्र कृतिप्रणालिकया भावार्थविषय एव विधिरित्येकान्तः । तथा च 'न हन्यान्न पिबेदित्यादिषु यदि कार्यमभ्युपेयेत ततस्तद्व्यापिका कृतिरभ्युपेतव्या । तद्व्यापकश्च भावार्थो विषयः । एवं च प्रजापतिव्रतन्यायेन

प्रकाशः

क्षिप्तो यजिरिति अव्यक्तं हि हविर्न देवतासम्बन्धमर्हति अतोऽत्राग्निदेवतासम्बन्धाद्यागः 'देवतोद्देश्यकद्रव्यत्यागरूपः, आक्षिप्यते स एव कार्यविषयः । आक्षिप्यमाणोऽप्यर्थः भट्टमते शाब्दबोधे भासते-तदुक्तं श्लोकवार्तिके भट्टपादैः—

"पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥"

तदेषां सिद्धान्तिनां वार्तिककाराणां मतमनुसृत्य शाब्दबोधस्वरूपमाह— आग्नेयेनेति यागस्यापुमर्थत्वादाह-यागेनेति इष्टमितिशेषः । भावयेदितीति । अत्र यागेनेत्याग्नेयपदस्य लक्ष्यनिर्देशः भवतिपदस्य च भावयेदिति । यत एवाग्नेयोऽष्टाकपालो भवतीत्यत्र यागविधिरत एवानुवादे 'यजते' इति श्रुतम्, अन्यथा सम्बन्धमेवानुवदेदित्याह-अत एवेति । इतश्च आग्नेयवाक्यं यागविधिपरं मन्तव्यम् यत उत्पत्त्यधिकारयोरविसंवादो भवतीत्याह-अत एव चेति । कृतिनिर्वर्त्यो धात्वर्थ एव कृतिविषयो नियोगावच्छेदको भवतीत्युपसंहरति तस्मादिति । विधिर्नियोगः । एकान्तः नियमः । एतावता प्रघट्टकेन नियोगकृतिभावार्थानां व्याप्यव्यापकभावमुपपाद्य निषेधस्थले व्यापकस्य कार्यस्य नियोगस्य निवृत्त्या व्याप्यायाः कृतेर्निवृत्तिमभिदधाति-तथा चेति । नन्वस्तु निषेधवाक्यजन्यबोधेऽपि कार्यभानमित्युक्तौ बाधकमाह—एवञ्चेति । प्रजापतिव्रतन्यायेनेति । तस्य व्रतमित्युपक्रम्य नेक्षेतोद्यन्तमादित्यमित्यस्ति वाक्यम्

## शाङ्करभाष्यम्

[अ]पि च 'ब्राह्मणो न हन्तव्यः' इत्येवमाद्या निवृत्तिरुप-
[ल]भ्यते। न च सा क्रिया नापि क्रियासाधनम्। अक्रि-

## भामती

[प]र्युदासवृत्त्याऽहननापानसङ्कल्पलक्षणया तद्विषयो विधिः स्यात्। तथा
[च] प्रसज्यप्रतिषेधो दत्तजलाञ्जलिः प्रसज्येत। न च सति सम्भवे लक्षणा
[न्य]ाय्या। 'नेक्षेतोद्यन्तमि'त्यादौ तु 'तस्य व्रतमि'त्यधिकारात् प्रसज्य-
[प्र]तिषेधासम्भवेन पर्युदासवृत्त्याऽनीक्षणसङ्कल्पलक्षणा युक्ता। तस्माद्
[न] हन्याद् न पिबेदि'त्यादिषु प्रसज्यप्रतिषेधेषु भावार्थाभावाद् तद्व्या-
[प्त]याः कृतेरभावस्तदभावे च तद्व्याप्तस्य कार्यस्याभाव इति न कार्यपर-
[त्व]नियमः सर्वत्र वाक्ये इत्याह—ब्राह्मणो न हन्तव्य इत्येव-
[मा]द्ये'ति। ननु कस्मान्निवृत्तिरेव कार्यं न भवति, तत्साधनं वेत्यत
[आ]ह—न च सा क्रियेति। क्रियाशब्दः कार्यवचनः। एतदेव

## प्रकाशः

[न] तस्य 'ब्रह्मचारिणो' व्रतम् 'कर्त्तव्यम्' इत्युपक्रमवाक्यार्थः, उपक्रमा-
[वि]रोधी भवत्युपसंहारः, अत आख्यातयोगिनञ्पदेनावगतमपि प्रतिषेधं
[अ]विषयत्वात् प्रच्याव्य धात्वर्थयोगेन पर्युदास एवात्र लक्षणया नञर्थो
[भ]वति तथा च ईक्षणविरोधिनी अनीक्षणसङ्कल्परूपैव क्रिया प्रतीयते,
[ने]क्षेयमहमिति सङ्कल्पयेदिति वाक्यार्थो भवति, नत्वेवं 'न हन्यात' न पिबेत्'
[इत्य]ादौ तत्र तु नञर्थस्याख्यातार्थसम्बन्धात्प्रसज्यप्रतिषेध एव वृथा लक्षणा-
[मा]श्रित्य पर्युदासोऽवलम्बनीय इत्यर्थः। यतो निषेधेषु भावार्थो नाभिधीयते-
[अ]तस्तद्व्याप्तयोः कृतिनियोगयोरप्यभाव इत्याह—तस्मादिति। तदयमत्रानुमान-
[प्रय]ोगः—हननाभावादिकं न नियोगावच्छेदकम् अभावत्वात् घटो नास्तीत्यादि
[वा]क्यजन्यप्रतीतिविषयाभाववत्' इति। अकार्यार्थानामानर्थक्यं हि नियोगवा-
[दि]नोऽभिमतं न तु अक्रियार्थानामत आह—क्रियाशब्दः कार्यवचन इति।
[अ]नमेतेनमप्यत्रत्यं क्रियेति नाक्रियापरमित्यत्रापि क्रियाशब्दद्वयं प्रकरणात्

शाङ्करभाष्यम्

यार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम् । तच्चाऽनिष्टम् । न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण ।

भामती

विभजते—अक्रियार्थानामिति । स्यादेतत्, विधिविभक्तिश्रवणात् कार्यं तावदत्र प्रतीयते तच्च न भावार्थमन्तरेण, न च रागतः प्रवृत्तस्य हननापानादावकस्मादौदासीन्यमुपपद्यते विना विधारकप्रयत्नम्, तस्मात् स एव प्रवृत्त्युन्मुखानां मनोवाग्देहानां विधारकः प्रयत्नो निषेधविधिगोचरः क्रियेति नाक्रियापरमस्ति वाक्यं किंचिदपीत्याह—न च हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुम् । केन हेतुना न शक्यमित्यत आह—स्वभावप्राप्तहन्त्यर्थानुरागेण नञः । अयमर्थः—हननपानपरो हि विधिप्रत्ययः प्रतीयमानस्ते एव विधत्त इत्युत्सर्गः । नचैते शक्ये विधातुम्,

प्रकाशः

कार्यपरमेव । निषेधेषु भावार्थाभावान्न कार्यमित्युक्तं तत्र हेत्वसिद्धिमाशङ्कते—स्यादेतदिति । नच 'नहि' उपपद्यते इत्यनेन सम्बन्धः न विधिगोचर इति न चैवं लक्षणाप्रसङ्गो दोषः प्रयोजनवती हि लक्षणा न दोषाय । क्रियेतीति इति शब्दोऽत इत्यर्थकः । इत्याह इत्याशङ्कायामुत्तरमाहेत्यर्थः । व्यवहितान्वयेन भाष्यं व्याकुर्वन् योजयति—नच हननेत्यादि । अत्र भाष्यस्थं नञ इतिपदं देहलीदीपन्यायेन अनुरागेणेति पूर्वेण अप्राप्तक्रियार्थत्वमिति परेण चान्वेति तथा च हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण अप्राप्तक्रियार्थत्वं नञः कल्पयितुं न शक्यं नञः स्वभावप्राप्तहन्त्यर्थानुरागेणेति योजना हेतौ तृतीया । अत्र स्वभावप्राप्तहन्त्यर्थानुरागेणेति वाक्यस्य यथाश्रुतान्वये प्रश्नानुवाद एव

शाङ्करभाष्यम्

नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयतीति ।

भामती

ागतः प्राप्तत्वात् । न च नञः प्रसज्यप्रतिषेधो विधेयः, तस्याप्यौदा-
ीन्यरूपस्य सिद्धतया प्राप्तत्वात् । न च विधारकः प्रयत्नः, तस्याश्रुत-
ेन लक्ष्यमाणत्वात्, सति सम्भवे च लक्षणाया अन्याय्यत्वात्, विधि-
िभक्तेश्च रागतः प्राप्तप्रवृत्त्यनुवादकत्वेन विधिविषयत्वायोगात् । तस्माद्
त् पिबेद् हन्याद्वेत्यनूद्य तन्नेति निषिध्यते, तदभावो ज्ञाप्यते, न तु
नञर्थो विधीयते । अभावश्च स्वविरोधिभावनिरूपणतया भावच्छाया-
ुपातीति सिद्धे सिद्धवत् साध्ये च साध्यवत् भासत इति साध्यविषयो
नञर्थः साध्यवद् भासत इति नञर्थः कार्य इति भ्रमस्तदिदमाह--
नञश्चैष स्वभाव इति । ननु बोधयतु सम्बन्धिनोऽभावं नञ् प्रवृ-

प्रकाशः

ात्, तथा सतीत्थमत्र प्रतीयेत स्वभावप्राप्तहन्त्यर्थानुरागेण यदप्राप्तक्रियार्थत्वं
स्तत्कल्पयितुं न शक्यमिति, एवञ्च सति सर्वेणैतद्वाक्येन प्रतिज्ञामात्रं लभ्येत
ष हेतुरपि ततश्च हेत्वनभिधानान्न्यूनता स्यात् अतो यथाश्रुतान्वयः परित्यक्तः
ञ्च नञ् हननक्रियानिवृत्त्यौदासीन्यं विहायाप्राप्तक्रियार्थकं न भवति स्वभाव-
ाप्तहन्त्यर्थानुरागित्वात् यन्नैवं तन्नैवमिति प्रयोगो लभ्यत इति । हन्त्यर्थानु-
ागित्वे हेतुमाह भाष्यकृत्–नञश्चैषस्वभाव इति । चो हेत्वर्थे । 'ब्राह्मणो न
न्तव्य' इत्यादौ किं विधेयं हननादिकं नञर्थो वा विधारकप्रयत्नो वा ? इति
िकल्पत्रयमपि क्रमेण निराकरोति–अयमर्थ इत्यादिना । यद्यप्यत्र विधारक-
यत्नविधिः पूर्वमाशङ्कित एव निराकर्त्तव्यो नेतरत्पक्षद्वयम्, तथापि विधारक-
यत्नविधिपक्षे प्रतिक्षिप्ते तमपहाय नदीं निमज्जन् कुशकाशमवलम्बमान इव
दि हननादिकमेव परो विधेयमुरीकुर्यात्तदा तदपि दूष्यमित्यभिप्रेत्य तदपि
ूषितमिति बोध्यम् । एते हननपाने । सिद्धान्तमाह–तस्मादिति । लब्धार्थमाह–
तदभाव इत्यादिना । ननु 'ब्राह्मणो न हन्तव्यः' न ब्राह्मणं हन्यादित्यादि
ाक्येन यदि रागतः प्राप्तकर्त्तव्यताकब्राह्मणहननाद्यभावमात्रं सिद्धतया बोध्येत
ा तु नञर्थो विधीयेत तदा न ब्राह्मणं हन्तीत्यनेन तस्य वाक्यस्य को विशेष
्यत आह–अभावश्चेति । न हन्यादित्यादौ रागतः प्राप्तकर्त्तव्यताकहननादि-

### शाङ्करभाष्यम्

अभावबुद्धिश्चौदासीन्यकारणम्, सा च दग्धेन्धनाग्निवत्

### भामती

न्युन्मुखानां तु मनोवाग्देहानां कुतोऽकस्मान्निवृत्तिरित्यत आह—अभावबुद्धिश्चौदासीन्यपालनकारणम्। अयमभिप्रायः—'ज्वरितः पथ्यमश्नीयाद्' न सर्पायाङ्गुलिं दद्यादि'त्यादिवचनश्रवणसमनन्तरं प्रयोज्यवृद्धस्य पथ्याशने प्रवृत्तिं भुजङ्गाङ्गुलिदानोन्मुखस्य च ततो निवृत्तिमुपलभ्य बालो व्युत्पित्सुः प्रयोज्यवृद्धस्य प्रवृत्तिनिवृत्तिहेतू इच्छाद्वेषावनुमिमीते। तथा हि इच्छाद्वेषहेतुके वृद्धस्य प्रवृत्तिनिवृत्ती स्वतन्त्रप्रवृत्तिनिवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिनिवृत्तिवत्। कर्तव्यतैकार्थस-

### प्रकाशः

रूपप्रतियोगिगतं साध्यत्वमभावे समारोप्यते, न हन्तीत्यादौ च न तथेति प्रयोगयोर्विशेषः। भाष्ये—स्वसम्बन्धिनोऽभावं बोधयतीति। एवञ्च प्रकृते न ब्राह्मणं हन्यादित्यादौ प्रसज्यप्रतिषेध एव नतु पर्युदासस्तथा च क्रियया सहैव नञर्थान्वयोऽतो ब्राह्मणहननाभाव एव बोध्यत इत्यर्थः। कुतोऽकस्मादिति। केवलं हननाभावविषयके बोधे जातेऽपि रागतः प्राप्तायाः कर्त्तव्यताबुद्धेरनपायात्प्रवृत्तिः कथं वार्येतेति भावः। भाष्ये—औदासीन्यकारणमित्युक्तम् तत्र कार्यं औदासीन्यमिह प्रागभाव एव तस्यानादेः कारणानपेक्षत्वात् भाष्यमसङ्गतमतः पालनपदं योजयत्याचार्यः औदासीन्यपालनकारणमिति प्रागभावविनाशप्रतिबन्धिका प्रागभावप्रतियोग्युत्पत्तिप्रतिबन्धिका वाऽभावबुद्धिरित्यर्थः। 'ब्राह्मणं न हन्यात्' इत्यादौ नञा विधिप्रत्ययसमभिव्याहृतेन हननादौ गुरुतरानिष्टसाधनता ज्ञाप्यतेऽतो हननादिनिवृत्त्युपपत्तिरिति वक्तुं लोके विधिनिषेधवाक्ययोरिष्टानिष्टसाधनताबोधकत्वं व्युत्पत्तिबलेनाभिदधाति—अयमभिप्राय इत्यादिना। इच्छाद्वेषहेतुके इति साध्यनिर्देशः। वृद्धस्य प्रवृत्तिनिवृत्ती इति पक्षनिर्देशः। तत्र स्वस्येच्छादिराहित्येऽपि राजाद्याज्ञया जायमानयोः प्रवृत्तिनिवृत्त्योरिच्छाद्वेषपूर्वकत्वाभावाद् व्यभिचारः स्यात्तं वारयितुं हेतौ स्वतन्त्रेत्युक्तम्। कर्त्तव्यतैकार्थ समवेतेत्यादि साध्यनिर्देशः. कर्त्तव्यतया

## भामती

मवेतेष्टानिष्टसाधनभावावगमपूर्वकौ चास्येच्छाद्वेषौ प्रवृत्तिनिवृत्तिहेतुभूते-च्छाद्वेषत्वात् मत्प्रवृत्तिनिवृत्तिहेतुभूतेच्छाद्वेषवत् । न जातु मम शब्द-तद्व्यापारपुरुषाशयत्रैकाल्यानवच्छिन्नभावनापूर्वप्रत्ययपूर्वाविच्छाद्वेषा-वभूताम्, अपि तु भूयोभूयः स्वगतमालोचयत उक्तकारणपूर्वावेव प्रत्य-

### प्रकाशः

मवेतस्मिन् धात्वर्थे समवेतौ 'समाविष्टौ', यौ इष्टानिष्टसाधनभावौ तौ तथा तदवगमपूर्वकौ । अस्येच्छाद्वेषावितिपश्चान्निर्देशः । अस्य प्रयोज्यवृद्धस्य । यद्यपि उद्देश्यवचन पूर्वं विधेयस्य ततः परम्, इति सम्प्रदायागतं तथापि तत् परार्थानुमानस्थलीयं न सार्वत्रिकम् अत एव च नीलो घट इत्यादौ विधेयबोध-कस्य नीलपदस्य पूर्वप्रयोगः । प्रवृत्तिनिवृत्तिहेतुभूतेति । अत्रेच्छात्वस्य फलेच्छा-यामपि सत्त्वात् फलस्येष्टस्येष्टसाधनत्वाभावात् व्यभिचार एवं द्वेषत्वस्य दुःख द्वेषेऽपि सत्त्वात्तत्रानिष्टसाधनताज्ञानपूर्वकत्वाभावाद् व्यभिचारः स्यादतः प्रवृ-त्तिनिवृत्तिहेतुभूतेति हेतौ विशेषणमुक्तम् प्रवृत्तिहेतुभूतेच्छा च स्वकारणमिष्ट-साधनताज्ञानमनुमापयति एवं निवृत्तिहेतुर्द्वेषोऽपि स्वकारणमनिष्टसाधनताज्ञा-नमनुमापयतीति । नन्वेतत् तदोपपद्येत यदि प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्येच्छा-याश्च कारणत्वं, व्यवतिष्ठेत, नचैतत्संभवति चन्द्रानयनादाविष्टसाधनताज्ञानस्ये-च्छायाश्च सत्त्वेऽपि प्रवृत्तेरनुदयात् इत्याशंकामपनेतुं कर्त्तव्यतैकार्थसमवेतेत्यनेन भावौ विशेषितौ कर्त्तव्यतासमानाधिकरणेति तदर्थः । कर्तव्यत्वज्ञानमिष्टसाध-नताज्ञानमिच्छा च प्रवृत्तिं प्रतिकारणम् अतो न कार्यकारणभावे व्यभिचारः, एवं च प्रवृत्तिहेतुभूतेच्छायां कर्तव्यतासमानाधिकरणेष्टसाधनताज्ञानपूर्वक-त्वमस्त्येवेति न काचिदनुपपत्तिः, कर्त्तव्यत्वं च कृतिसाध्यत्वं चन्द्रानयनादौ कृतिसाध्यत्वज्ञानाभावान्न प्रवृत्तिः अतः सा न प्रवृत्तिजनिकेच्छेति यद्यपि कर्त्त-व्यतासमवेतेतिविशेषणं विनापि हेतौ व्यभिचारो नास्ति नहि साध्यविशेषणं व्यभिचारवारणाय प्रभवति तथापि उक्तरीत्या साधनाप्रसिद्धिवारणाय कर्त्तव्यतासमानाधिकरणेतिविशेषणस्य सार्थक्यं बोध्यम् । इष्टानिष्टसाधनता-ज्ञानं विहायान्यदेव प्रवृत्तिनिवृत्तिकारणं ये ये मन्यन्ते तत्तन्मतं प्रतिक्षिपन् दृष्टा-न्ते साध्यविकलतामपाकरोति-न जातु ममेति अभूतामित्यन्वयः । शब्दे-त्यादि, एतदित्थं परिमलमनुसृत्य व्याख्यायते-विधिनिषेधात्मकः शब्द एव

## भामती

वभासेते । तस्माद् वृद्धस्य स्वतन्त्रप्रवृत्तिनिवृत्ती इच्छाद्वेषभेदौ च कर्तव्यतैकार्थसमवेतेष्टानिष्टसाधनभावावगमपूर्वावित्यानुपूर्व्या सिद्धः कार्यकारणभाव इतीष्टानिष्टसाधनतावगमात्प्रयोज्यवृद्धप्रवृत्तिनिवृत्ती इति सिद्धम् । स चावगमः प्रागभूतः शब्दश्रवणानन्तरमुपजायमानः शब्दश्रवणहेतुक इति प्रवर्तकेषु वाक्येषु 'यजेते'त्यादिषु शब्द एव कर्त-

## प्रकाशः

पुरुषस्य प्रवृत्तिनिवृत्तिं च भावयन् शब्दभावनेत्युच्यते लिङादियुक्तेषु च वाक्येषु द्वे भावने अवगम्येते शब्दात्मिकाऽर्थात्मिका चेति, तत्र 'यजेत स्वर्गकामः' इत्यादौ शब्दात्मिका लिङादिरेव, अपरा च तद्वाक्यश्रवणाज्जायमाना या यागादिकरणिका स्वर्गकर्मिका भावना पुरुषनिष्ठा सैवेति श्लोकवार्तिकानुसारी कश्चित्पक्षः, लिङादभिन्नं नञ् समभिव्याहृतलिङादिभिश्च बोधितः प्रवर्त्तनात्मको निवर्त्तनात्मकश्च शब्दस्य व्यापारः शब्दभावना लोके हि प्रैषाध्येषणादिः प्रवर्त्तकस्य पुरुषस्य व्यापारः गामानय विषं मा भुङ्क्ष्वेत्यादिवाक्येषु प्रवृत्तिनिवृत्तिहेतुत्वेनावगतः अपौरुषेये वेदे तु प्रवक्तृपुरुषव्यापारासंभवात् शब्दस्यैव स व्यापारः इत्यन्यः पक्षः वेदस्येश्वरकर्तृकत्वात्तदभिप्राय एवाज्ञारूपः प्रवर्तको निवर्त्तकश्च लिङादीनां नञ्पदघटितलिङादीनां चार्थः, लिङादि नञ्युक्तलिङादिसाधारणी अर्थभावनैव त्रैकाल्यानवच्छिन्नरूपेण प्रवर्त्तिका निवर्त्तिका च, घटमानयतीत्यादौ हि लौकिकवाक्यस्थले वर्त्तमानकालिकी घटकर्मताकानयनानुकूला भावना प्रतीयते घटमानयेदित्यादौ लिङादिस्थले च न कालः कश्चित् प्रतीयते अतस्तत्र त्रैकाल्यानवच्छिन्नाभावना प्रतीयमाना भवति प्रवर्तिकेति शब्दभावनामनङ्गीकुर्वतां मीमांसकैकदेशिनां केषांचित्पक्षः । विधिनिषेधलिङादिबोध्यापूर्वरूपो नियोगः प्रवर्त्तको निवर्त्तकश्चेति प्राभाकराः । तदेतेषां शब्दादीनामपूर्वपर्यन्तानां ये प्रत्ययास्तत्पूर्वकाविच्छाद्वेषौ न बालस्य व्युत्पित्सोः प्रत्यक्षव्यवहारे कदाप्यभूताम् अपि तु इष्टानिष्टसाधनताज्ञानपूर्वकावेव,'इत्थञ्च तथैव परकीय प्रवृत्त्यादावपि एतेषु निर्दिष्टेषु पक्षेषु नान्यतमो हेतुः, आवश्यकेष्टानिष्टसाधनताज्ञानादेव सर्वत्र प्रवृत्त्याद्युपपत्तौ प्रदर्शितशब्दादिकारणान्तरकल्पने मानाभावादिति । इच्छाद्वेषभेदौ इच्छाद्वेषविशेषौ । आनुपूर्व्यासिद्धः समानः, एकरूपेणैव सर्वत्र कार्यकारणभाव इति यावत् । इत्थञ्च प्रयोज्यवृद्धस्यापि प्रवृत्तिनिवृत्ती इष्टसाधनताज्ञानपूर्विके एवेत्युपसंहरति–इतीति अत इति तदर्थः । स चावगमः

## भामती

व्यमिष्टसाधनं व्यापारमवगमयंस्तस्येष्टसाधनतां कर्तव्यतां चावगमयति, अनन्यलभ्यत्वादुभयोः, अनन्यलभ्यस्य च शब्दार्थत्वात्। यत्र तु कर्तव्यताऽन्यत एव लभ्यते, यथा 'न हन्यान्न पिबेदि'त्यादिषु हननपानप्रवृत्त्यो रागतः प्रतिलम्भात्तत्र तदनुवादेन नञ्समभिव्याहृता लिङादिविभक्तिरन्यतोऽप्राप्तमनयोरनर्थहेतुभावमात्रमवगमयति। प्रत्यक्षं हि तयोरिष्टसाधनभावोऽवगम्यतेऽन्यथा रागविषयत्वायोगात्। तस्माद्रागादिकर्तव्यतानुवादेनानर्थसाधनताज्ञापनपरं 'न हन्यान्न पिबेदि'त्यादिवाक्यं, न तु कर्तव्यतापरमिति सुष्ठूक्तमकार्यनिष्ठत्वं निषेधानाम्। निषेधानां चानर्थसाधनताबुद्धिरेव निषेध्याभावबुद्धिस्तया खल्वयं चेतन आपाततो रमणीयतां पश्यन्नप्यायतिमालोच्य प्रवृत्त्यभावं निवृत्तिमवबुध्य निवर्तते, औदासीन्यमात्मनोऽवस्थापयतीति यावत्। स्यादेतत्,

## प्रकाशः

इष्टसाधनतावगमः। व्यापारम् यागादिम्। एतद्बुद्ध्या कथमौदासीन्यं प्रागभावरूपं पाल्यते तदाह-तया खल्विति। आयतिः भाविफलं नरकादिकम्। प्रवृत्त्यभावमित्यस्य व्याख्या-निवृत्तिमिति। निवर्तते उद्यमक्रियया मयोपरन्तव्यमिति बुद्ध्या हननादावुद्यतोऽपि निवर्तते इत्यर्थः इदमत्र तात्पर्यम्-कृतिसाध्यत्वे सति बलवदनिष्टाजनकत्वे सतीष्टसाधनत्वं विध्यर्थः स च यजेदित्यादौ प्रकृत्यर्थे यागादौ विशेषणतया भासते नतु विशेष्यतया 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति नियमस्यौत्सर्गिकत्वेनेह बाधात्, एवञ्च 'न ब्राह्मणं हन्यात्' इत्यादौ नञ् समभिव्याहारस्थले प्रदर्शितविध्यर्थस्याभावो हननादौ 'नञाप्रत्याय्यते तत्र कर्त्तव्यत्वेष्टसाधनत्वयोर्हननादौ सत्त्वात् विशेष्यवति विशिष्टाभावस्य विशेषणाभावरूपतया बलवदनिष्टाजनकत्वाभाववद्ब्राह्मणहननादिकमिति लाभात् अभावाभावस्य च प्रतियोगिरूपतया अनिष्टाजनकत्वाभावस्यानिष्टजनकत्वरूपतैवेति ब्राह्मणहननादिकं बलवदनिष्ट 'नरकादि, जनकमिति बोध्यते। एतादृशी चाभावबुद्धिरौदासीन्य 'प्रागभाव' पालन 'स्थिति' कारणमिति, इत्थञ्च भवति सर्वथा भाष्यभामत्योः सन्दर्भशुद्धिः।

## भामती

अभावबुद्धिश्चेदौदासीन्यस्थापनकारणं यावदौदासीन्यमनुवर्तेत, न चानुवर्तते, नह्युदासीनोऽपि विषयान्तरव्यासक्तचित्तस्तदभावबुद्धिमान्, न चावस्थापककारणाभावे कार्यावस्थानं दृष्टम् नहि स्तम्भापपाते प्रसादोऽवतिष्ठतेऽत आह—सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । तावदेव खल्वयं प्रवृत्त्युन्मुखो न यावदस्यानर्थहेतुभावमधिगच्छति । अनर्थहेतुत्वाधिगमोऽस्य समूलोद्धारं प्रवृत्तिमुद्धृत्य दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । एतदुक्तं भवति यथा प्रासादावस्थानकारणं स्तम्भो नैवमौदासीन्यावस्थानकारणमभावबुद्धिः, अपि त्वागन्तुकाद्विनाशहेतोस्त्राणेनावस्थानकारणम् । यथा कमठपृष्ठनिष्ठुरः कवचः शस्त्रप्रहारत्राणेन राजन्यजीवावस्थानहेतुः । न च कवचापगमे चासति च शस्त्रप्रहारे राजन्यजीवनाश इति । उपसंहरति—तस्मात्प्रसक्त-

### प्रकाशः

ननूक्ताभावबुद्धिः यावदेव स्वयं स्थितिं लभेत तावदेव हननोद्यमं निवर्त्तयन्ती औदासीन्यं स्थापयेत् नान्यदाऽतो यावदौदासीन्यमनया स्थातव्यम् नचेयं बुद्धिः क्षणिका तावत्कालंस्थातुमर्हति तथा सति विषयान्तरसञ्चाराभावः प्रसज्येत तथा चैतद्बुद्ध्यभावदशायामावर्त्तेत पुनर्हननोद्यमादिरित्याशङ्कते—स्यादेतदिति । उदासीनः हननोद्यमरहितः । नच नहि । हननोद्यमसमये उक्ताभावबुद्धिर्जायमाना औदासीन्यं प्रागभावरूपमनादिकालादागतमेव प्रतियोग्युत्पत्तिविरोधितया स्थापयति न त्वौदासीन्यं जनयतीत्यत्र दृष्टान्तमाह—यथेति । कमठः कूर्मः 'काछु' इति मदीये मिथिलादेशे प्रसिद्धः, । भाष्ये—दग्धेन्धनादिवदिति यथाऽग्निरिन्धनं दग्ध्वा स्वयं शाम्यति, एवमियं नञर्थाभावबुद्धिः हननादौ इष्टसाधनता

शाङ्करभाष्यम्

स्वयमेवोपशाम्यति । तस्मात् प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् ।

भामती

क्रियानिवृत्त्यौदासीन्यमेवेति । औदासीन्यमजानतोऽप्यस्तीति प्रसक्तक्रियानिवृत्त्योपलक्ष्य विशिनष्टि । तत्किमक्रियार्थत्वेनानर्थक्यमाशङ्क्य क्रियार्थत्वोपवर्णनं जैमिनीयमसमञ्जसमेवेत्युपसंहारव्याजेन परिहरति—तस्मात्पुरुषार्थेति । पुरुषार्थानुपयोग्युपाख्यानादिविषयावक्रियार्थतया क्रियार्थतया च पूर्वोत्तरपक्षौ, न तूपनिषद्विषयौ, उपनिषदां स्वयं पुरुषार्थब्रह्मरूपावगमपर्यवसानादित्यर्थः । यदप्यौपनिषदात्मज्ञानमपुरुषार्थं मन्यमानेनोक्तं 'कर्तव्यविध्यनुप्रवेशमन्तरेणेति, अत्र निगूढाभिसन्धिः पूर्वोक्तं परिहारं स्मारयति— तत् परिहृतमिति ।

प्रकाशः

ज्ञानमूलं रागसिन्धनं प्रणाश्यैव प्रणश्यति । प्रसक्तक्रियानिवृत्तीति ननु किमियं प्रसक्तक्रियाया निवृत्तिः न तावत् तत्प्रागभावः ब्राह्मणहननप्रागभावः इत्यर्थबोधने प्रयोजनालाभात्, नाप्युक्तप्रागभावस्य निवृत्तिः प्रतियोगिनो ब्राह्मणहननादेरुत्पत्तिं विना तत्प्रागभावनिवृत्त्यभावादिति चेन्न हननोद्यतखड्गादेः परावर्तनमेव हि अत्र प्रसक्तक्रियानिवृत्तिपदेन विवक्षिता सति च खड्गादिपरावर्तने हननादिर्न भविष्यतीति एतादृशी निवृत्तिः 'न हन्यादि'ति वाक्यर्थबोधोत्तरकालीनाऽभिमता. नञर्थस्त्वनिष्टसाधनत्वमिति पूर्वं व्युत्पादितमेवेति बोध्यम् । भाष्ये— अन्यत्र प्रजापतिव्रतादिभ्य इति । तस्य व्रतमित्युपक्रम्य 'नेक्षेतोद्यन्तमादित्यम्' इत्याद्यभिधानादभावस्य कृत्यविषयत्वादगत्याऽनीक्षणसङ्कल्पोऽर्थः स्वीक्रियते, अत्र तु न तथा प्रदर्शितयुक्तेरिति भावः । आम्नायस्य क्रियार्थत्वादित्यादिसूत्रेण प्रदर्शितमानर्थक्यं नोपनिषद्विषयमितिरीत्या विरोधं परिहरन्नुपसंहरति भाष्यकृत् तस्मादिति । निगूढाभिसन्धिमिति-अधिकारिणोऽपि वेदा-

## शाङ्करभाष्यम्

यदप्युक्तम्—'कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तद्वीपा वसुमती' इत्यादिवत्' इति, तत् परिहृतम्, रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात्। ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम्। अत्रोच्यते—नाऽवगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात्। नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयि-

## भामती

अत्राक्षेप्ता स्वोक्तमर्थं स्मारयति—ननु श्रुतब्रह्मणोऽपीति। निगूढमभिसन्धिं समाधातोद्घाटयति-अत्रोच्यते नावगतब्रह्मात्मभावस्येति। सत्यं न ब्रह्मज्ञानमात्रं सांसारिकधर्मनिवृत्तिकारणमपि तु साक्षात्कारपर्यन्तम्। ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाभ्याससंस्कृतमनोयोनिः। स च निखिलप्रपञ्चमहेन्द्रजालसाक्षात्कारं समूलमुन्मूलयन्नात्मानमपि प्रपञ्चत्वाविशेषादुन्मूलयतीत्युपपादितमधस्तात्। तस्माद्रज्जुस्वरूपकथनतुल्यतैवात्रेति सिद्धम्। अत्र च वेदप्रमाणमूलतया वेदप्रमाणजनितेत्युक्तम्। अत्रैव सुखदुःखानुत्पादभेदेन

## प्रकाशः

वाक्यजनितं ज्ञानं न जातमात्रेणाविद्यामुच्छिन्दत्परमपुमर्थाय कल्पते । न जातु अप्रामाण्यशङ्कास्कन्दितं घटपटादेर्ज्ञानमपि निष्कम्पां प्रवृत्तिं प्रसोतुमुत्सहते किं पुनरिदमनादिनिविडभेदवासनानुविद्धया धिया क्षणमपि वियोगमसहमानया क्रोडीकृतस्य पुंसो वेदान्तवाक्यजनितं जीवब्रह्मात्मैक्यज्ञानमविद्यां सहसैव समूलमुन्मूलयितुं प्रभवेत् । यथा च तत्र समीपोपसर्पणादिना आप्तोपदेशेन वा प्रक्षालिताप्रामाण्यशङ्कापङ्कं चाक्षुषज्ञानं निष्कम्पां प्रवृत्तिं प्रसूते, एवं पुनः पुनर्निदिध्यासनजनितात्मबोधेनोपनोदितायां भेदवासनायां चरमकालोत्पन्न एव साक्षात्कारः सवासनामविद्यामुन्मूलयन् विदेहकैवल्यं सम्पादयति, यस्तु खलु अवशिष्टप्रारब्धकर्मा जीवन्मुक्तपदव्यपदेश्यः तस्याविद्याबन्धशैथिल्यमात्रमापादयति न तु सर्वथैवाविद्यां निविवृत्सत्ययं साक्षात्कारः अनुगच्छति हि तदानीमपि अनादिकालवशीकृतं पुमांसं विक्षेपशक्त्या सेयमविद्या । अस्ति हि अविद्यायाः शक्तिद्वयम् आवरणं विक्षेपश्च । तत्रावरणशक्तेरपगमेऽपि कार्योत्पत्त्यनुकूला विक्षेपशक्तिः प्रारब्धकर्मप्रतिबद्धा दुर्बलादात्मसाक्षात्कारादविभ्यती अनादिकालसंगता न जातु हातुमिच्छति कथंचित् विना कर्मभोगम् तस्मादेवं विधस्य जीवन्मुक्तस्य न यथापूर्वं संसारित्वं शक्यं संभावयितुमिति । नावगतब्रह्मात्मभावस्येति भाष्यस्थस्यावगतशब्दस्याभिप्रायं स्फुटयति- **सत्यमित्यादिना** । **सांसारिकधर्मनिवृत्तिकारणमिति** । ननु ब्रह्मसाक्षात्कारस्य निर्विकल्परूपस्य प्रकारविशेष्यानवगाहिनोऽविद्यातत्कार्यप्रतिबन्धकत्वासम्भव इति चेन्न 'कश्चन्द्र' इति केवलचन्द्रस्वरूपजिज्ञासायां प्रकृष्टप्रकाशश्चन्द्र इति केवलचन्द्रस्वरूपबुबोधयिषया प्रयुक्तादुत्तरवाक्याज्जायमानस्य निर्विकल्पज्ञानस्यापि संशयविपर्ययनिवर्त्तकत्व दर्शनान्निर्विकल्पकस्यापि प्रतिबन्धकत्वोपगमावश्यकत्वात् घटमुद्गरपातयोरिव प्रतिबध्य प्रतिबन्धकभावान्यस्यैव निवर्त्यनिवर्त्तकभावस्योपगमेऽपि व्याप्तिविरहाच्चेतिपूर्वमप्यावेदितत्वात् । **आत्मानम्** अन्तःकरणपरिणामस्वरूपम् ।

ननु साक्षात्कारस्य मनः करणकत्वे वेदवाक्यकरणकत्वाभावात् कथं वेदप्रमाणजनितेति भाष्यं सङ्गच्छेतेत्यतो भाष्यभावमाविष्करोति— **अत्रेति** तत्त्वमस्यादिवाक्यार्थज्ञानसहकृतमनोजन्मनः साक्षात्कारस्य भवति वेदमूलत्वमिति भावः । नन्वेवमपि कथमेकस्यैव मनसः करणत्वं परिणामित्वं चेति चेन्न, एकस्यैव हि तस्य मनस्त्वेन करणत्वमन्तःकरणत्वेन च परिणामित्वमिति धर्मभेदेनोभयं न विरुध्यते, न चायमपसिद्धान्तः भाष्यकारैरेवैतस्य 'शक्ति-

शाङ्करभाष्यम्

तुम् । नहि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न च कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति । तदुक्तं श्रुत्या—'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८।१२।१) इति । शरीरे पतितेऽशरीरत्वं स्यात् न जीवत इति चेत्, न; सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । नह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वा-

भामती

निदर्शनद्वयमाह—नहि धनिन इति । श्रुतिमत्रोदाहरति—तदुक्तमिति । चोदयति—शरीरे पतित इति । परिहरति—न सशरीरत्वस्येति । यदि वास्तवं सशरीरत्वं भवेन्न जीवतस्तन्निवर्तेत, मिथ्याज्ञाननिमित्तं तु तत् । तच्चोत्पन्नतत्त्वज्ञानेन जीवतापि शक्यं निवर्तयितुम् । यत्पुनरशरीरत्वं तदस्य स्वभाव इति न शक्यं निवर्तयितुं, स्वभावहानेन भावविनाशप्रसङ्गादित्याह—नित्यमशरीरत्वमिति स्यादेतत्, न

प्रकाशः

विपर्ययात्' (२।३।३८) इति सूत्रे समर्थितत्वात् । अशरीरत्वं देहे पतिते एव स्यादिति शङ्कायां सशरीरत्वस्य सनिमित्तत्ववर्णनं भाष्यकृतामयुक्तमित्याशङ्क्य भाष्याभिप्रायमाह—यदीति । ननु यथा सशरीरत्वं मिथ्यात्वाज्जीव-

## शाङ्करभाष्यम्

दित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेत्, न; शरीरसम्बन्धस्य असिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासि-

## भामती

मिथ्याज्ञाननिमित्तं सशरीरत्वमपि तु धर्माधर्मनिमित्तं, तच्च स्वकारण धर्माधर्मनिवृत्तिमन्तरेण न निवर्तते, तन्निवृत्तौ च प्रायणमेवेति न जीवतोऽशरीरत्वमिति शङ्कते-तत्कृतेति । तदित्यात्मानं परामृशति । निराकरोति-न शरीरसम्बन्धस्येति । न तावदात्मा साक्षाद्धर्माधर्मौ कर्तुमर्हति, वाग्बुद्धिशरीरारम्भजनितौ हि तौ नासति शरीरसम्बन्धे भवतः, ताभ्यां तु शरीरसम्बन्धे रोचयमानो व्यक्तं परस्पराश्रयं दोषमावहति, तदिदमाह—शरीरसम्बन्धस्येति ।

## प्रकाशः

नैव शक्यते सम्यग् ज्ञानेन निवर्त्तयितुम् एवमशरीरत्वमपि अभावरूपं मिथ्यैवेति कुतो न तदपि शक्यते तेनैव निवर्तयितुमित्याशङ्क्याह—यत्पुनरिति । शरीरसम्बन्ध एव काल्पनिकतयाऽऽगन्तुकः शक्यः सम्यग्ज्ञानेन परिहर्तुम् तदभावस्तु आत्मनः स्वरूपभूत एव नागन्तुकोऽतो नासौ शक्यो निराकर्तुम् । एवमपि यथा नात्मनः सप्रतियोगिकत्वं तथोपपादितमस्माभिर्विकासे । शङ्कते—सम्प्रति सत्कार्यवादी, तार्किकशंका तु 'यस्तु मन्यते' इत्यादिनेदानीमेव भविष्यति । शरीरसम्बन्धस्येत्याद्यसिद्धेरित्यन्तं भाष्यं व्याचिख्यासति—न तावदिति शरीरसम्बन्धस्येत्यादिप्रसङ्गादित्यन्तं भाष्यं व्याचष्टे—ताभ्यान्त्विति । आत्मनि स्वतो धर्माधर्मौ न स्तोऽपि तु शरीरसम्बन्धात् शरीरसम्बन्धोऽपि न स्वतोऽस्ति अपि तु धर्माधर्माभ्यामिति व्यक्तमितरेतराश्रयत्वमित्यर्थः । सत्कार्यवादिनः परिहारमाशंक्य परिहरति यद्युच्येतेति सोऽयमन्धपरम्परादोषः सत्कार्यवादिनां सांख्यानामिवासत्कार्यवादिनां तार्किकाणामपि समानोऽतस्तद्दोषममृष्यमाणस्तार्किकः व्यक्तिभेदेनेतरेतराश्रयं परिहरतीत्याह—यस्त्विति । किन्त्वेष इति वर्त्तमाना-

शाङ्करभाष्यम्

द्धेः । शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैषाऽनादित्वकल्पना । क्रियासमवायाभावाच्चाऽऽत्मनः कर्तृत्वानुपपत्तेः । संनिधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेत्, न; धनदानाद्युपार्जि-

भामती

यद्युच्येत सत्यमस्ति परस्पराश्रयो, न त्वेष दोषोऽनादित्वाद्बीजाङ्कुरवदित्यत आह--अन्धपरम्परैषाऽनादित्वकल्पना । यस्तु मन्यते-'नेयमन्धपरम्परातुल्याऽनादिता, नहि यतो धर्माधर्मभेदादात्मशरीरसम्बन्धभेदस्तत एव स धर्माधर्मभेदः, किन्त्वेष पूर्वस्मादात्मशरीरसम्बन्धात्पूर्वधर्माधर्मभेदजन्मनः, एष त्वात्मशरीरसम्बन्धोऽस्माद्धर्माधर्मभेदादिति' तं प्रत्याह-क्रियासमवायाभावादिति । शङ्कते-सन्निधानमात्रेणेति । परिहरति--नेति । उपार्जनं स्वी-

प्रकाशः

त्मशरीरसम्बन्धजनको धर्माधर्मभेदः, अयमभिप्रायः—स्यादयमन्योन्याश्रयो दोषो यदि येन धर्माधर्मविशेषेण यो देहविशेष उत्पन्नस्तेनैव देहेन सधर्माधर्म उत्पद्येत, नचैवमपि तु एकस्मादात्मशरीरसम्बन्धाद्यो धर्माधर्मविशेष उत्पादितस्तेन च शरीरात्मसम्बन्धो 'द्वितीय.' समुत्पन्नः तेन च द्वितीयेन यः कृतो धर्माधर्मविशेषः तेनायं वर्त्तमानः शरीरात्मसम्बन्धस्तृतीयो जात एवं क्रमेणानादिरयं संसारप्रवाहः प्रचलतीत्यतोनान्योन्याश्रयः, वर्त्तमानशरीरसम्बन्धात्पूर्वः शरीरसम्बन्धः किं हेतुक इति शंकामपाकर्तुं सम्बन्धं विशिनष्टि—पूर्वधर्माधर्मभेदजन्मन इति । 'तच्छरीरात्' पूर्वाभ्यां धर्माधर्मविशेषाभ्यां जन्म यस्य स तथोक्तः । एष तु वर्तमानस्तु । नन्वेवमसङ्गस्यात्मनः कर्तृत्वाभावात् 'स्वर्गकामो यजेत्' इत्यादि श्रुतिरप्रामाणिकी ; स्यादित्याशङ्कां निराकरोति भाष्यकारः—एतेनेति । मिथ्याभिमानस्य शरीरात्मसम्बन्धहेतुत्वेनेत्यर्थः । पुरुषात् अगृह्यमाणविशेषे इति सम्बन्धः । सांशयिकौ पुरुषशब्दप्रत्ययौ

शाङ्करभाष्यम्

तभृत्यसम्बन्धित्वात्तेषां कर्तृत्वोपपत्तेः । न त्वात्मनो धन-दानादिवच्छरीरादिभिः स्वस्वामिसम्बन्धनिमित्तं किञ्चिच्छ-क्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः सम्बन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् । अत्राहुः—देहा-दिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेत्, न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्व-प्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादि-मानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाक्

भामती

करणम् । न त्वियं विधाऽऽत्मनीत्याह—न त्वात्मन इति । 'ये तु देहादावात्माभिमानो न मिथ्याऽपि तु गौणो माणवकादाविव सिंहाभिमान इति मन्यन्ते तन्मतमुपन्यस्य दूषयति—अत्राहुरिति । प्रसिद्धो वस्तुभेदो यस्य पुरुषस्य स तथोक्तः । उपपादितं चैतदस्माभिर-ध्यासभाष्ये इति नेहोपपाद्यते । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्य-माणविशेषे वस्तुनि पुरुषात्, सांशयिकौ पुरुषशब्दप्रत्ययौ स्थाणुविषयौ तत्र हि पुरुषत्वमनियतमपि समारोपितमेव । एवं संशये समारोपितम-निश्चितमुदाहृत्य विपर्ययज्ञाने निश्चितमुदाहरति—यथा वा शुक्ति-

प्रकाशः

'स्थाणुर्वा पुरुषो वा' इति संशयात्मकः प्रत्ययः एतादृशं वाक्यं चेत्यर्थः । अनि-यतम् अनिश्चितम् । निश्चितमिति विपर्यासस्यापि निश्चयत्वात् । ननु भाष्ये-ऽकस्मादित्युक्तं तन्न युक्तं भ्रान्तेरपि स्वोचितकारणापेक्षत्वेन कारणं विनोत्पत्त्य-सम्भवादित्याशङ्कायामदृष्टजन्यत्वमकस्माच्छब्देन विवक्षितमित्युपपादयति—

शाङ्करभाष्यम्

मुख्योऽन्यः प्रसिद्धः, ततश्चाऽन्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वद् देहादिसङ्घातेऽहमिति

भामती

कायामिति । शुक्लभास्वरस्य द्रव्यस्य पुरःस्थितस्य सति शुक्तिकारजतसाधारण्ये यावदत्र रजतविनिश्चयो भवति तावत्कस्माच्छुक्तिविनिश्चय एव न भवति । संशयो वा द्वेधा युक्तः, समानधर्मधर्मिणोर्दर्शनात् उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषद्वयस्मृतेश्च । संस्कारोन्मेषहेतोः सादृश्यस्य द्विष्ठत्वेनोभयत्र तुल्यमेतदिति अत उक्तम्—अकस्मादिति । अनेन दृष्टस्य हेतोः समानत्वेऽप्यदृष्टं हेतुरुक्तः । तच्च कार्यद-

प्रकाशः

शुक्लभास्वरस्येति । पुरोऽवस्थिते द्रव्ये शुक्तित्वस्य विद्यमानतया सन्निकर्षस्य च तेन सह चक्षुषः संयुक्तसमवायस्य तादृशतादात्म्यस्य वा सत्त्वात्कुतो न रजतभ्रमात्प्राक् शुक्तित्वनिश्चय एव जायते नहि तस्यां दशायां शुक्तित्वं नास्तीतिव्यतिरेकनिश्चयोऽस्ति यः शुक्तित्वनिश्चयं प्रतिरुन्धानो रजतभ्रममुत्पादयेत, न च शुक्तित्वस्योद्बोधकाभावेन विशेषणोपस्थितेरभावान्न शुक्तित्वविशिष्टज्ञानं सम्भवतीति वाच्यम्, विशेषणस्मृतेरभावेऽपि तदंशे प्रदर्शितस्य सन्निकर्षस्य सत्त्वेन निर्विकल्पस्य तदनुभवस्य सम्भवात् । अपि च यदेव शुक्लभास्वरत्वं रजतत्वे संस्कारोद्बोधकं तदेव शुक्तित्वांशेऽपि सम्भवति तस्योभयसाधारण्यात्, विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वस्यासैद्धान्तिकत्वाच्च । यदि तु दोषः शुक्ति-

प्रकाशः

त्र निश्चयस्य प्रतिबन्धक इत्युच्येत तदा तत्संशयोऽस्तु संशयसामग्र्याः सत्त्वादि-त्यभिदधाति—**संशयो वेति**। संशयसामग्री हि त्रिधा न्यायदर्शनेऽभिहिता—साधारणधर्मदर्शनमसाधारणधर्मदर्शनं विप्रतिपत्तिश्च। तत्र विप्रतिपत्तिवाक्य-स्याभावेन तदात्मिकायाः सामग्र्याः प्रकृतेऽभावेऽपि अपरस्याः द्विविधाया अपि सामग्र्याः सत्त्वमस्त्येव, तत्र साधारणधर्मदर्शनस्यात्र सत्त्वमाह—**समान-धर्मधर्मिण** इति। समानो धर्मो यस्य स समानधर्मा स चासौ धर्मी च समा-नधर्मधर्मी तस्य। अत्र धर्मिणोरिति पाठस्तु लेखकप्रमादापतितः। अत एव परि-मले **समानधर्मधर्मिण** इति विशेषणं व्याचष्टे इत्युक्तम्। समानधर्मस्य दर्श-नेऽपि निश्चयः स्यादन्यतरकोटिनिर्णायकं प्रमाणमुपलभ्येत, यथा ऊर्ध्वत्वादेः स्थाणुपुरुषसाधारणधर्मस्य ज्ञानेऽपि शाखादिविशेषदर्शनात् स्थाणुत्वनिश्चयो जायत एव, एकतरकोटेर्बाधकं वा प्रमाणमुपलभ्येत तदापि निश्चयः स्यात् यथा तत्रैव पुरुषत्वस्य बाधकं निश्चेष्टत्वादिकम्, अत्र तु नैतदुभयमपि निश्चय-कारणमित्यताह—**उपलब्ध्यनुपलब्ध्यव्यवस्थात** इति। उपलब्धेः साधकप्रमाण-स्य अनुपलब्धेर्बाधकप्रमाणस्य चाव्यवस्था 'विरहः' सापीहास्ति अतः संशयो वा युक्त इति पूर्वेणान्वयः।

ननूभयकोटिरूपविशेषद्वयस्मृतिरपि संशयहेतुः सा चेह नास्ति अपि तु अत्रैकं रजतमेव स्मृतमिति विपर्यय एव स्यान्न संशय इत्यत आह—**विशेष-द्वये**ति। अत्र हेतुमाह—**संस्कारे**ति। उद्बुद्धो हि संस्कारः स्मृतिं जनयितुं प्रभ-वति उद्बोधहेतुश्च सादृश्यस्यात्र ज्ञानम् तच्च शुक्तिरजतयोरुभयोस्तुल्यमतः शुक्ति-र्वा रजतम्वेति संशय एव युक्त इत्यर्थः। अकस्मात्पदेनाऽयमर्थमाह—**अनेने**ति।

शाङ्करभाष्यम्

निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम्। आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः। तस्माद् देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहा-

## शाङ्करभाष्यम्

द्वावहंप्रत्ययो मिथ्यैव न गौणः । तस्मात् मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथा च ब्रह्मविद्विषया श्रुतिः—'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' इति । (बृ० ४।४।७) 'सचक्षुरचक्षुरिव सकर्णोऽकर्णइव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च—'स्थितप्रज्ञस्य का भाषा' इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसम्बन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासा-

## भामती

र्शनोन्नेयत्वेनासाधारणमिति भावः । आत्मानात्मविवेकिनामिति । श्रवणमननकुशलतामात्रेण पण्डितानामनुत्पन्नतत्त्वसाक्षात्काराणामिति यावत् । तदुक्तम् 'पश्वादिभिश्चाविशेषादि'ति । शेषमतिरोहितार्थम् । जीवतोविदुषोऽशरीरत्वे च श्रुतिस्मृती उदाहरति—तथा चेति सुबोधम् । प्रकृतमुपसंहरति—तस्मान्नावगतब्रह्मात्मभावस्येति । ननूक्तं—यदि

## प्रकाशः

अदृष्टमप्युभयसाधारणं कुतो नेत्यत आह—तच्चेति । भाष्ये—तद्यथाऽहिनिर्ल्वयनीत्यादि । अयञ्च देहे वर्तमानोऽपि जीवन्मुक्तो न पूर्ववत्संसारीत्यत्र दृष्टान्तः । यथा लोके अहिनिर्ल्वयनी सर्पत्वक् वल्मीकादौ प्रत्यस्ता प्रक्षिप्ता मृता पूर्वमिवाहिनाऽऽत्मत्वेनानभिमता शयीत शेते तिष्ठतीतियावत्, यथा च प्रत्यस्तया त्वचा रहितस्तामहमिति नाहिरभिमन्यते, एवमेवायं जीवन्मुक्तो देहस्थोऽपि

## शाङ्करभाष्यम्

वगतब्रह्मात्मभाव इत्यनवद्यम् । यत्पुनरुक्तं श्रवणात् पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्व-

## भामती

जीवस्य ब्रह्मात्मत्वावगतिरेव सांसारिकधर्मनिवृत्तिहेतुः, हन्त मननादिविधानानर्थक्यं, तस्मात्प्रतिपत्तिविधिपरा वेदान्ता--इति, तदनुभाष्यदूषयति--यत्पुनरुक्तं श्रवणात्पराचीनयोरिति । मनननिदिध्यासनयोरपि

## प्रकाशः

तत्राहमिति नाभिमन्यते अत एवाशरीरः शरीराभिमानरहितः अमृतः देहाभिमानवतो हि मृतिः निरुपाधिः सन् प्राणिति जीवतीति प्राणः । स च ब्रह्मैव, तच्च ब्रह्म तेजो विज्ञानमेवेत्यर्थः । सचक्षुरिति वस्तुतोऽचक्षुरपि बाधितानुवृत्त्या सचक्षुरित्यर्थः । भाष्ये—पराचीनयोः पश्चाद्भाविनोः । मनननिदिध्यासनयोरपीति–अपिना श्रवणं परिगृह्यते । कैश्चित्तु विद्यारण्यप्रभृतिभिः श्रवणे नियमविधिं मन्यमानैः भाष्यस्य केवलं साक्षात्कारादिविधिपरत्वप्रत्याख्यानपरत्वं सङ्गम्यते, तद्भाष्यस्वारस्यविरुद्धम् युक्तिविरुद्धं च, यदि हि श्रवणे विधिं भाष्यकारोऽनुमन्येत तदाऽयम् 'किमर्थानि तर्हि आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इत्यादीनि विधिच्छायानि' इत्यत्र श्रोतव्यपदं नोपाददीत नियमादृष्टकल्पने गौरवम् मानाभावश्च । नन्वेवं 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यंच पाण्डित्यं च निर्विद्याथ मुनिः, इतिश्रुतिः सहकार्यन्तरविधिरिति (४७।४।३) सूत्रं तद्भाष्यं तत्रत्या 'तस्माद्विधिरेवास्थेयः, इति भामती च विरुध्येरन्निति चेदत्रेदमवगन्तव्यम् अन्वयव्यतिरेकावधृतकार्यकारणभावे फलार्थिनां व्यासङ्गमात्रेण भेददर्शनप्राबल्येन मननमात्रेण कृतकृत्यतां मन्यमानस्य निदिध्यासने 'ध्याने' अनुत्सहमानस्योत्साहजननार्थं विधिसरूपोऽयमर्थवाद इत्यत्रैव सर्वेषामेषां तात्पर्यम् अत एव 'विधिच्छायावचनानीत्यादि पूर्वोक्तभाष्यादिकं संगच्छते इति ।

इदमपि च विचारमर्हति तिस्रः खलु विधेर्विधा भवन्ति अपूर्वं विधिः नियमविधिः परिसंख्याविधिश्चेति, तत्र श्रोतव्यार्थसाक्षात्कारं प्रति श्रवणस्य, मन्तव्यार्थ ज्ञानंप्रति मननस्य ध्येयार्थसाक्षात्कारं प्रति ध्यानस्य च हेतुत्वमन्वय व्यतिरेकसिद्धमेव तस्मान्नापूर्वविधिः नापि नियमविधिः आत्मसाक्षात्कारं प्रति-

शाङ्करभाष्यम्

रूपपर्यवसायित्वमिति । न, श्रवणवत् तदवगत्यर्थत्वात् मनननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्माऽन्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम् । न तु तदस्ति, मनननिदिध्या-

भामती

न विधिस्तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात्, तदिदमुक्तम्---अवगत्यर्थत्वादिति । ब्रह्मसाक्षात्कारोऽवगतिस्तदर्थत्वं मनननिदिध्यासनयोरन्वयव्यतिरेकसिद्धमित्यर्थः । अथ कस्मान्मननादिविधिरेव न भवतीत्यत आह--यदि ह्यवगतमिति । न तावन्मनननिदिध्यासने प्रधानकर्मणी अपूर्वविषये अमृतत्वफले इत्युक्तमधस्तात्, अतो गुणकर्मत्वमनयोरवघातप्रोक्षणादिवत् परिशिष्यते, तदप्ययुक्तम् अन्यत्रोपयुक्तोपयोक्ष्यमाणत्वाभावादात्मनः, विशेषतस्त्वौ-

प्रकाशः

वेदान्तश्रवणादिकमन्तरेण हेत्वन्तरस्य पक्षे प्राप्त्यभावात्, अतएव च न परिसंख्या विधिः हेत्वन्तरस्याप्राप्त्या तन्निवर्तनासंभवात् । तदुक्तं मीमांसकप्रवरैः

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्रच प्राप्तौ परिसंख्या विधीयते ॥ इति ।

तस्माद्विध्यभावपक्ष एव युक्तयालिङ्गितो भाष्यमनुसरन् सद् विचारकमलवनोद्घाटनकुशलभास्वतामाचार्य वाचस्पतिमिश्राणामनुमतः श्रेयानिति । अन्वयव्यतिरेकसिद्धमिति । षड्जादिसाक्षात्कारहेतुत्वस्य गान्धर्वशास्त्रश्रवणादेर्दर्शनादिति पूर्वमुपपादितत्वमेवेति भावः । गान्धर्वशास्त्राभ्यासो यथाऽपूर्वानपेक्षः साक्षादेव साक्षात्कारं जनयति तथा वेदान्तश्रवणादिकमपीति प्रथमसूत्रे वर्णितं स्मारयति—इत्युक्तमधस्तादिति । गुणकर्मत्वमिति उपयोक्ष्यमाणशेषः उपयुक्तशेषश्च गुणकर्मेत्यभिधीयते आद्यं 'व्रीहीनवहन्ति' इति विधिबोधितावघातादिकम्, द्वितीयं 'प्रयाजशेषेण हवींष्यवघारयेत्' इति विधिबोधितं कृतप्रयोजनस्य प्रयाजशेषाज्यस्य हविषामुपरि क्षारणम्, तद्वदिहात्मा नोपयुक्तो नाऽप्युपयोक्ष्यमाणोऽतो न तद्विषयं मननादि गुणकर्मेत्याह—तदपीति । नचास्तु आत्मसाक्षात्कारोत्पत्तौ श्रवणादीनामुपयोगात्

शाङ्करभाष्यम्

मननयोरपि श्रवणवदवगत्यर्थत्वात्। तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम्। एवं च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते। प्रतिपत्तिविधिपरत्वे हि

भामती

पनिषदस्य कर्मानुष्ठानविरोधादित्यर्थः। प्रकृतमुपसंहरति--तस्मादिति। एवं सिद्धरूपब्रह्मपरत्वमुपनिषदाम्। ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वाद्भिन्नविषयत्वेन शास्त्रभेदाद् 'अथातो ब्रह्मजिज्ञासे'त्यस्य शास्त्रारम्भत्वमुपपद्यत इत्याह--एवं च सतीति। इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्यत आह—प्रतिपत्तिविधिपरत्व इति। न केवलं सिद्धरूपत्वाद्ब्रह्मात्मैकत्वस्य धर्मादन्यत्वमपि

प्रकाशः

तेषामात्मसंस्कारकतया संस्कारकर्मत्वमतश्च गुणकर्मत्वं श्रवणादीनाम् श्रवणादिसंस्कृतस्यैवात्मनः साक्षात्कारजनकत्वादिति वाच्यम्, अपूर्वद्वारोपयोगिन एव हि गुणकर्मत्वम्, दृष्टे च साक्षात्कारेऽपूर्वस्योपयोगाभावेन तदयोगात्। भाष्ये—श्रवणवदवगत्यर्थत्वादिति। एतेन श्रवणमनननिदिध्यासनानां त्रयाणामप्येकरूपताप्रतिपादनात् श्रवणेऽपि विधित्वं भाष्यकृतामसम्मतमिति स्पष्टं प्रतीयते तस्मात् श्रवणविधिवादिनां विद्यारण्यादीनां मतं भाष्यविरुद्धं भूयः प्रदर्शित युक्तिविरुद्धं च नियमादृष्टकल्पकाभावादित्यवगन्तव्यम् सर्वापेक्षाधिकरणे च श्रवणमननोपासन 'निदिध्यासन' साक्षात्काराणां चतुर्णामपि ज्ञानरूपत्वं प्रतिपादितमेव भामत्याम् ज्ञानस्य च प्रमाणजन्यतया विध्यगोचरत्वस्य बहुशः प्रतिपादनात्, तत्र योषा वा गौतमाग्निरित्याद्युपासनानां प्रमाणविषयाणां विधिविषयत्वेऽपि प्रकृते आत्मोपासनस्य निदिध्यासनरूपस्य ज्ञानस्वरूपपर्यवसायिनो न विधिविषयताकत्वमिति

## शाङ्करभाष्यम्

'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत। आरभ्यमाणं चेत्रमारभ्येत—'अथातः परिशिष्टधर्मजिज्ञासेति' 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (४।१।१) इतिवत्, ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—'अथातो ब्रह्मजिज्ञासा' इति। तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि। न

## भामती

तु तद्विरोधादपीत्युपसंहारव्याजेनाह—तस्मादहं ब्रह्मास्मीति इतिकरणेन ज्ञानं परामृशति। विधयो हि धर्मे प्रमाणं, ते च साध्यसाधनेतिकर्तव्यताभेदाधिष्ठाना धर्मोत्पादिनश्च तदधिष्ठाना न ब्रह्मात्मैक्ये सति प्रभवन्ति, विरोधादित्यर्थः। न केवलं धर्मप्रमाणस्य शास्त्रस्येयं गतिरपि तु सर्वेषां प्रमाणानामित्याह—सर्वाणि चेतराणि प्रमाणानीति। कुतः नहीति। अद्वैते हि विषयविषयिभावो नास्ति। न च कर्तृत्वं, कार्याभावात्। न च करणत्वम्, अत एव। तदिदमुक्तम्—

## प्रकाशः

ननु पूर्वकाण्डे यागविधयो विचारिताः उपनिषदि तु मानसज्ञानविधिविचारोऽतः पृथगारम्भ इत्याशङ्कां भाष्यकृदपनुदति आरभ्यमाणं चेति-भाष्ये इत्येतदवसाना इति इतः पूर्वमेवेत्यर्थः। उपनिषद्वाक्याज्जायमानेऽद्वितीयात्मज्ञाने विध्यसम्भवं प्रतिपादयति—विधयो हीति। साध्येत्यादि। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ हि लिङादिप्रतिपाद्यभावनायाः साध्याकाङ्क्षायां स्वर्गादिकं सम्बध्यते, साधनाकाङ्क्षायां च यागादिः, इतिकर्त्तव्यताकाङ्क्षायां च प्रयाजादिरतोऽशत्रयवती भावनेत्युच्यते।

### विकासः

साध्येत्यादि । ननु धात्वर्थातिरिक्तां भावनामेव नोपलभामहे या साध्यं साधनमितिकर्त्तव्यतां चापेक्षेत, भावकव्यापारोभावनेति चेत् ? पचियजिगमि प्रभृतिषु धात्वर्थातिरिक्तस्य भावकव्यापारस्य 'भावनाया' अभावात्, यत्नो भावकव्यापार इति चेत् ! न, वृक्षश्चलति, काष्ठानि पचन्तीत्यादौ प्रयत्नाभावात्, स्पन्द इति चेन्न, आत्मकर्तृकेषु यजति ददाति जुहोतीत्यादिषु तदभावादिति चेदत्राहुः—चतुर्वेदभाष्यभूमिकायां माधवाचार्याः धात्वर्थस्यास्ति रूपद्वयम् । तत्र पाकः, यागः, प्रयत्नः, सङ्कल्पः, अधिश्रयणं, विक्लेदनम्, अभिधानमिति प्रातिस्विकं पचप्रभृति धात्वभिधेयम् अक्रियात्मकं सिद्धस्वभावम् एकं रूपम्, अपरं च धात्वर्थानुगतं करोति प्रत्ययवेद्यं क्रियात्मकं साध्यस्वभावम् आख्यातप्रत्ययवेद्यम् । स्पन्दते स्पन्दनं करोति यजते यागं करोति इत्येवं भवति सर्वत्र करोत्यर्थस्यानुगतिः, तस्मात्करोतिप्रत्ययवेद्यमुत्पाद्यविविधधात्वर्थकर्मकमेतदेवापरं भावयितुः प्रयोजकव्यापारत्वात् भावनेत्युच्यते । तच्च पचेत्, यजेत, दद्यात्, जुहुयात् इत्याद्याख्यातप्रयोगेष्वेवावगमात् पाकः यागः दानं होम इत्यादिष्वननुगमाच्च अन्वयव्यतिरेकाभ्यामाख्यातप्रत्ययाभिधेयमङ्गीक्रियते । यदाहुः—

अभिधा भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥ इति ।

### शाङ्करभाष्यम्

**ह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः—**

### भामती

**अप्रमातृकाणि चेति चकारेण । अत्रैव ब्रह्मविदां गाथामुदाहरति—अपि चाहुरिति । पुत्रदारादिष्वात्माभिमानो गौणः । यथा स्व दुःखेन दुःखी यथा स्वसुखेन सुखी तथा पुत्रादिगतेनापीति सोऽयं गुणः न त्वेकत्वाभिमानो, भेदस्यानुभवसिद्धत्वात् । तस्माद्गौर्वाहीक इतिवद्-**

### प्रकाशः

भेदाधिष्ठानाः भेदविषयाः । ईदृशां चामीषां विधीनां नित्यसिद्धाद्वितीयब्रह्मज्ञाने विरोध एवेत्याह—धर्मोत्पादिन इति । तदधिष्ठानाः धर्मं विना स्थितिमलभमानाः । नहीत्यादि निर्विषयाणीत्यन्तं भाष्यं विवृणोति—अद्वैते

शाङ्करभाष्यम्

'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येवं बोधि कार्यं कथं भवेत् ॥

भामती

गौणो, देहेन्द्रियादिषु त्वभेदानुभवान्न गौण आत्माभिमानः, किन्तु शुक्तौ रजतज्ञानवन्मिथ्या। तदेवं द्विविधोऽयमात्माभिमानो लोकयात्रां वहति। तदसत्त्वे तु न लोकयात्रा नापि ब्रह्मात्मैकत्वानुभवस्तदुपायस्य श्रवणमननादेरभावात् । तदिदमाह—पुत्रदेहादिबाधनात् । गौणात्मनोऽसत्त्वे पुत्रकलत्रादिबाधनं, ममकाराभाव इति यावत् । मिथ्यात्मनोऽसत्त्वे देहेन्द्रियादिबाधनं श्रवणादिबाधनं च । तथा च न केवलं लोकयात्रासमुच्छेदः सद् ब्रह्माहमित्येवंबोधशीलं यत्कार्यमद्वैतसाक्षात्कार इति यावत्, तदपि कथं भवेत । कुतस्तदसंभव इत्यत आह—

प्रकाशः

हीति। अप्रमातृकाणीति भाष्यं व्याचष्टे नच कर्तृत्वम् नापि ज्ञानकर्तृत्वम्। भाष्यस्थ च शब्दः करणनिषेधार्थ इत्याह-तदिदमिति यद्यपि भाष्यस्थप्रमाणशब्देन करणनिषेधः प्राप्यते तथापि तस्य प्रमाणशब्दस्य भावव्युत्पत्त्या प्रमापरत्वम्, अन्यथा प्रमानिषेधो न पर्यवस्यतीति भावः। गौणात्मनोऽसत्त्वे इति। पुत्रादावुपकारके य आत्माभिमानस्तस्य निवृत्तौ सत्यां भवति ममत्वबाधनमित्यर्थः। मिथ्याऽऽत्मनोऽसत्त्वे देहेन्द्रियादिष्वात्माभिमानस्य निवृत्तौ सत्यां यद् भवति तदाह—देहेन्द्रियादिबाधनमित्यादि। श्रवणादिप्रमाणबाधमुक्त्वा प्रमितिबाधमप्याह-न केवलमिति। साक्षात्कारो हि स्वविरोध्यज्ञानं तत्कार्यं च निवर्त्तयन् स्वयमप्यविद्याकार्यत्वाविशेषान्निवर्त्तते कतकरेणुवदित्युपपादितमधस्ताद् । बोधशीलमिति अनेन ताच्छील्ये णिनिप्रत्ययान्तः बोधीति प्रथमान्तपाठो विवृतः। यदि च 'बोधे' इति सप्तम्यन्तः पाठस्तदा तु आत्मसाक्षात्कारे जाते कार्यं शरीरादिकं कथं भवेदित्यर्थः सोऽयं निगदव्याख्यातत्वान्न दर्शितः। सकृदुत्पन्नतत्त्वसाक्षात्कारेण प्रमात्रादौ ज्ञानकारणे निवृत्ते तत ऊर्ध्वं

## शाङ्करभाष्यम्

अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥

## भामती

अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मनः ।

उपलक्षणं चैतत् । प्रमाप्रमेयप्रमाणविभाग इत्यपि द्रष्टव्यम् । एतदुक्तं भवति एष हि विभागोऽद्वैतसाक्षात्कारकारणम् ततो नियमेन प्रागभावात् । तेन तदभावे कार्यं नोत्पद्यते इति । न च प्रमातुरात्मनोऽन्वेष्टव्यः आत्माऽन्य इत्याह—

अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥

उक्तं ग्रीवास्थग्रैवेयकनिदर्शनम् । स्यादेतत्, अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह—

## प्रकाशः

न ज्ञानमनुवर्त्तत इति श्लोकार्धे व्याख्याते तदानीं जीवस्यापि लयात्कस्य मोक्षः स्यादतो मोक्षस्य पुरुषार्थतैव हीयेत इति शङ्कामपाकरोति द्वितीयार्धव्याख्यानेन नच प्रमातुरित्ति । परमात्मा हि अन्वेष्टव्यः स च न प्रमातृत्वोपलक्षिताच्चिदेकरसादन्वेष्टुर्वस्तुतो भिद्यतेऽतः केवलस्य प्रमातृत्वस्योपलक्षणस्य बाधेऽपि उपलक्षित आत्मा न बाध्यतेऽतो नानुपपत्तिरिति भावः । नन्वन्वेष्टुरात्मभूतमेव यदि ब्रह्म तदा किमिति संसारदशायां न प्रथते इत्याशङ्क्याह—उक्तमिति । निदर्शनम् दृष्टान्तः । ननु प्रमातृत्वप्रमाणादेर्बाध्यत्वेन कथं ततः पारमार्थिकाद्वैतप्रमोत्पाद इत्याशङ्कानिरासकत्वेन तृतीयं श्लोकमवतारयति—स्यादेतदिति ।

## शाङ्करभाष्यम् ।

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥' इति ।

इति चतुःसूत्री समाप्ता ।

## भामती

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं तु, अस्यावधिमाह-आऽऽत्मनिश्चयात् ॥

आ ब्रह्मस्वरूपसाक्षात्कारादित्यर्थः । एतदुक्तं भवति पारमार्थिकप्रपञ्चवादिभिरपि देहादिष्वात्माभिमानो मिथ्येति वक्तव्यं, प्रमाणबाधितत्वात्, तस्य च समस्तप्रमाणकारणत्वं भाविकलोकयात्रावाहित्वं चाभ्युपेयम् । सेयमस्माकमप्यद्वैतसाक्षत्कारे विधा भविष्यति । न चायमद्वैतसाक्षात्कारोप्यन्तःकरणवृत्तिभेद एकान्ततः परमार्थः । यस्तु साक्षात्कारो भाविको, नासौ कार्यस्तस्य ब्रह्मस्वरूपत्वात् । अविद्या तु

## प्रकाशः

तस्य च अभिमानस्य च । भाविकलोकयात्रेति लौकिकपारमार्थिकव्यवहारेत्यर्थः । एकान्ततः परमार्थ इति । तथा च यादृशसत्ताकं प्रमातृत्वशरीरेन्द्रियादिकं तादृशसत्ताक एव साक्षात्कारोऽपीति नापारमार्थिकात्पारमार्थिकोत्पत्तिरिति । अत्र यद्यपि चिदंशः प्रतिबिम्बितः सत्योऽस्ति तथापि नेयं वृत्तिः सर्वात्मना सत्येति चिख्यापयिषया एकान्तत इत्यस्योक्तिः । भाविकः पारमार्थिकः । ननु वृत्त्यात्मकः साक्षात्कारोऽविद्यापरिणामतयाऽऽविद्यकः कथं स्वकारणमविद्यामुन्मूलयेत्, कथं वा स्वविरोधिनं तमविद्या प्रादुर्भावयेत् इत्याशङ्क्याह— अविद्या त्विति आविद्यकः साक्षात्कारस्तु स्वयमपारमार्थिकोऽपि पारमार्थिकविषयत्वादविद्यानिवर्त्तकः । उच्छिन्द्यादिति यथा स्वप्ने पर्यापतन्तोऽतिभयङ्कराः सिंहव्याघ्रादयः स्वप्नदृशं व्याकुलतामुत्पाद्योत्थापयन्तः स्वोपादनं निद्रात्मिकामविद्यामु-

## भामती

यद्यविद्यामुच्छिन्द्याज्जनयेद्वा, न तत्र काचिदनुपपत्तिः। तथा च श्रुतिः—

## प्रकाशः

च्छेदयन्तः स्वयमपि निवर्तन्ते तद्वदिति । जनयेद्वा स्वनाशकसाक्षात्कारात्मिकामविद्यामिति शेषः । साक्षात्कारस्याविद्याकार्यत्वेनाविद्यात्मकत्वम् परिणामपरिणामिनोस्तादात्म्यादवगन्तव्यम् । न काचिदनुपपत्तिरिति । अविद्यायां हि कार्यजनकत्वं कार्यनाश्यत्वंच सर्वमुपपद्यते, अघटितघटनापटीयस्त्वात्तस्याः मायारूपायाः । तदुक्तम्—मैथिलकुलकमलसमुल्लासचतुरसहस्रकिरणैः मण्डनमिश्रचरणैः 'नहि मायायां काचिदनुपपत्तिरनुपपद्यमानार्थैव हि माया, इति ।

## विकासः

न काचिदनुपपत्तिरिति । जीवाणुत्वसत्ख्यातिवादप्रपञ्चसत्यत्वात्मभेदादीनां खण्डनानि युक्तिपूर्णानि अधस्तात्प्रादर्शयमेव, तेनैव द्वैतवादिनां माध्वानां द्वैताद्वैतवादिनां निम्बार्काणां विशिष्टाद्वैतवादिनां रामानुजाचार्याणां, ब्रह्मपरिणामवादिनां नित्यभेदमुपगच्छतां नाम्नैव शुद्धाद्वैतवादं स्वीकुर्वतां वल्लभाचार्याणां जीवाणुत्वाद्युपगन्तॄणां चतुर्णामेषां वैष्णवानामन्येषाञ्चाद्वैतवादप्रतिपक्षाणां पक्षाः प्रतिक्षिप्ता एवेति पुनस्तल्लिखनं पौनरुक्त्यमेवापादयेदतस्तत्परित्यज्यते । अन्यस्मिन्नपि मतेऽनुपपत्तिः स्थाने स्थाने भाष्ये भामत्यां प्रकाशे विकासे ग्रन्थान्तरे च प्रदर्शितैव, तस्मादद्वितीयं ब्रह्मैव परमार्थसत् अन्यत्तु तद्विवर्तोऽविद्यापरिणाम एवेति सिद्धम् ।

यत्तु अविद्याया निमित्तकारणत्वं भामतीकृतां मतमिति कल्पतरुकारमारभ्य सर्वे महान्तो मधुसूदनसरस्वतीप्रभृतयो ग्रन्थकृत ऊचिरे तत्तु नास्मभ्यं रोचते अविद्याया निमित्तत्वे कस्येदं जगत् परिणामः स्यात् न ब्रह्मणोऽविकृतत्वात्, नच ब्रह्मणो विवर्त्त एव जगत् न कस्यचित्परिणाम इति शक्यते वक्तुम्, अन्यस्य कस्यचिदपि परिणामित्वाभावे विवर्त्तपरिणामयोः नाम्नैव भेदः स्यात्, नार्थतः, ब्रह्मणः परिणामित्वं तु न भामतीकृतोऽभिमतम् अपित्वविद्याया एव अत एव वक्ष्यति—

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति ।

अत एव च वक्ष्यति 'सर्वं हि विकारजातं तदविद्याशक्तिपरिणाम' इत्युक्तमधस्तात् तस्माज्जगदाकारपरिणममानाविद्याऽधिष्ठानत्वेन ब्रह्माप्युपादानमस्य विवर्त्तस्य जगतः रज्जुरिवाज्ञानपरिणामस्य सर्पस्य, तत्रैवोत्पत्तिस्थितिलयदर्शनात् अत एवोपदिशति श्रुतिः—

## विकासः

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति । नन्वेवम् कालदिशोरपि 'इदानीं घट उत्पन्नः' इदानीमस्ति, इदानीं नष्टः, पूर्वस्यां दिशि घट उत्पन्नः, पूर्वस्यामस्ति घटः, पूर्वस्यां विनष्ट इत्यबाधितप्रतीत्या तयोरप्युपादानत्वं स्यात् एवं गृहे घट उत्पन्नः विद्यते विनष्ट इत्यादिप्रतीत्या गृहादेरपीति चेत् ? न

दृश्यते हि यथा 'मृद्घटः' सुवर्णं कुण्डलम्' इत्यादिषु सर्वत्रोपादानोपादेययोस्तादात्म्यम्, तथा प्रकृतेऽपि 'सन् घट, सन् पटः' इति तदेतत् दृश्यमान तादात्म्यं नोपादानत्वमृते शक्यते सम्भवितुम् सत्ताजातेर्भूयस्या युक्तिधारयाऽधरीकृतत्वात्, कालदिग्गृहादीनां तु तादात्म्यं न घटादावत्रगाह्यते कयाचिदपि प्रतीत्या, नहि भवति 'कालो घटः' दिग् घटः, गृहं घटः' इति प्रतीतिः प्रामाणिकी कापि केषाञ्चित्परीक्षकाणाम् ।

तस्मादुपदर्शितयुक्तिभिरतिबहलचपलकल्लोलमालापरस्परास्फालनसमुपजातोपर्यधोनयनशुष्कालाबुफलानामिवाविद्याविलासलालसासक्तसंसार पारासारसागरोर्मिसम्पातपरम्परासंजातोपर्यधो नयनानां प्रपञ्चसत्यत्वमभिवाञ्छतां मनांसि सन्तापयन्तीभिः प्रणयिजनमनःकमलविकासोल्लासचतुराभिः परमानन्दावाप्तिसाधनाह्लादकुशलाभिर्गाढमालिङ्गितया तया तया श्रुत्या ब्रह्मणः प्रदर्शितमुपादानत्वं को निवारयितुं क्षमेत, अविद्याया जडाया अनुपादानत्वे च 'जडो घटः' इत्यादिप्रतीतिं कोऽन्यः समर्थयितुमुत्सहेतेत्यतः सापि परिणामितयोपादानमिति वेदान्तसिद्धान्तोऽनवद्यः, एवं चोपनिषद्वाक्यानां विरोधभङ्गाद्द्वितीये ब्रह्मणि तेषां समन्वयः सिद्ध्यतीत्येष एव च परमः पन्थाः श्रेयोऽर्थिभिरालम्बनीयः ।

अथ प्रसङ्गात् अन्येषामपि सर्वेषां दर्शनानां संक्षेपतो विरोधपरिहारप्रकारः अद्वैते समन्वयश्च प्रदर्श्यते

तथाहि सर्वाणि खल्विमानि आस्तिकदर्शनानि स्वस्वाधिकारिभेदेन भिन्नप्रकारेणोपदिश्यमानान्यपि न परस्परं विरोधमावहन्ति ।

प्रथमं तावत् न्यायवैशेषिकौ परमतात्पर्यविषयीभूतेऽर्थे नान्योऽन्यं कलहं कुर्वते वैशेषिकैर्हि द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां जायमानस्य शरीरेन्द्रियादिविविक्तात्मतत्त्वज्ञानस्य मोक्षजनकत्वमाचक्षाणैः वेदप्रामाण्यं चाङ्गीकुर्वाणैः सह प्रमाणादिपदार्थानां तत्त्वज्ञानान्निश्रेयसमुपगच्छतां वेदप्रामाण्यं च व्यवस्थापयतां नैयायिकानां न विरोधलेशोऽपि ।

प्रमाणादयोऽपि हि पदार्थाः द्रव्यादिष्वेवान्तर्भवन्ति प्रमाणेयत्तादौ कियदंशे विवादेऽपि मुख्योद्देश्यांशेऽविगानात् शास्त्रद्वयमेव हि एतत् शरीरेन्द्रियमनः स्वनात्मसु आत्मत्वदर्शिनो मन्दानप्यङ्कीकरोति ।

## विकासः

अथैवमेकेनापरस्य गतार्थत्वादेकतरं शास्त्रं व्यर्थमिति चेन्न एकत्र हि द्रव्यगुणादयः पदार्था विस्तरेण व्युत्पादिताः परत्र हेत्वाभासादयस्तथेति उभयोरप्यावश्यकतया नैकेनापरस्य गतार्थत्वमिति नाविदितं दार्शनिकानां केषांचित्, तस्मान्न न्यायवैशेषिकयोरस्ति मनागपि विरोध इति, नन्वेवमपि एताभ्यां सांख्ययोगौ तौ च परं परं न सामञ्जस्यमर्हतः

सांख्या हि इत्थं मन्यन्ते सुखदुःखमोहात्मकस्य जगतस्तथाविधमेव कारणं भवितुमर्हति, यच्च तथाविधं तदेव प्रधानं प्रकृतिरिति चाख्यायते तच्च स्वत एव प्रवर्तते निवर्तते च, नह्येतत् प्रधानमीश्वराधिष्ठितमन्यथाऽप्युपपत्तेः, दृष्टं हि चेतनानधिष्ठितमप्यचेतनं प्रवर्त्तमानं कार्यमुत्पादयतीति

यथा वत्सादिविवृद्ध्यर्थं क्षीरादिकं स्वयमेव प्रवर्तते तथा प्रधानमप्यचेतनं महदाद्याकारेण स्वयमेव प्रवर्तते, यथा च निर्व्यापारस्याप्ययस्कान्तमणेः संनिधानमात्रेण लोहो व्याप्रियते तथा पुरुषस्यापि निर्व्यापारस्य संनिधानमात्रेण प्रधानं व्याप्रियते इति, परस्परापेक्षानिबन्धनश्च प्रकृतिपुरुषसंयोगः पङ्ग्वन्धवदुपपद्यते प्रकृति र्हि भोग्या स्वभोक्तारं पुरुषं समीहते पुरुषोऽपि भेदाग्रहाद्बुद्धिच्छायापत्त्या बुद्धिगतं दुःखादिकं स्वनिष्ठतया प्रत्येति प्रकृतिपुरुषविवेकख्यात्या च बुद्धेर्लयात् तद्गतं दुःखादिकं नानुभवतीति कैवल्यं लभते इति ।

एतादृशैश्च सिद्धान्तैः कथं वैशेषिकनैयायिकसिद्धान्ताः समन्वेतुं शक्नुयुः अत्यन्तमेव विगानादिति चेन्न, अत्रापि हि सूक्ष्मेक्षिकया समीक्षणे कैरपि दर्शनैः परमतात्पर्यविषये नास्ति विरोधः नैयायिकवैशेषिकयोरात्मनः शरीरादिभेदो वेदप्रामाण्यं च मुख्यस्तात्पर्यविषयः तदेतद्द्वयं न्यायवैशेषिकयोरेकतरेणोभाभ्यां वा सम्यक् परिशीलनयाऽवधृत्य सोपानमारूढः 'असङ्गोह्ययं पुरुषः' इत्यादिश्रुतिप्रतिपादितासङ्गं निरस्तसमस्तधर्मकमात्मानं सांख्यशास्त्रोक्तयुक्तिभिः शक्नोति प्रतिपत्तुम् इत्यानुकूल्यमेव हि सांख्यस्य सम्पिपादयिषति नैयायिकोवैशेषिकश्चेति न विरोधः ।

न च परमाणुवादमवलम्ब्य सृष्टिप्रक्रियाऽत्यन्तं भिन्ना दुःशीला महिलेवानुदिनं कलहं कुर्वती सांख्ययोगयोः न्यायवैशेषिकाभ्यां सामञ्जस्ये विघ्नानुपस्थापयतीति वाच्यम् उक्तमत्र हि पूर्वमेव अधिकारिभेदेन भिन्नानि दर्शनानीति, बौद्धादीनां हि वेदानभ्युपगन्तॄणां परमाणुवादिनां कृते न्यायवैशेषिकौ निर्मितौ तथा च परमाणुवादमवलम्ब्यापि शक्नुमोवयमीश्वरं वेदप्रामाण्यं च साधयितुमिति तान् प्रति प्रौढिप्रकटनाय परमाणुवादस्यावलम्बनं कृतं-सिद्धान्तस्तु वैदिक एव मार्ग इति निगूढोऽभिप्रायोऽतो न भवति विरोधः, अथ सांख्ययोगावपि ईश्वरसद्भावासद्भावयोः परस्परं विप्रतिपन्नतया एतयोः कथं सामञ्जस्यमिति चेन्नैवं विदांकुर्वन्तु भवन्तः ! सांख्यशास्त्रं नेश्वरनिराचिकीर्षया प्रवृत्तमपितु मोक्षसाधनीभूतमन्तःकरणादिधर्मस्य शोकमोहादेरसङ्गे पुरुषेऽसत्त्वं व्युत्पादयितुम् तत्रैव तस्य मुख्यं तात्पर्यम्, यदुद्देशेन यत्प्रवर्तते तदेव हि तस्य मुख्योऽर्थः 'यत्परः स शब्दार्थ' इति न्यायात्

## विकासः

ईश्वरनिराकरणं तु प्रकृत्या महदादौ कार्ये जनयितव्ये ईश्वरो नापेक्ष्यतेऽपि तु स्वतन्त्रतयैव तया कार्यमुत्पाद्यते इति चिख्यापयिषयेति,

इत्थं च सांख्येन प्रकृतिपुरुषविवेको विज्ञाप्यते योगेन च तत्साक्षात्कारोपायः प्रदर्श्यते इत्यनयोर्नितरामेव सामञ्जस्यं न तु विरोधलेशोऽपीति ।

अथ क्रियतामुपदर्शितरीत्या विचारचतुरैश्चतुर्णामेषां दर्शनानां विरोधभङ्गो मीमांसावेदान्तयोः सर्वैर्दर्शनैः समं विरोधस्तयोश्चान्योऽन्यं विरोधो दुःपरिहर एव मीमांसा हि कर्मकाण्डवेदस्य चारुविचाररूपा, विचार्यमाणानां च कर्मणां स्वर्गादिकमभ्युदय एव च फलं न तु मोक्षोऽतोऽस्या इतरदर्शनान्महद्वैलक्षण्यमिति चेन्नैवम्

न्यायवैशेषिकाभ्यां हि कृत्स्नस्यैव वेदस्य प्रामाण्येऽवधारितेऽपि कर्मकाण्डोक्तवेदवाक्यानां सम्यगर्थमप्रतिपद्यमानाः मन्त्राणां च केषां कस्मिन् कर्मणि विनियोग इति संदिहानाः किमप्यवधारयितुमशक्नुवानाः स्वर्गादावुत्कटेच्छामादधाना अपि कर्मस्वरूपापरिज्ञानात् कर्माणि कर्तुं न प्रवर्तेरन्नित्यननुष्ठानलक्षणस्याप्रामाण्यस्य प्रसक्तस्य परिजिहीर्षया सम्यग्वेदार्थबुबोधयिषया प्रवृत्तेयं मीमांसेत्यत्र न केषामपि विदुषामस्ति काचित्कथंचिदपि विप्रतिपत्तिः इत्थं च वेदप्रामाण्योपहारमुखेन तामिमां मीमांसामनुनेतुमनुगच्छन्तौ नैयायिकवैशेषिकौ समाश्लेष्टुमेव कामयते इयमपि मृद्वी साध्वी मीमांसा न तु विरोधमिति ।

सांख्ययोगावप्यधिकारिविशेषमालक्ष्य स्वाभिप्रायं प्रकाशयन्त्या एतया न विरोधलेशमपि सोढुं शक्नुतः,

यदि हि अग्निहोत्रादीनि श्रेयः साधनानि सांख्ययोगाभ्यां प्रतिषिध्येरन् तदेयमपि प्रकुपिता मीमांसा न ताभ्यां सामञ्जस्यं समीहेत, नत्वेवमस्ति अपि तु सांख्ययोगाविमौ अनुभवोपपत्तिभ्यां सुनिपुणं निरूपयन्तं क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावन्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं मुमुक्षुमधिकुरुतः, मीमांसा पुनरियममिताभिलाषागोचरविलक्षणसुखकामनावन्तं पुमांसं प्रवर्तयतीति विषयभेदान्न सांख्ययोगाभ्यां क्षणमपि विरोधमाकाङ्क्षति ।

यद्यपीयमीश्वरं नोरीकरोति यथा साम्प्रतिको काचित् स्वतन्त्रा प्रमदा तथापि यदीयमीश्वरं निराकर्तुमेव प्रावर्त्तिष्यत् तदेश्वरप्रामाण्योपपादकैः सर्वैरेव दर्शनैर्व्यरोत्स्यत्, नत्वेवमपि तु 'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता, इति भट्टपादोक्तेः वेदनिर्माणस्वातन्त्र्यमेवेश्वरस्य नोरीचिकीर्षति नत्वीश्वरमपीति नेश्वरप्रामाण्यसाधकेन केनचिदपि दर्शनेः नाल्पीयांसमपि विरोधं सोढुमुत्सहते महोदारा चतुरतरेयंमीमांसेति ।

## विकासः

अथास्त्वन्येषां यथातथाऽद्वैततत्त्वप्रतिपादकस्य तु वेदान्तस्य नान्यैः कैश्चन दर्शनैः सहित सामञ्जस्यमत्यन्तमेव विप्रतिपद्यमानत्वादिति चेन्न यतः खल्वियम्मीमांसा मोक्षं तत्प्रतिपादकं च वेदभागमनिन्दन्ती बहुविषसुखकामं पुमांसं कामयमाना व्यवहारकाले वेदान्तिनां क्रोडे सन्निविष्टा नित्यनैमित्तिकानि अन्यानि च कर्माणि यानि फलाभिसंधिरहितानि अन्तःकरणशोधनद्वारा ब्रह्मज्ञानसम्पादकानि तानि सर्वाण्यभिदधती न मनागपि वेदान्ताद्बहिर्गन्तुमुत्सहते ।

एवमन्यान्यपि दर्शनानि आपाततो विरुद्धतया प्रतिपद्यमानान्यपि न वस्तुतो वेदान्तेन विरुध्यन्ते तथाहि नैयायिकवैशेषिकाभ्यां परमतात्पर्यविषयो देहादिभिन्न आत्मा वेदप्रामाण्यं चेति व्यवस्थापिते बौद्धादिमतसिद्धपरमाणुवादमुपगम्यापि व्यवस्थांकर्तुं शक्यते इति तान् प्रति प्रौढिप्रकटनायैव च ताभ्यां परमाणुवादावलम्बनस्य दर्शितत्वात् नैताभ्यां वेदान्तिनां विरोधः । नापि साङ्ख्ययोगाभ्यां विरोधः एतयोः निरस्तसमस्तधर्मकस्यासङ्गस्य पुरुषस्य प्रकृतितत्कार्यान्तःकरणादिना विवेक एव मुख्यो विषयः वेदान्तस्य च प्रकृतिशब्दवाच्यया मायया विविक्तोऽखण्डसच्चिदानन्दोऽसङ्ग एव मुख्यस्तात्पर्यविषय इत्युभयोः मुख्योद्देश्यांशे सामञ्जस्यमेवावगन्तव्यम् ।

बौद्धादिमतं तु प्रसङ्गायातं खण्डितमेव यदपि क्षणिकत्वसाधने सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासो हेतुरुच्यते तदपि न युक्तम् सामर्थ्यमेवास्ति कारणानामिति ब्रूमः न चान्यदाऽपि कार्यप्रसङ्गः, सहकारिवैकल्यात्, नच सहकारिभिरुपकारेऽभ्युपगतेऽनवस्थाऽनभ्युपगते च व्यर्थमकिञ्चित्करेण सहकारित्वोपगमेनेति वाच्यम् यावत्सहकारिसमवधाने कार्योत्पत्तेरेवोपकारत्वादतः क्षणिकत्वसाधने युक्त्यभावाः अत्यन्तगौरवंच, तस्मादयमद्वैतवाद एव रमणीयो मोक्षार्थिनां निःकण्टकः परमः पन्थाः ।

नैयायिककुलकमलभास्कराणां उदयनाचार्यप्रभृतीनां चाद्वैते एव परम आदरोः अतएवोक्तम् आत्मतत्त्वविवेके क्षणिकविज्ञानवादिनां बौद्धानां मतनिराकरणप्रसङ्गे—

> न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः ।
> तद्बाधके बलिनि वेदनये जयश्रीः ॥
> नोचेदनित्यमिदमीदृशमेव विश्वं ।
> तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

इत्यादिकम्, तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव घटकटाहकोटरकुटीकोटिभिः तदास्तां तावत् किमार्द्रवणिजो वहित्रचिन्तयेत्यादिकं चेति ।

प्रादर्शि चास्माभिः प्रथमसूत्रे विकासे सर्वेषां श्रुति स्मृति पुराणादीनामैकात्म्यमेव परमतात्पर्यविषय इतीहोपरम्यते ।

## विकासः

तदेतत्सिद्धमधिकारिभेदेन भिन्नतयोपदिश्यमानान्यपीतराणि दर्शनानि अद्वितीय-ब्रह्मज्ञानयोग्यतासम्पादकानि ब्रह्मण्येव समन्वयमाप्नुवन्तीति न परमार्थतः कश्चिदस्ति विरोधो दर्शनानामिति संक्षेपः ।

तारायाश्चरणद्वन्द्वसमाराधनतत्परः ।
प्राचीकटमिमां व्याख्यां लक्ष्मीनाथाभिधः सुधीः ॥१॥
चत्वारः सागरास्तीर्णाः चतुः सूत्र्यभिधाः पराः ।
यत्कृपालेशमात्रेण तं प्रणौमि गजाननम् ॥ २ ॥
विश्वेशस्य प्रसादेन टीकां कृत्वाऽतियत्नतः ।
तस्मिन्नेवार्प्यते तेन प्रीयतां स दयानिधिः ॥ ३ ॥
शाके वारिधिसप्तदिग्गज सुधारोचिर्मिते हायने ( १८७४ )
मार्गे शुक्लदले शुभे शिवतिथौ सूर्येऽधिवाराणसि ॥
लक्ष्मीनाथ विपश्चिताऽतिरुचिरो ग्रन्थप्रसूनाञ्जलिः ।
पूतः पर्वतपुत्रिकापतिपदे प्रीत्याऽर्पितो राजताम् ॥ ४ ॥
विख्याते मिथिलामहीमुपगते सीमाऽभिधाने वसन् ।
ग्रामे विश्वविसारि कीर्त्तिलतिके सद्विद्त्रविद्यालये॥
शास्त्राण्यस्मि मुदा प्रभूतजटिलग्रन्थान्यहं पाठयन् ।
श्रीराजेन्द्रप्रसाद भारतपतौ विद्वद्वरे राजति ॥ ५ ॥

इति सर्वतन्त्रस्वतन्त्रधर्मदत्तापरनामक ( बच्चा झा ) शर्म शिष्येण काशी हिन्दूविश्वविद्यालयीय संस्कृतमहाविद्यालय दर्शन विभागाध्यक्षेण श्रीलक्ष्मीनाथ झा शर्मणा विरचितो भामत्याः विकासः समाप्तः ।

## भामती

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ इति ।

तस्मात्सर्वमवदातम् ॥ ४ ॥ इति चतुःसूत्री ॥

### प्रकाशः

विद्याविद्ययोः कार्यकारणभावे निवर्त्त्यनिवर्त्तकभावे च श्रुतिं प्रमाणयति-तथा चेति । विद्याम् चैतन्योपरक्तां साक्षात्कारात्मिकामन्तः करणवृत्तिम् । तत्कारणमविद्यां च एतद्द्वयम् 'सह' कार्यकारणभावमापन्नम् 'यो वेद' यो जानाति सोऽविद्यया प्रमात्रादिकारणकल्पनाकलापेन विद्यां चैतन्योपरक्तां साक्षात्कारात्मिकां वृत्तिं सम्पाद्य तया विद्यया तदुपादानरूपां मृत्युमविद्यां तीर्त्वा निवर्त्त्य तया विद्ययाऽभिव्यक्तं स्वरूपचैतन्यमश्नुते प्राप्नोतीत्यर्थः ।

तारायाश्चरणद्वन्द्वसमाराधनतत्परः ।
प्राचीकटमिमां व्याख्यां लक्ष्मीनाथाभिधः सुधीः ॥१ ॥

चत्वारः सागरास्तीर्णाः चतुः सूत्र्यभिधाः पराः ।
यत्कृपालेशमात्रेण तं प्रणौमि गजाननम् ॥ २ ॥

विश्वेशस्य प्रसादेन टीकां कृत्वाऽतियत्नतः ।
तस्मिन्नेवार्प्यते तेन प्रीयतां स दयानिधिः ॥ ३ ॥

शाके वारिधिसप्त दिग्गज सुधारोचिर्मिते हायने (१८७४)
मार्गे शुक्लदले शुभे शिवतिथौ सूर्येऽधिवाराणसि ।
लक्ष्मीनाथ विपश्चिताऽतिरुचिरो ग्रन्थप्रसूनाञ्जलिः ।
पूतः पर्वतपुत्रिकापतिपदे प्रीत्याऽर्पितो राजताम् ॥ ४ ॥

विख्याते मिथिलामहीमुपगते सीमाऽभिधाने वसन् ।
ग्रामे विश्वविसारिकीर्तिलतिके सद्विश्वविद्यालये ॥
शास्त्राण्यस्मि मुदा प्रभूतजटिलग्रन्थान्यहम्पाठयन् ।
श्री राजेन्द्रप्रसाद भारतपतौ विद्वद्वरे राजति ॥ ५ ॥

इति सर्वतन्त्रस्वतन्त्रधर्मदत्तापरनामक ( बच्चा झा ) शर्म शिष्येण काशी हिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालय दर्शन विभागाध्यक्षेण श्रीलक्ष्मीनाथ झा शर्मणा विरचितो भामत्याः प्रकाशः समाप्तः ।



| पृ० | प० | अशुद्धम | शुद्धम् |
|---|---|---|---|
| ३ | २९ | याऽविद्या | याऽविद्याऽविद्या |
| ५ | १२ | चक्षिरे | चचक्षिरे |
| ,, | १७ | दस्तु | तस्तु |
| ६ | ३ | चरणैः | चरणाः |
| , | २९ | पूर्वोक्त दोषः | दोषः |
| , | ३० | तेवा | तमेवा |
| ८ | २३ | स्मृतिश्च, | स्मृतिः बन्ध-मोक्षव्यवस्थानुपपत्तिश्च |
| , | २४ | मत्तद | मत्तत्तद |
| ९ | १ | द्योदे | द्योयांदे |
| १० | ११ | दर्ता | दधर्ता |
| ११ | ११ | लानि | लानलानि |
| ,, | १३ | पत्ति | पपत्तिः |
| , | २२ | स्य भिन्न, | स्य चैतन्यस्य भिन्न |
| १६ | १६ | एहा | इहा |
| , | ३२ | नभे | नयोर्भे |
| १७ | १० | न त | न न त |
| २० | ९ | ता त | ता भवला त |
| २१ | ३ | त एव | अत एव |
| , | २० | अयं ह | अयं मांह |
| , | २५ | ज्ञाना | ज्ञाना दृश्यन्ते |
| ३० | १४ | ति ग्रामगकनान्यकालेऽपि अहं वाममगममित्यनुसंधानवत् तति त | |
| ३२ | ३ | त्राद्यं | त्राद्याद्यं |
| ३४ | १ | तज्ज्ञा | तत्त्वज्ञा |
| , | २ | तत्तप्र | तत्त्वप्र |
| , | १६ | तद्वि | तदवि |
| ३६ | १५ | न्याद्द | न्यादद |
| ३७ | ३ | कृत्स्नो | कृत्स्नो |
| ३९ | २ | रगम्य | रवगम्य |
| , | १६ | इति च | इति तथा च |
| ४२ | २९ | वृत्तिल | वृत्तविल |
| ४३ | ३१ | केनाग्रा | केनाराग्र |
| ४४ | २२ | स्यान्यास | स्याप्रास |
| ४५ | १ | स्या प्रा, | वर्तिनां मुख्य मोक्षस्याप्रा |
| ४५ | २५ | द्वे शक्तिः | द्वेशक्ती |

| पृ० | प० | अशुद्धम् | शुद्धम |
|---|---|---|---|
| , | २६ | क्तिम् अतए | क्तिमतए |
| ४६ | ९ | गादौ | गादेः |
| , | १० | संयोगादे | शाखादौ |
| , | १७ | यदा | यथा |
| ४७ | ६ | श्वन्तुम् | श्वसितुम् |
| , | २१ | दितवर्तिदं | दिवर्त्तितदं |
| , | ३२ | स्य स | स्य च स |
| ४९ | २५ | कारणत | कारकरणत |
| , | ३२ | त्तनु | त्तदनु |
| ५० | ७ | गादिवि | गवि |
| ५२ | ३ | नार्थं | नेत्यर्थं |
| , | १२ | योपि | योरपि |
| ५३ | ३ | श्रन्त्या | श्रयन्त्या |
| , | ६ | मवामु | मनामु |
| , | १८ | नान्योऽस्ति | नान्योऽतोऽस्ति |
| ५५ | ३ | रूपं च | कं च |
| , | ८ | यी च स्वा | यीं स्वा |
| ५६ | १८ | क्षिचरण | क्षिचरणचरणं |
| , | ३२ | सर्वेन्द्रित | सवदा सर्वेन्द्रिय |
| ५७ | २ | तज्ञा | तच्चा |
| ५८ | ७ | व्यवस्थापयामासुरि | व्यवास्थापयन्ति |
| , | १३ | मानां | मानानां |
| ५९ | २१ | चघ | च केवलं घ |
| ६१ | १३ | वाचक्षि | चाचचक्षि |
| , | १९ | यतः | यतः यतो |
| ६२ | १२ | मधा | मवधा |
| , | १७ | रोत्यनु | रोत्पत्त्यनु |
| ६३ | २५ | वस | वत्स |
| ६४ | २५ | ज्ञाम | ज्ञान |
| ६५ | २० | प्रतिपेदिरे | इति प्रतिपेदिरे |
| , | २५ | मुपयोगता | मुपपद्येयाता |
| ६६ | ४ | प्यप्र | प्यहंप्र |
| , | ६ | तच्च च | तच्च न |
| , | १४ | भावं | भारं |
| , | , | व्यसन व्या | व्यसन व्यवसनव्यां |
| ६७ | १९ | प्रत्ययानां | व्यवहाराणां |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६९ | ९ | थैवानुभवानुभवादि | थैवानुभवादि |
| , | १२ | सन्नि | वटः सन्नि |
| , | २० | यदनु | तदनु |
| ७२ | २१ | योक | योजक |
| , | २२ | सत्स | तत्स |
| ७४ | १६ | त्ताविति | त्तावपि |
| , | ३१ | लीनाः | मीनाः |
| ७७ | ७ | स्यैवो | स्यस्यैवो |
| ७९ | २६ | क्षत्वे | क्षत्वेन |
| ८३ | १३ | भिस्सि | मिधिस्सि |
| , | | मनीषु | मनीषि |
| ८४ | १५ | अमृत | अनृत |
| ८५ | | सत्ता तादा | सत्तादा |
| ९१ | २४ | जकत्वम | जकम |
| , | २८ | गमस्य | गमनस्य |
| ९४ | ९ | भि दे | भिन्नदे |
| , | २१ | चावाद | चाद |
| ९५ | ११ | त्युक्त्वा | त्युक्त्या |
| , | , | यर्ता | यर्तोति |
| ९६ | १ | टिकाम्न | टिकादेरम्न |
| , | ६ | संसर्गा ध्यासोऽपिसि | संसर्गस्याध्यासिकस्य सि |
| , | १८ | दोपतया | दोपजन्यतया |
| , | २१ | समनु | समनन्तु |
| ९७ | ५ | प्रालेय | मालेय |
| १०२ | २१ | तपस्विनः | तमस्विनः |
| १०६ | ५ | यम् तदनेन | क्रमेणाध्यस्तनोयं परमार्थतोर्यमिव, अत एव पूर्वदृष्टमित्र तत्त्वतस्तुन तोयं न च तदयम् तद |
| ११२ | ८ | तत्वेना | तत्त्वत्वेन |
| ११४ | २ | त्स्याका | त्स्यादाका |
| १२४ | २४ | न क्व, | न क्वचित् अमत्रायस्य क्व |
| १२७ | २१ | र्था व्यू | र्थान् व्य |
| १३० | ७ | र्यं नास्ती | र्यं नेह नानास्ती |
| , | , | व नेह तस्य | व तस्य |
| १३६ | १३ | श्यते | श्यमानं |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३९ | १२ | अभावा | अभाना |
| १४० | १ | समानाधिकरण | सामानाधिकरण्य |
| १४३ | ३० | तेषामस्मत्पक्षेप्रदर्शित गौरस्वाभावात् अनुपस्थित्या, | तेषामनुपस्थित्याऽस्मत्पक्षेगौरवस्याभावात् |
| १४७ | २० | नुमिति | नुभूति |
| १४८ | ४ | तथा च | तथा च लोकेऽनुभवः शुक्तिका हि रजतवद्वभासते एकश्चन्द्रः सद्वितीयवदिति । |
| , | | भामती | तथा च लोकेऽनुभवः शुक्तिका |
| , | ८ | सक्षि | समाक्षि |
| , | २२ | द्यत त | नूद्यत |
| १५२ | २६ | दभि | तदभि |
| , | २८ | यदीदं | यदिदं |
| , | २९ | तथैव वृत्ति | वृत्ति |
| , | ३० | तामऽ | ता आत्माऽ |
| १६९ | १५ | तिज्ञयाऽपि | तिज्ञाऽपि |
| १७३ | ६ | किं तु स | किंतु सर्वानुगतं मिथ्यात्वमेव एवं ज्ञानस्यापि निवर्तकत्वे शुक्त्यादिविषयकत्वं नावच्छेदकं किंतु स |
| १६४ | २६ | यजानान्यु | याजान्यद्यु |
| , | २३ | हना | हनाना |
| १७५ | १५ | गप | युगप |
| १८० | ८ | नभो | नभसो |
| १८३ | ११ | वाधन | बाधित |
| , | १४ | मानो | मानोऽपि |
| १८५ | २९ | ग्रसत्येव | ग्रसेतैव |
| १८७ | १३ | नचावि | नन्ववि |
| १८८ | १० | अतिन्द्रि | अतीन्द्रि |
| १९८ | १२ | टाद्य | पटाद्य |
| २०२ | १२ | ज्ञाननाशं | ज्ञानस्य नाशं |
| २०६ | ५ | भासस्य | भास्यस्य |
| २०९ | २ | शंशय | संशय |
| २१० | २ | माण | प्रमाण |
| , | २३ | चद् | चरद् |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| , | ३१ | निश्चया | निचयाः |
| २१२ | ८ | कोऽह्वो | कोऽपह्वो |
| २१३ | २० | चिष्ठः | चिच्चिष्ठः |
| २२० | १३ | तियो | प्रतियो |
| , | १३ | नि इति | निति |
| , | १४ | विषयं | विशय |
| , | २३ | र्शादित्य | र्श इत्य |
| २२४ | ७ | अतो | अतोऽविद्योपाधिको वस्तुतो निर्गुण |
| २२५ | ३ | इति | अथो ब्रह्मजिसाइति |
| , | ५ | यदत्र | अथातो ब्रह्मजिज्ञाइति |
| , | ९ | सेव | सेवहि |
| , | १४ | अविद्यापि | सगुणस्यापि जिज्ञास्यत्वाच्च अविद्यापि. |
| , | १९ | कार्यंका | कर्येणका |
| २२६ | ११ | परपु | परमपु |
| २२७ | १८ | विशिष्यते | शिष्यत |
| २२९ | १५ | वर्वेत | वर्तेत |
| २३० | २२ | पक्षणा | लक्षणा |
| २३२ | २२ | नान्तर्यं | नानन्तर्यं |
| , | २३ | योज्ञ | योग्य |
| २४० | २ | मेप्यरोव | मेप्वपरो |
| २४१ | ९ | निं कारणानितेषां | नितेषां |
| २५७ | १२ | मात्, | दिति वदन्ति |
| २५७ | १२ | रीकृत्यै | रीत्यै |
| २६२ | २ | यस्यैव | तस्यैव |
| २६५ | २२ | न्न क्रमः | न्न स्यात् क्रमः |
| २९५ | १९ | तत्त्वसी | तत्त्वमसी |
| ३०४ | २४ | पापन्स्त | पापत्स्यत |
| ३०९ | २३ | तेजस्य | तेजस्व्य |
| ३११ | १७ | क्षणं | लक्षणं |
| ३१२ | ६ | पाद | पादानं |
| , | १४ | ब्रह्मण इति, | ब्रह्मण इति अस्य |
| ३१५ | २३ | मादिति | माभूदिति |
| ३१७ | २८ | इति न ब्र | इति ब्र |
| ३२१ | २० | क्तोमि, | क्तोऽस्तोऽपि मि |
| ३२२ | २ | ति वि | ति वा वि |
| ३२९ | २३ | प्रतीत | पतित |
| ३३४ | १६ | प्यवा | प्यवयवाः |
| ३४४ | २६ | तद्‌द | तद्द |
| ३५२ | २७ | होर्ता | होर्तीति |
| ३५४ | १० | चातु | चातू |
| ३७० | ३ | यिश | यिष |
| ३७६ | ३ | बोधम्र | बोधनम्र |
| , | २१ | फलम, | फलकल्पनम |
| ३७७ | १० | जनलम् | जनकः |
| ३८० | १ | शेतुव | शेव |
| ३९५ | १७ | स्वीकारात् तादात्म्यस्यैव | तादात्म्यस्यैव स्वीकारात् |
| ४१३ | १७ | लिसग्पत | लिप्तपराग् |
| ४२५ | ४ | ग्रील | ग्रीवलल |
| ४२७ | ९ | ज्य इत्यर्थः | ज्यः |
| ४२८ | ११ | यर्था | य विध्यर्था |
| ४३२ | १९ | णेऽगोपि | णेऽपि गांप |
| ४४० | २२ | च न त्रि | चत्रि |
| ४४३ | १९ | धावश्च | धानमा |
| ४३५ | १८ | गस्तत्तत्य | गस्तत्रप |
| ४४६ | १४ | स्यमिति | स्येति |
| ४४९ | १७ | पट | घट |
| ४५० | १८ | स्यन्त्रादौ | न्यादौ |
| ४५१ | २० | धीयेतेऽ | धीयेतेभ |
| ४५२ | २० | सिद्धोऽवा | 'सिद्धोऽसिद्धो वा |
| ४५४ | १२ | धीः ॥ | धीः॥ इति |
| ४५७ | १५ | विस्यात् | गित्वात् |
| ४६१ | १७ | क्रकृ | प्रकृ |
| ४८२ | १० | कलोल | कल्लोल |
| , | २२ | वंते | र्वाते |

## भूमिकायाम्

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १० | मानापेक्ष | मानानपेक्ष |
| २ | २ | योरनु | योरननु |
| , | २६ | प्रेततत्वा | प्रेतत्वा |
| ६ | १६ | पटा | गवा |
| , | १७ | कृतया | कृष्टतया |
| , | २१ | शमि | सदृशमि |
| , | २९ | नस्या | तस्या |
| , | ३० | इत | इति |
| , | , | प्रयाप्रयान | प्रियाप्रियानु |
| , | , | तद्रहता | तद्रहितविशेषा |
| ७ | २७ | छात | छानात् |
| ९ | २३ | कार | कारि |
| १० | २ | अधा | अध्य |
| ११ | २८ | तेन्दा | तेन्दा |
| , | १९ | मपिप | महिष |
| १७ | १९ | श्रति | श्रुति |
| १७ | ४ | भावोश | भावोऽ |
| १८ | १६ | मिथा | मिथ्या |
| २० | १ | पिद्या | विद्या |
| , | २१ | स्धात् | स्वात् |
| २४ | २७ | स्याध्य | स्याध्य |
| १५ | १४ | नवा | नवादा |
| २६ | २ | वया | वस्यैवा |
| २६ | ६ | विज्ञान | उत्तरविज्ञान |
| , | , | सैव | पूर्वज्ञानस्य सैव |
| , | २१ | भादिति | मर्भादिति |
| २७ | १२ | रनु | रानु |
| , | १५ | षड्रसो | सप्तमरसो |
| २८ | २३ | विस्मृति | स्मृति |
| , | २४ | विषत् | विगत |
| , | २८ | ज्ञामे | ज्ञाभ्रमे |
| , | ३० | नानुभवस्यानतु ज्ञानस्य तस्यानतु | न तु पूर्वं |
| , | ३२ | स्यत्वैत्र | स्मृतेरन्यैव |
| , | ३१ | ज्ञानावि | ज्ञानवि |
| , | ९ | ज्ञान | शक्तिज्ञान |
| , | १८ | कानि | काणि |
| , | ७९ | हेतुत्वम् | भेदहेतुत्वम् |
| ३० | २३ | गन्तरे | गमन्तरे |
| ३१ | ९ | नय | नुदय |
| , | १३ | रुयेयेति | रुदेति |
| , | ३१ | माया | मिथ्या |
| ३२ | २६ | वाभ्या | सत्वाभ्या |
| ३३ | १८ | मस्तु | मस्तु इति चेन्न |
| ३४ | १८ | वभा | नवभा |
| ३५ | १ | धाप्य | धाव्य |
| , | २० | स्तमा | त्वमा |
| , | ४ | नवा | नावा |
| , | २५ | नत | नजगदधिष्ठानत |
| , | २७ | अज्ञातं | अज्ञानसहितं |
| , | ३० | वदेव | तदेव |
| ३६ | २० | विरूप | विक्षेप |
| ३७ | १४ | अत्रिद्या | अविद्याया |
| , | २८ | काररे | कारे |
| ३८ | १८ | वंवि | वांवि |
| ३९ | २७ | दृष्टादा | वृष्टयादा |
| ४० | ७ | सत्त्वाभ्यां | सत्त्वासत्त्वाभ्यां |
| , | २८ | योगी | योगि |

## प्राक् कथने

| पृ० | प० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १ | १२ | च | मुण्डके |
| २ | १५ | मात | मातः |
| , | , | रेव | रेष |
| , | २२ | गम | व्यान्थानुगम |
| , | २४ | रिश्का | रिष्का |
| ५ | २२ | दव | इव |

| पृ० | पं० | शुद्धम् | पृ० | पं० | शुद्धम |
| --- | --- | --- | --- | --- | --- |
| ३ | २० | वसु | ” | २० | ण्यवता |
| ७ | ८ | गात् | ” | २० | कमतो |
| ” | १२ | पेक्षि | ” | २२ | स्वत्व |
| ८ | १४ | वेत | ” | २३ | न्यो, मां |
| ” | २९ | दत्ती | ३५ | ७ | वंम |
| ” | ३० | जनि | ३८ | १३ | तत्स |
| ” | ३१ | शाऽत्तो | ४ | २ | तत्रा |
| ९ | ९ | णतया | ” | १७ | स श |
| १० | १ | यक्ता | ” | २५ | रः प्र |
| १५ | २२ | वेध्रा | ४३ | ४ | शारी |
| १७ | २२ | धतो | ” | १० | पधा |
| १७ | ५ | पेत | ४४ | ११ | एष |
| १९ | २७ | धसः | ४७ | १० | तायां |
| १९ | ९ | नोऽ | ४९ | २ | निव |
| ” | १५ | ज्ञिज्ञास्व | ५० | ४ | दृष्ट |
| २० | २७ | न्नोणां | ” | १२ | यया |
| ” | २९ | दाहि | ” | १३ | स्तयै |
| २३ | २ | क्राम | ५१० | २६ | णागो |
| ” | ६ | पीति श्र | ५२ | ८ | मसः पा |
| ” | ८ | रेणा | ५३ | १९ | शमा |
| ” | १८ | हमिति | ” | ६ | मना |
| २५ | २७ | राजा | ” | १६ | न्योऽताऽ |
| २७ | १९ | यथा | ” | २५ | न्यवा |
| २८ | २० | द्विन | ५५ | १३ | जन्न |
| ” | ३७ | दिना | ” | १७ | द्रो लो |
| २९ | १४ | ङ्ङ्ये | ५७ | २ | तच्चा |
| ” | ३० | देष | ” | ६ | रज्जवां |
| ३० | १८ | मंक | ” | २२ | रन्तो |
| ३१ | २५ | यांस | ५९ | ५ | वृत्ती |
| ३३ | ११ | वृत्त्या | ” | ३१ | द्यच |
| ” | १६ | पूर्वी | ६० | २० | नुसं |
| ” | २० | न्धो | ६३ | १ | कारि |
| ” | २२ | भिद्य | ६५ | ७ | यकाः |
| ” | २३ | नान्युप | ” | १४ | त्तचै |
| ३४ | ९ | चाप | ” | १५ | ज्ञानप्र |
| ” | १४ | मयै | | | |

| पृ० | प० | शुद्धम् | पृ० | प० | शुद्धम् |
|---|---|---|---|---|---|
| ६७ | ४ | न्योऽन्य | ,, | २३ | मीतो |
| ६८ | १८ | चित् इ | १०० | २४ | माणाः |
| ,, | ३० | दमि र | १०१ | ६ | नाथ |
| ६९ | २ | मृवि | ,, | २१ | त्मानम् |
| ,, | ११ | मीदं | ,, | २९ | द्यं स्व। ले स्वास |
| ,, | १७ | मधु | १०२ | २४ | पपा |
| ,, | २८ | चिर्का | ,, | २५ | श्रेयोऽ |
| ७१ | २९ | रितरे | १०३ | १६ | शक्तिः |
| ७३ | २१ | मपनु | ,, | २५ | त्ता प्र |
| ,, | २५ | स्यैच | १०७ | १६ | प्याः |
| ७७ | ९ | णाभे | १०९ | १ | राऽत्तो |
| ,, | १३ | णासि | ११५ | २२ | तया के, धित |
| ७९ | ४ | मस | ,, | ३२ | यया |
| ८० | १ | सेन | ११८ | १७ | येन |
| ८१ | १९ | दनम् | ११९ | २७ | व स |
| ८३ | १० | तदर्पा | १२१ | २ | तिना |
| ८४ | २१ | स्फो | ,, | २६ | चैवं |
| ८६ | ४ | ब्रह्मा | १२८ | ३० | आसुराः |
| ८७ | २२ | हेतेति | ,, | ३१ | पि स्व |
| ८८ | १० | गस्तु | १३२ | १ | वह्नय |
| ,, | ३२ | लिता | १३३ | १५ | ब्रह्मा |
| ८७ | २३ | ह्येते | ,, | २३ | तद्भा |
| ९० | ३१ | मर्हाः | १४४ | २७ | ज्ञानत |
| ९१ | ३ | रीरा | १४४ | २३ | आद्य |
| ,, | ७ | चक्षू | १४६ | २७ | रस्य भ्र |
| ,, | १० | चक्षू | १४८ | १ | अस्त्याऽभिर |
| ,, | १२ | र वृ | ,, | ९ | त्रावि |
| ९३ | १३ | त्यनेन | ,, | १३ | त्रावि |
| ,, | २४ | मर्शा | १५० | ११ | पत्व |
| ९४ | ११ | त्ववि | १६० | १५ | गौढ, नेह |
| ९५ | ६१ | हित्वं | १६९ | २८ | प्राति |
| ९६ | २६ | घेषु | १७२ | ६ | व तथा च |
| ९७ | १ | नचोय | ,, | १४ | स्यैनो |
| ,, | २३ | ष्टेव | ,, | १९ | क्येत |
| ,, | २५ | शन्ती | ,, | २६ | पर्ता |
| ९९ | ३ | मानो | १८८ | १२ | नुपप |

| पृ० | प० | शुद्धम् |
|---|---|---|
| १९० | १७ | र्मिणम् |
| १९४ | ९ | तत् |
| २१० | १९ | सर्वाः |
| २११ | ७ | वंज्ञ |
| २१२ | २४ | शुद्धं |
| २१३ | २ | ज्ञत्वा |
| ,, | २६ | र्णान |
| ३० | १३ | वानिति |
| ,, | १६ | विशय |
| ,, | २३ | र्शं इ |
| २२४ | ७ | माने च |
| ,, | ६ | अतोऽविद्या मात्रोपाधिकोवस्तुतो नि |
| २२५ | ३ | अथातो ब्रह्मजिज्ञासा इति |
| ,, | ५ | अथातो ब्रह्मजिज्ञासा इति यदत्र |
| २३७ | १ | र्धीत |
| ,, | १४ | निक्र |
| ,, | १९ | व्यं दे |
| २४१ | ९ | ब्द का |
| २४५ | ३० | प्राप्त्यु |
| २४८ | | भाष्ये याहीत्यारभ्यचतुर्दशपंक्तिपर्यन्तं २६९ पृष्ठीयं मुद्रकदोषादिह मुद्रितम् |
| २६० | ३० | ता भग |
| २६४ | ३ | सत्त्वो |
| २७४ | १८ | सूत्रजा |
| २७५ | २४ | णाभ्या |
| २८४ | ४ | ह्या |
| २८७ | २२ | दा वि |
| २९६ | १९ | द्धमि |
| २९८ | २० | तत्वा |
| ३०० | ११ | त्मनः |
| ,, | १२ | ऐश्व |
| ३०९ | २३ | निर्व |
| ३१२ | १८ | तर्दी |
| ३१३ | १९ | तिपाद्म |

| पृ० | प० | शुद्धम् |
|---|---|---|
| ,, | ,, | मस्त्वे |
| ३१५ | २१ | निश्च |
| ,, | २२ | नुप |
| ३१६ | ४ | क्या |
| ,, | ११ | कुतश्च |
| ३१७ | ६ | कृमि |
| ३१८ | ८ | वृत्त |
| ,, | १० | स्वप्न |
| ३२७ | १० | ह्याहि |
| ,, | १३ | यस्य |
| ३२८ | ३० | तैव |
| ३३६ | १४ | हि |
| ३४० | ५ | वातिष्ठत् |
| ,, | ६ | दितः |
| ३५२ | १५ | एकेनै |
| ,, | २२ | ताज्ञा |
| ,, | २४ | तां नी |
| ३५३ | १९ | त्। भावः |
| ३६१ | २२ | क्यस्या |
| ३६२ | ७ | नात्र |
| ,, | १३ | पक्षे |
| ३८१ | २४ | रूपां |
| ३८२ | ४ | मुखं |
| ३९० | ६ | द्वेति |
| ,, | १० | णामि |
| ३९३ | ८ | घोषटादिः |
| ,, | ८ | न्वयः, । यस्तु |
| ,, | ९ | व्यः दिःप |
| ,, | १० | ज्ञः सि |
| ३९६ | ११ | घोऽभेदे, |
| ,, | २४ | या ब |

| पृ० | प० | शुद्धम् | पृ० | प० | शुद्धम् |
|---|---|---|---|---|---|
| ४४१ | १४ | वात्त्रि | ,, | १७ | य इति । |
| ,, | १६ | तत | ४७१ | १३ | त आह |
| ४४५ | १८ | गस्तत्रप | ४८३ | २ | प्यावश्य |
| ४४६ | २३ | ब्या इ | ,, | ४ | स्परं, स्यम |
| ४४९ | १७ | घटत | ४८४ | १३ | या च प्र |
| ४५० | ३ | त् प्रा | ४:५ | १९ | भाव: |
| ४५१ | १८ | न्धो | ,, | २१ | रोऽत |
| ४६७ | ८ | न्ध | | | |
| ४६८ | १४ | विशेपड | | | |

अवशिष्टं स्वयमनुस्वारादिकं विद्वद्भिरुदा-
राशयैः शोधनीयम्



